BIBLIOTHECA INDICA
A COLLECTION OF ORIENTAL WORKS

श्रीमद्बल्लालसेनदेवविरचितः

# दानसागरः

# DĀNASĀGARA

OF

## BALLĀLA SENA

EDITED
BY
BHABATOSH BHATTACHARYA, M.A., B.L.,
Kāvyatīrtha
*Sir William Jones Research Fellow,*
*The Asiatic Society.*

Work Number
274
Fasciculus I




Issue Number
1563

CALCUTTA:
Printed at the Calcutta Oriental Press Ltd.
Published by the Asiatic Society,
1, Park Street
1953

Price Rs. 9/-

## NOTICE

BIBLIOTHECA INDICA

PUBLISHED BY

# THE ASIATIC SOCIETY

The Bibliotheca Indica is a collection of works belonging to or treating of Oriental literatures and contains original text editions as well as translations into English, and also bibliographies; dictionaries, grammars, and studies.

The publication was started in 1849, and consists of an Old and a New Series. The New Series was begun in 1860, and is still running.

The issues in the series consisted originally of fascicles of 96 or 100 pages print, though occasionally numbers were issued of double, triple or larger bulk, and in a few cases even entire works were published under a single issue number. Of late years the single issues are made as much as possible to constitute complete volumes. Several different works are always simultaneously in progress. Each issue bears a consecutive issue number. The Old Series consists of 265 issues; in the New Series, till January 1st, 1942, inclusive, 1,547 issues have been published. These 1,812 issues represent 265 different works; these works again represent the following literatures:—

Sanskrit, Prakrit.
Rājasthānī, Kāshmīrī, Hindī.
Tibetan, Lushai.
Arabic, Persian.

Several works published are partly or wholly sold out, others are still incomplete and in progress. A few works, though incomplete, have been discontinued.

Two price-lists concerning the Bibliotheca Indica are available and may be had on application. One describes the Indian and the other the Islamic works published in the series. These lists are periodically revised.

The standard sizes of the Bibliotheca Indica are:—

Demy (or small) octavo.
Royal (or large) octavo.
Quarto.

ॐ नमो गणेशाय ।

# दानसागरः

## [ उपक्रमणिका ]

### ( मङ्गलाचरणम् )

ये साक्षादवनीतलामृतभुजो वर्णाश्रमज्यायसो
येषां पाणिषु निक्षिपन्ति कृतिनः पाथेयमामुष्मिकम् ।
यद्वक्त्रोपनताः[1] पुनन्ति जगतीं पुण्याश्रिवेदीगिर-
स्तेभ्यो निर्भरभक्तिसम्भ्रम-नमन्मौलि द्विजेभ्यो नमः ॥१॥

### ( ग्रन्थकृत्-परिचयः )

इन्दोर्विश्वैकबन्धोः[2] श्रुतिनियमगुरुः क्षत्रचारित्रचर्या-
मर्यादागोत्रशैलः कलिचकित-सदाचार-सञ्चारसीमा ।
सद्वृत्तस्वच्छरत्नो[3]ज्ज्वल-पुरुषगुणाच्छिन्नसन्तानधारा-
बन्धैर्भुक्ता[4]मर[5]श्रीर्निरगमदवनेर्भूषणं सेनवंशः ॥२॥
तत्रालङ्कृतसत्पथः स्थिरघनच्छायाभिरामः सतां
स्वच्छन्दप्रणयोपभोगसुलभः कल्पद्रुमो जङ्गमः ।
हेमन्तः परिपन्थिपङ्कजसरःसर्गस्य[6] नैसर्गिकै-
रुन्नीतः स्वगुणै[7]रुदात्तमहिमा हेमन्तसेनोऽजनि ॥३॥
तदनु विजयसेनः प्रादुरासीन्नरेन्द्रो
दिशि विदिशि भजन्ते यस्य वीरध्वजत्वम् ।
शिखर-विनिहिता[8]ज्ञा-वैजयन्तीं वहन्तः
प्रणतिपरिगृहीताः प्रांशवो राजवंशाः ॥४॥

---

1 I. O. ०गता:
2 A इन्दोभिर्विश्वैकबन्धेन ; B इन्दो विश्वै-कबन्धोः ; I. O. इन्दो विश्वैकबन्ध्य:
3 I. O. ० वर्णो०
4 Con. A ०र्मुक्ता० ; B ०गणोच्छिन्नसन्तानधाराबन्धोमुक्ता०
5 A and B ०सर० 6 I. O. ०सस्य
7 A ०रुन्नीत: स्वगणै०
8 I. O. ०विनिहता०

सर्वाशाः परिपूरयन्नुपचितश्रीर्दानवारां घनै-
रासारैरभिषिक्त-निर्मलयशः-शालेय[1]-भूमण्डलः ।
दैन्योत्तापभृता-म[2]कालजलदः सर्वोत्तरः क्ष्माभृतां
श्रीवल्लालनृपस्ततोऽजनि गुणाविर्भावगर्भेश्वरः ॥५॥
वेदार्थस्मृतिसंकथादिपुरुषः श्लाघ्यो वरेन्द्रीतले
निस्तन्द्रोज्ज्वलधीविलासनयनः सारस्वतब्रह्मणि[3] ।
षट्कर्माऽभवदार्यशीलनिलयः प्रख्यातसत्यव्रतो
ऽन्नारेरिव गीष्पतिर्नरपतेरस्यानिरुद्धो[4] गुरुः ॥६॥
अधिगत-सकल-पुराणस्मृतिसारः श्रद्धया गुरोरस्मात् ।
कलिकल्मषावदानं[5] दाननिबन्धं विधातुकामोऽपि ॥७॥
दुरधिगम-धर्मनिर्णय-विषमा[6]ध्यवसाय-संशयस्तिमितः ।
नरपतिरयमारेभे ब्राह्मणचरणारविन्द-परिचर्याम् ॥८॥
शुश्रूषापरितोषितैरविरतं सम्भूय भूदेवतै-
र्दत्तामोघवरप्रसाद-विशद-स्वान्तस्खलत्संशयः ।
श्रीवल्लालनरेश्वरो विरचयत्येतं गुरोः शिक्षया
स्वप्रज्ञावधि दानसागरमयं श्रद्धावतां श्रेयसे ॥९॥

## ( ग्रन्थकृत्-प्रार्थना )

भूयोभूयः प्रणम्य क्षितिवलय-मिलन्मौलि वन्द्या द्विजेन्द्राः
श्रीमद्बल्लालसेनः स्थिरविनयनिबद्धाञ्जलिर्याचते वः ।
काले काले भवद्भिः स्मृतसुकृतलवैः पालनीयो ममायं
सामान्यः पुण्यभाजां भवजलधिमहासेतुबन्धो निबन्धः ॥१०॥

## ( संगृहीतग्रन्थनामानि )

ब्राह्मं वाराहमाग्नेयं भविष्यं मात्स्यमेव च ।
[वामनं वायवीयञ्च मार्कण्डेयञ्च वैष्णवम् ॥११॥

1 I. O. ०सालिय०
2 I. O. ०मु०
3 A सारभूतब्रह्मणि ; B सारस्वतवत्मान
4 B and I. O. ०यस्यानिरुद्धो
5 B कलिकल्मषावसादं ; I. O. ०कलुषावसादं
6 A ०विषया०

शैवं स्कान्दञ्च पाद्मञ्च पुराणं कौर्ममेव च । ][1]
पुराणानि तथा कूर्मपुराणादिपुराणयोः ॥१२॥
उक्तान्युपपुराणानि व्यक्तदानविधीनि च ।
आद्यं पुराणं शाम्बञ्च कालिकाह्वयमेव च ॥१३॥
नान्दमा[2]दित्यसंज्ञञ्च नारसिंहं तथैव च ।
मार्कण्डेयकृतं तद्वद् विष्णुधर्मोत्तराह्वयम् ॥१४॥
शास्त्रञ्च विष्णुधर्माख्यं गोपथब्राह्मणश्रुतिम् ।
श्रीरामायणमाख्यानं महाभारतसंहिताम् ॥१५॥
मनुं वशिष्ठं संवर्त्तं याज्ञवल्क्यञ्च गोतमम्[3] ।
कात्यायनञ्च जावालं व्यासं दानबृहस्पतिम्[4] ॥१६॥
बृहद्वशिष्ठं हारीतं पुलस्त्यं विष्णुमेव च ।
शातातपं यमं योगि-याज्ञवल्क्यञ्च देवलम् ॥१७॥
बौधायनञ्चाङ्गिरसं दानव्यासं बृहस्पतिम् ।
द्वौ शङ्खलिखिता-वापस्तम्बं शाट्यायनं तथा ॥१८॥
महाव्यासं लघुव्यासं लघुहारीतमेव च ।
छन्दोगपरिशिष्टञ्च कात्यायनमशेषतः ॥१९॥
इत्यालोच्य[5] पुराणोप-पुराणस्मृति[6]संहिताः ।
समाहृतानि दानानि निबन्धस्यास्य सिद्धये ॥२०॥

## ( दाननामानि )

महादानानि [कीर्त्यन्ते तत्रादौ][7] षोडश क्रमात् ।
पर्वतानाञ्च दानानि दशैव तदनन्तरम् ॥२१॥
[ततो गुडादिधेनूनां चत्वारिंशदनुक्रमात् ।
एकन्यूनानि दानानि कथ्यन्तेऽत्र[8] यथाविधि ॥२२॥

---

1 A omits the bracketed portion
2 I. O. नन्दिमा०
3 I. O. गौतमं
4 A संदानञ्च बृहस्पतिम् ; I. O. ०दानं बृहस्पतिं
5 A इत्यालोक्य
6 A and I. O. ०श्रुति०
7 A तत्रादौ कथ्यन्ते for the bracketed portion
8 B वक्ष्यन्तेऽत्र ; I. O. वक्ष्यन्तेव

अलङ्कृतानां पञ्चाशच्चत्वारि च[1] गवामथ ।
दानान्यलङ्कृतगवी-समूहस्य ततस्त्रिधा ॥२३॥
ततोऽनलङ्कृतगवी-दानानि दश पञ्च च ।
तथानलङ्कृतगवी-समूहस्य च सप्तधा ॥२४॥
अलङ्कृतानां दानानि वृषाणामष्टधा तथा ।
ततोऽनलङ्कृतानान्तु दश दानानि पञ्च च ॥२५॥
गवाह्निकप्रदानानि दशधा तदनन्तरम् ।][2]
भूमेर्दानानि कीर्त्यन्ते पञ्चपञ्चाशदेव तु ॥२६॥
आसनस्य प्रदानानि[3] षड्वेव तदनन्तरम् ।
ततो वारिप्रदानानि षट्त्रिंशदिह संख्यया ॥२७॥
तैजसानाञ्च पात्राणां दश दानान्यनन्तरम् ।
दानानि जलपात्राणां ततश्च नव संख्यया ॥२८॥
ततोऽन्नस्य प्रदानानि त्रिचत्वारिंशदेव तु ।
ततस्त्रीण्येव भक्ष्यस्य पञ्चधा[4] लवणस्य च ॥२९॥
ततो घृतस्य सप्तैव त्रीणि दध्नस्त्वनन्तरम् ।
क्षीरस्य च ततस्त्रीणि पञ्च चैक्षववस्तुनः ॥३०॥
पानकस्याथ चत्वारि फलानां नवधा ततः ।
ततश्चत्वारि मधुनोऽभ्यङ्गस्य षडनन्तरम् ॥३१॥
त्रयोदशाथ गन्धस्य ततो धूपस्य पञ्चधा ।
अनुलेपनदानानि चत्वारि तदनन्तरम् ॥३२॥
नव[5] पुष्पस्य वस्त्राणां षड्युक्ता[6] विंशतिस्ततः ।
त्रीणि यज्ञोपवीतस्य दानानि तदनन्तरम् ॥३३॥
सुवर्णस्याथ दानानि सप्तत्रिंशदनुक्रमात् ।
रजतस्य च दानानि चत्वारि[7] तदनन्तरम्[8] ॥३४॥

---

1 B ०चत्वारिंशद् ; I. O. चत्वारिंशद्गवामथ
2 A omits the bracketed portion
3 I. O. षडेतनद०
4 A पञ्चाथ
5 B षष्टी ; I. O. first षष्टी and then corrects it by adding नव just below it.
6 I. O. षड्युक्त०
7 B त्रीण्येव
8 I. O. adds the following line after this :—सामान्यदैवता-भ्यस्तु चतुर्विंशं यथाक्रमात्

अलङ्कारस्य[1] चत्वारि रत्नस्य नवधा ततः ॥३५॥
गृहाणाञ्चैव दानानि ततः सप्तदशैव तु ।
नव प्रतिश्रयस्याथ शय्यायास्तु ततो नव ॥३६॥
इन्धनस्याथ चत्वारि दीपस्यैकोनविंशतिः ।
दानानि च पुराणाना-मेकोनविंशतिस्ततः ॥३७॥
नानाविधानां विद्यानां चतुर्विंशतिरेव च ।
त्रिंशद्दानानि कन्यानां प्रैष्याणान्तु ततो दश ॥३८॥
शस्यानामथ दानानि पञ्चविंशतिरेव च ।
तिलस्य दश दानानि तथारामस्य पञ्चधा ॥३९॥
कीर्त्त्यन्ते षोडशैवात्र वृत्तस्य तदनन्तरम् ।
सम्भारस्याथ चत्वारि पशूनामष्टधा ततः ॥४०॥
कृष्णाजिनस्य सप्ताथ छत्रस्य दश पञ्च च ।
कीर्त्त्यन्ते पञ्चदशधा ततो दानान्युपानहः ॥४१॥
तथा द्वादश[2] यानानां चत्वारि करिणामथ ।
द्वादशाश्वस्य दानानि चत्वारि महिषस्य च ॥४२॥
अष्टावारोग्यदानानि[3] कीर्त्त्यन्ते तदनन्तरम् ।
अभयस्य च दानानि त्रयस्त्रिंशत्ततः क्रमात् ॥४३॥
सूर्यादिवारविहिता[4]-न्येकादश ततः परम् ।
मासोपलक्षितेष्वत्र दिनेष्व[5]नियतेष्वथ ॥४४॥
सप्तसप्ततिरुच्यन्ते[6] दानानि तदनन्तरम् ।
मासेष्वनियतेष्वत्र नियतासु तिथिष्वथ ॥४५॥
क्रमाद्दानानि कीर्त्त्यन्ते नानारूपाणि विंशतिः ।
मासतिथ्योर्नियतयो-स्त्रिपञ्चाशदनन्तरम् ॥४६॥
चतुर्दश च नक्षत्र-नियतासु तिथिष्वथ ।
ततो नक्षत्रविहिता-न्यष्ट[7]पञ्चाशदेव तु ॥४७॥

1 I. O. adds a च here.
2 B एकादश च
3 B and I. O. अष्ट चारोग्यदानानि
4 I. O. ०रचिता...मतःपरम्
5 I. O. दिनेषु०
6 Con. A and I. O. सप्तति: परिकीर्त्यन्ते ; B एकसप्ततिरुच्य
7 I. O. ०न्यष्टौ

मासव्यापीनि दानानि षडेव तदनन्तरम् ।
रविसंक्रमणेष्वेव-मेकोनत्रिंश[1]देव तु ॥४८॥
ऋतूपदिष्टानि ततो दानानि दश पञ्च च ।
वत्सरादिषु दानानि[2] सप्तैव तदनन्तरम् ॥४९॥
विप्रकीर्णानि दानानि त्रिपञ्चाशदनन्तरम् ।
सामान्यदेवताभ्यस्तु चतुस्त्रिंशत् क्रमादिह[3] ॥५०॥
एक[4]न्यूनानि सूर्याय चत्वारिंशदनन्तरम् ।
महेश्वराय दानानि ततः सप्तदशैव तु ॥५१॥
विष्णवे चैव दानानि चतुर्विंश-शतं ततः ।
विच्छिद्य पञ्चसप्तत्या-वर्त्तैरेव[5] पृथक् पृथक्[6] ॥५२॥
नानामुनिप्रवचना-मृतनिर्यासराशिभिः ।
पञ्चसप्तति[7]संयुक्त-त्रयोदशशतीमितैः[8] ।
दानैर्निरूप्य यत्नेन नानागमसमाहृतैः ॥५३॥
विद्वत्सभाकमलिनी-राजहंसेन भूभुजा ।
श्रीमद्बल्लालसेनेन कृतोऽयं दानसागरः ॥५४॥

## ( अनुक्तदानानि )

जलाशयानां दानानि तथा च सुरवेश्मनाम् ।
नोक्तानि सम्यगुक्तानि प्रतिष्ठासागरे यतः ॥५५॥
श्रुतान्यादिपुराणे तु दानान्यनु[9]विभागतः ।
आचारसागरोक्तत्वान्न कीर्त्यन्तेऽत्र कृत्स्नशः ॥५६॥

## ( असंगृहीतग्रन्थनामानि )

भागवतञ्च पुराणं ब्रह्माण्डञ्चैव नारदीयञ्च ।
दानविधिशून्यमेतत् त्रयमिह न निबद्धमवधार्य ॥५७॥

---

1 I. O. ०विंश०
2 I. O. वत्सरादिप्रदानानि
3 B and I. O. चतुर्विंशतिधा ततः
4 I. O. एको
5 I. O. ०वर्त्तिरेका
6 B and I. O. क्षतैः
7 B चतुःसप्तति०
8 Con. A ०शतं मितैः ; B and I. O. ०शता मितैः
9 I. O. ०च्छ०

बृहदपि लिङ्गपुराणं मत्स्यपुराणोदितैर्महादानैः ।
अवधार्य तुल्यसारं[1] दाननिबन्धेऽत्र न निबद्धम् ॥५८॥
सप्तम्यैव पुराणं[2] भविष्यमपि संगृहीतमतियत्नात् ।
त्यक्त्वाष्टमीनवम्यौ[3] कल्पौ पाषण्डिभिर्ग्रस्तौ ॥५९॥
लोक[4]प्रसिद्धमेतद्विष्णुरहस्यञ्च शिवरहस्यञ्च ।
द्वयमिह न परिगृहीतं संग्रहरूपत्वमवधार्य ॥६०॥
भविष्योत्तरमाचार-प्रसिद्धमविरोधि च ।
प्रामाण्यज्ञापकादृष्टेर्ग्रन्थादस्मात् पृथक् कृतम् ॥६१॥
प्रचरद्रूपतः स्कन्दपुराणैकांशतोऽधिकम् ।
यत् खण्डत्रितयं पौण्ड्रैरावन्तिकथाश्रयम् ॥६२॥
तार्क्ष्यं पुराणमपरं ब्राह्ममाग्नेयमेव च ।
त्रयोविंशतिसाहस्रं पुराणमपि वैष्णवम् ॥६३॥
षट्सहस्र[5]मितं लैङ्गं[6] पुराणमपरं तथा ।
दीक्षाप्रतिष्ठापाषण्डयुक्ति[7]रत्नपरीक्षणैः ॥६४॥
मृषावंशानुचरितैः कोषव्याकरणादिभिः ।
असङ्गतकथाबन्ध-परस्परविरोधतः[8] ॥६५॥
तन्मीनकेतनादीनां भण्डपाषण्डलिङ्गिनाम् ।
लोकवञ्चनमालोक्य सर्वमेवावधीरितम् ॥६६॥
तत्तत्पुराणोपपुराणसंख्याबहिष्कृतं कश्मल[9]कर्मयोगात् ।
पाषण्डशास्त्रानुमतं[10] निरूप्य देवीपुराणं न[11] निबद्धमत्र ॥६७॥
ये दानधर्मविधिसंस्तुतये पुराणपुण्यागमस्मृतिगिरां बहवो विवर्त्ताः ।
ते ग्रन्थविस्तरभयादवचित्य[12] केचिदस्माभिरत्र कलिताः[13] कलयन्तु सन्तः ॥६८॥

---

1 Con. A अवधार्यलब्धसारं ; B ०तब्ध सारं ; I. O. अवधार्य्य लब्ध-सारदाननिबन्धेतरनिबद्धं
2 Con. A सप्तमं वायुपुराणम् ; B सप्तम्यवायपुराणं ; I.O. सप्तम्यवधिपुराणे
3 I. O. ०नवम्योः कल्पौ
4 A and I. O. लोके०
5 I. O. ०साहस्र०
6 I. O. लिङ्ग
7 I. O. युक्ति
8 I. O. ०विरोधित:
9 I. O. कल्मष०
10 A ०गतं
11 A न तत्पुराणन्तु
12 I. O. ०विचिन्त्य
13 Con. A and B कथिताः ; I. O. कथितः

## ( मुखबन्धः )

एवं निरूप्य यत्नेन प्रारब्धे दानसागरे ।
आदौ ब्राह्मणमाहात्म्यं ततो दानगुणस्तुतिः ॥६६॥
पात्रप्रशंसा पात्राणामपवादस्ततः परम् ।
दानस्वरूपं कर्त्ता च श्रद्धा दानविधिं प्रति ॥७०॥
दानस्य[1] कालदेशाश्च देयस्य च निरूपणम् ।
अपवादश्च दानानामसद्दान[2]निरूपणम् ॥७१॥
ततो दानस्य च विधिः प्रतिग्रहविधिस्ततः ।
सर्वत्र[3] परिभाषा चेत्यथाः पञ्चदश क्रमात् ॥
निरूप्य मुखबन्धार्थं वक्ष्यन्तेऽत्र महीक्षिता ॥७२॥

---

1 I. O. दानस्य
2 I. O. ०सन्मान०
3 B and I. O. सर्वतः

## अथ ब्राह्मण-प्रशंसा ।

तत्र मनुः—

ब्राह्मणो जायमानो हि पृथिव्यामधि जायते ।
ईश्वरः सर्वभूतानां धर्मकोषस्य गुप्तये ॥१॥ ( १।९९ )
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ।
एवं विद्वानविद्वान् वा ब्राह्मणो दैवतं महत् ॥२॥ ( ९।३१७ )
श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति ।
हूयमानश्च यज्ञेषु भूय एवाभिवर्द्धते ॥३॥ ( ९।३१८ )
एवं यद्यप्यनिष्टेषु वर्त्तते सर्वकर्मसु ।
सर्वथा ब्राह्मणः पूज्यो दैवतं परमं महत् ॥४॥ ( ९।३१९ )
परामप्यापदं प्राप्तो ब्राह्मणान्न प्रकोपयेत् ।
ते ह्येनं कुपिता हन्युः सद्यः सबलवाहनम् ॥५॥ ( ९।३१३ )
यैः कृतः सर्वभक्षोऽग्निरपेयश्च महोदधिः[1] ।
क्षयी चाप्यायितश्चन्द्रः को न नश्येत् प्रकोप्य तान् ॥६॥ ( ९।३१४ )
लोकानन्यान् सृ[2]जेयुर्ये लोकपालांश्च कोपिताः ।
देवान् कुर्युरदेवांश्च कः क्षिण्वंस्तान् समृध्नुयात् ॥७॥ ( ९।३१५ )
यान् समाश्रित्य तिष्ठन्ति देवा लोकाश्च सर्वदा ।
ब्रह्म एव[3] धनं येषां को हिंस्यात्तान् जिजीविषुः ॥८॥ ( ९।३१६ )

याज्ञवल्क्यः ( १।१९८ )—

तपस्तप्त्वासृजद् ब्रह्मा ब्राह्मणान् वेदगुप्तये ।
तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च ॥९॥

[4]यम :—

ब्राह्मणा देवता लोके ब्राह्मणा दिवि देवताः ।
त्रैलोक्ये ब्राह्मणाः श्रेष्ठा ब्राह्मणाः सर्वकारणम्[5] ॥१०॥

---

1 I. O. पयोनिधिः
2 Corrected from Manu. A and B सजेयार्य ; I. O. पूजयेयुर्लोकपालाश्च पूजिताः
3 I. O. ब्रह्मैव च…तेषां
4 A and B omit it.
5 A ब्राह्मणा एककारणम्. I. O. ब्राह्मणा एव कारणम्

ब्राह्मणाश्चैव देवाश्च तेज एकं द्विधाकृतम् ।
प्रत्यक्षं ब्राह्मणा देवाः परोक्षं दिवि देवताः ॥११॥
ब्राह्मणा यत्र नाश्नन्ति तत्र नाश्नन्ति देवताः ।
ब्राह्मणेषु च तुष्टेषु सन्तुष्टाः सर्वदेवताः[1] ॥१२॥
पैत्रे नियुक्ताः पितरो भवन्ति क्रियासु दैवीषु भवन्ति देवाः ।
द्विजोत्तमा हस्तनियुक्ततोयास्तेनैव देहेन भवन्ति देवाः ॥१३॥
यद्ब्राह्मणास्तुष्टतमा[2] वदन्ति तद्देवताः कर्मभिराचरन्ति ।
तुष्टेषु तुष्टाः सततं भवन्ति प्रत्यक्षदेवेषु परोक्षदेवाः ॥१४॥
( = विष्णुधर्मोत्तरम् ३।२६०।६ )

यथा रुद्रा यथादित्या मरुतो वसवोऽश्विनौ ।
ब्रह्मा यमः सोमसूर्य्यौ तथा लोके द्विजोत्तमाः ॥१५॥
एते पुराणदेवा वै धारयन्ति प्रजा इमाः ।
पवित्रं परमं लोके तेषु धर्मः प्रतिष्ठितः ॥१६॥
यद् वै हविर्हुतं मन्त्रैर्ब्राह्मणा नैव भुञ्जते ।
न प्रीणयन्ति तद्देवानतिदेवा हि ब्राह्मणाः ॥१७॥
देवाधीनाः प्रजाः सर्वा यज्ञाधीनाश्च देवताः ।
ते यज्ञा ब्राह्मणाधीनास्तस्माद्देवा द्विजोत्तमाः ॥१८॥
शक्यं हि कवचं भेत्तुं नाराचेन शरेण वा ।
अपि वज्रसहस्रेण ब्राह्मणाशीस्तु दुर्भिदा[3] ॥१९॥
आसन्नो हि दहत्यग्निर्दूराद्दहति ब्राह्मणः ।
प्ररोहत्यग्निना[4] दग्धं विप्रदग्धं[5] न रोहति ॥२०॥
ब्राह्मणानाञ्च शापेन सर्वभक्षो हुताशनः ।
समुद्रश्चाप्यपेयश्च विकलश्च पुरन्दरः ॥२१॥

विकलो वृषणशून्यः ।

चन्द्रमा राजयक्ष्मी च पृथिव्यामूषराणि च ।
वनस्पतीनां निर्यासो दानवानां पराजयः ॥२२॥

---

1 A ततस्तुष्यन्ति देवताः
2 A यद्ब्राह्मणाः पूज्यतमा
3 A and I. O. ब्राह्मणाशीः सुदुर्भिदा
4 I. O. चारोहत्यग्निना
5 A ब्रह्मदग्धं

अनन्तान्येव तेजांसि ब्राह्मणानां महात्मनाम् ।
तस्माद्विप्रेषु नृपतिः प्रणमेन्नित्यमेव तु[1] ॥२३॥

वामनपुराणे ( ६५।७-६ ) :—

पूजितेषु द्विजेन्द्रेषु [ [2]पूजितः स्याज्जनार्दनः ] ।
यस्तान् द्विषति[3] मूढात्मा स याति नरकं ध्रुवम् ॥२४॥
तानर्चयेन्नरो भक्त्या[4] ब्राह्मणान् विष्णुतत्परः ।
एवमाह हरिः पूर्वं ब्राह्मणो मामकी तनूः ॥२५॥
ब्राह्मणो नावमन्तव्यो बुधो वाप्यबुधोऽपि वा ।
[5]सोऽपि दिव्या तनूर्विष्णोस्तस्मात्ता[6]नर्चयेद्बुधः ॥२६॥

श्रीरामायणे—

ब्राह्मणा हि महात्मानः श्रियो मूलं भवस्य च ।
स्युश्चैव सर्वकार्येषु ब्राह्मणा ब्रह्मवादिनः ॥२७॥
देवाः पुत्रभवार्थाय प्रजानां विबुधोत्तमैः ।
प्रेषिता मानुषं लोकं भूमिदेवा द्विजातयः ॥२८॥

विष्णुधर्मोत्तरे ( ३।२६०।१-५) :—

ब्राह्मणा दैवतं भूमौ ब्राह्मणा दिवि देवताः ।
ब्राह्मणेभ्यः परं नास्ति भूतं किञ्चिज्जगत्त्रये[7] ॥२६॥
अदैवं दैवतं कुर्युः कुर्युर्दैवमदैवतम् ।
ब्राह्मणा हि महाभागाः पूज्यास्ते[8] सततं द्विजाः ॥३०॥ (२।३२।१४)
ब्राह्मणेभ्यः समुत्पन्ना देवाः पूर्वमिति श्रुतिः ।
ब्राह्मणेभ्यो जगत् सर्वं तस्मात् पूज्यतमाः सदा ॥३१॥
येषामश्नन्ति वक्त्रेण देवताः पितरस्तथा ।
ऋषयश्च महाभागाः किं भूतमधिकं ततः ॥३२॥

---

1 I. O. च
2 Vāmana P. पूजितस्तु जनार्दनः for the b. p.
3 Vāmana P. द्वेष्टि स
4 A तानर्चयन्नरो भक्तो
5 Corrected from Vāmana P. I. O. and A सा हि
6 Vāmana P. ०त्त' समर्चयेन्नरः
7 I. O. किन्तु जगत्त्रये
8 A, I. O. and V. D. पूज्यन्ते

यदेव मनुजो भक्त्या ब्राह्मणेभ्यः प्रयच्छति ।
तदेवाप्नोति धर्मज्ञा बहु जन्मनि जन्मनि ॥३३॥

## अथ दानप्रशंसा ।

तत्र व्यासः :—

यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने ।
तत्ते वित्तमहं मन्ये शेषं कस्यापि रक्षसि ॥१॥ (४।१६)
यद्ददाति यदश्नाति तदेव धनिनो धनम् ।
अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि ॥२॥ (४।१७)
अहन्यहनि याचन्तमहं मन्ये गुरुं यथा[1] ।
मार्जनं दर्पणस्येव यः करोति दिने दिने ॥३॥
आयासशतलब्धस्य[2] प्राणेभ्योऽपि गरीयसः ।
गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥४॥
किं धनेन करिष्यन्ति देहिनो भङ्गुराश्रयाः ।
यदर्थं धनमिच्छन्ति तच्छरीरमशाश्वतम् ॥५॥ (४।१८)
यदि नाम न धर्माय न कामाय न कीर्तये[3] ।
यत् परित्यज्य गन्तव्यं[4] तद्धनं किं न[5] दीयते ॥६॥ (४।२०)
जीविते यस्य जीवन्ति विप्रा मित्राणि बान्धवाः ।
सफलं जीवितं तस्य आत्मार्थे[6] को न जीवति ॥७॥ (४।२१)
किं कायेन सुपुष्टेन बलिना चिरजीविना । (४।२२ख)
यन्न सर्वोपकाराय[7] तज्जीवितमनर्थकम् ॥८॥
ग्रासादर्द्धमपि ग्रासमर्थिभ्यः किं न दीयते ।
इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥९॥ (४।२३)
अदाता पुरुषस्त्यागी धनं सन्त्यज्य गच्छति ।
दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति ॥१०॥ (४।२४)

---

1 A तथा
2 B उपायशतलब्धस्य
3 B कामये
4 A गच्छन्ति
5 I. O. तु
6 A and I. O. चात्माय
7 A सत्त्वोपकाराय

यमः—

यमिनां[1] परमो धर्मस्त्वनाहारो वनौकसाम् ।
दानमेव गृहस्थानां शुश्रूषा ब्रह्मचारिणाम् ।
[2][यतीनाञ्चाप्यु]परमः[3] संसारस्य निवर्तकः ॥११॥

बृहस्पतिः—

द्वावेवाप्सु प्रवेष्टव्यौ गले बद्धा दृढां शिलाम् ।
धनवन्तमदातारं दरिद्रञ्चातपस्विनम् ॥१२॥

मत्स्यपुराणे (२७४।१) :—

न्यायेनार्जनमर्थस्य[4] वर्धनञ्चाभि[5]रक्षणम् ।
सत्पात्र[6]प्रतिपत्तिश्च सर्वशास्त्रेषु पठ्यते ॥१३॥

नन्दिपुराणे—

दानं परं प्रशंसन्ति दानमेव परायणम् ।
दानं बन्धुर्मनुष्याणां दानं कोषमनुत्तमम् ॥१४॥
दानं कामफला वृक्षा दानं चिन्तामणिर्नृणाम् ।
दानं पुत्रकलत्राद्यं[7] दानं माता तथा पिता[8] ॥१५॥
न दानेन विना[9] किञ्चित् प्रार्थितं फलमाप्यते ।
अपि बाणाग्रमात्रस्य लाभो नैवेह विद्यते ।
अदानशालिनां पुंसां तस्माद्दानं समाश्रयेत् ॥१६॥
बाणावृत-[10]पताकौघ-ध्वजेभेन्द्रप्रयायिनम् ।
राजानं बुद्धिमान्[11] बुध्येद् दानस्यानश्वरं फलम् ॥१७॥
धावतो[12] देहि देहीति क्वचित् क्वचिदितस्ततः ।
दृष्ट्वा दानं प्रयत्नेन मतिमानाश्रयेन्नरः ॥१८॥

---

1 A and I. O. यतीनां
2 I. O. omits the bracketed portion
3 A परिचर्या यतीनाञ्च
4 M. P. ०मर्थानां
5 I. O. ०ञ्चापि
6 I. O. ञ्जीव०
7 Con. A, B and I. O. ०पुत्रं परत्राद्यं
8 B and I. O. ०पिता तथा
9 I. O. adds another विना here
10 I. O. बाणाच्छित०
11 A and I. O. मतिमान्
12 Con. I. O. याचन्तो, A & B याचन्ते

हारनूपुरनिर्घोषपूरितोत्तममन्दिरम् ।
लावण्यगुणसम्पत्तिसर्वस्वनिलयाः स्त्रियः ।
एकस्य भुक्तये[1] तस्माद्दृष्ट्वा दानं समाश्रयेत् ॥१६॥

इति दृष्ट्वा दानं समाश्रयेदित्यर्थः ।

दुर्भगान् मलिनान् क्रूरान् स्वदारैरपि निर्धुतान् ।
विलोक्य पुरुषो बुध्येद्दानस्यापदमुत्तमाम् ॥२०॥

महाभारते ( अनुशासनपर्व-दानधर्मे )—

अद्भिर्गात्रान्मलमिव[2] तमो ह्यग्निभयाद् यथा ।
दानेन तपसा चैव सर्वपापमपोह्यते ॥२१॥
धने खिद्यन्ति पुरुषा न च तत् कस्यचिद्धनम् ।
श्रद्दधानस्ततो लोके दद्याच्चैव यजेत च ॥२२॥
[3]हुतेन शाम्यते पापं स्वाध्यायैः शान्तिरुत्तमा ।
दानेन भोगा इत्याहुस्तपसा सर्वमाप्यते ॥२३॥
यानि यान्युत्तमानीह वेदोक्तानि प्रशंससि ।
तेषां श्रेष्ठतमं दानमिति मे नास्ति संशयः ॥२४॥
दानकृद्भिः कृतः पन्था येन यान्ति मनीषिणः ।
ते हि प्राणस्य दातारस्तेषु धर्मः प्रतिष्ठितः ॥२५॥
यथा वेदाः स्वधीताश्च यथा चेन्द्रियसंयमः ।
सर्वत्यागो यथा चेह तथा दानमनुत्तमम् ॥२६॥

धनेन किं यन्न ददाति चार्थिने
बलेन किं येन रिपुं न बाधते ।
श्रुतेन किं येन न धर्ममाचरेत्
किमात्मना यो न जितेन्द्रियो भवेत्[4] ॥२७॥

विष्णुधर्मोत्तरे—( ३।३००।१-२ )

दानं देवाः प्रशंसन्ति मनुष्याश्च तथा द्विजाः ।
दानेन कामानाप्नोति यान् कांश्चिन्मनसेप्सितान्[5] ॥२८॥

---

1 Con. A and B भुक्तये
2 I. O. ०न्मलानीव
3 I. O. दानेन
4 A and I. O. वशी
5 I. O. ०न्मनसेच्छसि,
V. D. ०न्मनसेच्छति

अदत्तदानान् कृपणान् दृष्ट्वेह परतर्ककान् ।
पारत्रिकं विधिं कुर्याद्दानं विप्रेषु मानवः ॥२६॥

परतर्ककान् प्रार्थनाशीलान् ।

[1]काले देशे तथा पात्रे धनं न्यायगतं तथा ।
यद्दत्तं ब्राह्मणश्रेष्ठास्तदनन्तं प्रकीर्त्तितम् ॥३०॥ ( ३।३००।१४ )

## अथ पात्रप्रशंसा

तत्र मनुः ( ७।८६ )—

पात्रस्य हि विशेषेण श्रद्दधानतयैव च ।
अल्पं वा बहु वा प्रेत्य दानस्यावाप्यते फलम् ॥१॥

शातातपः—

वेदविद्याव्रतस्नाते श्रोत्रिये गृहमागते ।
क्रीडन्त्योषधयः सर्वा यास्यामः परमां गतिम् ॥२॥

श्रोत्रियश्च यमेनोक्तः ।

ॐकारपूर्विकास्तिस्रः सावित्रीं यश्च विन्दति ।
चरितब्रह्मचर्यश्च स वै श्रोत्रिय उच्यते ॥३॥

तिस्र इत्यत्र व्याहृतीरिति शेषः ।

यमः—

वेदेन्धनसमिद्धेषु हुतं विप्रमुखाग्निषु ।
सन्तारयति दातारं महतः किल्विषादपि ॥४॥

दानव्यासः—

यत् सिद्धं[2] वेदविद्भुङ्क्ते षट्कर्मनिरतः शुचिः ।
दातुः फलमसंख्येयं जन्म जन्म तदक्षयम् ॥५॥ (Cf. व्यास ४।५५)
शीलं संवसता ज्ञेयं शौचं संव्यवहारतः[3] ।
प्रज्ञा संकथया[4] ज्ञेया त्रिभिः पात्रं परीक्ष्यते ॥६॥

शीलञ्च हारीतेनोक्तम् । तथाच हारीतः—

1 I. O. adds तथा ॥ here.
2 I. O. सिक्तं
3 I. O. संव्यवहारतः
4 B संकथनात्

ब्रह्मण्यता देवपितृभक्तता समता सौम्यता अपरोपतापिता अनसूयता मृदुता अपारुष्यं मैत्रता प्रियवादिता[1] कृतज्ञता शरण्यता प्रशान्तिश्चेति त्रयोदशविधं शीलम् ॥७॥

याज्ञवल्क्यः ( १।२०० )—

न विद्यया केवलया तपसा वापि पात्रता ।
यत्र युक्ते[2] इमे चाभे तद्धि पात्रं प्रकीर्त्तितम् ॥८॥

यमः—

विद्यायुक्तो धर्मशीलः प्रशान्तः
क्षान्तो दान्तः[3] सत्यवादी कृतज्ञः ।
वृत्तिग्लानो गोहितो गोशरण्यो[4]
दाता यज्वा ब्राह्मणः पात्रमाहुः ॥९॥

प्रशान्तो जितेन्द्रियः। क्षान्तो वाग्दण्डपारुष्यादौ अकलुषचित्तः। दान्तो व्रतादिक्लेशसहिष्णुः। गोहितो गवां[5] ग्रासस्य दाता। [6]गोशरण्यो गवामुपद्रवस्य बाधकः।

अहिंसानिरतो नित्यं जुह्वानो[7] जातवेदसम् ।
स्वदारनिरतो दान्तः[8] स वै ब्राह्मण[9] उच्यते ॥१०॥
श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा ।
असम्भिन्नार्यमर्यादः स वै ब्राह्मण उच्यते ॥११॥

श्रुतञ्च हारीतेनोक्तम्। तथाच हारीतः—

वेदा[10] वेदाङ्गानि धर्मोऽध्यात्मं विज्ञानं स्थितिश्चेति षड्विधं श्रुतमिति ॥१२॥

आशिषोऽन्वर्थपूजायां[11] प्रसङ्गं न करोति यः ।
निवृत्तो लोभमोहाभ्यां तं देवा ब्राह्मणं विदुः ॥१३॥

[प्रसङ्गो निर्वाहयुक्तस्यापि पुनः पुनः प्रतिग्रहानुष्ठानम् ।

सत्यं दानं क्षमा शीलमानृशंस्यं दया घृणा ।
दृश्यते यत्र लोकेऽस्मिंस्तं देवा ब्राह्मणं विदुः ॥१४॥][12]

---

1 B and I. O. प्रियवादित्वं
2 A, I. O. and Yaj. हत्तम्
3 A and B प्रशान्तो दान्तः क्षान्तः
4 I. O. गोसनाथो
5 A गवार्थे
6 I. O. गोसनाथो...वारकः
7 I. O. अज्वालो
8 B दाता
9 B श्रोत्रिय
10 A, B and I. O. omit वेदा
11 A चाशिषोन्वर्थी पूजाश्चतत् ; B चाशिषोथार्थं पूजाश्च ; I. O. चाशिषोन्वार्थापूजाश्च
12 I. O. omits the bracketed-portion

तपो धर्मो दया दानं सत्यं ज्ञानं श्रुतिर्घृणा ।
विद्याविनयमास्तिक्यमेतद् ब्राह्मणलक्षणम् ॥१५॥

सत्यादिकञ्च महाभारते उक्तम् । तथा च[1] महाभारतम्—

सत्यं भूतहितं प्रोक्तं मनसो दमनं दमः ।
तपः स्वधर्मवृत्तित्वं[2] शौचं सङ्करवर्जितम् ॥१६॥
सन्तोषो विषयत्यागो ह्रीरकार्यनिवर्तनम् ।
क्षमा द्वन्द्वसहिष्णुत्वमार्जवं समचित्तता ॥१७॥
ज्ञानं तत्त्वार्थ[3]सम्बोधः शमश्चित्तप्रसन्नता ।
दया सर्वसुखैषित्वं[4] ध्यानं निर्विषयं मनः ॥१८॥ इति ।

विनयश्च हारीतेनोक्तः । तथाच हारीतः—

इन्द्रियदोषोपनिवृत्तिर्विनयः ॥१९॥ इति ।

आनृशंस्यं परापकारेच्छानिवृत्तिः । असत्क्रियासु लज्जा घृणा । श्रुतिर्वेदः । विद्या वेदव्यतिरिक्तविद्यास्थानानि ।

विद्यावन्तश्च ये विप्राः सुव्रताश्च[5] तपस्विनः ।
सत्यसंयमसंयुक्ता ध्यानवृत्ता जितेन्द्रियाः ।
पुनन्ति दर्शनं प्राप्ताः[6] किं पुनः सङ्गतिं गताः ।
तेषां दत्त्वा च भुक्त्वा च प्राप्नुयुः[7] परमां गतिम् ॥२०॥

सुव्रता यथाविधि चरितव्रताः । ध्यानवृत्ता आत्मध्यानपराः । भुक्त्वेति[8] भोजनं दत्त्वेत्यर्थः । वशिष्ठः—

ये क्षान्तदान्ताः श्रुतपूर्णकर्णा
जितेन्द्रियाः प्राणिवधे निवृत्ताः ।
प्रतिग्रहे सङ्कुचिताग्रहस्ता-
स्ते ब्राह्मणास्तारयितुं समर्थाः ॥२१॥

किञ्चिद् वेदमयं पात्रं किञ्चित् पात्रं तपोमयम् ।
पात्राणामपि तत् पात्रं शूद्रान्नं यस्य नोदरे ॥२२॥ ( =व्यास ४।३२ )

शूद्रान्नं यस्य नोदर इति साक्षाच्छूद्रदत्त[9]घृततण्डुलाद्यनुपयोगीत्यर्थः।

---

1 I. O. omits च
2 I. O. ०वर्त्तित्वं 3 I. O. तत्त्वान्व०
4 I. O. भूतहितैषित्वं
5 I. O. समव्रताश्च
6 B दर्शनप्राप्ताः
7 A and I. O. प्राप्नुमः
8 B भुक्त्वेति तत्कृते I. O. दत्त्वाशेषां भुक्त्वेति
9 I. O. omits दत्त

दानव्यासः ( Cf. ४।३२ )—

किञ्चिद् वेदमयं पात्रं किञ्चित् पात्रं[1] तपोमयम् ।

असङ्कीर्णन्तु[2] यत् पात्रं तत् पात्रं तारयिष्यति ॥२३॥

असङ्कीर्णं स्वाश्रितैकवृत्तिव्यतिरिक्तवृत्त्यव्यवहारि[3], पापिष्ठासंसर्गि वेत्यर्थः ।

महाभारते—

साङ्गांस्तु चतुरो वेदान् योऽधीते वै द्विजर्षभः ।

षड्भ्यो निवृत्तः कर्मभ्यस्तं पात्रमृषयो विदुः ॥२४॥ ( अनु—२२।३६ )

षड्भ्यो निवृत्त इति सङ्कुचितवृत्तिरध्यापनमात्रोपजीवी ।

यथा हि स्वकृते क्षेत्रे फलं [4]विन्दति मानवः ।

एवं दत्त्वा श्रुतवति फलं दाता समश्नुते ॥२५॥

देवलः—

मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च ततः परम् ।

अनूचानस्तथा भ्रूण ऋषिकल्प ऋषिर्मुनिः ॥२६॥

इत्येतेऽष्टौ समुद्दिष्टा ब्राह्मणा प्रथमं श्रुतौ ।

तेषां परः परः श्रेष्ठो विद्यावृत्त[5]विशेषतः ॥२७॥

ब्राह्मणानां कुले जातो जातिमात्रो यदा भवेत् ।

अनुपेतः क्रियाहीनो मात्र इत्यभिधीयते ॥२८॥

अनुपेतः वेदसन्निधिमगतः सर्वथा वेदाभ्यासशून्य इत्यर्थः ।

एकोद्देशमतिक्रम्य वेदस्याचारवानृजुः ।

स ब्राह्मण इति प्रोक्तो निभृतः[6] सत्यवाग् घृणी ॥२९॥

एकोद्देशमतिक्रम्येति वेदस्यैकदेशमतिशयेन ज्ञात्वा, क्रमेर्गत्यर्थत्वेन ज्ञानार्थत्वात् । एतेन मन्त्रमात्राध्यायीत्युक्तं भवति । निभृतो[7] विनीतः ।

एकाञ्च शाखां सकलां[8] षड्भिरङ्गैरधीत्य च ।

षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित् ॥३०॥

---

1 I. O. वृत्तं
2 I. O ०र्ण
3 I. O. चाश्रितैकवृत्तिव्यतिरिक्तावृत्त्यव्यवहारि
4 B and I. O. विन्दन्ति मानवाः
5 Supplied from quot. in Dānakāṇḍa. B ०वृत्तो, I. O. ०कर्म्म
6 A, B and I. O. निवृत्तः
7 B निवृत्तो, I. O. निवृतो
8 D. K. एकां शाखां सकल्पां वा

वेदवेदाङ्गतत्त्वज्ञः शुद्धात्मा पापवर्जितः ।
शेषं श्रोत्रियवत् प्राप्तः सोऽनूचान इति स्मृतः ॥३१॥

वेदवेदाङ्गतत्त्वज्ञ इति वेदवेदाङ्गार्थतत्त्वज्ञः । शुद्धात्मा पापसङ्कल्परहितः ।

अनूचानगुणोपेतो यज्ञस्वाध्याययन्त्रितः ।
भ्रूण इत्युच्यते शिष्टैः शेषभोजी जितेन्द्रियः ॥३२॥

यज्ञस्वाध्याययन्त्रित इति बहुयज्ञयाजी स्वाध्यायनिरतश्च । शेषभोजी पञ्चयज्ञशेषभोजी[1]

वैदिकं लौकिकञ्चैव सर्वं ज्ञानमवाप्य यः ।
आश्रमस्थो वशी नित्यमृषिकल्प इति स्मृतः ॥३३॥

आश्रमस्थो गृहस्थाश्रमस्थः । वशी जितेन्द्रियः ।

ऊर्द्ध्वरेतास्तपस्युग्रो[2] नियताशी न संशयी ।
शापानुग्रहयोः शक्तः सत्यसन्धो भवेदृषिः ॥३४॥
निर्वृतः[3] सर्वतत्त्वज्ञः कामक्रोधविवर्जितः ।
ध्यानस्थो[4] निष्क्रियो दान्तस्तुल्यमृत्काञ्चनो मुनिः ॥३५॥
एवमन्वयविद्याभ्यां वृत्तेन च समुच्छ्रिताः[5] ।
त्रिशुक्ला नाम विप्रेन्द्राः पूज्यन्ते सवनादिषु[6] ॥३६॥

तथा—

प्रतिग्रहमसद्भ्योऽपि कृत्वा विप्रो यथाविधि ।
निस्तारयति दातारमात्मानञ्च स्वतेजसा[7] ॥३७॥

मनुः ( ११।१-२ )—

सान्तानिकं यक्ष्यमाणमध्वगं सार्ववेदसम् ।
गुर्वर्थं पितृमात्रर्थं स्वाध्यायार्थ्युपतापिनौ ॥३८॥

सान्तानिकं कन्यादातारं विवाहस्य कर्त्तारञ्च । यक्ष्यमाणं पौण्डरीकादियागस्य कर्त्तारम् । सार्ववेदसं कृतसर्वस्वदक्षिणयागम् । उपतापिनं व्याधिपीडितम् ।

---

1 B यज्ञशेषभोक्ता
2 B ऊर्द्ध्वरेतास्तु यो विप्रो, I. O ऊर्द्ध्व-रेतास्तु यो विप्रो
3 I. O. निवृत्तः
4 A ध्यानस्थो
5 A समन्विताः, I. O. समन्वितः
6 A सर्वकर्मसु
7 I. O. सुतेजसा

नवैतान् स्नातकान् विद्याद् ब्राह्मणान् धर्मभिक्षुकान् ।
निःस्वेभ्यो देयमेतेभ्यो दानं विद्याविशेषतः ॥३९॥
एतेभ्यो हि द्विजाग्र्येभ्यो देयमन्नं सदक्षिणम् ।
इतरेभ्यो बहिर्वेदि कृतान्नन्तु विधीयते ॥४०॥

अस्यार्थः—एतेभ्यो नवभ्यः सदक्षिणं कृतान्नमकृतान्नञ्च यज्ञमध्ये देयम् । इतरेभ्यस्तु कृतान्नमात्रं यज्ञप्रयोगव्यतिरेकेण देयम् ।

बृहस्पतिः—

सर्वत्र गुणवद्दानं श्वपाकादिष्वपि स्मृतम् ।
देशकालविधानेन पात्रे दत्तं विशेषतः ॥४१॥

तथा—

शूद्रे समगुणं दानं वैश्ये तु द्विगुणं स्मृतम् ।
क्षत्रिये त्रिगुणं प्राहुः षड्गुणं ब्राह्मणे स्मृतम् ॥४२॥
श्रोत्रिये चैव साहस्रमाचार्ये द्विगुणं ततः ।
आत्मज्ञे [1]नवसाहस्रमनन्तं त्वग्निहोत्रिणि ॥४३॥

अत्र च ब्राह्मणस्य पूर्वपूर्वरूपसम्भवे सति उत्तर उत्तर उत्कर्षः । वैश्यक्षत्रिययोस्तु[2] द्वैगुण्यं त्रैगुण्यं जातिमात्रयोः । [3]उत्कृष्टवैश्यक्षत्रियविषयकः फलोत्कर्षो यमेनोक्तः ।

तथा च यमः—

शूद्रे समगुणं दानं वैश्ये त्रिगुणमुच्यते ।
षड्गुणं क्षत्रिये प्राहुर्विप्रे दशगुणं पुनः ॥४४॥

मनुः ( ७।८५ )—

सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
सहस्रगुणमाचार्ये[4] अनन्तं वेदपारगे ॥४५॥ (=व्यास ४।४०=दक्ष ३।२६)

आचार्यः साङ्गसरहस्य-वेदाध्यापकः । वेदपारगः[5] साङ्गवेदार्थ-तत्त्वज्ञः ।

अब्राह्मणलक्षणे दानव्यासः ( ४।४१ )—

ब्रह्मबीजात् समुत्पन्नो मन्त्रसंस्कारवर्जितः ।
जातिमात्रोपजीवी च भवेदब्राह्मणस्तु सः[6] ॥४६॥

ब्राह्मणब्रुवलक्षणेऽपि[7] दानव्यासः (४।४२)—

1 I. O. शत०
2 A क्षत्रियवैश्ययोश्च, I. O. ०श्च
3 A I. O. उत्कृष्टवैश्यक्षत्रिययोस्तु उत्कृष्ट-क्षत्रियवैश्ययोश्च,
4 Manu प्राप्नोति शतसाहस्रम्
5 I. O. वेदाध्यापकः
6 B and I. O. भवेदब्राह्मणः स तु
7 B and I. O. omit अपि

गर्भाधानादिभिर्युक्तस्तथोपनयनेन च ।
न कर्मकृन्न चाधीते स भवेद्ब्राह्मणब्रुवः ॥४७॥

न कर्मकृत् अग्निसाध्यकर्मरहितः ।

विष्णुधर्मोत्तरे (३।३००।३-४) :—

अमनुष्ये समं दानं गोषु ज्ञेयं महाफलम् ।
द्विगुणञ्च तदेवोक्तं तथा वै वर्णसङ्करे ॥४८॥

अमनुष्ये गोमनुष्यव्यतिरिक्तप्राणिमात्रे ।

शूद्रे चतुर्गुणं प्रोक्तं वैश्ये[1] चाष्टगुणं भवेत् ।
क्षत्रिये षोडशगुणं ब्रह्मबन्धौ तदेव तु ॥४९॥

शूद्रे तु[2] उत्कृष्टशूद्रे । वैश्ये क्षत्रिये च वेदाग्नियुक्ते ।

ब्रह्मबन्धुश्च हारीतेनोक्तः—

शूद्रप्रेष्यो भृतो राज्ञो वृषलो ग्रामयाजकः ।
वधबन्धोपजीवी च षडेते ब्रह्मबन्धवः ॥५०॥ इति ।

वृषलश्च वेदश्रद्धारहितः कृतधर्मपरित्यागश्च रजस्वलायाः परिणेता चेति ।

द्वात्रिंशद्घ्नं श्रुतं[3] दानं वेदाध्ययनतत्परे ।
शतघ्नन्तु विनिर्दिष्टं प्राधीते लक्षसम्मितम् ॥५१॥ (=वि. ध.३।३००।५)

द्वात्रिंशद्घ्नं द्वात्रिंशद्गुणितम् ।

अनन्तञ्च तदेवोक्तं ब्राह्मणे वेदपारगे ॥५२॥ (=वि. ध. ३।३००।६क)

याज्ञवल्क्यः (१।१९९)—

सर्वस्य प्रभवो विप्राः श्रुताध्ययनशालिनः[4] ।
तेभ्यः क्रियापरा श्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाः ॥५३॥

अत्र पूर्वपूर्वसम्भवे सति उत्तरोत्तरसम्भवादुत्कर्षः ।

वशिष्ठः—

य न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् ।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित स ब्राह्मणः ॥५४॥

---

1 I. O. and V. D. विप्रे
2 A and I. O. omit तु
3 I. O. स्मृतं
4 A ०तत्पराः, I. O. श्रुताध्ययनतत्पराः

एतेन तत्त्वज्ञोऽभिहितः ।

कूर्मपुराणे (२।२६।५६) :—

[1]स्वर्गप्रभृतिकामेन तथा पापोपशान्तये ।
[2]मुमुक्षुणा च दातव्यं [3]ब्राह्मणेभ्यस्तथान्वहम् ॥५५॥

शातातपः—

सन्निकृष्टमधीयानं व्यतिक्रामेत यो द्विजम् ।
भोजने चैव दाने च स हन्त्यासप्तमं[4] कुलम् ॥५६॥ ( Cf. व्यास ४।३६)
यस्त्वासन्नमतिक्रम्य ब्राह्मणं पतितादृते ।
दूरस्थं भोजयेन्मूढो गुणाढ्यं नरकं व्रजेत् ॥५७॥
तस्मान्नातिक्रमेत् प्राज्ञो ब्राह्मणान् प्रातिवेशिकान् ।
सम्बन्धिनस्तथा सर्वान् दौहित्रं विट्पतिं तथा ॥५८॥
भागिनेयं विशेषेण तथा बन्धून् गृहाधिपः[5] ।
नातिक्रामेन्नरस्त्वेतान्[6] सुमूर्खानपि गोपते ॥
अतिक्रम्य महारौद्रं रौरवं नरकं व्रजेत् ॥५९॥

महाभारते (अनु—२३।५१, ५७, ५४, ५८)—

तद्भक्तास्तद्धना राजंस्तद्गृहास्तदपाश्रयाः ।
अर्थिनश्च भवन्त्यर्थे[7] तेषु दत्तं महाफलम् ॥६०॥
कृतसर्वस्वहरणा निर्दोषाः प्रभविष्णुभिः ।
स्पृहयन्ति सुभक्तानां[8] तेषु दत्तं महाफलम् ॥६१॥

सुभक्तानां शोभनभक्तानाम् ।

---

1 K. P. स्वर्गायुर्भूतिकामेन, I. O. स्वर्गात्
2 I. O. मुमुक्षुणाच
3 I. O. ब्राह्मणेभ्यो यथान्वहम्
4 A and I. O. हन्यात् सप्तमं, B हन्या सप्तमं
5 A गृहाधिपान्
6 A ०नरांस्तेतान्, I. O. ०नरांस्त्वेतान् समूर्खानपि
7 I. O. भवन्तीति
8 I. O. सुभुक्तानाम्

हृतस्वा हृतदाराश्च ये विप्रा देशसंप्लवे[1] ।
[2]अर्थार्थमभिगच्छन्ति तेभ्यो दत्तं[3] महाफलम् ॥६२॥
तपस्विनस्तपोनिष्ठा[4]स्तथा भैक्षचराश्च ये ।
अर्थिनः किञ्चिदिच्छन्ति तेषां दत्तं महाफलम् ॥६३॥

विष्णुधर्मोत्तरे—(३।३००।६ख—१०क, ३०ख—३१ख)

आत्मनस्तु भवेत् पात्रं नान्यस्य तु पुरोहितः ।
पुरोहिते तु स्वं दत्तं[5] दानमक्षयमुच्यते ॥६४॥
याजके ऋत्विजे चैव गुरावपि च मानवैः[6] ।
वर्णापेक्षा न कर्तव्या मातरं पितरं प्रति ॥६५॥
मातृष्वसां स्वसाञ्चैव तथैव च पितृष्वसाम् ।
मातामहीं भागिनेयं मातुलञ्च[7] तथैव च ॥६६॥
दौहित्रं विट्पतिञ्चैव तेषु दत्तमथाक्षयम् ।
श्रीभ्रष्टे च तथा दत्तं तदप्यक्षयमुच्यते ॥६७॥
दीनान्धकृपणानाथवाग्विहीनेषु यत्तथा ।
विकलेषु तथान्येषु जडवामनपङ्गुषु ।
रोगार्तेषु च यद्दत्तं तत् स्याद्बहुफलं धनम् ॥६८॥

शातातपः—

दर्भाः कृष्णाजिनं मन्त्रा[8] ब्राह्मणा हविरग्नयः ।
अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥६९॥ (Cf. लिखित ४०)

अयातयामान्यतिशयवीर्यशालीनि ।

याज्ञवल्क्यः (१।२०१)—

गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम् ।
नापात्रे विदुषा [देयमात्मनः श्रियमिच्छता][9] ॥७०॥

---

1 B देशविप्लवे
2 I. O. मर्थार्थमधि०
3 A दानं
4 A ०स्तपोनित्या०
5 A पुरोहितेषु स्वदत्तं
6 A and I. O. मानवः, B मानवाः
7 B, I. O. and V. D. भागिनेयीं भागिनेयं
8 A ब्राह्मणाय विशेषतः
9 Yāj. the bracketed portion as किञ्चिदात्मनः श्रेय इच्छता

## अथ पात्रापवादः

तत्र व्यासः (४।६२)—

ऊषरे[1] पतितं बीजं भिन्नभाण्डे च दोहनम् ।
भस्मन्यपि हुतं हव्यं तद्वद्दानमसाधुषु ॥१॥

दक्षः (३।२७)—

विधिहीने तथाऽपात्रे यो ददाति प्रतिग्रहम् ।
न केवलं हि तद् याति शेषमप्यस्य[2] नश्यति ॥२॥

मनुः—

यथा प्लवेनौपलेन निमज्जत्युदके तरन् ।
तथा निमज्जतेऽधस्तादज्ञौ दातृप्रतीच्छकौ ॥३॥ (४।१९४)

अज्ञाविति दातुरज्ञत्वं [3]दानविधिज्ञानशून्यत्वं प्रतिग्रहीतुरज्ञत्वं प्रतिग्रहविधिज्ञानशून्यत्वम् ।

तथा—

पात्रभूतोऽपि यो विप्रः प्रतिगृह्य प्रतिग्रहम् ।
असत्सु विनियुञ्जीत तस्मै देयं न किञ्चन ॥४॥
सञ्चयं कुरुते यश्च[4] प्रतिगृह्य समन्ततः ।
धर्मार्थं नोपयुङ्क्ते च न तं तस्करमर्चयेत् ॥५॥

तथा—

न वार्यपि प्रयच्छेत्तु वैडालव्रतिके द्विजे ।
न बकव्रतिके पापे नावेदविदि धर्मवित् ॥६॥ (४।१९२)
त्रिष्वप्येतेषु दत्तं हि विधिनाप्यर्जितं धनम् ।
दातुर्भवत्यनर्थाय परत्रादातुरेव च ॥७॥ (४।१९३)
धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भकः ।
वैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः ॥८॥ (४।१९५)

वैडालव्रतलक्षणञ्च यमेनाप्युक्तम् । तथाच यमः—

यस्य धर्मध्वजो नित्यं सुराध्वज इवोच्छ्रितः ।
प्रच्छन्नानि च पापानि वैडालं नाम तद्व्रतम् ॥९॥

अनेनैवार्थाद्धर्मध्वजोऽपि व्याख्यातः ।

---

1 I. O ऊखरे
2 A and I. O. शेषमप्यत्र
3 I. O. दानविधिषु०
4 I. O यस्तु

बकव्रतिकश्च[1] मनुनैवोक्तः । तथाच मनुः—

अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः ।

शठो मिथ्याविनीतश्च बकव्रतधरो[2] द्विजः ॥१०॥ इति । (४।१९६)

वशिष्ठः—

ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते ।

ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥११॥

(=कात्यायन १५।६=व्यास ४।३५)

यथा काष्ठमयो[3] हस्ती यथा चर्ममयो मृगः ।

यथा[4] विप्रोऽनधीयानस्त्रयस्ते नामधारकाः[5] ॥१२॥

(=मनु २।१५७=महाभारत-शान्ति ३६।४६=व्यास ४।३७)

लघुव्यास[6]:—

न वेदपाठमात्रेण सन्तोषं कारयेद्बुधः ।

पाठमात्रावसानस्तु पङ्के गौरिव सीदति ॥१३॥

यथा पशुर्भारवाही[7] न तस्य लभते फलम् ।

द्विजस्तथार्थानभिज्ञो न वेदफलमश्नुते ॥१४॥

वेदस्याध्ययनं[8] सर्वं धर्मशास्त्रस्य वापि[9] यत् ।

अजानतोऽर्थं तत् सर्व्वं तुषाणां कण्डनं यथा ॥१५॥

योऽधीत्य विधिवद् विप्रो वेदार्थं न विचारयेत् ।

स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते[10] ॥१६॥

अधीत्य यत् किञ्चिदपि वेदार्थाधिगमे रतः ।

स्वर्गलोकमवाप्नोति धर्मानुष्ठानविद्धि सः[11] ॥१७॥

श्रुतहीनमधीतं यन्नेह नामुत्र तद्भवेत् ।

श्रुतन्तु केवलमपि समुद्धाराय कल्पते ॥१८॥

तथा—

1 A बकव्रती च
2 Manu ०चरो
3 M. bh. दारुमयो
4 I. O. यश्च
5 A, I. O. Manu and M. bh. नाम बिभ्रति
6 A and B omit it
7 A ०र्भारहारी
8 I. O. वेदस्याध्यापनं
9 I. O. चापि
10 I. O. प्रयच्छति
11 B ०विद्विजः

पाठमात्ररतान् नित्यं द्विजातींश्चार्थवर्जितान्[1] ।
पशूनिव तु तान् प्राज्ञो वाङ्मात्रेणापि नार्चयेत् ॥१९॥

हारीतः—

स्थाणुरेष भारहारो यो ज्ञानमधीत्यार्थं न विजानाति । ज्ञानविज्ञानधूतपाप्मा इह चामुत्र चानन्तं भद्रमश्नुते ॥२०॥ इत्याचार्याः ।

ज्ञानं वेदः[2] स्मृतिशास्त्रञ्च । विज्ञानमर्थज्ञानम् ।

शातातपः—

मन्त्रपूर्वन्तु यद्दानममन्त्राय प्रदीयते ।
दातुर्निकृत्य हस्तं तद् भोक्तुर्जिह्वां निकृन्तति ॥२१॥

मन्त्रपूर्वं समुत्सर्गपूर्वम् ।

तथा—

वेदपूर्णमुखं विप्रं सुभुक्तमपि भोजयेत् ।
न तु मूर्खं निराहारं षड्रात्रमुपवासिनम् ॥२२॥ (=व्यास ४।५२)

यमः—

अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्[3] ।
नैषां प्रतिग्रहो देयो न शिला तारयेच्छिलाम् ॥२३॥
अपविद्धाग्निहोत्रस्य[4] गुरोर्विप्रियकारिणः ।
द्रविणं नैव दातव्यं सततं पापकर्मणः[5] ॥२४॥

अपविद्धाग्निहोत्रस्य स्वेच्छापरिहृताग्निहोत्रस्य[6] ।

वशिष्ठः—

उपरुन्धन्ति दातारं गौरश्वः काञ्चनं क्षितिः ।
अश्रोत्रियस्य[7] विप्रस्य हस्तं दृष्ट्वा निराकृतेः ॥२५॥

निराकृतेः निराकृतेश्चेत्यर्थः ।

निराकृतिश्छन्दोगपरिशिष्टे नोक्तः । तथा च छन्दोगपरिशिष्टे कात्यायनः—

यस्त्वाध्यायाग्निमाशास्य[8] देवादोन्नैव[9] चेष्टवान् ।
निराकर्तामरादीनां स विज्ञेयो निराकृतिः ॥२६॥

---

1 I. O. ०श्चानुवर्जितान्
2 A वद
3 A यश्च धर्मध्वजो नित्यं जातिमात्रोपजीविनः, I. O. यस्य धर्मध्वजो नित्यं जातिमात्रोपजीविना
4 A अपविद्धाग्निहोत्रस्य
5 A पापकारिणः, I. O. पापकर्मिणं
6 A अपविद्धाग्निहोत्रस्य स्वेच्छापवित्रहताग्निहोत्रस्य, B ०स्वेच्छापरित्यक्ताग्निहोत्रस्य
7 I. O. श्रोत्रियस्य च
8 B and I. O. ०मालस्याद
9 I. O. दैवादीन्नैव

देवलेनाप्ययमुक्तः—

अधीत्य विस्मृतो वेदं भवेद्विप्रो निराकृतिः ॥२७॥

तथा—

उदक्यन्नादनं येषां ये च केचिदनग्नयः ।

[1]कुलञ्चाश्रौत्रियं येषां सर्वे ते शूद्रधर्मिणः ॥२८॥

यमः—

न प्रतिग्रहमर्हन्ति वृषलाध्यापका द्विजाः ।

शूद्रस्याध्यापनाद्विप्रः[2] पतत्यत्र न संशयः ॥२९॥

यश्च लिङ्गुयचितां वृत्तिमलिङ्गेभ्यः[3] प्रयच्छति ।

घोरायां ब्रह्महत्यायां पच्यते नात्र संशयः ॥३०॥

लिङ्गुयचितां पारमार्थिकलिङ्गुयचिताम् । अलिङ्गेभ्यः[4] कपटकृतलिङ्गेभ्यः ।

दक्षः (३।१९)—

धूर्ते वन्दिनि मल्ले च कुविद्ये[5] कितवे शठे ।

चाटुचारणचौरेभ्यो दत्तं भवति निष्फलम् ॥३१॥

शातातपः—

अब्राह्मणास्तु ते प्रोक्ता ऋषिः शातातपोऽब्रवीत् ।

आद्यो राजभृतस्तेषां द्वितीयः क्रयविक्रयी ॥३२॥

क्रयविक्रयी स्वल्पमूल्येन क्रीत्वा बहुमूल्येन विक्रीणीत इत्यर्थः ।

तृतीयो बहुयाज्यः स्याच्चतुर्थो ग्रामयाजकः ।

पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य च ॥३३॥

बहुयाज्यः सर्ववर्णयाजी । ग्रामयाजकः एकवर्णबहुजनयाजकः ।

अनादित्यान्तु[6] यः पूर्वां सादित्याञ्चैव पश्चिमाम् ।

नोपासीत द्विजः सन्ध्यां स षष्ठोऽब्राह्मणः स्मृतः ॥३४॥

प्रातःसन्ध्यां सायंसन्ध्याञ्च यो न करोतीत्यर्थः ।

व्यासः—

नष्टशौचे व्रतभ्रष्टे विप्रे वेदविवर्जिते ।

रोदित्यन्नं दीयमानं किं मया दुष्कृतं कृतम् ॥३५॥

---

1 I. O. कुलं वा०

2 Con. A, B and I. O. शूद्रस्याध्ययनाद्विप्रः

3 A and I. O, ०मलिङ्गिभ्यः

4 I. O. अलिङ्गिभ्यः

5 I. O. and Dakṣa कुवैद्ये

6 A and I. O. अनागतान्तु

शौचहीनाश्च[1] ये विप्रा न च यज्ञोपवीतिनः ।
हुतं दत्तं तपस्तेषां नश्यत्यत्र न संशयः ॥३६॥

न च यज्ञोपवीतिन इति ब्रह्मसूत्रशून्या नित्यैकवस्त्राश्च ।

महाभारते—

पङ्ग्वन्धबधिरा मूका व्याधिनोपहताश्च ये ।
भर्तव्यास्ते महाराज न तु देयः प्रतिग्रहः ॥३७॥
सदैव याचमानेषु सर्वेषु श्रुतवर्जिषु ।
एतेषु दक्षिणा दत्ता दावाग्नाविव दुर्लभा ॥३८॥
ये च धर्मादपेतेभ्यः प्रयच्छन्त्यल्पमेधसः ।
शतं वर्षाणि ते[2] प्रेत्य पुरीषं भुञ्जते जनाः ॥३९॥

एवञ्च पात्रप्रशंसायामब्राह्मण-ब्राह्मणब्रुव-ब्रह्मबन्धुप्रभृतीनां दानपात्रत्वेनोक्तानामपि प्रतिग्रहविधिना न किञ्चिद्देयम् । कृपया नट-नर्तक-याचकवत्तेषु[3] दद्यात् । अतएव तेषां शूद्रादिसमभिव्याहारेणोपादानं प्रायशो मुनयश्चक्रुः ॥

## अथ दानस्वरूपम् ।

तत्र देवलः—

अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम् ।
दानमित्यभिनिर्दिष्टं व्याख्यानं तस्य वक्ष्यते ॥१॥
द्विहेतु षडधिष्ठानं षडङ्गं षड्विपाकयुक् ।
चतुष्प्रकारं त्रिविधं त्रिनाशं[4] दानमुच्यते ॥२॥
नाल्पत्वं वा बहुत्वं वा दत्तस्या[5]भ्युदयावहम् ।
श्रद्धाऽभक्तिश्च[6] दानानां वृद्धिक्षयकरे हि ते ॥३॥
धर्ममर्थञ्च कामञ्च व्रीडा[7]हर्षभयानि च ।
अधिष्ठानानि दानानां षडेतानि प्रचक्षते ॥४॥
पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम् ।
केवलं त्यागबुद्ध्या यद्धर्मदानं[8] तदुच्यते ॥५॥

---

1 I. O. ०स्तु
2 I. O. च
3 B नटपाठकवत्तेषु
4 I. O. विनाशं
5 A and I. O. दानस्या०
6 A श्रद्धा भक्तिश्च
7 A क्रीडा०
8 A न केवलं त्यागबुद्ध्या धर्मदानं, I. O. न केवलं दानबुद्ध्या धर्मदानं

प्रयोजनमपेक्ष्यैव प्रसङ्गाद् यत् प्रदीयते ।
[1]तदर्थदानमित्युक्तमैहिकं फलहेतुकम् ॥६॥

प्रयोजनमपेक्ष्यैवेति ममाप्ययं [2]किञ्चिद्दास्यतीति [3]फलमपेक्ष्येत्यर्थः ।

स्त्रीपानमृगयाक्षाणां प्रसङ्गाद् यत् प्रदीयते ।
अनर्हेषु च रागेण कामदानं तदुच्यते ॥७॥
संसदि व्रीडयाश्रुत्य योऽर्थोऽर्थिभ्यः प्रयाचितः ।
प्रदीयते च तद्दानं व्रीडादानमिति श्रुतम्[4] ॥८॥
दृष्ट्वा प्रियाणि श्रुत्वा वा हर्षवद् यत् प्रदीयते ।
हर्षदानमिति प्राहुर्दानं तद्धर्मचिन्तकाः ॥९॥
आक्रोशानर्थहिंसानां प्रतीकाराय यद्भयात् ।
दीयते भयकर्तृभ्यो[5] भयदानं[6] तदुच्यते ॥१०॥
दाता प्रतिग्रहीता च श्रद्धा देयञ्च धर्मयुक् ।
देशकालौ च दानानामङ्गान्येतानि षड्विदुः ॥११॥
अपापरोगी धर्मात्मा दित्सुरव्यसनः शुचिः ।
अनिन्द्याजीवकर्मा च षड्भिर्दाता प्रशस्यते ॥१२॥

अपापरोगी अष्टविधपापरोगरहितः ।

तथा च देवलः—उन्मादस्त्वग्दोषो राजयक्ष्मा श्वासो मधुमेहो भगन्दरो महोदरमश्मरीत्यष्टौ पापरोगाः ॥१३॥

अनिन्द्याजीवकर्मा अनिन्द्यमाजीवनकर्म यस्य ।

त्रिशुक्लः कृशवृत्तिश्च घृणालुः सकलेन्द्रियः ।
निर्मुक्तो[7] योनिदोषेभ्यो ब्राह्मणः पात्रमुच्यते ॥१४॥

त्रिशुक्लो[8] विद्यावृत्तान्वययुक्तः ।

सौमुख्याद्यभिसम्प्रीतिरर्थिनां दर्शने यदा ।
सत्कृतिश्चानसूया च तदा[9] श्रद्धेति कीर्त्यते ॥१५॥

---

1 I. O. तदर्थि०
2 A omits किञ्चित्
3 I. O. प्रयोजन०
4 I. O. स्मृतम्
5 A and I. O. तापकर्तृभ्यो
6 I. O. भयाद्दानं
7 A निवृत्तो, I. O. विमुक्तो
8 A and I. O. त्रिशुक्ल इति
9 A and B सदा

अनसूया असूयाभावः। असूया च गुणे दोषाविष्कारः।

अपराबाधमक्लेशं [1]प्रयत्नेनार्जितं धनम्।
अल्पं वा विपुलं वापि देयमित्यभिधीयते ॥१६॥
यत्र यद्दुर्लभं द्रव्यं यस्मिन् कालेऽपि वा पुनः।
दानार्हौ देशकालौ तौ स्यातां श्रेष्ठौ न चान्यथा ॥१७॥
अवस्थादेशकालानां पात्रदात्रोश्च सम्पदा।
हीनं वापि भवेच्छ्रेष्ठं श्रेष्ठं वाप्यन्यथा भवेत् ॥१८॥

अन्यथेति अवस्थादिसम्पदा हीनमित्यर्थः।

दुष्फलं निष्फलं हीनं तुल्यं विपुलमक्षयम्।
षड्विपाकं समुद्दिष्टं षडेतानि विपाकतः ॥१९॥
नास्तिकस्तेनहिंस्रेभ्यो जारोपपतिताय[2] च।
पिशुनभ्रूण[3]हन्तृभ्यां प्रदत्तं दुष्फलं भवेत् ॥२०॥

उपपतिताय उपपातकयुक्ताय।

महदप्यफलं दानं श्रद्धया परिवर्जितम्।
[4]परबाधाकरं दानं परमप्यूनतां[5] व्रजेत् ॥२१।
यथोक्तमपि यद्दत्तं चित्तेन कलुषेण तु।
तत्तु सङ्कल्पदोषेण दानं तुल्यफलं[6] भवेत्[7] ॥२२।
[8]युक्ताङ्गैः सकलैः षड्भिर्दानं स्याद् विपुलोदयम्।
अनुक्रोशवशाद्दत्तं [9]दानमक्षयमुच्यते ॥२३॥
ध्रुवमाजस्रिकं काम्यं नैमित्तिकमनुक्रमात्[10]।
वैदिको दानमार्गोऽयं चतुर्धा वर्ण्यते बुधैः[11] ॥२४॥
प्रपारामतडागादि सर्व[12]कामफलं ध्रुवम्।
तदाजस्रिकमित्याहुर्दीयते यद्दिने दिने ॥२५॥

---

1 I. O. सु०
2 A and I. O. जडोपपतिताय
3 A ०हन्तृभ्यां दत्तं तद
4 I. O. येन for पर
5 B परमन्यमतो
6 A तस्याफलं
7 I. O. लभेत्
8 I. O. युक्ताङ्गैः
9 I. O. दानमक्षयतां व्रजेत्
10 B ०मितिक्रमात्
11 B and I. O. द्विजैः
12 D. K. ०काल०

अपत्यविजयैश्वर्य्यस्त्रीबालार्थं यदिज्यते ।
[1]इज्यासंस्थन्तु तद्दानं काम्यमित्यभिधीयते ॥२६॥
कालापेक्षं क्रियापेक्ष[2]मर्थापेक्षमिति स्मृतौ ।
त्रिधा नैमित्तिकं प्रोक्तं सहोमं[3] होमवर्जितम् ॥२७॥
नवोत्तमानि चत्वारि मध्यमानि विधानतः ।
अधमानीति शेषाणि त्रिविधत्वमिदं विदुः ॥२८॥
अन्नं दधि मधु त्राणं गोभूरुक्माश्वहस्तिनः ।
दानान्युत्तमदानानि उत्तमद्रव्यदानतः ॥२९॥
विद्याच्छादनमावासः परिभोगौषधानि च ।
दानानि मध्यमानीति मध्यमद्रव्यदानतः ॥३०॥
उपानद्रथयानानि छत्रपात्रासनानि च ।
दीपकाष्ठफलादीनि चामरं बहुवार्षिकम् ॥३१॥
बहुत्वादर्थजातानां संख्या शेषेषु नेष्यते ।
अधमान्यवशिष्टानि सर्वदानान्यतो विदुः ॥३२॥
इष्टं दत्तमधीतं वा विनश्यत्यनुकीर्तनात् ।
श्लाघानुशोचनाभ्याञ्च भग्नतेजो विपद्यते ॥३३॥
तस्मादात्मकृतं पुण्यं वृथा न[4] परिकीर्त्तयेत् ।
भुक्तवानिति तं प्राहुस्तमेव कृतवादिनम् ॥३४॥
एवं सर्वगुणोपेतमुक्तदोष[5]विवर्जितम् ।
कामधुक्तेन यद्दानं फलत्यात्मेप्सितं फलम् ॥३५॥
इह [6][कीर्त्तिं वदान्याख्यां] स्फीतान् भोगान् त्रिपिष्टपे ।
[7][दानश्रद्धां तृतीयेऽपि] जन्मनि प्रसवोत्तमे ॥३६॥

विष्णुधर्मोत्तरे ( ३।२६६।१क-४क, ५ख—६ख )—

---

1 I. O. इच्छासंस्थन्तु यद्दानं
2 I. O. ०क्षुद्धापेक्ष०
3 A and I. O. सततं
4 I. O. न वृथा
5 I. O. दोषैर्वि०
6 Corrected from D. K. A, B and I. O. कीर्त्तिञ्च दानाख्यां for the b. p.
7 Corrected from D. K. A, B and I. O. दानश्रद्धाकृतं येऽपि for the b. p.

चतुर्धा सर्वपुण्यानां फलमुक्तं मनीषिभिः ।
कृतानि विधिहीनानि वञ्चनार्थं परस्य च ॥३७॥
क्रोधलोभाभिभूतेन तामसानि विनिर्दिशेत् ।
कृतानि परमानेन[1] राजसानि भवन्ति तु ॥३८॥
सात्त्विकानि भवन्तीह श्रद्धया परया द्विजाः ।
गुणोत्तराणि विज्ञेयान्यथाकामकृतानि तु[2] ॥३९॥
तामसानां फलं भुङ्क्ते तिर्यक्त्वे प्रेत्य मानवः ।
राजसानां फलं भुङ्क्ते मानुषत्वे द्विजोत्तमाः ॥४०॥
सात्त्विकानां फलं भुङ्क्ते देवत्वे नात्र संशयः ।
गुणोन्तरकृतानान्तु फलं मोक्ष उदाहृतम् ॥४१॥

## अथ कर्त्ता ।

तत्र भविष्यपुराणे—

आचारयुक्तः श्रद्धावान् वेदज्ञो धर्मवित्तमः ।
कर्मणां फलमाप्नोति न्यायर्जितधनश्च यः ॥१॥

वेदज्ञ इति वेदार्थानुष्ठानपरस्योपलक्षणं शूद्रस्यापि दानोपदेशात् ।

तथाच शिवपुराणम्—

एतान्येव च सर्वाणि दानानि च तपांसि च ।
विना मन्त्रेण सततं शूद्राणामिह सर्वशः ॥२॥
विधीयन्ते न सन्देह एवमाह प्रजापतिः ।
अमन्त्रास्ते स्मृताः सर्वे शूद्रा विगतकल्मषाः ॥३॥

अमन्त्रा दानोक्ततत्तद्धोमाद्युचितवैदिकमन्त्रशून्या इत्यर्थः । अतएव ब्राह्मणद्वारा वैदिकमन्त्रपाठनमिति ।

## अथ श्रद्धा ।

तत्र मनुः—

श्रद्धयेष्टञ्च पूर्त्तञ्च नित्यं कुर्यात् प्रयत्नतः[3] ।
श्रद्धाकृते ह्यक्षये ते भवतः स्वागतैर्धनैः ॥१॥ (४।२२६)

---

1 A and I. O. परसारेण, B and V. D. परमानेन.
2 I. O. च
3 Manu अतन्द्रितः

दानधर्मं निषेवेत नित्यमैष्टिकपौर्त्तिकम् ।
परितुष्टेन भावेन [1]पात्रमासाद्य शक्तितः ॥२॥ (४।२२७)
यत् किञ्चिदपि दातव्यं याचितेनानसूयया[2] ।
उत्पत्स्यते हि तत् पात्रं यत्तारयति सर्वशः ॥३॥ (४।२२८)
येन येन तु भावेन यद् यद् दानं प्रयच्छति ।
तत्तत् तेनैव भावेन[3] प्राप्नोति [4]प्रतिपूजितः ॥४॥ (४।२३४)
दानं हि बहुमानाद् यो गुणवद्भ्यः प्रयच्छति ।
स तु[5]प्रेत्य धनं लब्ध्वा पुत्रपौत्रैः सहाश्नुते ॥५॥

याज्ञवल्क्यः (१।२०३)—

दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः ।
याचितेनापि दातव्यं श्रद्धापूतन्तु शक्तितः ॥६॥

यमः—

मन्त्राज्यदोषाद्धोमे तु[6] तपसीन्द्रियदोषतः ।
न्यूनता स्यान्न दाने तु श्रद्धायुक्ते भवेत् क्वचित् ॥७॥

देवलः—

अपि न्यायागतां दत्त्वा सकलां पृथिवीमपि ।
श्रद्धावर्जमपात्राय न काञ्चिद्भूतिमाप्नुयात् ॥८॥
प्रदाय शाकमुष्टिं वा श्रद्धाभक्तिसमायुताम्[7] ।
महते पात्रभूताय सर्वाभ्युदयमाप्नुयात् ॥९॥

महाभारते—

द्रव्यागमो नृणां सूक्ष्मः पात्रे दानं[8] ततः परम् ।
कालः परतरो दानाच्छ्रद्धा चापि ततः परम् ॥१०॥

---

1 A and I. O. श्रद्धामासाद्य
2 A. and I. O, ०नानसूयता
3 A तत्तद् भावेन तेनैव
4 I. O. तत्र पू०
5 I. O. च
6 I. O. ०द्धोमिन
7 I. O. ०समुद्यतां
8 I. O. पात्रदानं

## अथ दानकालाः।

तत्र मनुः—

जाते कुमारे तदहः कामं कुर्यात् प्रतिग्रहम्।
हिरण्यधान्यगोवासस्तिलान्नगुडसर्पिषाम् ॥१॥

शङ्खलिखितौ—

कुमारप्रसवे नाड्यामच्छिन्नायां तिल[1]तैलहिरण्यवस्त्रप्रावरणगोधान्यप्रतिग्रहेष्वदोषस्तदहरित्येके गुर्वर्थं कुर्वतः ॥२॥

यमहारीतौ—

द्विपदचतुष्पदधान्यहिरण्यदक्षिणासु न दोषः ॥३॥

पैठीनसिः—

दानप्रतिग्रहेष्विति विकल्पो[2] हिरण्यमश्वं[3] गाव इत्यदोषस्तदहः ॥४॥

शातातपः—

अयनादौ सदा देयं द्रव्यमिष्टं गृहेषु यत्।
षडशीतिमुखे चैव विमोक्षे चन्द्रसूर्ययोः ॥५॥
संक्रान्तौ यानि दत्तानि हव्यकव्यानि दातृभिः।
तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि ॥६॥
शतमिन्दुक्षये दत्तं सहस्रन्तु दिनक्षये।
विषुवे शतसाहस्रं व्यतीपाते त्वनन्तकम् ॥७॥
अयनेषु च यद्दत्तं षडशीतिमुखेषु च।
चन्द्रसूर्योपरागे च दत्तं भवति चाक्षयम् ॥८॥

विष्णुधर्मोत्तरे—(३।३००। १५—२४)

द्वादशीषु च यद्दत्तं [शुक्लासु तु विशेषतः।
श्रवणेन तु युक्तासु तत्रापि द्विजसत्तमाः ॥९॥
विशेषाद्बुधयुक्तासु[4] पक्षतीषु च यत्तथा।
तृतीयासु तु सर्वासु शुक्लासु तु विशेषतः ॥१०॥

---

1 A and B omit तैल
2 A and B विकल्पा
3 A and B ०श्वं
4 B विशेषाद्बुधयुक्तासु

वैशाखशुक्लपक्षे तु विशेषेण तु मानवैः[1] ।
आषाढे कार्त्तिके चैव फाल्गुने च विशेषतः ॥११॥
तिस्रस्त्वेताः पौर्णमास्यो दाने विप्रा महाफलाः ।
व्यतीपातेषु यद्दत्तं][2] जन्मर्क्षे च द्विजोत्तमाः ॥१२॥
ग्रहसंक्रमकाले च तिग्म[3]रश्मेर्विशेषतः ।
तुलामेषप्र[4]वेशे तु त्यागे तु[5]मिथुनस्य च ॥१३॥
[6]रवेर्महाफलं दत्तं तेभ्योऽपि स्यान्महाफलम् ।
यदा प्रविशते भानुर्मकरं द्विजसत्तमाः ॥१४॥
आषाढेऽश्वयुजे पौषे चैत्रे शुक्ले[7] तथैव च ।
द्वादशीप्रभृति प्रोक्तं पुण्यं दिनचतुष्टयम् ॥१५॥
मिथुनञ्च तथा॰कन्यां धन्विनं मीनमेव च ।
प्रविष्टे भास्करे पुण्यं प्रत्येकं कथितं द्विजाः ।
षडशीतिमुखं नाम दाने दिनचतुष्टयम् ॥१६॥
अच्छिन्ननाड्यां यद्दत्तं पुत्रे जाते द्विजोत्तमाः ।
संस्कारेषु च पुत्रस्य तदक्षयं प्रकीर्त्तितम् ॥१७॥
चन्द्रे वा यदि वा सूर्ये दृष्टे राहौ महाग्रहे ।
अक्षयं कथितं पुण्यं तत्राप्यर्के विशेषतः ॥१८॥

## अथ पुण्यदेशाः ।

[8]विष्णुपुराणे (२।३।१, २३-२४)—

उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः ॥१॥
अत्र जन्मसहस्राणां सहस्रैरपि सत्तम ।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ॥२॥

---

1 B and I. O. मानवाः, V. D. मानदाः
2 B omits the bracketed portion
3 I. O. तीक्ष्ण॰
4 A ॰प्रवेशे च त्यागे च
5 I. O. च
6 A and I. O. दानं महाफलं प्रोक्तं
7 A शुक्रे
8 I. O. omits विष्णुपुराणे

*गायन्ति देवाः [1]किल गीतकानि*
*धन्यास्तु ते[2] भारतभूमिभागे ।*
*स्वर्गापवर्गास्पदमार्गभूते*
*भवन्ति भूयः पुरुषाः सुरत्वात् ॥३॥*

मनुः (२।२३)—

कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततः परम्[3] ॥४॥

भविष्ये (१।१८१—३३) :—

ब्रह्मावर्तः परो देश ऋषिदेशस्ततः परम्[4] ।
मध्यदेशस्ततो [[5]ज्यायानार्यावर्तस्ततः परम्[6]] ॥५॥

व्यासः—

सर्वे सूर्याश्रमाः पुण्याः सर्वा [7]नद्यश्च पर्वताः ।
गोसिद्धमुनिवासाश्च देशाः पुण्याः प्रकीर्तिताः ॥६॥
सूर्यायतनसंस्थानं यदल्पमपि[8] दीयते ।
तदनन्तफलं प्रोक्तं सूर्यक्षेत्रानुभावतः ॥७॥

विष्णुः—

चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते ।
तं म्लेच्छदेशं जानीयादार्यावर्तमतः[9] परम् ॥८॥

तथा—

पुष्करेष्वक्षयं श्राद्धं जपहोमतपांसि च ।
पुष्करे स्नातमात्रस्तु सर्वपापेभ्यः मुच्यते ॥९॥

एवमेव गयशीर्षवटे [10]अमरकण्टकपर्वते वराहपर्वते यत्र क्वचन, नर्मदातीरे, यमुनातीरे, गङ्गातीरे, विशेषतो गङ्गाद्वारे प्रयागे[11] गङ्गासागरसङ्गमे कुशावर्ते विन्दुके

---

1 I. O. कलगीतकानि
2 I. O. ये
3 Manu ०स्त्वतःपरः
4 Bh. P. ०ग्रसस्तु नन्तरः
5 I. O. न्नुन'
6 Bh. P. ऽप्यस्य आर्यावर्तस्त्वनन्तर: for the b. p.
7 I. O. नद्यः सपर्वताः
8 I. O. यदन्यमपि
9 A ०वर्तन्ततः
10 I. O मर्कटपर्वते
11 I. O. adds च here

नीलपर्वते कनखले कुब्जाम्रे भृगुतुङ्गे केदारे महालये [1]ललितिकायां सुगन्धायां शाकम्भर्यां फल्गुतीर्थे महागङ्गायां तन्दुलिकाश्रमे कुमारधारायां प्रभासे यत्र क्वचन, सरस्वत्यां विशेषतः। सततं नैमिषारण्ये वाराणस्याम् अगस्त्याश्रमे कण्वाश्रमे कौशिक्यां सरयूतीरे शोणस्य ज्योतीरसायाश्च सङ्गमे। श्रीपर्वते कालोदके उत्तरमानसे मतङ्गवाप्यां [2]सप्तार्षे विष्णुपदे स्वर्गमार्गप्रदेशे गोदावर्यां गोमत्यां वेत्रवत्यां विपाशायां वितस्तायां शतद्रुतीरे चन्द्रभागायाम् इरावत्यां सिन्धोस्तीरे पञ्चनदे औजसेषु[3]। एवमादिष्वथान्येषु तीर्थेषु सरिद्वरासङ्गमेषु प्रभवेषु पुलिनेषु[4] प्रस्रवणेषु पर्वतनिकुञ्जेषु[5] वनेषूपवनेषु च। गोमयेनोपलिप्तेषु गृहेषु मनोज्ञेषु च ॥१०॥

लिङ्गपुराणे (१।७७।३३ख—३५) :—

अर्धक्रोशं शिवक्षेत्रं शिवलिङ्गात् समन्ततः।
यस्त्यजेद् दुस्त्यजान् प्राणान् शिवसायुज्यमाप्नुयात् ॥११॥
[6]स्वायम्भुवस्य मानं हि तथा बाणस्य सुव्रताः।
स्वायम्भुवे तदर्धं [7]स्यादार्षेये च तदर्धकम्।
[8]मानुष्ये च तदर्धं स्यात् क्षेत्रमानं द्विजोत्तमाः ॥१२॥

तथा (१।७७।५२ख-५४क)—

शिवक्षेत्रसमीपस्था नद्यः सर्वा द्विजोत्तमाः[9]।
वापीकूपतडागाश्च शिवतीर्था इति स्मृताः ॥१३॥
स्नात्वा तेषु नरो भक्त्या तीर्थेषु मुनिपुङ्गवाः[10]।
ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः ॥१४॥

मत्स्यपुराणे (२२।२७ख-२८, ३०ख-३६, ४६-५५क, ५७-५६, ६८-७०, ७३ख-७५क, ७१क) :—

ओङ्कारं पितृतीर्थञ्च कावेरी कपिलोदकम्।
सम्भेदश्चण्डवेगायास्तथैवामरकण्टकम्।
कुरुक्षेत्राच्छतगुणम[11]स्मिन् दानादिकं[12] भवेत् ॥१५॥

---

1 I. O. नमितिकायां
2 I. O. सप्तर्षे
3 A औसर्व्ये, B औजसे
4 I. O. सलिलेषु
5 I. O. पर्वतेषु निकुञ्जेषु
6 I. O. स्वयम्भुतस्य मानं
7 L. P. स्यात् स्यादार्षे
8 L. P. मानुषे
9 L. P. सुशोभनाः
10 I. O. मुनि .त्तमाः, L. P. द्विज-सत्तमाः
11 M. P. ०त्तस्मिन्
12 B, I. O. and M.P. स्नानादिकं

*कायावरोहणं नाम तथा चर्मण्वती नदी ।*
*गोमती वरणा तद्वत् तीर्थं [1]हौताशनं परम् ॥१६॥*
*भैरवं भृगुतुङ्गञ्च गौरीतीर्थमनुत्तमम् ।*
तीर्थं वैनायकं नाम भद्रेश्वरमतः परम् ॥१७॥
तथा पापहरं नाम [2]पुण्या च तपती नदी ।
[3]शूलतापी पयोष्णी च पयोष्णीसङ्गमस्तथा ॥१८॥
महाबोधिः पाटला च नागतीर्थमवन्तिका ।
तथा वेणा नदी पुण्या महाशालन्तथैव च ॥१९॥
महारुद्रं महालिङ्गं दशार्णा च नदी शुभा ।
शतरुद्रा [4]शताह्वा च तथा विश्वपदं परम् ॥२०॥
अङ्गारवाहिका तद्वन्नदौ तौ शोणघर्घरौ ।
कालिका च नदी पुण्या वितस्ता[5] च नदी शुभा[6] ।
एतानि पितृतीर्थानि शस्यन्ते स्नानदानयोः ॥२१॥
तथा—श्रीपर्णी [[7]च नदी पुण्या व्यास]तीर्थमनुत्तमम् ।
तथा मत्स्यनदी [8]कारा शिवधारन्तथैव च ॥२२॥
भद्रतीर्थञ्च विख्यातं पम्पातीर्थञ्च शाश्वतम् ।
पुण्यं रामेश्वरं तद्वदेलापुरमलंपुरम् ॥२३॥
अङ्गभूतञ्च विख्यातमामर्दक[9]मलम्भुषम् ।
आम्रातकेश्वरं तद्वदेका[10]म्रकमतः परम् ।
गोवर्धनं हरिश्चन्द्रं कृपुचन्द्रं[11] पृथूदकम् ॥२४॥
सहस्राक्षं हिरण्याक्षं तथा च कदली नदी ।
[12]रामाधिवासस्तत्रापि तथा सौमित्रिसङ्गमः ॥२५॥

---

1 M. P. चौयमसं
2 A and M. P. पुण्याय
3 M. P. मूलतापी
4 I. O. शताचञ्च
5 I. O. पितरा
6 M. P. तथा
7 M. P. ..ताम्रपर्णी च आद्या for the bracketed portion.
8 M. P. पुण्या
9 I. O. ०कमलं मुखं
10 M. P. म्भ for म्र
11 I. O. पुण्यदञ्च
12 I. O. वाचा०

[1]इन्द्रकीलं महानादं [2]तथैव प्रियमेलकम् ।
एतान्यपि सदा श्राद्धे प्रशस्तान्यधिकानि च[3] ॥२६॥
एतेषु सर्वदेवानां सान्निध्यं दृश्यते[4] यतः ।
दानमेतेषु सर्वेषु [भवेत् कोटिगुणाधिकम्][5] ॥२७॥

तथा—

तथैव पितृतीर्थन्तु यत्र गोदावरी नदी ।
[6]युता लिङ्गसहस्रेण सर्वान्तरजलावहा[7] ॥२८॥
[8][जामदग्न्यकृतं तीर्थं] क्रमादायात[9]मुत्तमम् ।
प्रतीकस्य भयाद्भिन्ना[10] यत्र गोदावरी नदी ॥२९॥
[11]तीर्थं तद्धव्यकव्यानामप्सरोयुगसंज्ञितम् ।
श्राद्धाग्निकार्य[12][दानञ्च तत्र[13]] कोटिगुणाधिकम् ॥३०॥
अट्टहासं तथा तीर्थं गौतमेश्वरमेव च ।
तथा [[14]वशिष्ठतीर्थञ्च[15] हारीतञ्च] ततः परम्[16] ॥३१॥
ब्रह्मावर्तं कुशावर्तं [17]हंसतीर्थं तथैव च ।
पिण्डारकञ्च विख्यातं [18]शङ्खोद्धारं तथैव च ॥३२॥
घण्टेश्वरं बिल्वकञ्च नीलपर्वतमेव च ।
तथा च [19]बदरीतीर्थं रामतीर्थं तथैव च ॥३३॥

---

1 I. O. इन्द्रकीलजलञ्चैतत्
2 M. P. तथा च
3 M. P. तु
4 I. O. पश्यते
5 M. P. दत्तं कोटिशताधिकम् for the bracketed portion.
6 I. O. युता
7 A and I. O. ०जलोवहा, M. P. सर्वान्तरजलावहा
8 M. P. जामदग्न्यस्य तत्तीर्थं for the b. p.
9 I. O. ०पात०
10 M. P. भयाद्भिन्नं
11 M. P. तत्तीर्थं for तीर्थं तद्
12 M. P. दानेषु तथा for the b. p.
13 A यत्र
14 M. P. वशिष्ठं तीर्थं तु हारीतं तु for the b. p.
15 B. ०तीर्थन्तु I. O. तीर्थस्तु
16 A and I. O. हारीतं ततपरं स्मृतम्
17 M. P. हयतीर्थं
18 I. O. शङ्खोद्धारस्तथैव च
19 M. P. धरणीतीर्थं

जयन्त[1][मुज्जयन्तश्च [2]शुक्र]तीर्थं तथैव च ।
श्रीपतेश्च तथा तीर्थं तीर्थं रैवतकं तथा ॥३४॥
तथैव शारदं तीर्थं[3] [4]भद्रकालेश्वरं तथा ।
वैकुण्ठतीर्थश्च [तथा [5]निर्जरेश्वरमेव च][6] ।
अश्वतीर्थश्च विख्यातमनन्तं श्राद्धदानयोः ॥३५॥

### अथ देयस्वरूपम् ।

तत्र मनुः (१०।११५)—

सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥१॥

दायः पित्रादिक्रमागमः[7] । लाभः प्रीतिदानम्[8] । क्रयजयौ प्रसिद्धौ । प्रयोग ऋणादिप्रयोगः । कर्मयोगः शुश्रूषादिरूपः[9] । सत्प्रतिग्रहः प्रसिद्धः ।

विष्णुधर्मोत्तरे—(३।२६६।७-२०)

कर्मणां धनसाध्यानां धनश्च त्रिविधं स्मृतम् ।
कृष्णश्च शवलश्चैव शुक्लश्च द्विजसत्तमाः ॥२॥
त्रिविधस्य फलं तस्य त्रिविधं परिकीर्त्तितम् ।
कृष्णेन यत् कृतं कर्म तिर्यक्त्वे तद्धि भुज्यते[10] ॥३॥
शवलेन कृतं कर्म मानुष्ये द्विजसत्तमाः ।
शुक्लेन यत् कृतं कर्म देवत्वे तद्धि भुज्यते[11] ॥४॥
वर्णानां हि धनं शुक्लमर्जितं यत् स्वकर्मणा[12] ।
शवलन्तु समुद्दिष्टं तथानन्तरकर्मणा ॥५॥

---

1 M. P. विजयं चैव शक्र for the b. p.
2 I. O. शुक्लतीर्थं
3 B, I. O. and M. P. शारदातीर्थं
4 I. O. तथ०
5 I. O. निर्जर०
6 M. P. परं भीमेश्वरमथापि वा for the b. p.
7 I. O. ०गतः
8 I. O. प्रीतिदायलब्धः
9 I. O. शुश्रूषारूपः
10 I. O. तद्विभुज्यते
11 I. O. तद्विभुज्यते, V. 4 not found in V. D.
12 I. O. शुकमणा

वर्णोत्तमस्य हीनस्य कर्मणा कृष्णमुच्यते ।
तत्रापि शुक्लं वक्ष्यामि वर्णानां द्विजसत्तमाः ॥६॥
प्रतिग्रहेण यल्लब्धं याज्यतः शिष्यतस्तथा ।
गुणान्वितेभ्यो विप्रस्य शुक्लन्तु त्रिविधं स्मृतम् ॥७॥
युद्धोपलब्धं कारश्च दण्डार्थव्यवहारतः ।
क्षत्रियस्य धनं शुक्लं त्रिविधं परिकीर्तितम् ॥८॥

कारं करलब्धम् ।

कृषिं वाणिज्यं गोरक्षां कृत्वा शुक्लं तथा विशः ।
द्विजशुश्रूषया लब्धं शुक्लं शूद्रस्य कीर्तितम् ॥९॥
न कदाचन कुर्वीत ब्राह्मणः कर्म वार्षलम् ।
वृषलः कर्म वा ब्राह्मं पतनायेतरेतरम् ॥१०॥
उत्कृष्टश्चापकृष्टश्च तयोः कर्म न विद्यते ।
मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते ॥११॥
सर्वेषामथ वर्णानां वक्ष्यामि त्रिविधं धनम् ।
पार्श्विकद्यूतचौर्यार्ति[1]प्रतिरूपकसाहसैः ।
व्याजेनोपार्जितं यत्तत् सर्वेषां कृष्णमुच्यते ॥१२॥

पार्श्विकं राजपार्श्वावस्थानेन परिज्ञायते अमुकस्येदं प्रयोजनं भविष्यतीति, तत्रात्मीयप्रयोजकतो[2]पदर्शनेन धनार्जनम् । चौर्यम् अपरिज्ञातपरधनग्रहणम् । प्रतिरूपकं कूटद्रव्यनिर्माणम् । साहसं बलेन परद्रव्यहरणम्[3] । व्याजो दम्भतपस्यादिः ।

शिल्पानुवृत्त्या[4] यत् प्राप्तं कुशीदेन[5] तथा धनम् ।
कृतोपकारादाप्तञ्च शवलं समुदाहृतम्[6] ॥१३॥
प्रीतिलब्धं तथा दायं[7] प्राप्तञ्च सह भार्यया ।
अविशेषेण सर्वेषां धनं शुक्लमुदाहृतम् ॥१४॥

प्राप्तञ्च सह भार्ययेति यौतुकलब्धमित्यर्थः ।

शुक्लेन वित्तेन कृतं दानं बहुफलं भवेत्[8] ॥१५॥

1 I. O. ०दि०
2 I. O. ०त्वो०
3 I. O. ०ग्रहणं
4 I. O. ०वृत्तो
5 I. O. कुशीदं च
6 I. O. परिकीर्त्तितं
7 I. O. and V. D. क्रमागतं प्रीतिदायं
8 I. O. लभेत्

न्यायागतेनाथ धनेन विद्वान् पुण्यानि कृत्वा दिवि देवभोगान् ।
चिरं समश्नाति महानुभावो न्यायेन तस्माद्धनमर्जनीयम् ॥१६॥

## अथ दानापवादः ।

तत्र मनुः (११।६-१०)—

शक्तः परजने दाता स्वजने[1] दुःखजीविनि ।
मध्वापातो विषास्वादः स धर्मप्रतिरूपकः ॥१॥
भृत्यानामुपरोधेन यत् करोत्यौर्द्ध्वदेहिकम् ।
तद्भवत्यसुखोदर्कं जीवतश्च मृतस्य च ॥२॥

बृहस्पतिः—

कुटुम्बभक्तवसनाद्देयं यदतिरिच्यते ।
मध्वास्वादो विषं पश्चाद्दातुर्धर्मोऽन्यथा भवेत् ॥३॥

कात्यायनः—

सर्वस्वं गृहवर्जन्तु[2] कुटुम्बभरणाधिकम्[3] ।
[यद् द्रव्यं तत् स्वकं देयमदेयं स्यादतोऽन्यथा ॥४॥
विक्रयञ्चैव दानञ्च न नेयाः स्युरनिच्छवः ।
दाराः पुत्राश्च सर्वस्वमात्मन्येव तु योजयेत् ॥५॥
आपत्काले तु कर्तव्यं दानं विक्रय एव च ।
अन्यथा न प्रवर्तेत इति शास्त्रेषु निश्चयः ॥६॥

दक्षः (३।१७-१८)—

सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम् ।
अन्याहितञ्च निक्षेपः सर्वस्वञ्चान्वये सति ॥७॥
अन्याहितं परहस्तेन यदन्यस्य प्रस्थापितम् ।][4]
आपत्स्वपि न देयानि नव[5] वस्तूनि सर्वदा[6]
यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः ॥८॥

---

1 I. O. स्वजनैः
2 A गृहवर्ज्यं च
3 B and I. O. कुटुम्बभरणादिकम्
4 A and I. O. omit the bracketed portion
5 I. O. न च
6 A and I. O. पण्डितैः

यमः—

परिभुक्तमवज्ञातमपर्याप्तमसंस्कृतम् ।

यः प्रयच्छति विप्रेभ्यस्तद्भस्मन्यवतिष्ठते ॥९॥

परिभुक्तं पुरातनं वस्त्रादि[1] । अपर्याप्तं यथाभूतमङ्गीकृतं [2]तदसमर्थम् । प्रयच्छति उत्सृज्य ददातीत्यर्थः ।

[यो ददात्युपयुक्तार्थां जीर्णां धेनुञ्च निष्फलाम् ।

तमसि प्रविशेद्दाता द्विजं क्लेशेन योजयेत् ॥१०॥

कलायं ब्राह्मणे दत्त्वा दाता[3] यात्यशुभां गतिम् ।

कीर्तिनिर्मोकनिर्मुक्तः पन्नगेन्द्रः क्षितौ यथा[4] ॥११॥]

तथा—

सुवर्णं रजतं ताम्रं यतिभ्यो यः प्रयच्छति ।

न स तत्फलमाप्नोति तत्रैव परिवर्तते ॥१२॥

गृहस्थस्यान्नदानेन वानप्रस्थस्य गोरसैः ।

यतीनाञ्च हिरण्येन दाता स्वर्गं न गच्छति ॥१३॥

शातातपः—

वेदविक्रयनिर्दिष्टं स्त्रीषु यच्चार्जितं धनम् ।

अदेयं पितृदेवेभ्यो[5] यच्च क्लीवादुपागतम् ॥१४॥

वेदपाठनापूर्विका[6] अभ्यर्थना वेदविक्रयः । क्लीवश्च देवलेनोक्तः । तद् यथा—

शण्ढको वातजः पण्डः षण्डः क्लीवो नपुंसकम् ।

कीलकश्चेति[7] षड्भार्यं क्लीवभेदो विभावितः[8] ॥१५॥

तेषां स्त्रीतुल्यवाक्क्लिष्टः[9] स्त्रीधर्मा शण्ढको भवेत् ।

पुमान् कृत्वा स्वलिङ्गानि पश्चाद्भिन्द्यात्तथैव च ॥१६॥

---

1 A and I. O. पुरातनवस्त्रादि

2 A and B यद०

3 I. O. ततो

4 A omits the bracketed portion

5 I. O. ०विप्रेभ्यो

6 I. O. वेदपाठपूर्विका

7 I. O. कीलकश्चैव

8 A षड्वार्यं क्लीवभेदा विभाविताः

9 A स्त्रीतुल्यवाक्लीष्टः, B स्त्रीतुल्यवाक्‌क्लष्टः, I. O. स्त्रीतुल्यवाक्लिष्टः

यः पुमान् लिङ्गान्तराणि कृत्वा स्वलिङ्गं भिन्द्यात् स वातजो नाम शण्ढ[1] इति सम्बन्धः। एतावता दाक्षिणात्यप्रसिद्धं विरुद्ध[2]प्रजननमुक्तम्।

स्त्री च पुंभावमास्थाय पुरुषाचारवद्गुणा[3]।
वातजो नाम शण्ढः स्यात् स्त्रीशण्ढो वापि नामतः ॥१७॥

[या गृहीतपुरुषलिङ्गा स्त्री[4]] स्त्र्यन्तरमुपगच्छति[5], स वातजो नाम शण्ढः स्त्रीशण्ढो वा[6] नामेति सम्बन्धः।

असल्लिङ्गोऽथ पण्डः स्यात् षण्डस्तु ग्लानमेहनः।
अमेध्याशी पुमान् क्लीबो नष्टरेता नपुंसकम् ॥१८॥
स कीलक इति प्रोक्तो यः क्लै[7]व्यादात्मनः स्त्रियम्।
अन्येन सह संयोज्य पश्चात्तामेव सेवते ॥१९॥ इति।

तथा—

द्रव्येणान्यायलब्धेन[8] यः करोत्यौर्द्धदेहिकम्।
न स तत्फलमाप्नोति तस्यार्थस्य दुरागमात् ॥२०॥
प्रश्नपूर्वन्तु यो दद्याद् ब्राह्मणाय प्रतिग्रहम्।
स पूर्वं नरकं याति ब्राह्मणस्तदनन्तरम ॥२१॥

प्रश्नपूर्वमिति दानसमय एव यद्यमुं वेदभागं जानासि तदा ते[9] दास्यामी[ति प्रश्नं कृत्वे][10]त्यर्थः। अतः[11] पूर्वमेव ब्राह्मणपरीक्षा कर्तव्या।

हारीतः—

असद्द्रव्यप्रदानमस्वर्ग्यं यच्च दत्त्वा[12] परितप्यते। [13]तच्च दानमफलं यच्चोपकारिणे ददाति। तन्मात्रं परिक्लिष्टं यच्च सोपधं[14] ददाति। असूयितमफलं[15] यच्चापात्राय

---

1 I. O. omits शण्ढ
2 I. O. विरु०
3 A पुरुषाचारवद्गुणाः, I. O. पुरुषाचारवद्गुणाः
4 A and I. O. स्त्री च या पुरुषलिङ्गा
5 B ०मधिगच्छति, I. O. स्त्र्यन्तमुपगच्छति
6 I. O. omits वा
7 I. O. क्लैबा०
8 A तथाद्रव्येण न्यायेन
9 A and I. O. तव
10 I. O. omits the bracketed portion
11 A and I. O. अतश्च
12 I. O. adds तत् here
13 I. O. यच्च
14 I. O. सोपबन्धं
15 I. O. असूयितमर्थफलं

ददाति। अनिष्टदानं भवति[1] यत्र दत्त्वा परिकीर्त्यते। [2]स्मयदानमासुरं यत्राश्रद्धया ददाति। क्रोधाद्राक्षसं यत्राऽऽक्रुश्य[3] ददाति दत्त्वा वाऽऽक्रोशति[4]। असंस्कृतं पैशाचं यत्रावज्ञातं ददाति दत्त्वा वाऽवजानीते।[5] मुमूर्षुस्तामसं यत्राप्रकृतो ददाति। एते दानोपसर्गाः यैरुपसृष्टं दानमसिद्धमसमर्थमस्वर्ग्य[6]मयशस्यमध्रुवमफलं भवत्यफलं वा ॥२२॥

अस्यार्थः—

सोपधं[7] यद् दृष्टहेतुपुरस्कारेण दीयते। अप्रकृत उन्मत्तादिः।

अङ्गिराः—

बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः।
विभक्तदक्षिणा ह्येता दातारं न भजन्ति हि ॥२३॥
एका एकस्य दातव्या न बहुभ्यः कथञ्चन।
सा तु[8] विक्रयमापन्ना दहत्यासप्तमं कुलम् ॥२४॥

विष्णुधर्मोत्तरे—(३।३००।३५-३६)

स्त्रियं मेषमजञ्चैव गामश्वं तुरगं नरम्।
एकमेकस्य[9] दातव्यमेकस्य बहवोऽपि वा ॥२५॥
एकं बहूनां [तद्दत्तं ध्रुवं नरकमृच्छति][10]।
आदातुर्नरकाय स्यात्तथा दातुर्द्विजोत्तमाः ॥२६॥

## अथासद्दानम्।

कृष्णाजिनमु[11]भयतोमुखी च। तत्र कृष्णाजिनप्रतिग्रहीतारमधिकृत्य मत्स्यपुराणम्

(२०६।२३ख-२४क)—

न [[12]स्पृश्यः स] द्विजो राजंश्चितियूपसमो[13] हि सः।
[दाने च][14] श्राद्धकाले च दूरतः परिवर्जयेत् ॥१॥

---

1 A and B स्रवति
2 I. O. स्मतद्दान०
3 I. O. यत्रावक्रुश्य
4 I. O. चावक्रोशति
5 I. O. चावजानीते
6 I. O. ०स्वस्थ०
7 I. O. सोपबन्धं
8 I. O. त्व
9 I. O. and V. D. ०न्तु
10 A दत्तं हि नरकं गच्छति ध्रुवम्
11 I. O. कृष्णाजिनं तू०
12 M. P. स्पृश्योऽसौ
13 Corrected from M. P. A and I. O. राजन् चितिप्रायसमो ; B राजन् चितिसूपसमो
14 M. P. तं दाने

उभयतोमुख्याः प्रतिग्रहीतारमधिकृत्या[1]दित्यपुराणम्—

किं करिष्यत्यसौ मूढो गृह्णन्नु[2]भयतोमुखीम् ।
सहस्रं वारुणाः पाशाः क्षुरधाराग्निसन्निभाः ॥२॥
तस्य वर्षशते[3] पूर्णे पाश एकः प्रमुच्यते ।
एतामवस्थामाप्नोति गृह्णन्नु[4]भयतोमुखीम् ॥३॥

अग्निपुराणे—

हस्त्यश्वरथयानानि मृतशय्यासनानि यः ।
कृष्णाजिनञ्च गृह्णाति अनापत्सु गतो द्विजः ॥४॥
अथोभयमुखीं लोभात्[5] सशैलां मेदिनीं द्विजः ।
कूटमायेन[6] तौल्येन क्रयं क्रीणाति [वै द्विजः][7] ।
मद्यकृदधमो लोके स प्रेतो जायते नरः ॥५॥

एकादशाहे देयशय्याधिकारे पद्मपुराणम् (सृष्टिखण्डम् १०।१६ख-१८क) :—

तेन दुष्टा तु सा शय्या न ग्राह्या द्विजसत्तमैः ।
गृहीतायान्तु [8]शय्यायां पुनः संस्कारमर्हति ॥६॥
[[9]वेदेषु च पुराणेषु] शय्या सर्वत्र गर्हिता ।
गृहीतायान्तु[10] जायन्ते सर्वे नरकगामिनः ॥७॥

देवलः—

न शूद्राय हविर्दद्यात् स्वस्ति क्षीरं तिलान् मधु ।
न शूद्रात् प्रतिगृह्णीयात् तेषामन्यन्निवेदयेत् ॥८॥

वशिष्ठः(१५।३-५)—

न त्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा । स हि सन्तानार्थं पूर्वेषाम् । न [11]तु स्त्री पुत्रं दद्यात् गृह्णीयाद्वाऽन्यत्रानुज्ञानाद्[12] भर्त्तुः ॥९॥

तथा—

शस्त्रं विषं सुरा चाप्रतिग्राह्याणि[13] ब्राह्मणस्य ॥१०॥

---

1 I. O. ०कृत्य चादित्य०
2 I. O. गृह्णन्तु०
3 I. O. वर्षशतैः
4 I. O. गृह्णन्तु
5 I. O. लोभा
6 I. O. कूटमाप्येन
7 B विक्रयम्
8 Padma P. तस्यां हि
9 Padma P. वेदे चैव पुराणे च
10 Padma P. यहीतारस्तु
11 I. O. omits तु
12 I. O. अन्यथानुज्ञायद्भवाद्
13 I. O. वाप्रतिग्राह्याणि ; A चाप्रतिग्राह्यं

## अथ दानविधिः ।

मनुः (४।२३५)—

योऽर्चितं प्रतिगृह्णाति ददात्यर्चितमेव च ।
तावुभौ गच्छतः स्वर्गं नरकन्तु विपर्यये ॥१॥

व्यासः—

गोभूतिलहिरण्याश्ववासोघृतादि न्यायागतं देयं द्रव्यं श्रद्धासमन्वितः शक्तितो दयातपःशीलादिसम्पन्नाय[1] ब्राह्मणायानुपकारिणे दरिद्राय माल्यादिभिरर्चिताय स्वस्तिवाच्योदकपूर्वकं[2] दद्यात् । ग्रहोपरागादिनिमित्तेषु विशेषतः ।२॥

हारीतः—

देवताः पितरश्चैव तपोयज्ञदानानामीशते । अहर्देवानां रात्रिः पितॄणाम् । रात्रावेताः स्वापहेतोः संविशन्ति । देवा रात्रिस्तस्मान्नक्तं शुक्ला अहं कृष्णा इति श्रुतिः । अथ यद्दिवाऽद्भिर्यजति ददाति तपस्यति वा नक्तम्भूताभिरद्भिरहर्भूतेभ्यो देवेभ्यो गमयति । अथ यन्नक्तमद्भिर्यजति ददाति तपस्यति वाऽहर्भूताभिरद्भिर्नक्तम्भूतेभ्यः पितृभ्यो गमयति । तदप्येतादृगेवोक्तं फलम्—'ये रात्र्यहोभ्यां विज्ञायैवं देवान् पितॄन् यजन्ति भूयः पुराणाः । श्रद्धाश्रिता धारयन्ति यज्ञभूतास्ता नो देवीरुपतिष्ठन्त्वापः' इति । वरुणगृहपतयो देवा, दक्षिणायनं तस्माद् वारुणं सर्वत्रानुयातीति । मन्त्रा मन्त्रवत्सर्वकार्यसाधकानामर्तिभयोपसर्गेभ्यो रक्षितारो भवन्ति । मन्त्रा देवतास्तद् य एवं विद्वान् मन्त्रवत् करोति, देवताभिरेव तत् करोति, यद्ददाति, देवताभिरेव तद्ददाति ; यत् प्रतिगृह्णाति, देवताभिरेव तत प्रतिगृह्णाति । तस्मान्नामन्त्रवत् प्रतिगृह्णीयात् । यत्तु मन्त्रः प्रतिपादयेत्, प्रतिपादिता हि देवतास्तूष्णीं प्रतिग्रहीतुरहिंसिका भवन्ति । तस्मादप्यद्भिरवोक्ष्य दद्यादालभ्य च ।[3] ३ ॥

---

1 A शीलादिगुणसम्पन्नाय, I. O. दयान्वयः शीलादिगुणसम्पन्नाय

2 I. O. स्वस्तिवाच्योदकं

3 A देवाश्च पितरश्चैव...रात्रावेता अपहरणं संविशन् । देवारात्रिस्तस्मान्नोक्तं शुक्लाहः कृष्णा इति । श्रुतिरथ यद्दिवा अद्भिर्यजति......तदप्येतादृग्मेवोक्तं फलं ये रात्र्यहोभ्यां विज्ञानं देवानापवन् यजन्तु भूयः पुराणा...वरुणगृहपतयो देवा दक्षिणायनं तस्माद्वारुणं सर्वत्रानुपयजाते ; ......साधकानामर्चितायोपसर्गेभ्यो......स्तत्र एवं विद्वान् मन्त्रवत् करोति देवताभिरेव तद्ददाति यत् प्रतिगृह्णाति...तस्मन्नामन्त्रवत्......यत्तु मन्त्रतः प्रतिपादयेत......रहिंसका भवन्ति । तस्मादप्यद्भिरवोक्षा दद्यादालभ्य च ।

B ... रात्रावेतास्वापहेतव संविशति । दिवारात्रि...कृष्णा इति । श्रुतिरथ...यजते...रहर्भूतेभ्यो गमयति...नक्तमभियजति...रद्भिर्भूतेभ्यो देवेभ्यो...तदप्येतदुक्तं फलं । ये रात्र्यहोभ्यां विज्ञानं...यज्ञभूतास्तनो...दक्षिणायनं तद्वारुणं सर्वत्रानुया इति । समन्त्रामन्त्रावय सर्वकार्यसाधकानामर्तिभयपवर्गेभ्यो रक्षितारो भवति । ...विद्वान् करोति ......यन्मन्त्रः प्रतिपादयेत् प्रतिपादितानि देव।...रहिंसका भवन्ति । तस्मादप्यद्भिरवोक्ष्य दद्यादालभ्य वा ।

आपस्तम्बः (आप. ध. सू., २।४।६।८-६)—

सर्वाण्युदकपूर्वाणि दानानि । यथाश्रुति विहारे[1] ।४।।

गोतमः (गौ. ध. सू. १।५।१६-१७)—

स्वस्तिवाच्य भिक्षादान [म[2]प्पूर्वम् । ददातिषु] चैवं धर्म्येषु ।५।।

विष्णुधर्मोत्तरे—

द्रव्यस्य नाम गृह्णीयाद् ददानीति ततो[3] वदेत् ।

तोयं दद्यात्तथा दाता दाने विधिरयं स्मृतः ।।६।। (३।३०१।१०क)

एतेन दानवाक्ये ददानीतिपदं निवेश्य[4] दातव्यमिति प्रतिपादितम् ।

तथा कृष्णाजिनदाने पुलस्त्यः—

सर्वगुणविशिष्टं कृष्णाजिनं ददानीति ।।७।।

## अथ प्रतिग्रहविधिः ।

विष्णुधर्मोत्तरे—(३।३०१।१०ख-३६ख, ३६, ४०ख-४१क, ४३ख-४४क)

प्रतिग्रहीता सावित्रीं सर्वत्रैव तु कीर्तयेत् ।
ततस्तु कीर्तयेत् सार्द्धं द्रव्येण द्रव्यदैवतम्[5] ।।१।।
समापयेत्ततः पश्चात् कामस्तुत्या प्रतिग्रहम् ।
प्रतिग्रहं पठेदुच्चैः प्रतिगृह्य द्विजोत्तमात् ।।२।।
मन्दं पठेत्तु राजन्यादुपांशु च तथा विशः ।
मनसा च तथा शूद्रात्[6] स्वस्तिवाचनकं तथा ।।३।।
सोङ्कारं ब्राह्मणे कुर्यान्निरोङ्कारं महीपतौ ।
उपांशु च तथा वैश्ये स्वस्ति शूद्रे प्रकीर्तयेत् ।।४।।

---

I. O. देवाश्च पितरश्चैव तपोयज्ञेभ्यो दानानामीशते। ...र.बाधेता षपोहरथ संविशत् । दिवारात्रि-समागुक्तं गुरूलाढः क्षता इति । मु.तिरथ यद्दिश षद्विर्यजनि...ये रात्राहोभ्यां विद्वानं देवान् पितॄन् यजन्तु यज्ञभूतास्ता ना देवी...सर्वानुपयजनि । सुमन्त्रामन्त्रारश्च सर्वकार्यसाधकानामार्ति...मन्त्रा देवतास्तुत्य एवं विद्वान् मन्त्रवत् करोति देवताभिरेव तद्ददाति यत् प्रतिगृह्णाति...यत्तु मन्त्रतः···तस्मादप्यद्भिरेवोक्ता...

1 A and B वीहारे
2 Corrected from Gautama. A and B पूर्वबद्ददाति तेषु and I. O. पूर्वं ददाति तेषु
3 I. O. तथा
4 A and B omit it
5 A and I. O. ०दैवताम्
6 B and I. O. मनसा तु तथा शूद्रे

अभयं सर्वदैवत्यं भूमिर्वै विष्णुदेवता ।
कन्या दासस्तथा दासी प्राजापत्याः प्रकीर्तिताः ॥५॥
[प्राजापत्यो गजः प्रोक्तस्तुरगो यमदैवतः । ][1]
तथा चैकशफं सर्वं कथितं यमदैवतम् ॥६॥
महिषश्च तथा याम्य उष्ट्रो वै नैर्ऋतो भवेत् ।
रौद्री धेनुर्विनिर्दिष्टा छाग आग्नेय उच्यते ॥७॥
मेषन्तु वारुणं विद्याद् वराहो वैष्णवः स्मृतः ।
आरण्याः पशवः सर्वे कथिता वायुदैवताः ॥८॥
जलाशयानि सर्वाणि वारिधानी कमण्डलुः ।
कुम्भश्च करकञ्चैव वारुणानि विनिर्दिशेत् ॥९॥
समुद्रजानि रत्नानि सामुद्राणि तथैव च ।
आग्नेयं कनकं प्रोक्तं सर्वलोहानि यान्यथ[2] ॥१०॥
प्राजापत्यानि शस्यानि पक्वान्नमपि च द्विजाः ।
ज्ञेयानि सर्वगन्धानि गान्धर्वाणि विचक्षणैः ॥११॥
बार्हस्पत्यं स्मृतं वासः सौम्यान्यथ रसानि च ।
पक्षिणश्च तथा सर्वे वायव्याः परिकीर्तिताः ॥१२॥
विद्या ब्राह्मी विनिर्दिष्टा विद्योपकरणानि च ।
सारस्वतानि ज्ञेयानि पुस्तकाद्यानि पण्डितैः ॥१३॥
सर्वेषां शिल्पभाण्डानां विश्वकर्मा तु दैवतम् ।
द्रुमाणामथ पुष्पाणां शाकानां हरितैः[3] सह ॥१४॥
फलानामपि सर्वेषां तथा ज्ञेयो वनस्पतिः ।
मत्स्यमांसे विनिर्दिष्टे प्राजापत्ये तथैव च ॥१५॥
छत्रं कृष्णाजिनं शय्यां रथमासनमेव च ।
उपानहौ तथा यानं यच्चान्यत् प्राणवर्जितम् ।
औत्तानाङ्गिरसे त्वेतत् प्रतिगृह्णीत मानवः ॥१६॥

---

1 V. D. omits the b. p.
2 I. O. and V. D. ०लोहानि चाप्यथ
3 A and B शाकहरितकैः, I. O. शाकं हरितकैः, V. D. शाकहारितकैः

पर्जन्यीयं तथोषीरं शस्त्रवर्मध्वजादिकम्[1] ।
रणोपकरणं सर्वं कथितं शक्रदैवतम् ॥१७॥
गृह्णन्तु सर्वदैवत्यं यदनुक्तं द्विजोत्तमाः ।
तज्ज्ञेयं विष्णुदैवत्यं सर्वं वा विष्णुदैवतम् ॥१८॥
भूमेः प्रतिग्रहं कुर्याद् [भूमिं कृत्वा प्रदक्षिणम्][2] ।
करे गृह्य तथा कन्यां दासदास्यौ द्विजोत्तमाः ॥१९॥
करन्तु हृदि विन्यस्य धर्म्यो[3] ज्ञेयः प्रतिग्रहः ।
आरुह्य च गजस्योक्तः कर्णे चाश्वस्य कीर्तितः ।
तथा चैकशफानान्तु सर्वेषामविशेषतः ॥२०॥
प्रतिगृह्णीत गां पुच्छे पुच्छे कृष्णाजिनं तथा ।
कर्णेऽजाः पशवश्चान्ये ग्राह्याः पुच्छे विचक्षणैः ॥२१॥
प्रतिग्रहमथोष्ट्रस्य आरुह्यैव तथा चरेत् ।
बीजानां मुष्टिमादाय रत्नान्यादाय सर्वतः ॥२२॥
वस्त्रं [दशान्त आदद्यात्][4] परिधाय तथा पुनः ।
आरुह्योपानहौ यान[5]मारुह्यैव च[6] पादुके ॥२३॥
ईशायान्तु रथं प्राह्यं छत्रं दण्डेन धारयेत् ।
द्रुमाणामथ सर्वेषां मूले न्यस्तकरो द्विजः ॥२४॥
आयुधानि समादाय तथाऽऽभूष्य विभूषणम् ।
वर्मध्वजौ तथा स्पृष्ट्वा प्रविश्य च तथा गृहम् ॥२५॥
अवतीर्य च सर्वाणि जलस्थानानि वै द्विजाः ।
द्रव्याण्यन्यान्यथादाय स्पृष्ट्वा वा ब्राह्मणः पठेत् ॥२६॥
प्रतिग्रहस्य यो धर्म्यं न जानाति द्विजो विधिम् ।
द्रव्यस्तैन्यसमायुक्तो नरकं प्रतिपद्यते ॥२७॥

1 I. O. पर्यन्यायतथासीनं वस्त्रकर्मध्वजा-दिकं ; V. D. पर्जन्याय तथासीरं०
2 B कृत्वा भूमिप्रदक्षिणम्
3 I. O. धर्मो
4 I. O. and V. D. दशान्तादादद्यात्
5 I. O. यन्त्र०
6 I. O. तु

[विधिन्तु धर्म्यं विज्ञाय ब्राह्मणस्तु प्रतिग्रहे][1] ।
आत्मनः श्रेयसो योगं कुर्याद्दातुस्तथैव च ॥२८॥
[विधिं धर्म्यमविज्ञाय यस्तु कुर्यात् प्रतिग्रहम्][2] ।
[स तमस्यप्लवे घोरे दात्रा सह निमज्जति ॥२६॥
विधिं धर्म्यमथ ज्ञात्वा यस्तु कुर्यात प्रतिग्रहम् ।][3]
दात्रा सह तरत्येव नावा[4] दुर्गाण्यसौ द्विजः ॥३०॥

हारीतः—

प्रतिग्रहमाग्नेयेन प्रतिगृह्णीयात् ।३१॥

आग्नेयतीर्थञ्च[5] हारीतेनोक्तम्—मध्य आग्नेयः ।३२॥

मध्यः करमध्यमः ।

## अथ परिभाषा ।

तत्र कर्तृधर्मेषु दक्षः (२।६)—

ऊषःकाले तु सम्प्राप्ते शौचं कृत्वा यथाविधि[6] ।
ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम् ॥१॥

नरसिंहपुराणे—

अलाभे [7]दन्तकाष्ठानां प्रतिषिद्धे तथा दिने ।
अपां द्वादशगण्डूषैर्मुखशुद्धिर्भविष्यति[8] ॥२॥

विष्णुः—

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि ।
पवित्राणां तथा जप्ये दाने च विधिचोदिते ॥३॥

अग्निपुराणे[9]—

स्नानानामथ सर्वेषां वारुणेनैव मानवः ।
कर्तुमर्हति कर्माणि विधिवत् सर्वदा द्विज[10] ॥४॥

---

1 A विधिन्तु तत्तद् विज्ञाय ब्राह्मणस्तु वथा ग्रहे for the b. p.
2 B धर्म्यं विधिमथाज्ञात्वा यस्तु गृह्णात् प्रतिग्रहम् for the b. p.
3 V. D. omits the b. p.
4 I. O. नौवद् ; V. D. नैव
5 A आग्नेयञ्च
6 I. O. and Dakṣa यथार्थवत्
7 I. O. दन्त०
8 I. O. ०र्विधीयते
9 I. O. आग्नेय०
10 I. O. द्विजः

असामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षया[1]।
[मन्त्रस्नानादितः पञ्च केचिदिच्छन्ति सूरयः][2] ॥५॥
अशक्तौ हि भवेत् स्नानमशिरस्कं हि कर्मिणाम्।
आर्द्रेण वाससा वापि मार्जनं नित्यकर्मसु[3] ॥६॥

शक्ताशक्तस्त्रीपुंससाधारणञ्च दक्षिणगोशृङ्ग[4]प्रक्षालनजलस्नानं हरिवंशोक्तं **व्रतसागरीय-स्त्रीव्रतचर्यायामनुसन्धेयम्** ॥

[5]याज्ञवल्क्यः—

न कुर्यात् कस्यचित् पीड़ां कर्मणा मनसा गिरा।
आचरन्नभिषेकन्तु कर्माण्यन्यानि चाचरन् ॥७॥

मार्कण्डेयपुराणे (१६।३७) :—

सूर्योदयं विना नैव[6] [स्नानदानादिकाः क्रियाः][7]।
अग्नेर्विहरणञ्चैव कृत्वभावश्च लक्ष्यते ॥८॥

दक्षः (२।२३)—

देवकार्याणि पूर्वाह्णे मनुष्याणाञ्च मध्यमे।
पितॄणामपराह्णे तु [कुर्यादेतानि नित्यशः][8] ॥९॥

छन्दोगपरिशिष्टे कात्यायनः[9]—

सदोपवीतिना भाव्यं[10] सदा बद्धशिखेन च।
विशिखो व्युपवीतश्च[11] यत् करोति न तत् कृतम् ॥१०॥

शाम्बपुराणे—

क्रियां यः कुरुते मोहा[12]दनाचम्येह नास्तिकः।
भवन्ति हि[13] वृथा तस्य क्रियाः सर्वा[14] न संशयः ॥११॥

---

1 I. O. कालशक्त्यपेक्षया
2 I. O. मन्त्रस्नानादयः पञ्च एते इच्छन्ति सूरयः for the b. p.
3 B and I. O. सर्वकर्मसु
4 A and I. O. ०स्त्रीपुंससाधारणञ्च गोशृङ्ग
5 Brahmacāri—Kānda of Kṛtyakalpataru (p. 64) the following verse as of Yogi-yājñavalkya.
6 I. O. दैव०
7 A स्नानदानादिकः क्रमात्
8 A कार्याणि च विनिश्चयः, I. O. कार्याणीति विनिश्चयः, Dakṣa कार्याण्येतानि यत्नतः
9 I. O. omits the entire line
10 A and I. O. कार्यम्
11 I. O. ह्युपवीतिश्च
12 A, B and I. O. लोभा०
13 I. O. च
14 I. O. सर्व्वा

छन्दोगपरिशिष्टे कात्यायनः—

यत्र दिङ्नियमो नास्ति जपहोमादिकर्मसु ।
तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्रीसौ[1]म्याऽपराजिताः ॥१२॥
आसीन ऊर्द्ध्वः प्रह्वो वा नियमो यत्र नेदृशः ।
तदासीनेन[2] कर्तव्यं न प्रह्वेण न तिष्ठता ॥१३॥
यत्रोपदिश्यते कर्म कर्तुरङ्गञ्च नोच्यते[3] ।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥१४॥

वामनपुराणे—

दानं प्रतिग्रहो होमो भोजनं देवतार्चनम् ।
साङ्गुष्ठेन सदा कार्यमसुरेभ्योऽन्यथा भवेत् ॥१५॥

लघुहारीतः—

जपे होमे तथा दाने स्वाध्याये पितृतर्पणे ।
अशून्यन्तु करं कुर्यात् सुवर्णरजतैः कुशैः ॥१६॥

कूर्मपुराणे (२।१८।५०) :—

विना दर्भेण यत् कर्म विना सूत्रेण[4] यत्[5] पुनः ।
राक्षसं तद् भवेत् सर्वं नामुत्रेह फलप्रदम् ॥१७॥

योगियाज्ञवल्क्यः—

परिधानाद्बहिः कक्षा निबद्धा ह्यासुरी मता ।
धर्म्ये कर्मणि विद्वद्भिर्वर्जनीया प्रयत्नतः ॥१८॥

बहिः कक्षा [असंवृतः परिधानवस्त्राञ्चलः][6] ।

बोधायनः (१।१०।१८)—

[कर्मयुक्तो नामेरधः स्पर्शं वर्जयेत्][7] ।१६॥

1 A and B ०सौम्य०
2 B and I. O. तदासीनेन
3 B and I. O. न तूच्यते
4 A मन्त्रेण
5 I. O. and K. P. वा
6 I. O. असंवृतपरिधानवस्त्राञ्चलाः and adds कर्मयुक्तेन नाभेर before बहिःकक्षा
7 A नाभेरधः कृते सम्यक् न दोषो वस्त्रवासमा for the b. p. and omits the word विष्णुपुराणे just below. Baudh. नाभेरधस्स्पर्शनं कर्मयुक्तो वर्जयेत

विष्णुपुराणे (३।१२।२०) :—

होमदेवार्चनाद्यासु क्रियास्वाचमने तथा ।

नैकवस्त्रः प्रवर्तेत [द्विजवाचनके[1] जपे[2]] ॥२०॥

द्विवस्त्रस्याप्येकवस्त्रत्वे शातातपः—

सव्यादंसात्[3] परिभ्रष्टं कटिदेश[4]धृताम्बरम् ।

एकवस्त्रन्तु तं विद्याद् दैवे पित्र्ये[5] च वर्जयेत् ॥२१॥

शाट्यायनः—

दानमाचमनं होमं भोजनं देवतार्चनम् ।

प्रौढ़पादो न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥२२॥

आसनारूढ़पादश्च जान्वोर्वा जङ्घयोस्तथा[6] ।

कृतावसकथिको[7] यश्च प्रौढ़पादः स उच्यते ॥२३॥

बौधायनः (२।१५।५)—

काषायवासाः कुरुते जपहोमप्रतिग्रहम्[8] ।

न तद्देवगमं भवति हव्यकव्येष्वथो[9] हविः ॥२४॥

[10]व्यासः—

आर्द्रवासास्तु यः[11] कुर्याज्जपं होमं प्रतिग्रहम् ।

सर्वं तद्राक्षसं विद्याद् बहिर्जानु च यत् कृतम् ॥२५॥

एतच्च काषायवाससार्द्रवाससा च जपादिप्रतिषेधनमश्रुतविशेषे । यत्र तु[12] कर्मविशेषे काषायवाससैवार्द्रवाससैवानुष्ठानं श्रूयते, तत्र तथैवानुष्ठानं कर्तव्यम् ।

वशिष्ठः—

जपहोमोपवासेषु धौतवस्त्रधरो भवेत् ।

अलङ्कृतः शुचिर्मौनी श्राद्धादौ विजितेन्द्रियः ॥२६॥

श्राद्धादावि[13]त्यादिशब्देन दानव्रतादिग्रहणम् ।

जपकाले न भाषेत व्रतहोमादिकेषु च ।

1 Visnup. द्विजपादावनेजने and I. O. ०वाचनिके०
2 A तथा
3 I. O. ०सात्
4 I. O. ०देशे
5 I. O. पैत्रे
6 I. O. ०रपि
7 I. O. कृतावसार्थको
8 I. O. ०यहान्
9 I. O. ०मुखो
10 A and B omit it
11 I. O. ०स्तप:
12 A and B omit it
13 Corrected from K. R. A, B and I. O. ०दिरि०

एतेष्वेवावसक्तस्तु यद्यागच्छेद् द्विजोत्तमः ।
अभिभाष्य ततो[1] विप्रं योगक्षेमन्तु कीर्तयेत् ॥२७॥

बौधायनः (२।१८।१६)—

अत्र मौनयुक्तस्त्रैविद्यवृद्धैराचार्यैर्मुनिभिरन्यैर्वा सुमतिभिर्बहुश्रुतैर्दन्तैर्दन्तान् सन्धार्यान्तर्मुखमेव[2] यावदर्थं सम्भाषेत[3] । न मन्त्रलोपो भवतीति विज्ञायते ।२८॥

मन्त्रो नियमः ।

योगियाज्ञवल्क्यः[4]—

स्त्रीशूद्रपतितांश्चैव रासभञ्च रजस्वलाम् ।
जपकाले न भाषेत व्रतहोमादिकेषु[5] च ॥२९॥

अत्र स्त्रीशूद्रपदमसच्छूद्रामत्स्त्रीपरं स्त्रीशूद्रयोरपि व्रताद्युपदेशात् पतितसमभिव्याहाराच्च[6] ।

तूष्णीमासीत तु जपं श्चाण्डाल[7]पतितादिकान् ।
दृष्ट्वा तान् वायुपस्पृश्याभाष्य स्नात्वा पुनर्जपेत् ॥३०॥

छागलेयः—

पूर्वं व्रतं गृहीत्वा वै नाचरेत् काममोहितः ।
जीवन् भवति चाण्डालो[8] मृतः श्वा चैव जायते ॥३१॥

योगियाज्ञवल्क्यः[9]—

विधिदृष्टन्तु यत् कर्म करोत्यविधिना तु यः ।
फलं न किञ्चिदाप्नोति क्लेशमात्रं हि तस्य तत् ॥३२॥
श्रद्धाविधिसमायुक्तं कर्म यत् क्रियते नृभिः ।
सुविशुद्धेन[10] भावेन तदानन्त्याय कल्पते[11] ॥३३॥
विधिहीनं भवेद्दुष्टं कृतमश्रद्धया च यत् ।
तद्ध[12]रन्त्यसुरास्तस्य मूढस्य दुष्कृतात्मनः[13] ॥३४॥

---

1 A and I. O. अभिवाद्य तथा
2 I. O. and Baudh. ०एव
3 I. O. सम्भाषेत्, Baudh. सम्भाषीत
4 I. O. योग०
5 I. O. व्रतहोमादितादिकेषु
6 A and B पतितत्वाभिव्याहाराच्च, I. O. omits it
7 I. O. जपन् चण्डाल०
8 I. O. चण्डालो
9 I. O. योग०
10 I. O. सुविशुद्धेन
11 I. O. कल्प्यते
12 I. O. तद्वदन्त्य०
13 A. न कृतात्मनः, I. O. त्वकृतात्मनः

## अथ प्रमादकर्तृधर्माः[1] ।

तत्र छन्दोगपरिशिष्टे कात्यायनः—

पित्र्यमन्त्रानुद्रवणे आत्मालम्भे ह्यवेक्षणे[2] ।
अधोवायुविसर्गे च[3] प्रहासेऽनृतभाषणे ॥१॥

अनुद्रवणे पाठे[4] । आत्मालम्भे आत्महनने आत्मप्रशंसायाञ्च[5] ।

मार्जारमूषिकस्पर्शे आक्रुष्टे क्रोधसम्भवे ।
निमित्तेष्वेषु सर्वत्र कर्म कुर्वन्नपः स्पृशेत्[6] ॥२॥

तथा—

प्रवृत्तमन्यथा कुर्याद् यदि मोहात् कथञ्चन ।
यतस्तदन्यथा भूतं[7] तत एव समापयेत् ॥३॥

प्रवृत्तमनुष्ठीयमानं प्रधानाङ्गभूतं कर्म ।

समाप्ते यदि जानीयान्ममैतदन्यथा[8] कृतम् ।
तावदेव[9] पुनः कुर्यान्नावृत्तिः सर्वकर्मणः ॥४॥
प्रधानस्याक्रियायान्तु साङ्गं तत् क्रियते पुनः ।
तदङ्गस्याक्रियायान्तु नावृत्तिर्न च तत्क्रिया ॥५॥

तदङ्गस्य अङ्गाङ्गस्योपवीतित्वादेः ।

अत्र च प्रायश्चित्तविशेषाश्रुतेर्विष्णुस्मरणमेव कार्यम् । एवञ्च [10]कर्तृधर्मादिषु अज्ञानमोहाभ्यामङ्गाननुष्ठाने अनुक्तप्रायश्चित्ते विष्णुस्मरणमेव कार्यम् ।

तथा च [11]याज्ञवल्क्यः—

यदि वाग्यमलोपः स्याज्जपादिषु कथञ्चन ।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥६॥

1 I. O. प्रमादकर्तृकधर्म्माः
2 I. O. ऽग्नुभिक्षणे
3 A and I. O. अधोवायुसमुत्सर्गे
4 I. O. पापे
5 A and B आत्मप्रशंसायाम्
6 Corrected from K. R. and Raghunandana's Srāddhatattva, (p. 210). A, B and I. O. कुर्वन्नुपस्पृशेत्.
7 B जातम्
8 I. O. मयैतदन्यथा॰
9 I. O. तावतदेव
10 I. O. कर्तृधर्म्मत्वादिषु ज्ञान'.. ज्ञाङ्गानुष्ठाने अत्र प्रायश्चित्तो॰
11 Brahmacārikāṇḍa of Kṛtyakalpataru ( pp. 63-64 ) the following two verses as of Yogiyājñavalkya.

अज्ञानाद् [यदि वा][1] मोहात् प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥७॥

विष्णुधर्मे—

पाषण्डिनो विकर्मस्थान् नालपेच्चैव नास्तिकान् ।

पाषण्डिनो वेदविपरीतधर्मोपदेष्टारः । विकर्मस्था दम्भेन वैदिककर्मानुष्ठातारः । नास्तिका धर्मासत्त्ववक्तारः ।

सम्भाष्यैतान् शुचिपदं चिन्तयेदच्युतं बुधः ।
इदञ्चोदाहरेत् सम्यक् कृत्वा तत्प्रवणं मनः[2] ॥८॥
शरीरमन्तःकरणं तथाद्यो वाचश्च विष्णुर्भगवानशेषम् ।
शमं नयत्वस्तु[3] ममेह शर्म पापादनन्ते हृदि सन्निविष्टे ॥९॥
अन्तःशुद्धिं बहिःशुद्धिं शुद्धान्तर्मानसो[4]ऽच्युतः ।
करोतु विमले तस्मिञ् शुद्ध एवास्मि सर्वदा ॥१०॥
बाह्योपघातमनघो बुद्धेश्च[5] भगवानजः ।
शुद्धिं नयत्यनन्तात्मा विष्णुश्चेतसि संस्थितः ॥११॥
एतत् सम्भाष्य जप्तव्यं पाषण्ड्या[6]दीनुपोषितैः ॥१२॥

उपोषितैर्नियमस्थैः ।

विष्णुधर्मोत्तरे—

उपविष्टो जपन् स्नातः क्षुतप्रस्खलितादिषु[7] ।
पूजायां नाम कृष्णस्य सप्त वारान् प्रकीर्तयेत् ॥१३॥

आदिपदेन कासजृम्भादिग्रहणम् ।

## अथाशक्तकर्तृ[8]धर्माः ।

तत्र ब्रह्मपुराणे—

व्रतस्थः[9] प्राणरक्षार्थं कदाचिदुदकं पिबेत् ।
फलमूलेऽथवा क्षीरं यज्ञशिष्टञ्च वा हविः ॥१॥

---

1 A and I. O. अथवा
2 I. O. ततः
3 I. O. नयवस्तु
4 Corrected from K. R. A and B शुद्धान्तर्मानसो, I. O. शुद्धोऽन्तर्मनसो
5 A and B बुधेरत् सः
6 I. O. पाषण्ड०
7 I. O. क्षतप्रस्खलितादिषुः
8 I. O. ०कर्तृका०
9 A and B व्रतस्था

व्रतमध्ये च रोगार्तो वैद्यप्रोक्तमथौषधम् ।
करोति च गुरोर्वाक्यं [1]व्रतस्थस्तत्क्षणादपि ॥२॥
ब्राह्मणस्याभिलषितं साधयेदविचारयन् ।
एतान्यष्टौ व्रतस्थानां न व्रतघ्नानि कुत्रचित् ॥३॥

देवलः—

[सर्वभूतभयं व्याधिः][2] प्रमादो गुरुशासनम् ।
अव्रतघ्नानि पठ्यन्ते सकृदेतानि शास्त्रतः ॥४॥

**अथोपवासग्रहण-परिभाषा ।**

तत्र भविष्ये (१।६४।४=१।१०३।२०):—

उपावृत्तस्य दोषेभ्यो[3] यस्तु वासो गुणैः सह ।
उपवासः स विज्ञेयः सर्वभोगविवर्जितः ॥१॥

वासो गुणैः सहेति[4] क्षमादिभिः सह वासो नियमेनावस्थानम् ।

तथा—

यां तिथिं नियमं कर्तुं भक्त्या समनुगच्छति ।
तस्यां तिथौ विधानं यत् तन्निबोध जनाधिप ॥२॥
यदा तु प्रतिपद्यन्ते गृह्णीयान्नियमं नृप[5] ।
चतुर्दश्यां कृताहारः सङ्कल्पं परिकल्पयेत् ॥३॥

एतेन निदर्शनेन सोपवासदानेषु उपवासपूर्वदिने प्रथमभोजनानन्तरं सङ्कल्पपरि[6]ग्रहणं प्रतिपादितम् ।

अमावस्यां न भुञ्जीत त्रिकालं स्नानमाचरेत् ।
पवित्राणि जपेन्नित्यं सावित्रीं शिरसा सह ॥४॥

अमावस्यामिति दानपूर्वतिथि[7]निदर्शनार्थं 'यदा त्वि'त्यादिना निदर्शनस्यैवोपक्रान्तत्वात् । सावित्रीजपश्च त्रैवर्णिकस्य, स्त्रीशूद्रयोस्तु पौराणिकस्तुतिपाठः, तदशक्तौ नारायणस्मरणम् ।

देवलः—

---

1 I. O. व्रतस्तुत०
2 I. O. सर्वव्याधिभयं भूत:
3 Bh. P. पापेभ्यो
4 I. O. adds गुणैः here
5 I. O. नृपः
6 I. O. ०प्रति०
7 I. O. omits ०तिथि०

अभुक्त्वा प्रातराहारं स्नात्वाऽऽचम्य समाहितः ।
सूर्याय देवताभ्यश्च निवेद्य व्रतमाचरेत् ॥५॥

देवताभ्य इति सूर्यस्य स्वपदोपात्तत्वात् तद्व्यतिरिक्तदेवलोक-सकल[1]कर्म-साक्षिसोमादि-देवताभ्यः ।

तथा च—

सूर्यः सोमो यमः कालो महाभूतानि पञ्च वै[2] ।
दैवतानि हि जानन्ति वृत्तं जन्तोः शुभाशुभम् ॥६॥ इति ।

मत्स्यपुराणे (११५।१४) :—

[ तस्मात् कृतोपवासेन ][3] स्नानमभ्यङ्गपूर्वकम् ।
वर्जनीयं प्रयत्नेन रूपघ्नं तत् परं स्मृतम्[4] ॥७॥

वृद्धशातातपः—

गन्धालङ्कारवस्त्राणि पुष्पमाल्यानुलेपनम् ।
उपवासेन दुष्यन्ति दन्तधावनमञ्जनम् ॥८॥

गन्धः सुगन्धिस्नानीयद्रव्यम् । अलङ्कारवस्त्राणि प्रसिद्धानि । अनुलेपनं सुगन्धाद्यु[5]द्वर्तनम् । उपवासेन दुष्यन्तीति उपवासेन हेतुना दोषतां यान्तीत्यर्थः । **व्रतसागरीय**-मुखबन्धस्थ-स्त्रीव्रतचर्यायामञ्जनदन्तधावनादिनिषेधात् ।

देवलः—

उपवासो विनश्येत दिवास्वप्नात्तमैथुनैः ।
अत्यये[6] जलपानेन नोपवासः प्रणश्यति ॥९॥

जलपानेनेत्युपलक्षणम्, अशक्तकर्तृधर्मस्थ[7]-फलादीनाम[प्यत्र ग्रहणं][8] बोद्धव्यम् ।

## अथ नक्तपरिभाषा ।

भविष्ये—

उपवासात् परं भैक्ष्यं भैक्ष्यात् परमयाचितम् ।
अयाचितात् परं नक्तं तस्मान्नक्तेन वर्तयेत् ॥१॥

---

1 I. O. ०फल०
2 I. O. च
3 M. P. उपोषितैर्नरैस्तस्मात्
4 M. P. वप
5 I. O. omits ०द्यु०
6 I. O. ०तत्य०
7 I. O. ०धर्मेषात्
8 I. O. प्यतद

तथा—

नक्षत्रदर्शनान्नक्तं केचिदिच्छन्ति मानवाः ।
मुहूर्त्तोनं दिनं केचित् प्रवदन्ति मनीषिणः ।
नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिप ॥२॥

तथा—

हविष्यभोजनं स्नानं सत्यमाहारलाघवम् ।
अग्निकार्यमधःशय्यां नक्तभोजी षडाचरेत् ॥३॥

## अथ होमपरिभाषा ।

तत्र छन्दोगपरिशिष्टे कात्यायनः—

[आज्यं गव्यमनादेशे][1] [जुहोतिषु विधीयते][2] ।
मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः ॥१॥
[पाण्याहुतिर्द्वादशपर्वपूरिका
रसादिना च स्रुवमात्रपूरिका][3] ।
दैवेन तीर्थेन च हूयते हविः
स्वङ्गारिणि स्वर्चिषि तच्च पावके ॥२॥

आदित्यपुराणे[4]—

क्षुत्तृट्क्रोधत्वरायुक्तो हीनमन्त्रैर्जुहोति यः ।
अप्रवृद्धे सधूमे वा सोऽन्धः स्यादन्यजन्मनि ॥३॥

[क्षुत्तृट्क्रोधत्वरायुक्त इति बुभुक्षापिपासाक्रोधनिमित्तकत्वरायुक्तः ।[5] ] एतच्च दृष्टप्रयोजन—निमित्तक-त्वरोपलक्षकं[6] तेन लोभादिनापि त्वरा न कर्तव्या । जुहोतीत्युपलक्षणं तेन[7] पूजादिष्वपि अदृष्टप्रयोजनेन त्वरा न कार्येति बोद्धव्यम् ।

स्वल्पे रुक्षे[8] सस्फुलिङ्गे वामावर्ते भयानके ।
आर्द्रकाष्ठैः सुसम्पूर्णे फुत्कारवति पावके ॥४॥
कृष्णार्चिषि सु[9]दुर्गन्धे तथा लिहति मेदिनीम् ।
आहुतीर्जुहुयाद् यस्तु तस्य नाशो भवेद् ध्रुवम् ॥५॥

---

1 B and I. O. आज्यद्रव्यमनादेशे
2 I. O. जुहोति प्रतिधीयते
3 I. O. पाण्याहुतिद्वादशपर्वपूरिका रसादिना चेतत् स्रुवपूर्णमात्रिका
4 A आदिपुराणे
5 A and B omit the b: p.
6 I. O. ०निमित्तं कर्त्तं रुपलक्षणं
7 A and B omit it
8 A and B स्वल्पकाचे
9 I. O. सु०

छन्दोगपरिशिष्टे कात्यायनः—

योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः ।
मन्दाग्निरामयावी[1] च दरिद्रश्चोपजायते ॥६॥
तस्मात् समिद्धे होतव्यं नासमिद्धे कदाचन ।
आरोग्यमिच्छतायुश्च श्रियमात्यन्तिकीं तथा ॥७॥
जुहुयांश्च हुते[2] चैव पाणि-सूर्प-स्फ्य-दारुभिः ।
न कुर्यादग्नि-धमनं [ न कुर्याद् ][3] व्यजनादिना ॥८॥

तथा—

नाङ्गुष्ठादधिका ग्राह्या समित् स्थूलतया क्वचित् ।
न विमुक्तत्वचा चैव न सकीटा न पाटिता ॥९॥
प्रादेशान्नाधिका नोना न सशाखा[4] विशाखिका ।

विशाखिका [5]शुचिशाखाविनिर्गतशाखाप्रभवा ।

न सपर्णा न निर्वीर्या होमेषु च विजानता ॥१०॥

मरीचिः—

प्रागग्राः समिधो देयास्ताश्च काम्येष्व[6]पाटिताः ।
शान्त्यर्थेषु सशल्कार्द्रा[7] विपरीता जिघांसतः ॥११॥
विशीर्णा विदला ह्रस्वा वक्राः सशुषिराः[8] कृशाः ।
दीर्घाः स्थूला घुणैर्जुष्टाः कर्मसिद्धिविनाशिकाः ॥१२॥

आदिपुराणे[9]—

पलाशाश्वत्थन्यग्रोध-प्लक्षवैकङ्कतोद्भवाः ।
अश्वत्थौडुम्बरौ[10] विल्वश्चन्दनः सरलस्तथा ।

अश्वत्थन्यग्रोधः अश्वत्थसंयुक्तो वटः, अश्वत्थस्य[11] पुनरुपादानात् ।

शालश्च देवदारुश्च खदिरश्चेति यज्ञियाः[12] ॥१३॥

1 I. O. ०पाठी
2 I. O. कृते
3 B and I. O. कुर्याच्च. But Raghunandana (Saṁskāratattva, p. 872) न कुर्याद्
4 K. R. and Sm̐. T. तथा स्याद्
5 K. R. and Sm̐. T. विविधशाखायुक्ता
6 I. O. and K. R ०पु
7 I. O. मशाम् कार्या
8 I. O. समग्निराः
9 B आदित्यपुराणे, K. R. ब्रह्म०
10 I. O. and K. R. ०डुम्बरी
11 I. O. adds च here
12 I. O. याज्ञिकाः

हारीतः—

नाशुचिक्लिन्नपूति[1]भिर्दारुभिरग्निमिन्धेत ॥१४॥

आपस्तम्बः(आप. ध. सू. १।५।१५।१२)—

नाप्रोक्षितमिन्धनमग्नावादध्यात् ॥१५॥

विष्णुधर्मोत्तरे (३।२८७।८-११) :—

दूर्वाहोमः परः प्रोक्तस्तेन स्वर्गे महीयते ।
तस्माद्दशगुणं पुण्यमिध्मभिः प्राप्नुयात् कृते ॥१६॥
तस्माद्दशगुणं शस्यैर्व्रीहिभिर्द्विगुणं ततः ।
तावदेव तथा पुण्यं होमे सिद्धार्थकैः स्मृतम् ॥१७॥
यवैश्चतुर्गुणं तस्मात् तिलैर्दशगुणं स्मृतम् ।
तावदेव फलैर्ज्ञेयं विल्वैर्दशगुणं ततः ॥१८॥
पद्मैश्च[2] तावदेवोक्तं दध्ना क्षीरेण च द्विजाः ।
परमान्नेन धर्मज्ञा घृतेनाष्टगुणं ततः ॥१९॥

एवं छन्दोगपरिशिष्टकृताऽत्यन्तप्रचुरफलत्वात् अनादिष्टहविर्विशेषे होमे गव्यमाज्य[3]मुपन्यस्तम् । तस्मात् अनादिष्टद्रव्यविशेषेषु होमेषु[4] दूर्वादीनामन्यतमस्य हविष्ट्व[5] बोद्धव्यम् ।

मन्त्रेणोङ्कारपूतेन स्वाहान्तेन विचक्षणः ।
स्वाहावसाने जुहुयाद्ध्यायन् वै[6] मन्त्रदेवताम् ॥२०॥ (३।२८७।१२)

## अथ जपपरिभाषा ।

नरसिंहपुराणे—

त्रिविधो जपयज्ञः स्यात् तस्य भेदान् निबोधत[7] ।
वाचिकश्च उपांशुश्च मानसश्च त्रिधा मतः ।
त्रयाणां जपयज्ञानां श्रेयान् स्यादुत्तरोत्तरः ॥१॥
यदुच्चनीचस्वरितैः स्पष्टशब्दवदक्षरैः ।
मन्त्रमुच्चारयेद्व्यक्तं जपयज्ञः स वाचिकः ॥२॥

---

1 I. O. ०पूतो०
2 I. O. पद्मैश्च
3 I. O. मस्यमाद्य०
4 I. O. ०विशेषो दानेषु
5 I. O. ष्टविमत्
6 I. O. ध्यायेत २
7 I. O. निबोधते

शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयेत् ।
किञ्चिच्छब्दं स्वयं[1] विद्यात् स उपांशुरिति स्मृतः ॥३॥
धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात् पदम् ।
शब्दार्थचिन्तनाभ्यासः स उक्तो मानसो जपः ॥४॥

योगियाज्ञवल्क्यः—

उपांशुजपयुक्तस्य [शंस्या[2]च्छतगुणं भवेत् ।
साहस्रो मानसः[3] प्रोक्तो यस्माद्ध्यान[4]समो हि सः ॥५॥

शंस्यात् वाचिकात्, उच्चैः पठनीयादित्यर्थः । ][5]

[न चंक्रमन्न च हसन्न पार्श्वमवलोकयन्[6] । ]
[नापाश्रितो न जल्पंश्च][7] न प्रावृतशिरास्तथा ॥६॥
न पदा पादमाक्रम्य न चैवं हि[8] तथा करौ ।
न चासमाहितमना न च संश्रावयन् जपेत् ॥७॥
प्राक्[9]लेषु कुशेष्वेवमासीनश्चासने शुभे ।

प्राक्[10]लेषु आसनोर्द्ध्वप्रागग्रारोपितेषु ।

नात्युच्छ्रिते नातिनीचे दर्भपाणिः सुसंयतः ॥८॥
स्फाटिकेन्द्राक्षरुद्राक्षैः पुत्रजीवसमुद्भवैः ।
अक्षमाला तु कर्तव्या उत्तमा [11]ह्युत्तरोत्तरा ॥९॥
कोट्य[12]धिका भवेद् वृद्धिरक्षमाला विशेषतः ।
जपस्य क्रियमाणस्य तस्माच्छ्रेष्ठः परः परः ॥१०॥
[अभावे त्वक्षमालायाः कुशग्रन्थ्याऽथ पाणिना ।
जप एव हि कर्तव्य एकाग्रमनसैव हि ॥११॥][13]

---

1 I. O. स्तुयं
2 I. O. ०जपक्तस्य सस्या०
3 I. O. ०सु
4 I. O. यस्याध्यान०
5 A यस्माच्छतगुणो भवेत् । यस्माद्ध्यानसमो हि सः । यस्मादुच्चैः पाठाद्वाचिकादित्यर्थः for the b. p.
6 Supplied from K.R. and A.T. A, B and I.O. omit the b.p.
7 I. O. नापश्रितो न जल्पश्च
8 I. O. चैवेह
9 I, O. ०क्त०
10 I. O. ०क्त०
11 I. O. ०द्यु०
12 1. O. ०व्या०
13 Supplied from K. R. A, B and I. O. omit the b. p.

कोट्य[1]धिका भवेद्वृद्धिरिति [स्फटिकमालाया[2] इन्द्राक्षमालया] [3]जपे कोटिगुणमतिरिक्तं फलम्, एवमुत्तरोत्तरायाः पूर्वपूर्वापेक्षया [कोटिगुणं फलाधिक्यम् ][4]।

कूर्मपुराणे (२।१८।७६-८०)—

जपकाले न भाषेत [न चान्यत्][5] प्रेक्षयेद्बुधः[6]।
न कम्पयेच्छिरोग्रीवं[7] दन्तान्नैव प्रकाशयेत् ॥१२॥
गुह्यका राक्षसाः सिद्धा हरन्ति प्रसभं भयात्[8]।
[एकान्ते सुशुभे][9] देशे तस्माज्जप्यं समाचरेत् ॥१३॥

अङ्गिराः—

विना दर्भैश्च[10]यत् स्नानं यच्च दानं विनोदकम्।
असंख्यातश्च [यज्जप्यं तत् सर्वं][11] निष्फलं भवेत् ॥१४॥

असंख्यातम् [अज्ञातसंख्यकं जप्यं[12], तथाच यज्जपितव्यं[13] तद् विज्ञातसंख्यमेव कर्तव्यम्[14]]। [अनेनैवा[15]नत्युच्छ्रितानतिनीच[16]-प्रागग्रकुशास्तीर्णशोभनासनोपविष्टेन दर्भपाणिना संयतचित्तेन उत्तरो[17]त्तरात्यन्तप्रशस्तस्फटिकेन्द्राक्षरुद्राक्ष[18]पुत्रजीवसमुद्भवाक्षमालावता किमप्यनवलोकयता शिरोग्रीवमकम्पयता संवृतनयनेन शुभे विविक्ते देशे जप्यं[19] संख्याज्ञानपूर्वकमेव कर्तव्यमित्युक्तम् [[20]

## अथ द्रव्यगण-परिभाषा।

तत्र छन्दोगपरिशिष्टे कात्यायनः—

हरिता यज्ञिया दर्भाः पीतकाः पाकयज्ञियाः।
समूलाः पितृदैवत्याः कल्माषा वैश्वदेविकाः ॥१॥

1 I. O. ०व्या०
2 I. O. omits या
3 A स्फाटिकमणिना for the b. p.
4 A कोटिकोटिगुणोफलोत्कर्षः
5 A and K. R. नाभ्यामि and K. P. व्यङ्गा न
6 K. P. प्रवयेद्०
7 K. I. O. and K. P. ०ग्रीवां
8 K. P. यतः
9 I. O. एकान्तेषु शुभे and K. P. एकान्तेषु शुचौ
10 I. O. and K. R. ०स्तु
11 A and K. R. यज्जप्तं सर्वं तत्
12 I. O. जपं
13 I. O. यावज्जपितव्यं
14 A ०मज्ञातसंख्यं तथा च यज्जपितव्यं तत् विज्ञातसंख्यं मात्रं कर्तव्यम् for the b. p.
15 I. O. ०नैव०
16 B अनेनानत्युच्छ्रितातिनीच०
17 I. O. omits ०त्तरो
18 I. O. omits रुद्राक्ष
19 I. O. जपः
20 A omits the entire prose extract, bracketed above.

## अथौषधिगणः ।

विष्णुपुराणे—

व्रीहयः सयवा माषा गोधूमाः सर्षपास्तिलाः[1] ।
प्रियङ्गुसप्तमा ह्येते अष्टमास्तु कुलत्थकाः[2] ॥१॥
श्यामाका अथ[3] नीवारा जर्तिलाः सगवेधुकाः[4] ।
तथा वेणुयवाः प्रोक्तास्तथा मर्कटका मुने ॥२॥

जर्तिलाः स्वयंजातास्तिलाः । वेणुयवा वेणुबीजानि ।

ग्रामारण्याः स्मृता एता[5] ओषध्यस्तु चतुर्दश ॥३॥

## अथाष्टादशधान्यानि ।

वायुपुराणे—

व्रीहयश्च यवाश्चैव गोधूमा अणवस्तिलाः ।
प्रियङ्गवो ह्युदाराश्च कोरदूषाः सचीनकाः[6] ॥१॥
माषा मुद्गा मसूराश्च निष्पावाः सकुलत्थकाः[7] ।
आढक्यश्चणकाश्चैव गणाः सप्तदश स्मृताः ॥२॥

व्रीहिः षष्टिका, प्रियङ्गुः फलिनी[8], उदारो देवधान्यम्, कोरदूषः कोद्रवः, सचीनकः[9] कलायः, निष्पावः श्वेतशिम्बी, आढकी मोटरी । एत[10] एव मुख्यधान्येन समम् अष्टादश धान्यानि भवन्ति ।

## अथ सर्वौषधिगणः ।

छन्दोगपरिशिष्टे कात्यायनः—

व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः ।
यवाश्चौषधयः सप्त विपदो घ्नन्ति धारिताः ॥१॥

---

1 A and K. R. सयवस्तिलाः
2 I. O. कुलत्थिका
3 A and I. O. ॰स्तुथ
4 I. O. सागवेधुकाः
5 A and I. O. ह्येता
6 I. O. सतीनकाः
7 I. O. सकुलत्थिकाः
8 I. O. कामनी
9 I. O. सतीनकः
10 I. O. एत

## अथ सर्वगन्धः ।

गन्धशास्त्रे—

कस्तूरिकाया द्वौ भागौ चत्वारः कुङ्कमस्य च ।
षोडश चन्दनस्यैव[1] कर्पूरस्य चतुष्टयम् ।
सर्वगन्धमिति प्रोक्तं समस्तसुरवल्लभम् ॥१॥

## अथ सर्वरत्नगणो रत्नाचलोक्तः ।

स च मुक्ता-हीरक-गोमेदेन्द्रनील-पुष्पराग-वैदूर्य-विद्रुम-मरकत-पद्मरागाख्यः ।

## अथ सर्वरसगणः ।

रसा लवणादयः, 'षड्रसाश्च लवणादयः' इति विश्वचक्रमहादाने श्रवणात् । ते च लवण-मधुर-तिक्त-कटु-कषायाम्ल[2]रूपाः ।

## अथ सर्वधातुगणः ।

मत्स्यपुराणे—

तालकं सशिला-वज्र-मञ्जनं श्याममेव च ।
काङ्क्षी कासीस-माक्षीकं गैरिक[3]ञ्चादितः क्रमात् ॥१॥

तालकं हरितालं[4], शिला मनःशिला, वज्रभ्रकं वज्राभ्रकं[5] तच्चायुर्वेदप्रसिद्धम्[6] ।

तथा चायुर्वेदे—

वज्रं भेकवपुः[7] कृष्णमभ्रकं त्रिविधं मतम् ॥२॥

तत्र वज्राभ्रकस्य[8] लक्षणम्—

अप्रस्तरं कठोराङ्गं[9] गुरु कज्जलसन्निभम् ।
यन्न शब्दायते वह्नौ नैवोच्छूनं[10] भवेदपि ।
सदाकरसमुद्भूतं वज्रेति[11] प्रथितं घनम् ॥३॥ इति ।

श्याममञ्जनं कृष्णरसाञ्जनं, काङ्क्षी सौराष्ट्रमृत्तिका, कासीसं स्वनामप्रसिद्धं, माक्षीकं[12] स्वर्णमाक्षिकम् ।

1 I. O. °स्यैकः
2 I. O. °कषायाः स्व°
3 I. O. गैरिक°
4 A हरितालकं
5 A वज्राभ्रकं, B वज्राभ्रं,
I. O. omits वज्रं, just above
6 I. O. omits this
7 A वज्रभेदकरं, I. O. °भेदकवपुः
8 A वज्राभ्रकस्य
9 A चप्रप्रस्तकंकङ्ग
10 I. O. नैवोच्छून
11 I. O. वज्रेचि
12 I. O. माचिकं सुवर्ण°

## अथ मुख्यद्रव्यालाभे तत्प्रतिनिधिपरिभाषा ।

तत्र छन्दोगपरिशिष्टे कात्यायनः—

यथोक्तवस्त्व[1]सम्पत्तौ ग्राह्यं तदनुकारि यत् ।
यवानामिव गोधूमा व्रीहीणामिव शालयः ॥१॥

पैठीनसिः—

काण्ड[2]मूलपर्णपुष्पफलप्ररोहरसगन्धादीनां सादृश्येन प्रतिनिधिं कुर्यात् । सर्वालाभे यवः प्रतिनिधिर्भवति ॥२॥

मैत्रायणीयपरिशिष्टम्—

आज्यार्थे तैलं प्रतिनिधिः । तदलाभे दधि पयो वा । तदलाभे तण्डुलपिष्टानि यवपिष्टानि वा अद्भिः संमृज्यार्थान् कुर्वन्ति । तथा दक्षिणा । अलाभे मूलानां भक्ष्याणां[3] ददाति । न त्वेवं यजेत ॥३॥

[4]न त्वेवं यजेतेति अदक्षिणं न[5] यजेतेत्यर्थः ।

एतच्च ताण्ड्यब्राह्मणेऽप्युक्तम् । तथा च ताण्ड्यब्राह्मणम्—

श्लेष्म वा एतद् यज्ञस्य यद्दक्षिणा । न वा अश्लेष्मा रथो वहति । अथ[6] यथा श्लेष्मवता यं कामं कामयते, तमप्य[7]श्नुते ; एवमेतेन दक्षिणावता यं कामं कामयते, [8]तमप्यश्नुते । शुभा वा एषा यज्ञस्य दक्षिणा[9] । यद्दक्षिणावता यजते, शुभमेवास्मिन् दधाति ।

श्लेष्म रथकीलः[10] ।

तद्वस्तुविशेषालाभे तत्सदृशं वस्तूपादेयम् । सर्वालाभे यव उपादेयः । घृतालाभे तैलम् । तैलालाभे दधि । दध्यलाभे क्षीरम् । क्षीरालाभे तण्डुलपिष्टानि यवपिष्टानि वा

---

1 I. O. ०स्तु०
2 I. O. omits काण्ड
3 I. O. adds दक्षिणां here
4 I. O. adds नत्वेवं यजेत again here
5 I. O. omits न
6 I. O. omits अथ
7 I. O. तदश्नु०
8 I. O. तमस्य शुभे शुभोवा
9 I. O. omits दक्षिणा
10 I. O. रथकील:

जलक्लिन्नानि। दक्षिणार्थश्रुतद्रव्यविशेषाणामलाभे[1] मूलानि पिष्टकानि[2] वा दक्षिणार्थमुपादेयानि[3] ॥४॥

## अथ मानपरिभाषा।

तत्र[4] छन्दोगपरिशिष्टे कात्यायनः—

मानक्रियायामुक्तायामनुक्ते मानकर्तरि।
मानकृद् यजमानः स्याद् विदुषामेव[5] निश्चयः ॥१॥

तथा—

अङ्गुष्ठाङ्गुलिमानन्तु यत्र यत्रोपदिश्यते।
तत्र तत्र बृहत्पर्वग्रन्थिभिर्मिनुयात् सदा ॥२॥

भविष्ये—

स्नाने[6] पलशतं ज्ञेयमभ्यङ्गे[7] पञ्चविंशतिः।
पलानां द्वे सहस्रे[8] तु महास्नाने[9] प्रकीर्तितम् ॥३॥

मनुः (८।१३४ख-१३५क) :—

पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश।
पलं सुवर्णाश्चत्वारः ॥४॥ इति।

गोपथब्राह्मणे —

माषकं पञ्चकृष्णलम्।
माषकाणि चतुःषष्टिः पलमेकं विधीयते ॥५॥
द्वात्रिंशत्पलिकं प्रस्थमुक्तं स्वयमथर्वणा।
आढकस्तु चतुष्प्रस्थैश्चतुर्भिर्द्रोणमाढकैः ॥६॥
द्रोणप्रमाणं विज्ञेयं ब्रह्मणा निर्मितं पुरा।
द्वादशाभ्यधिकैर्नित्यं पलानां पञ्चभिः शतैः ॥७॥

---

1 I. O. दक्षिणा ..श and omits मलाभे
2 I. O. पिष्टकादीनि
3 B omits the entire extract beginning from तदस्तु०. I. O. adds तत्तद्दक्षिणं यागादि कर्म कर्त्तव्यं
4 I. O. ततः
5 I. O. ०मेष
6 I. O. स्नानं
7 I. O. अभ्यङ्गः
8 I. O. सहस्रन्तु
9 I. O. ०स्नान

कुम्भपरिमाणमपि तत्रोक्तम्[1]—

घृतद्रोणेन परिमितं[2] कुम्भम् ॥८॥ इति ।

भारपरिमाणञ्चा[3]भिधानकोषादौ प्रसिद्धम् । तथा च—

तुला पलशतं ज्ञेयं भारः स्याद् विंशतिस्तुलाः ॥९॥

एतेन ब्राह्मणप्रशंसा-दानप्रशंसा[4]-पात्रप्रशंसा-पात्रापवाद-दानस्वरूप कर्तृ[5]-श्रद्धा-दान-काल-दानदेश-देय-दानाप[6]वादासद्दान-दानविधि-प्रतिग्रहविधि-परिभाषा उक्ता इति[7] ।

1 I. O. तत्रैवोक्त

2 I. O. पूरित

3 I. O. भावपरिमाणाख्या०

4 I. O. omits दानप्रशंसा and reads प्रभविष्णुता instead

5 A and B add another कर्तृ here

6 I. O. omits ०दानाप०

7 B omits this prose extract

# अथ विष्णुदैवतमहा[1]दानावर्तः ।

## अथ महादानप्रशंसा[2] ।

मत्स्यपुराणे (२७४ अध्यायः प्रथमश्लोकद्वयव्यतीतः) सूत उवाच—

अथातः सम्प्रवक्ष्यामि महादानानुकीर्तनम् ।
[3]दानधर्मेषु यत् प्रोक्तं [4]विष्णुना प्रभविष्णुना ॥१॥
सर्वपापक्षयकरं नृणां दुःस्वप्ननाशनम् ।
यत्तु षोडशधा[5] प्रोक्तं वासुदेवेन भूतले ॥२॥
पुण्यं पवित्रमायुष्यं सर्वपापहरं परम् ।
पूजितं देवताभिश्च ब्रह्मविष्णुशिवादिभिः ॥३॥
आद्यन्तु सर्वदानानां तुलापुरुषसंज्ञितम् ।
हिरण्यगर्भदानञ्च ब्रह्माण्डं तदनन्तरम् ॥४॥
कल्पपादपदानञ्च गोसहस्रञ्च पञ्चमम् ।
हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च ॥५॥
[6]हिरण्याश्वरथस्तद्वद्धेमहस्तिरथस्तथा ।
पञ्चलाङ्गलकं तद्वद्धरादानन्तथैव च ॥६॥
द्वादशं विश्वचक्रञ्च ततः कल्पलतात्मकम् ।
सप्तसागरदानञ्च रत्नधेनुस्तथैव च ।
महाभूतघटस्तद्वत् षोडशः परिकीर्तितः ॥७॥
सर्वाण्येतानि कृतवान् पुरा शम्बरसूदनः ।
वासुदेवश्च भगवानम्बरीषश्च पार्थिवः ॥८॥
कार्तवीर्य्योऽर्जुनो नाम प्रह्लादः पृथुरेव च ।
चक्रुरन्ये महीपालाः केचिच्च भरतादयः ॥९॥

---

1 I. O. adds another दान here
2 A and B तुलापुरुषदानम्
3 M. P. दानधर्मेऽपि, I. O. धान०
4 I. O. and M. P. यत्प्रोक्त
5 I. O. यत्तत् षोडश वा
6 A and B omit this verse

## अथ दानानुष्ठानम्[1]।

यस्माद् विघ्नसहस्रेण महादानानि सर्वदा।
स्मरन्ति[2] देवतादेशादेकैकमपि भूतले ॥१०॥
एषामन्यतमं[3] कुर्याद् वासुदेवप्रसादतः।
न शक्यमन्यथा कर्तुमपि शक्रेण भूतले ॥११॥
तस्मादाराध्य गोविन्दमुमापतिविनायकौ।
महादानमखं कुर्याद् विप्रैश्चैवानुमोदितः ॥१२॥

एतेनादौ निर्विघ्न[4]महादानमखसिद्ध्यर्थं गोविन्दोमापतिविनायकपूजां विधाय ब्राह्मणान् वस्त्रादिभिरभ्यर्च्य तेषामनुज्ञां गृहीत्वा सङ्कल्पश्राद्धमण्डपाद्यारम्भ इति बोधितं भवति।

[एतदेवाह मनवे][5] परिपृष्टो[6] जनार्दनः।
यथावदनुवक्ष्यामि शृणुध्वमृषि[7]सत्तमाः ॥१३॥

मनुरुवाच[8]।

महादानानि यानीह पवित्राणि शुभानि च।
रहस्यानि प्रदेयानि तानि मे कथयाच्युत ॥१४॥

मत्स्य उवाच।

नोक्तानि यानि गुह्यानि महादानानि षोडश।
तानि ते सम्प्रवक्ष्यामि यथावदनुपूर्वशः।
तुलापुरुषयागोऽयं येषामादौ विधीयते ॥१५॥
अयनेषु च पुण्येषु[9] व्यतीपाते दिनक्षये।
युगादिषूपरागेषु तथा मन्वन्तरादिषु ॥१६॥
संक्रान्तौ वैधृतिदिने[10] चतुर्दश्यष्टमीषु च[11]।
सितपञ्चदशीपर्वद्वादशीष्वष्टकासु च[12] ॥१७॥
यज्ञोत्सवविवाहेषु दुःस्वप्नाद्भुतदर्शने।
द्रव्यब्राह्मणलाभो वा श्रद्धा वा यत्र जायते ॥१८॥

---

1 A and I. O. दानफलम्
2 A and I. O. रचन्ति
3 I. O. ०तरं
4 I. O. निर्विघ्नं
5 Corrected from M. P. A, B and I. O. एतावदेव मनुना
6 I. O. परिपूर्णौ
7 I. O. ०ध्वं सुर०
8 Supplied from M. P. A, B and I. O. omit it
9 A and I. O. अयने विषुवे चैव
10 A पौर्णमास्यां च
11 A द्वादशीष्वष्टकासु च
12 A omits the entire line.

*तीर्थे वाऽऽयतने गोष्ठे[1] प्रपाऽऽ[2]रामसरित्सु च ।*

*गृहे वा[3]थ वने वापि तडागे रुचिरेऽथवा ।*

*महादानानि देयानि संसारभयभीरुणा ॥१९॥*

*अनित्यं जीवनं यस्माद् वसु चातीव[4] चञ्चलम्[5] ।*

*केशेष्विव गृहीतः सन् मृत्युना दानमाचरेत्[6] ॥२०॥*

एतेन कालदेशयोर्नियमः प्रतिपादितः ।

## [ अथ तुलापुरुषमहादानम् । ][7]

पुण्यां तिथिमथासाद्य कृत्वा ब्राह्मणवाचनम् ।

षोडशारत्निमात्रं वा[8] दश द्वादश वा करान्[9] ॥२१॥

[पुण्यामुक्तानामन्यतमाम् । आसाद्य आसन्नां][10] ज्ञात्वेत्यर्थः ।

मण्डपं कारयेद् विद्वांश्चतुर्भद्राननं[11] बुधः ।

सप्तहस्ता भवेद् वेदी मध्ये पञ्चकराऽथवा ॥२२॥

तन्मध्ये तोरणं कुर्यात् सारदारुभवं[12] शुभम् ।

कुर्यात् कुण्डानि[13] चत्वारि चतुर्दिक्षु विचक्षणः ॥२३॥

तोरणमिति वक्ष्यमाणसाले[14]ङ्गुद्यादीनामन्यतमस्य सारदारुणा कृतं तुलाधारणक्षमार्गेला[15]सहितं स्तम्भद्वयं लिङ्गपुराणे तस्यैव तोरणत्वेन प्रतिपादनात् । तथाच तुलारोपणप्रस्तावे लिङ्गपुराणम् (२।२८।३४क)—

रश्मिभि[16]स्तोरणाग्रे तु[17] बन्धयेच्च विधानतः ॥२४॥

[18]सुमेखलायोनियुतानि तानि सुपूर्णकुम्भानि सहासनानि ।

सुताम्रपात्रद्वयसंयुतानि सयज्ञपात्राणि सविष्टराणि ॥२५॥

---

1 I. O. गोष्ठ

2 I. O. कूपा०

3 I. O. रथे

4 I. O. वसुधातीव

5 A उराभीतिररेवच which might have been उत्तराभीतिरेव च in the second foot

6 A धर्ममाचरेत्

7 A, B and I.O. omit the b. p.

8 I. O. ०रत्निमात्र

9 A reads the entire line differently, viz मण्डपं रचयेद् विद्वान्षोडश द्वादश वा करान्

10 A पुण्ययुक्तां तिथिमथासाद्य

11 A ०भद्राननं

12 I. O. ०भयं

13 I. O. कुर्याद्कुण्डानि

14 I. O. ०मानै०

15 I. O. ०तुला०

16 I. O. वस्त्रभि०

17 L. P. वा

18 I. O. स्व०

यज्ञपात्राणि [1]स्रुवादीनि ।

हस्तप्रमाणानि तिलाज्यधूप[2]पुष्पोपहाराणि सुशोभनानि ।

पूर्वोत्तरे हस्तमिता च वेदी[3] ग्रहादिदेवेश्वरपूजनाय[4] ॥२६॥

ग्रहादिदेवेश्वरपूजनायेति वक्ष्यमाण-विनायकादिग्रह-लोकपालपूजनायेत्यर्थः ।

अर्चार्चनं[5] ब्रह्मशिवाच्युतानां तत्रैव कार्यं फलवस्त्रमाल्यैः[6] ।

अर्चार्चन[7]मिति [8]'ग्रहादिदेवेश्वरपूजनाये'तिप्राप्त-ब्रह्मशिवाच्युतपूजायां विशेषविधानार्थं, तेन ब्रह्मशिवाच्युतानां[9] प्रतिमासु पूजा कार्या[10], इतरेषान्तु स्थण्डिल इति प्रतिपादितम् ।

लोकेशवर्णाः परितः पताका मध्ये ध्वजः किङ्किणिकायुतः स्यात् ॥२७॥

द्वारेषु[11] कार्याणि च तोरणानि चत्वार्यपि क्षीर[12]वनस्पतीनाम् ।

द्वारेषु कुम्भद्वयमत्र कार्यं स्रग्गन्ध-धूपाम्बर[13]-रत्नयुक्तम् ॥२८॥

एतेन सोपकरणमण्डपानुष्ठानमुक्तम् । यत् पूर्वं सारदारुमयं तोरणं कुर्यादित्युक्तं तस्येदानीमनुष्ठानमाह ।

सालेङ्गु[14]दीचन्दनदेवदारु-श्रीपर्णिबिल्वप्रियकाञ्चनोत्थम् ।

स्तम्भ[15]द्वयं हस्तयुगावखातं कृत्वा दृढं पञ्चकरोच्छ्रितं तत् ॥२९॥

तदन्तरं हस्तचतुष्टयं स्यादथोत्तरायाञ्च तदन्नमेव ।

उत्तरायामर्गलायां गतं तदन्तरं हस्तद्वयावखातस्य [स्तम्भद्वयस्य अन्तरम् अवकाशरूपं हस्तचतुष्टयं स्यात् । एतेन हस्तद्वयनिखात[16]]-स्तम्भद्वयोर्द्धम् अर्गलापर्यन्तं हस्तचतुष्टयमिति प्रतिपादितम् ; न तु[17] स्तम्भयोरेवान्तरं हस्तचतुष्टयमिति योजनीयं, [18]स्तम्भद्वयमितिसमासान्तर्भूतस्य स्तम्भस्य तत्पदेन समस्तसम्बन्धसम्भवे सति आकृष्य परामर्शस्यायोग्यत्वात् । [19]स्तम्भयोरन्तरं पितामहोक्तमेव कर्त्तव्यम् । तथाच पितामहः—

---

1 I. O. स्रु०
2 A ०पूर० ; I. O. ०दूप०
3 I. O. देवी.
4 I. O. omits it
5 A, B and I.O. अर्चार्चनं, M.P. अवार्चनं
6 I. O. ०माल्यवस्त्रैः
7 A, B and I. O. अर्चार्चनं I. O. adds ग्रहार्चनमिति here
8 I. O. ग्रहादि०
9 I. O. ब्रह्मविष्णवानां
10 I. O. कार्यं and omits पूजा
11 I. O. द्वारे च
12 I. O. चोरि०
13 B ०धूपाम्बर० in the body of the Ms. and ०धूपाम्बर० in the head space.
14 I. O. साले०
15 I. O. स्तम्भ०
16 I. O. omits the bracketed portion
17 I. O. omits तु
18 I. O. स्तम्भयोरन्तरमिति
19 I. O. कुम्भ०

चतुर्हस्ता तुला कार्या पादौ कार्यौ तथाविधौ ।
अन्तरन्तु तयोर्हस्तौ भवेद्‌ध्यर्द्धमेव वा[1] ॥३०॥

पादौ स्तम्भाविति । तदङ्गमेवेति स्तम्भसजातीयमेव । तच्चोत्तरायां कर्तव्यमिति उत्तरायाञ्चेति चकारस्यार्थः ।

समानजातिश्च तुलाऽवलम्ब्या[2] हैमेन मध्ये पुरुषेण युक्ता ॥३१॥

समानजातिश्च तुलेति स्तम्भदारुसजातीयदारुघटितेत्यर्थः । एवञ्च स्तम्भार्गलातुलाः[3] सजातीयकाष्ठैरेव[4] कर्तव्याः, नान्यजातीयेनेत्युक्तं भवति । 'पश्यन् हरेर्मुख'मित्युत्तरत्र[5] श्रवणात् हैमेन पुरुषेणेति सुवर्णपत्र[6]निर्मित-वासुदेवाकृतिनेति बोद्धव्यम् ।

दैर्घ्येण सा हस्तचतुष्टयं स्यात् [7]पूर्णत्वमस्यास्तु दशाङ्गुलानि ।
सुवर्ण-[8]पत्राभरणा च कार्या सलोहपाशद्वयशृङ्खलाभिः ॥३२॥

सुवर्ण[9]पत्राभरणा मध्ये सौवर्ण-[10]पत्रवेष्टिता ।

युता सुवर्णेन तु रत्नमालाविभूषिता माल्यविलेपनाढ्या ।

सुवर्णेन युतेति मुखद्वये[11] शोभाकरसुवर्णयुता ।

चक्रं लिखेद् वारिजगर्भयुक्तं नानारजोभिर्भुवि पुष्पकीर्णम् ।
वितानकञ्चोपरि पञ्चवर्णं संस्थापयेत् पुष्पफलोपशोभम् ॥३३॥

वारिजगर्भयुक्तं पद्मगर्भम् । भुवि तुलाधोभागे[12] । पञ्चवर्णं श्वेत-लोहित-पीत-हरित-कृष्णवर्णम् ।

इति तुलानिर्माणमुक्तम् ।

अथर्त्विजो वेदविदश्च कार्याः सुरूपवेशान्वयशीलयुक्ताः ।
विधानदक्षाः पटवोऽनुकूला ये चार्यदेशप्रभवा द्विजेन्द्राः ॥३४॥

विधानदक्षा महादानविधानविज्ञाः[13] ।

---

1 I. O. ०र्द्धमेव च
2 B तुलाव कल्प्या, I. O. तुलात्मकल्प्या
3 I. O. ०स्तुला:
4 I. O. ०काष्ठेर्नैव
5 I. O. त omits here
6 I. O. ०पात्र०
7 I. O. पृथुत्वमस्यास्तु दशाङ्गुली स्यात्
8 I. O. ०पात्रा०
9 I. O. ०पात्रा०
10 I. O. ०पात्र०
11 I. O. मुखद्वयेन
12 I. O. तुलातलभागे
13 I. O. ०विधानाभिज्ञाः

गुरुश्च वेदार्थ[1]-विदार्यदेशसमुद्भवः शीलकुलाभिरूपः ।

कार्यः पुराणाभिरतोऽतिदक्षः प्रसन्नगम्भीरसरस्वतीकः ।

प्रसन्नगम्भीरसरस्वतीकः सुपण्डित[2] इत्यर्थः ।

सिताम्बरः कुण्डल-हेमसूत्र-केयूर-कण्ठाभरणाभिरामः ॥३५॥

अत्र च सम्भृतसम्भारेण गुरुपूर्वमृत्विजः कार्याः ऋत्विजो वरणीया इति बोद्धव्यं, दाने तथा दर्शनात् ।

पूर्वेण ऋग्वेदविदावथास्तां यजुर्विदौ दक्षिणतश्च शस्तौ ।

स्थाप्यौ द्विजौ सामविदौ च पश्चादाथर्वणावुत्तरतश्च कार्यौ ॥३६॥

विनायकादिग्रहलोकपालवसुष्टकादित्यमरुद्गणानाम् ।

ब्रह्माच्युतेशार्क-वनस्पतिभ्यः स्वमन्त्रतो होमचतुष्टयं स्यात् ॥३७॥

विनायकादीत्यादिशब्दो विनायकपूजाहोमप्राथम्यप्रदर्शनार्थः[3] । पाठक्रमेणैव पूर्वभावे लब्धे आदिपदोपादानं ग्रहपूजाहोमयोर्विनायकपूजाहोमपूर्वकत्वप्रदर्शनार्थम् ।

जप्यानि सूक्तानि तथैव चैषामनुक्रमेणैव यथास्वरूपम् ।

होमावसाने कृततूर्यनादो[4] गुरुर्गृहीत्वा बलिपुष्पधूपम् ।

यथास्वरूपं यथावेदम् । तेन पूजितदेवानां[5] मध्ये यस्मिन् वेदे येषां सू[6]क्तमस्ति तद्वेदिनां तत्सूक्तजपः कर्तव्यः ; न तु सर्वेषां[7], सर्वत्र सूक्तासम्भवात् ।

[8]अभ्यर्चयेल्लोकपतीन् क्रमेण मन्त्रैरमीभिर्यजमानयुक्तः ॥३८॥

एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधरामरेश ।

संवीज्यमानोऽप्सरसां गणेन रक्षाध्वरं नो भगवन्नमस्ते ॥३९॥

ॐ इन्द्राय नमः ।

एह्येहि सर्वामरहव्यवाह मुनिप्रवीरैरभितोऽभिजुष्ट[9] ।

तेजोवता लोकगणेन सार्द्धं [ममाध्वरं पाहि][10] कवे नमस्ते ॥४०॥

---

1 A and I. O. वेदाङ्ग०
2 I. O. सत्पण्डित
3 I. O. ०प्रतिपादनार्थः
4 I. O. ०नादो
5 A ०देवतानां
6 I. O. adds ०मुक्त० here and omits तद्वेदिनां just below.
7 A सर्वैः
8 I. O. चावाहये०
9 A नानामरैरर्चित दीप्ततेजाः
10 A ममार्चनं रक्ष

ॐ अग्नये नमः ।

एह्येहि वैवस्वत धर्मराज सर्वामरैरर्चित धर्ममूर्ते ।

शुभाशुभानन्दशुचामधीश[1] शिवाय नः पाहि मखं नमस्ते ॥४१॥

ॐ यमाय नमः ।

एह्येहि रक्षोगण-नायकस्त्वं विशालवेतालपिशाचसंघैः ।

ममाध्वरं पाहि शुभाधिनाथ लोकेश्वरस्त्वं भगवन्नमस्ते ॥४२॥

ॐ [2]निर्ऋतये नमः ।

एह्येहि यादोगण-वारिधीनां[3] गणेन पर्जन्य सहाप्सरोभिः ।

विद्याधरेन्द्रामरगीयमान पाहि त्वमस्मान् भगवन्नमस्ते ॥४३॥

ॐ वरुणाय नमः ।

एह्येहि यज्ञे[4] मम रक्षणाय मृगाधिरूढः सह सिद्धसंघैः ।

प्राणाधिपः कालकवेः सहाय गृहाण पूजां भगवन्नमस्ते ॥४४॥

ॐ वायवे नमः ।

एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्द्धम् ।

सर्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते ॥४५॥

ॐ सोमाय नमः ।

एह्येहि विश्वेश्वर नस्त्रिशूलकपाल-खट्वाङ्गवरेण[5] सार्द्धम् ।

लोकेश यज्ञेश्वर यज्ञसिद्धै गृहाण पूजां भगवन्नमस्ते ॥४६॥

ॐ ईशानाय नमः ।

एह्येहि पातालधराधरेन्द्र नागाङ्गना-किन्नर-गीयमान ।

यक्षोरगेन्द्रामरलोकसार्द्धमनन्त रक्षाध्वरमस्मदीयम् ॥४७॥

ॐ अनन्ताय नमः ।

एह्येहि विश्वाधिपते मुनीन्द्रलोकेन सार्द्धं पितृदेवताभिः ।

विशाध्वरं नः सततं शिवाय [पितामह त्वं][6] भगवन्नमस्ते ॥४८॥

---

1 A ॰शुभामराश, I. O. ॰शुभामरीश

2 I. O. नैर्ऋताय

3 I. O. वारिधीनां

4 I. O. यज्ञं

5 I. O. ॰धरेण

6 I. O. पितामहस्त्वं

ॐ ब्रह्मणे नमः ।

[1]त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ।
ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्वन्तु तानि मे ॥४६॥
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ।
ऋषयो मनवो गावो देवमातर एव च ।
सर्वे ममाध्वरे रक्षां प्रकुर्वन्तु मुदान्विताः ॥५०॥
इत्यावाह्य सुरान्[2] दद्यादृत्विग्भ्यो हेमभूषणम् ।

आवाह्येति [3]त्रैलोक्यस्थभूतान्यावाहनपूर्वकं पूजयित्वेत्यर्थः ।

कुण्डलानि च हैमानि सूत्राणि कटकानि[4] च ।
तथाङ्गुलीयं चित्राणि वासांसि शयनानि च[5] ॥५१॥
द्विगुणं गुरवे दद्याद् भूषणाच्छादनादिकम् ।
जपेयुः शान्तिकाध्यायं [6]जापकाः सर्वतोदिशम् ॥५२॥

शान्तिकाध्याय[7]मिति अधीयते इत्यध्यायः ; [ तेन यो यस्य ][8] वेदस्य शान्तित्वेन प्रसिद्धो [9]मन्त्रसन्दर्भः, स तस्य शान्तिकाध्यायः, सर्वत्र वेदे अध्यायव्यवहाराभावात् ।

उपोषितास्ततः सर्वे कृत्वैवमधिवासनम् ।
आदावन्ते च मध्ये च कुर्याद् ब्राह्मणवाचनम् ॥५३॥

उपोषितास्तत इति पूर्वदिनकृतोपवासाः, ततोऽपरदिने ; एवं क्रमेण होमादिमध्यस्वस्तिवाचनान्तेनाधिवासनं कुर्युरित्यर्थः[10] । आदावन्ते च मध्ये चेति मण्डपारम्भेऽधिवासनसमाप्तौ दानसमाप्तौ[11] च ।

ततो मङ्गलशब्देन स्नापितो द्विजपुङ्गवैः[12] ।
त्रिः प्रदक्षिणमावृत्य गृहीतकुसुमाञ्जलिः ।

स्नापितः कुण्डसमीपस्थघटचतुष्टयजलेन, घटानां भूषणेतरोपयुक्तद्रव्यमध्यपठितत्वेन स्नानार्थमेवोपादानं यतः ।

---

1 I. O. adds ॐ here
2 I. O. adds सर्वान् here
3 I. O. स्वर्लोक्यसुभूता०
4 A मकटानि
5 A omits the entire line
6 I. O. याजकाः सर्वतो०
7 I. O. ०मित्यभिधीयत इत्या०
8 I. O. तेनापापस्य for the bracketed portion
9 I. O. मन्त्रं
10 I. O. कुर्यादित्यर्थः
11 I. O. ०समाप्तौ
12 A वेदपुङ्गवैः

शुक्लमाल्याम्बरो भूत्वा तां तुलामभिमन्त्रयेत् ॥५४॥
नमस्ते सर्वदेवानां शक्तिस्त्वं शक्तिमास्थिता ।
साक्षिभूता जगद्धात्री[1] निर्मिता विश्वयोनिना ॥५५॥
एकतः सर्वसत्यानि तथाऽनृतशतानि[2] च ।
धर्माधर्मकृतां मध्ये स्थापिताऽसि जगद्धिते ॥५६॥
त्वं तुले सर्वभूतानां प्रमाणमिह कीर्तिता ।
मां तोलयन्ती संसारादुद्धरस्व नमोऽस्तु ते ॥५७॥
योऽसौ तत्त्वाधिपो देवः पुरुषः पञ्चविंशकः ।
स एवाधिष्ठितो देवि त्वयि तस्मान्नमोऽस्तु ते ॥५८॥
नमो नमस्ते गोविन्द तुलापुरुषसंज्ञक ।
त्वं हरे तारयस्वास्मानस्मात् संसारसागरात् ॥५९॥
पुण्यं कालमथासाद्य कृत्वैवमधिवासनम्[3] ।
पुनः प्रदक्षिणं कृत्वा तां तुलामारुहेद् बुधः ॥६०॥

पुण्यं कालं यजमानानुकूलं लग्नमित्यर्थः ।

सखड्गचर्मकवची सर्वाभरणभूषितः ।
धर्मराजमथादाय हैमं सूर्येण संयुतम् ।
कराभ्यां [4]बद्धमुष्टिभ्यामास्ते पश्यन् हरेर्मुखम् ॥६१॥

हरेर्मुखमिति तुलामध्यनिवेशितसुवर्णहरिप्रतिमामुखम् ।

ततोऽपरे तुलाभागे न्यसेयुर्द्विजपुङ्गवाः ।
साम्यादभ्यधिकं यावत् काञ्चनञ्चातिनिर्मलम् ॥६२॥
पुष्टिकामस्तु कुर्वीत भूमिसंस्थं नरेश्वर ।
क्षणमात्रं ततः स्थित्वा पुनरेतदुदीरयेत् ॥६३॥
नमस्ते सर्वभूतानां साक्षिभूते सनातनि ।
पितामहेन देवि त्वं निर्मिता परमेष्ठिना ॥६४॥
त्वया धृतं जगत् सर्वं सहस्थावरजङ्गमम् ।
सर्वभूतात्मभूतस्थे नमस्ते विश्वरूपिणि ॥६५॥

---

1 A जगद्धात्रा
2 A and I. O. °भूतशतानि
3 A कृत्वाधिवासनं पुनः
4 A बद्धु°

तत्तोऽवतीर्य गुरवे पूर्वमर्घं निवेदयेत् ।

[ऋत्विग्भ्योऽपरमर्घन्तु दद्यादुदकपूर्वकम् ॥६६॥

[1]पूर्वमर्घं निवेदयेत् अर्घं प्रथमं निवेदयेदित्यर्थः ।

गुरवे ग्रामरत्नानि ऋत्विग्भ्यश्च निवेदयेत् । ][2]

प्राप्य तेषामनुज्ञां वा[3] तथाऽन्येभ्योऽपि दापयेत् ॥६७॥

अन्येभ्योऽपि ब्राह्मणेभ्य एव ।

दीनानाथविशिष्टादीन् पूजयेद् ब्राह्मणैः सह ॥६८॥

तत्समयोपस्थितदीनानाथविशिष्टब्राह्मणान् पूजयेदिति बोद्धव्यम् ।

न चिरं धारयेद् गेहे हेम संप्रोक्षितं बुधः ।

तिष्ठद् भयावहं यस्माच्छोकव्याधिकरं नृणाम् ।

संप्रोक्षितमुत्सृष्टम् ।

शीघ्रं परस्वीकरणाच्छ्रेयः प्राप्नोति पुष्कलम् ॥६९॥

अनेन विधिना यस्तु तुलापुरुषमाचरेत् ।

प्रतिलोकाधिपस्थाने प्रतिमन्वन्तरं वसेत् ॥७०॥

विमानेनार्कवर्णेन किङ्किणीजालमालिना ।

पूज्यमानोऽप्सरोभिश्च ततो विष्णुपुरं व्रजेत् ।

कल्पकोटिशतं यावत् तस्मिँल्लोके महीयते ॥७१॥

कर्मक्षयादिह पुनर्भुवि राजराजो

भूपालमौलिमणिरञ्जितपादपीठः ।

श्रद्धान्वितो भवति यज्ञसहस्रयाजी

दीप्तप्रतापजितसर्वमहीपलोकः ॥७२॥

यो दीयमानमपि पश्यति भक्तियुक्तः

कालान्तरे स्मरति वाचयतीह लोके ।

यो वा शृणोति पठतीन्द्रसमानरूपः

प्राप्नोति [4]धाम स पुरन्दरदेवजुष्टम् ॥७३॥

---

1 I. O. पूर्व्वमर्घं निवेदयेत्

2 A omits the bracketed portion

3 I. O. ०मनुज्ञाय

4 A वासवपुरं परदेवजुष्टं ; I. O. वासवपुरन्दरदेवजुष्टः

## [ अथ प्रयोगः। प्रथमदिनकृत्यम्। ][1]

अत्र यजमानः समुपजाततुलापुरुषमहादानेच्छः प्रथमं विष्णुशिवविनायकानां पूजार्थं गन्धपुष्पादिसामग्रीवस्त्रनैवेद्यानि ब्राह्मणार्चनार्थं गन्धमाल्यसामग्रीवस्त्राणि वृद्धिश्राद्धसामग्रीं [2]स्वस्तिवाचनार्थं गन्धमाल्यसामग्रीं सपटीकवासोयुगत्रयं सुवर्णतोलकत्रयञ्च तीर्थादिषु परिशोधितायां भूमौ चतुर्भद्रमण्डपघटनार्थं स्तम्भवंशचालादिकं वेदीकुण्डघटनार्थं[3]मिष्टकां चूर्णञ्च कुण्डपार्श्वस्थापनार्थं कुम्भचतुष्टयमृत्विजामष्टावासनानि होमार्थमष्टौ शोभनताम्रपात्राणि [4]स्रुवचतुष्टयं [5]स्रुक्चतुष्टयं तिलान् घृतञ्च कुशं यथोप[6]योगेध्मसमिदग्निज्वालनकाष्ठ-[धूपपुष्पादिसामग्रीं[7]] वेदीस्थदेवपूजार्थं [द्वापञ्चाशतं वस्त्राणि[8]] पूजोचितसामग्रीञ्च ब्रह्मशिव-विष्णुप्रतिमात्रयं मण्डपचालोपरि पूर्वादिदिक्षु दानार्थं पीतरक्तकृष्णातिकृष्णश्वेतकृष्णहरितपञ्च-वर्णाश्च तरक्ता दश पताकाः चालमध्यारोपणार्थं किङ्किणीयुक्तमुत्कृष्टं ध्वजं द्वारचतुष्टया-लङ्करणार्थं प्लक्षोडुम्बराश्वत्थवटानां[9] तोरणचतुष्टयं मृन्मयान् शोभनानष्टौ कुम्भान् कुम्भ-मण्डनार्थं पुष्पमाल्यसामग्रीचन्दनवस्त्ररत्नानि तद्धूपनार्थं गुग्गुलुं कुम्भपूरणार्थं तीर्थ-जलञ्च [10]सालपुत्रजीवचन्दनदेवदारुगाम्भारीविल्व[11]कदम्बबकुलानामन्यतमस्य सारदारुणा निर्मितं सप्तहस्तोच्छ्रितं दृढम् ऋजु उपरि हस्तमेकं परित्यज्य कृतच्छिद्रं स्तम्भद्वयं तद्दारुमयी-मेव तुलाधारणसमर्थां मध्यस्थितकटकामर्गलां तद्दारुमयीं चतुर्हस्तायतां दशाङ्गुलप्रस्तारां चतुरस्रां मध्यार्पितधारणसमर्थ[12]बडिशाकृतिलोहां मध्ये प्रान्तद्वये च सुवर्णपत्रवेष्टितां पार्श्वद्वयस्थलोहपाशद्वयलम्बमानशृङ्खलाष्टकनिबद्धाधःपट्टद्वयां तुलां तदलङ्करणार्थं माल्य-सामग्रीं चन्दनं मौक्तिकप्रबालमालाञ्च[13] तुलामध्यस्थापनार्थं सुवर्णपत्रनिर्मितां[14] विष्णु-प्रतिमां चक्रलिखनार्थं पञ्चवर्णतण्डुलगुण्डिकां चक्रालङ्करणार्थं [15]पुष्पादिसामग्रीं तुलाया ऊर्ध्वस्थापनार्थं पञ्चवर्णं चन्द्रातपं [16]तद्बन्धनार्थं फलपुष्पसामग्रीञ्च [17]गुरोरर्चनार्थं

---

1 A and I. O. omit the bracketed portion
2 I. O. स्वस्तिक०
3 I. O. ०मिष्टकाचूर्णञ्च
4 I. O. स्रु०
5 I. O. विष्टर०
6 I. O. योगसमिद०
7 B and I. O. ०व्यजनादिसामग्रीं
8 A विंशत्यादि
9 I. O. ०वटान्
10 I. O. शाल०
11 I. O. ०कदम्बाम्रनागानाम्
12 I. O. वह्निशा०
13 I. O. ०माला
14 I. O. यन्त्रनिर्म्मित०
15 I. O. पुष्पार्जनसामग्रीं
16 I. O. तद्बन्धनार्थं
17 I. O. गुरोर्म्मरणार्थं

*श्वेतं सपटीकवासोयुगं यथेष्टसुवर्णघटितकुण्डलद्वयं हैमयज्ञोपवीतकेयूरकण्ठाभरणानि च ऋत्विजां वरणार्थम् अष्टौ सितानि सपटीकवासोयुगानि यथेष्टसुवर्णघटितान्यष्टौ [कुण्डल-युगानि अष्टौ]*[1] हेमयज्ञसूत्राणि अष्टावङ्गदानि अष्टौ कण्ठाभरणानि च जापकानाञ्च वरणार्थ-मभिमतसुवर्णघटिताङ्गुरीयकचतुष्टयं वस्त्रस्थानचतुष्टयञ्च, गुरोर्ऋत्विजाञ्च मधुपर्कसामग्रीं ; [2]लोकपालावाहनार्थं पुष्पधूपादीनि[3] बल्यर्थं माषभक्त-[4]बलिसामग्रीम् ; ऋत्विग्भ्योऽधिवासन-दक्षिणार्थमभिमतसुवर्ण[5]कृतकुण्डलयुगाष्टक-हैमयज्ञसूत्राष्टक-हैमकटका [ ष्टका ] [6]ङ्गुरीयाष्टकानि, अष्टौ नानावर्णवस्त्र-[7]स्थानानि, अष्टा पटीकम्बलोपधानसहिताः शय्याः ; गुरवे दानार्थमेकर्त्विग्-देयसामग्रीतो द्विगुणद्रव्यघटितां कुण्डलयुगादिसामग्रीं, द्विगुणसपटीकवस्त्रं, द्विगुणद्रव्यरचि-तामुक्तरूपां शय्यां ; मध्यस्वस्तिवाचनार्थं सपटीकवासोयुगत्रयं सुवर्णतोलकत्रयञ्च[8] ; माङ्गल्यार्थं [9]वाद्यादिसामग्रीम् ; आत्ममण्डनार्थं यथेष्टमाभरणानि, धारणार्थं खड्गं [10]चर्ममयढालं सन्ना-हञ्च, हस्तद्वयधारणार्थमभिमतसुवर्ण-घटिते धर्मराज-सूर्यप्रतिमे, आत्मतुलनार्थं निर्मलं सुवर्णं, गुर्वृत्विग्भ्यो दक्षिणार्थमभिमतोत्पत्तियोग्यां भूमिं यथेष्टं रत्नानि च ; जापकदक्षि-णार्थं सुवर्णं ; दीनानाथादितर्पणार्थं [11]यथेष्टं तण्डुलान् कपर्दकञ्च ; [12]शेषब्राह्मणत्रयवाच-नार्थं सपटीकवस्त्रयुगत्रयं सुवर्णतोलकत्रयञ्च[13] उत्पाद्य, सम्भृतसम्भारोऽ[यनाद्युक्त-समया][14]नामन्यतमस्य पूर्वेतरदिने कृतनित्यो घटिकाधिकप्रहरत्रये हविष्यं भुक्त्वाऽऽचम्य, शुचौ देशे उपविश्य पादौ प्रक्षाल्याऽऽचम्य, प्राङ्मुख उदङ्मुखो वा कृताञ्जलिः—ॐसूर्यसोमयम-कालपञ्चभूतानि मत्स्यपुराणोक्त-तुलापुरुषमहादानकर्म कर्तुं श्वो ममोपवासः कर्तव्य इति निवेदनं कृत्वा, [15]गृहीतोदकपूर्णताम्रपात्र उदङ्मुखः सङ्कल्पं कुर्यात् ।

तद् यथा—ॐमत्स्यपुराणोक्त-तुलापुरुष-महादानकर्म कर्तुं श्वोऽहमुपवासं करिष्ये । एवं गुर्वृत्विग्जापका अपि सङ्कल्पं कुर्युः । तत्र निवेदनसङ्कल्पवाक्ययोर्यथाक्रमं तुलापुरुष-महादानकर्मणि गुरुकर्म कर्तुं, [ऋत्विक्कर्म कर्तुं,][16]शान्तिकाध्यायजपकर्म कर्तुमिति च

1 I. O. omits the bracketed portion
2 I. O. adds नव here
3 I. O, पुष्पधूपौ
4 I. O. omits बलि
5 I. O. omits कृत
6 I. O. omits the b. p.
7 I. O. adds प्र here
8 A सुवर्णस्थानत्रयञ्च
9 I. O. वाद्यादि०
10 I. O. चर्ममयार्गलं
11 I. O. यथेच्छं
12 I. O. शेष०
13 A सुवर्णस्थानत्रयञ्च
14 A ०नाद्दीना०
15 I. O. गृहीतोदपूर्णं
16 I. O. omits the bracketed portion

विशेषः। एवं सर्वेष्वेव वक्ष्यमाणमहादानेषु तुलापुरुषपदस्थाने हिरण्यगर्भादिपदं प्रक्षिप्य निवेदन-सङ्कल्पौ कर्तव्यौ। एतावतैव सर्वेषां वक्ष्यमाण—महादानानां वाक्यानि सम्पद्यन्ते, अतस्तेषु न [1]लिखितव्यानि।

## [द्वितीयाह्नकृत्यम्।][2]

ततोऽपरदिने यजमानः कृतनित्यक्रियः ॐ गोविन्दाय नमः, ॐ उमापतये नमः, ॐ विनायकाय नमः इति वस्त्रादिना सम्पूज्य, भगवन् गोविन्द, भगवन्नुमापते, भगवन् विनायक, तुलापुरुष-महादानमखो मया कर्तव्यः, स निर्विघ्नं भवत्प्रसादात् सम्पद्यताम् इत्याशास्य प्रणम्य, अभिमतसंख्यब्राह्मणान् वस्त्रादिभिरभ्यर्च्य तुलापुरुषमहादानमखो मया कर्तव्यः, तद्भवन्तो मामनुजानन्तु इति वदेत्। ततस्ते क्रियतामिति [3]सहर्षं ब्रूयुः। ततो यजमानो गृहीतोदक[4]पूर्णताम्रपात्र उदङ्मुखः सङ्कल्पं कुर्यात्। तद्यथा ॐ मत्स्यपुराणोक्त—तुलापुरुष-महादानकर्माहं करिष्ये। ततो यथाविधि सगणाधिपमातृपूजापूर्वकं वृद्धिश्राद्धं कृत्वा, ब्राह्मणत्रयं वस्त्रकाञ्चनादिभिरभ्यर्च्य, तुलापुरुषमहादानकर्मणि पुण्याहं भवन्तो ब्रुवन्त्विति वदेत्। [5]पुण्याहमिति तैस्त्रिः प्रत्येकमुक्ते, स्वस्ति भवन्तो ब्रुवन्त्विति वदेत्। तैश्च [6]त्रिः स्वस्तीत्युक्ते,ऋद्धिं भवन्तो ब्रुवन्त्विति वदेत। ते च प्रत्येकम् ऋध्यतामिति त्रिर्ब्रूयुः। अत्रापि सर्वेष्वेव महादानेषु देवताब्राह्मणानुज्ञा[7]भ्यर्चनदानसङ्कल्प-[8]पुण्याहवाचनेषु तुलापुरुषपदस्थाने तत्तन्महादाननामप्रक्षेपः कर्तव्यः। ततः पूर्वशोधितायां भूमौ स्वहस्तेनोभयतः षोडशारत्निमात्रं द्वादशहस्तं दशहस्तं वा चतुर्भद्रानन[9]मण्डपं कारयेत्। तन्मध्ये सप्तहस्तां [पञ्चहस्तां वा][10] वेदीं कारयेत्। तस्याश्चतुर्दिशं चत्वारि हस्तप्रमाणानि [11]हस्तनिम्नानि चतुरस्राणि [12]सुरूपाणि विस्तारो[13]च्छ्रायचतुरङ्गल-पूर्वोत्तरकोणावनत-सर्व[14][समै[15]कदेशमेखला

1 I. O. लिखितानि, A लिखितव्यं
2 I. O. and A omit the bracketed portion
3 A सहर्षं
4 I. O. omits पू
5 I. O. adds ॐ here
6 A and B omit it
7 I. O. omits भ्य
8 I. O. पुण्याहानि वाचनेषु
9 I. O. and A ०भद्रासन०
10 I. O. omits it
11 A हस्तानिम्नानि, I. O. हस्तविस्त
12 I. O. and A स्वरूपाणि
13 I. O, ०च्छ्रय०
14 A omits the bracketed portion
15 I. O. समेक०

युतानि वितस्ति ]दीर्घ-समाङ्गुलप्रस्तार-कूर्मपृष्ठोन्नतमध्याङ्गुलोच्छ्रित[ [1]प्रान्त-गजोष्ठ ]सदृश-दीर्घ[2][प्रणाल्योद्दोष्ठ]योनियुतानि पार्श्वस्था[3]म्रपल्लव-पिहितमुखैकैक-पूर्णकुम्भानि होतृ-ब्रह्मोपवेशनार्थमासनद्वयद्वययुतानि होमार्थं घृताक्तिल-स्थापनार्थं प्रणीतास्थापनार्थञ्च शोभन-ताम्र[4]पात्रद्वयद्वययुतानि प्रत्येकं [5]स्रुक्स्रुवसहितानि ब्रह्मोपवेशनार्थमेकैक-[6]विष्टरयुतानि [7]पार्श्व-स्थापिततिल-घृत-धूप-पुष्पसामग्री-कुश-यथासम्भव[8]समिदग्निज्वालनार्थेन्धनादीनि [9]कुण्डानि कारयेत् ।

वेद्या ईशानकोणे चापरां सर्वतोहस्तपरिमितां चतुरस्रां वक्ष्यमाणविनायकादिदेवार्चनाय वेदीं कारयेत् । मण्डपचालोपरि [10]पूर्वस्यां [11][पीताम्, आग्नेय्यां रक्तां, याम्यां] कृष्णां, नैर्ऋत्यामतिकृष्णां, वारुण्यां सितां, [12]वायव्यां कृष्णाम्, उत्तरस्यां हरिताम्, ऐशान्यां पञ्चवर्णां, [13]निर्ऋतिवरुणयोर्मध्ये [14]श्वेताम्, [15]इन्द्रेशानयोर्मध्ये लोहितां पताकां, मण्डपमध्यभागोपरि च किङ्किणीयुक्तं[16] ध्वजं दद्यात् ।

मण्डपद्वारेषु पूर्वादिक्रमेण प्लक्षोडुम्बराश्वत्थवटानाम्, अश्वत्थोडुम्बरप्लक्षवटानां वा तोरण-चतुष्टयम् ; द्वारपार्श्वद्वयेषु च पुष्पमालालङ्कृतं [17]चन्दनप्रोक्षितं [18]धूपितं वस्त्रवेष्टितग्रीवम् अभिमतपञ्च[19]रत्नगर्भं पूर्णकुम्भद्वयद्वयं दद्यात् ।

एतच्च सर्वमहा[20]दानसाधारणम् ।

[21][ततः प्रधान]वेदीमध्ये हस्तद्वयमित-खातद्वयं कृत्वा, तत्र[22]यथोक्तं तोरणमारोप्य, तत्रोक्त[23]प्रकारघटितां तुलामवलम्ब्य, पुष्पमाला[24]भिश्चन्दनेन मुक्ताप्रवालमालया

---

1 A पान्ते गजोष्ट
2 I. O. ०प्रणालोर्द्धस्त and A ०प्रमाणोर्द्धस्थ
3 A स्थ for स्थाम्र
4 I. O. and A ०पात्रद्वययुतानि
5 A omits स्रुक्
6 I. O. विस्तर
7 A होमार्थं before this
8 A यथासम्भवेश्च०
9 A omits it
10 I. O. पूर्वतः
11 A omits the bracketed portion
12 I. O. वायवीयां
13 I. O. नैर्ऋतिवरुणयोर्मध्ये, A निर्ऋति वरुणमध्ये
14 A श्वेत
15 A ऐन्द्रेशानमध्ये
16 A omits युक्तं
17 A चन्दनप्रचितं, I. O. चन्दनार्चितं
18 A omits it
19 A वान for रत्न
20 A omits महा
21 A omits the bracketed portion
22 I. O. omits it
23 A omits प्रकार
24 A ०दि चन्दनेन

चालङ्कुर्यात् । तुलातलभागमध्ये यथोक्तविष्णु[1][प्रतिमां पृष्ठनिहित]-गुग् गुलुपिण्डां कृत्वाऽऽरोपयेत् । तुलोपरि च [2]यथोक्तं बहुफलपुष्पमालं चन्द्रातपं वितत्य बध्नीयात् । तुलाधोभूभागे [3][यथोक्तं [4]चक्रं लिखित्वा [5]पुष्पैरवकिरेत् ।

एवं सर्वमनुष्ठानं कृत्वा,] गुरुमृत्विजो जापकांश्च वरणार्थोपकल्पितवस्त्रालङ्कारैर्[6]थायथमभ्यर्च्य, प्रथमं गुरुं दक्षिणजानुनि[7] विधृत्य [8]वरयेत् । ॐअद्यामुक[9]सगोत्रम् अमुकवेदामुक[10]शाखाध्यायिनम् अमुकदेवशर्माणम् अस्मिंस्तुलापुरुषमहादानकर्मणि गुरुकर्म कर्तुं त्वामहं वृणे । [11]ॐवृतोऽस्मीति[12]प्रतिवचनम् । ततो यजमानो [13][यथाविहितं कर्म कुर्विति वदेत् । ॐ यथाज्ञानं करवाणीति ] गुरुः । ऋत्विग्जापकानां[14] वरणे वरणवाक्ये गुरुकर्म कर्तुमिति स्थाने [15]ऋत्विक्कर्म [16]कर्तुं शान्तिकाध्यायजपकर्म कर्तुमिति यथाक्रमं निवेशो विशेषः । ततो गुरवे ऋत्विग्भ्यो [17]जापकेभ्यश्च यथाशाखं मधुपर्कं दद्यात् ।

[18]ततो गुर्वृत्विग् यजमानजापका उपवसेयुः । एतदपि [19]चन्द्रातपबन्धनाद्युपवासान्तं कर्म सर्वमहादानसाधारणम् । [20][वरणवाक्ये तु ] तुलापुरुषपदस्थाने तत्तन्महादानपदप्रक्षेपः कर्तव्यः ।

## [21]तृतीयदिनकृत्यम् ।

[22][अपरेद्युश्च कृतनित्यं] पूर्वादिकुण्डेषु ऋग् यजुःसामाथर्व[23]क्रमेण एको होता [24]अपरो ब्रह्मेति ब्राह्मणद्वयं नियुक्तं [25]स्वस्वगृह्योक्तविधिना अग्न्युपसमाधानं कुर्यात् । जापकाश्च

1 I. O. प्रतिमापृष्ठनिहत
2 A यथोक्त
3 A omits the bracketed portion
4 I. O. omits it
5 I. O. पुष्पैवकिरेत्
6 A यथामभ्यर्च्या
7 B and I. O. दक्षिणजानुय
8 A वृणयात्
9 A गोत्र for सगोत्रम्
10 A omits मुक
11 A and I. O. omit it
12 A गुरुर्वदेत्
13 A omits the bracketed portion
14 A omits नां
15 A नैऋत्विककर्म
16 I. O. कर्त्तुं
17 I.O. and A omit it
18 A omits it
19 A चन्द्रातवदना०
20 I. O. वरणवाक्ये and A वरण
21 I. O. and A omit it
22 A अपरेभ्यः कृतनित्यकृत्यः
23 A adds महादान before this
24 A अपर
25 I. O. स्वगृह्योक्त०

ऋग्वेदादि[1]क्रमेण पूर्वादिद्वारेषूपविश्य शान्तिकाध्यायं जपेयुः। शान्तिकाध्यायश्च 'शं न इन्द्राग्नी भवतामवोभि'रिति पञ्चदशर्चं [2]शान्तिसूक्तमृग्वेदे। 'ऋचं वाचमि'ति शान्तिकाध्यायो [3]यजुर्वेदे। 'कया नश्चित्र' इति तृचं सामवेदे। 'शं नो देवी'—'शं न इन्द्राग्नी' इति द्वे द्वे कण्डिके, '[4]सम्मावात' इत्यृक्, 'शान्ता द्यौ'रिति [5]कण्डिकेति शान्तिगणोऽथर्ववेदे।

गुरुश्च कृतनित्यः पूर्वाभिमुखः [6]कृतार्घ्यपातः स्वल्पवेदिकायाम् उत्तरादिक्रमेण यवपुष्पसिततण्डुलानामन्य[7]तमेन विनायकादिनवग्रहपूजार्थं प्रथमां दशपुञ्जिकापङ्क्तिं, दशदिक्[8]पालपूजार्थञ्च वेदुयपान्तेषु [9]स्वस्वदिक्क्रमेण दशपुञ्जिकाः, ग्रहपूजा[10]-पङ्क्त्यधो वस्वष्टकपूजार्थं द्वितीयामष्ट[11]-पुञ्जिका-पङ्क्तिं, [12][ तदधो द्वादशादित्यपूजार्थं [13]तृतीयां द्वादशपुञ्जिकापङ्क्तिं ] तदधः सप्तमरुद्गणपूजार्थं चतर्थीं सप्तपुञ्जिकापङ्क्तिं, तदधो ब्रह्मविष्णुशिवानां प्रतिमा[14]त्रयारोपणम्, अर्कवनस्पत्योः पूजार्थं पुञ्जिकाद्वयञ्च कृत्वा, प्रथमपङ्क्तावुत्तरादिक्रमेण एत एत सविनायका नवग्रहा इत्यावाह्य—विनायकमारोपयामि, आदित्यमारोपयामि, सोममारोपयामि, अङ्गारकमारोपयामि, बुधमारोपयामि, बृहस्पतिमारोपयामि, शुक्रमारोपयामि, शनैश्चरमारोपयामि, राहुमारोपयामि, केतुमारोपयामि इत्यारोप्य, [15][ एत एत लोकपाला ] इत्यावाह्य—यथादिक्क्रमम् इन्द्रमारोपयामि, अग्निमारोपयामि, यममारोपयामि, निर्ऋतिमारोपयामि, वरुणमारोपयामि, वायुमारोपयामि, सोममारोपयामि, ईशानमारोपयामि, अनन्तमारोपयामि, ब्रह्माणमारोपयामि इत्यारोप्य, [16]एत एत वसव इत्यावाह्य, द्वितीयपङ्क्तौ—[17]आपमारोपयामि, ध्रुवमारोपयामि, सोममारोपयामि, [18]धरमारोपयामि, अनिलमारोपयामि, [19]अनलमारोपयामि, प्रत्यूषमारोपयामि, [20]प्रभासमारोपयामि इत्यारोप्य, एत एत आदित्या

1 A क्रमं
2 A शान्तिकसुक्तं ऋग्वेदे
3 I. O. यजुर्व्वेदो
4 A सम्माभिव, I. O. श्रम्मावात
5 I. O. कण्डिका: ॥ इति, A शान्तिकुण्डिका । इति
6 I. O. and A कृतार्घपात:
7 I. O. ०मन्यमेन
8 A omits पाल
9 A स्व and I. O. पूर्व्व for स्वस्व
10 A ०पंक्ताधा, I. O. ०पङ्क्त्यो
11 I. O. पुञ्जपङ्क्ति, A पुञ्जकापुष्पं
12 I. O. omits the bracketed portion
13 A तृतीयायां
14 I. O. गुरुपा for त्रया
15 A दिक्पाला for the bracketed portion
16 A omits it
17 A धपमारोपयामि
18 A आपमारोपयामि
19 I. O. omits it
20 A omits it

इत्यावाह्य, तृतीयपङ्क्तौ—इन्द्रमारोपयामि, धातारमारोपयामि, भगमारोपयामि, पूषणमारोपयामि, मित्रमारोपयामि, वरुणमारोपयामि, अर्यमणमारोपयामि, अंशुमारोपयामि, विवस्वन्तमारोपयामि, त्वष्टारमारोपयामि,[1][सवितारमारोपयामि, विष्णुमारोपयामि] इत्यारोप्य, एत एत मरुद्गणा इत्यावाह्य, चतुर्थपङ्क्तौ—आवहमारोपयामि, प्रवहमारोपयामि [2][उद्वहमारोपयामि, संवहमारोपयामि, [3]विवहमारोपयामि ] [4]परावहमारोपयामि, [5]परिवहमारोपयामि [6]इत्यारोप्य, एत एत ब्रह्माच्युतेशार्कवनस्पतय[7] [8]इत्यावाह्य, [9]प्रतिमात्रये—ब्रह्माणमारोपयामि, अच्युतमारोपयामि, ईशमारोपयामि इत्यारोप्य, तत्पार्श्वस्थपुञ्जिकाद्वये [10]अर्कमारोपयामि, वनस्पतिमारोपयामि [11][इत्यारोपयेत्। ततो विनायकाय] आदित्याय सोमाय अङ्गारकाय बुधाय बृहस्पतये शुक्राय शनैश्चराय राहवे केतवे, इन्द्राय अग्नये [12]यमाय [13]निर्ऋतये वरुणाय वायवे सोमाय ईशानाय अनन्ताय ब्रह्मणे, [14][आपाय ध्रुवाय सोमाय धराय अनिलाय अनलाय प्रत्यूषाय प्रभासाय, इन्द्राय धात्रे भगाय पूष्णे मित्राय वरुणाय अर्यम्णे अंशवे विवस्वते त्वष्ट्रे [15]सवित्रे विष्णवे, आवहाय प्रवहाय [16]उद्वहाय संवहाय विवहाय परावहाय परिवहाय, ब्रह्मणे, ] अच्युताय, ईशाय, अर्काय, वनस्पतये इति प्रत्येकमुच्चार्य—एतत् पाद्यं नम इति क्रमादेकैकशः पाद्यं सर्वेभ्यो दत्त्वा, तथा एषोऽर्घ्यो नम [17]इत्यर्घ्यं, [18][तथैव एतदाचमनीयं नम इत्याचमनीयं], तथैव [19]एतद्वस्त्रं नम इति वस्त्रं, तथैव एष गन्धो नम इति गन्धं, [20][ तथैव एतत् पुष्पं नम इति पुष्पं], [21][तथैव एष धूपो

1 A omits the bracketed portion
2 A विवस्वन्तमारोपयामि त्वष्टारमारोपयामि for the bracketed portion
3 I. O. वह०
4 I. O. omits it
5 A omits it
6 A इत्यावाह्य
7 A र्वनस्पतयारोपयामि
8 A इत्यारोप्य
9 A प्रमितिमात्रये
10 A अर्क०
11 A इत्यारोप्य एतादतद्विनायकाय for the bracketed portion
12 A omits it
13 A नैऋतये, I. O. निर्ऋताय
14 A omits the bracketed portion
15 I. O. सावित्रे
16 I. O. तद्वहाय
17 A इत्यर्घं
18 A तथैवमाचमनीयं for the bracketed portion
19 A वस्त्रं
20 A एतत् पुष्पं नमः for the bracketed portion
21 A एष धुपो नमः for the bracketed portion

नम इति धूपं ], तथैव एष दीपो नम इति दीपं, तथैव एतन्नैवेद्यं नम इति नैवेद्यं [ तथैव एतत्ताम्बूलं नम इति ताम्बूलं][1] दद्यात् । एवं पूजां समापयेत् ।

ततो होतारः प्रतिमन्त्रमे[2]कावृत्त्या [3]आभ्य एव देवताभ्यो घृताक्तिलाहुतीर्दद्युः । तथाच मन्त्राः । विनायकस्य—ऋग्वेदयजुर्वेदयोः गणानां त्वेति, सामवेदे आ [4][तू न]इति, अथर्ववेदे[5][गणानां त्वा] [6]गणपतिमिति । सूर्यस्य—ऋग्वेदयजुर्वेदयोः आ कृष्णेनेति, सामवेदे [7][बरामहाँ असोति,] अथर्ववेदे[8] आदित्य नावमिति । [9]सोमस्य—ऋग्वेदे आ प्यायस्वेति, यजुर्वेदे इमं देवा इति, सामवेदे आ प्यायस्वेति, अथर्ववेदे [10]यद्राजानमिति । अङ्गारकस्य—ऋग्यजुःसामवेदेषु अग्निर्मूर्द्धेति, अथर्ववेदे[11][त्वया मन्य]इति । बुधस्य—ऋग्वेदे अग्ने विवस्वदुषस इति, यजुर्वेदे उद्बुध्यस्वेति, सामवेदे अग्ने विवस्वदुषस इति, अथर्ववेदे [12]दर्शोऽसीति । बृहस्पतेः—ऋग्वेदे बृहस्पते परि दीयेति, यजुर्वेदे बृहस्पते [13][अतियदर्य इति,] [14][सामवेदे बृहस्पते परि दीयेति,] अथर्ववेदे बृहस्पतिर्न इति । शुक्रस्य—ऋग्वेदे शुक्रन्ते अन्यदिति,[15] यजुर्वेदे [16][अन्नात् परिश्रुत इति,] सामवेदे शुक्रन्ते अन्यदिति, अथर्ववेदे [17]येनावपदिति । शनैश्चरस्य—[18]ऋग्यजुःसामवेदेषु शन्नो देवीरिति, अथर्ववेदे प्राणाय नम इति । राहोः—ऋग्वेदे कया नश्चित्र इति, यजुर्वेदे काण्डात् काण्डादिति, सामवेदे कया नश्चित्र इति, अथर्ववेदे [19]राहू राजानमिति । केतोः—केतुं कृण्वन्निति वेदचतुष्टयेऽपि । इन्द्रस्य—ऋग्वेदयजुर्वेदयोः [20]त्रातारमिन्द्रमिति, सामवेदे त्वामिद्धि[21] हवामहे[22] इति, अथर्ववेदे [23][इन्द्रस्य बाहू इति] । अग्नेः—ऋग्वेदे अग्निं दूतं

---

1 A omits the bracketed portion
2 A ०मेकावृत्या ; I. O. ०मेकवृत्या
3 I. O. and A आद्य
4 I. O. न न, A नुन
5 I. O. गणपते and A गणपतये
6 A गणपतिं
7 I. O. विभ्राडं भगौति and A विस्रहां भगौति
8 A adds इयं after it
9 A मस्य
10 A भप्रजानमिति
11 I. O. त्वया मान्या and A इयं मन्या
12 A दर्शोशीति
13 I. O. भति भदर्यो and A निवदर्यति
14 A omits the bracketed portion
15 A भन्यदि
16 I. O. भन्नां परिश्रुतमिति
17 I. O. येनावर्दिति
18 A ऋक्सामयजुःषु
19 A राहू, I. O. बाहू
20 A त्रातारमिति
21 I. O. and A त्वामिद्धि
22 A हवाम
23 I. O. इन्द्रस्य बाहू इति and A इन्द्रबाहुरिति

*वृणीमह इति, यजुर्वेदे त्वं नो अग्ने [1][तव देवेति,] [2]सामवेदे अग्निं दूतं वृणीमह[3] इति, अथर्ववेदे अग्नेर्मन्व[4] इति । यमस्य—ऋग्वेदे असि यम इति, यजुर्वेदे[5][सुगं नु पन्थामिति,] सामवेदे नाके सुपर्णमिति, अथर्ववेदे यमो नो [6]गातुमिति । निर्ऋतेः—ऋग्वेदे [7]वेत्था हि निर्ऋतीनामिति, यजुर्वेदे [8]असुन्वन्तमयजमानमिति, सामवेदे [9]वेत्था हि निर्ऋतीनामिति, अथर्ववेदे [10]अपेत एत्विति । वरुणस्य—ऋग्वेदे [11][वरुणं वो रिशादसमिति,]यजुर्वेदे[12][तत्त्वा यामीति,] सामवेदे घृतवती भुवनानामिति, अथर्ववेदे उदुत्तमं वरुणेति ।* वायोः—ऋग्वेदे वात [13][आ वात्विति,] यजुर्वेदे आ [14][नो नियुद्भिरिति,] सामवेदे वात आ वात्विति, अथर्ववेदे वायोः सवितुरिति । सोमस्य—ऋग्वेदे [15]कुविदङ्ग नमसा ये इति, यजुर्वेदे वयं सोमेति, सामवेदे सोमं राजानं वरुणमिति, अथर्ववेदे [16][सोदक्रामत् सा वनस्पतीनिति] । [17][ईशानस्य—ऋग्वेदे ईशाना [18]वार्याणामिति, यजुर्वेदे तमीशानमिति, सामवेदे[19][आत्वा सोमस्येति] अथर्ववेदे तस्मै [20][सर्वेभ्य ईशानस्येति] । [21]अनन्तस्य—ऋग्वेदे काङ्किो[22]नाम सर्प इति, यजुर्वेदे नमोऽस्तु[23]सर्पेभ्य इति, सामवेदे यां [24]सन्ध्यां समधत्तेति, अथर्ववेदे[[25]अनन्तं विततमिति] । ब्रह्मणः-ऋग्वेदे ब्रह्मा देवानामिति, यजुर्वेदे आ ब्रह्मन्निति, सामाथर्वणोः ब्रह्म[26]जज्ञानमिति । वसूनाम्—ऋग्वेदे[27]ज्मया अत्र वसव इति, यजुर्वेदे वसन्तेन ऋतुनेति, सामवेदे [28][लोकद्वारमित्याद्यं

1 I. O. इति for the bracketed portion
2 A सामवेदेष
3 A वृणीम
4 I. O. अग्नेर्मनु, A अग्नेर्मन्त्र
5 I. O. सुगन्नु पन्थामिति and A सुगन्नच्छामिति
6 I. O. and A गान्तमिति
7 I. O. and A वर्णा
8 I. O. असुन्वन्त०, A असुयन्त०
9 I. O. वर्णा, A व
10 I. O. आपत, A अपत
11 I. O. वरुण आविशादसमिति and A वरुण वारिशादमिति
12 A तत्तीषमिति
13 A आवातु इति and I. O. वत्विति
14 I. O. नोनियुतिरिति and A योविवद्भिरिति
15 A कविदत्वं नमसाय इति
16 I. O. मोदद्रामस इति and A मोमक्रामसो वनस्पतिरिति
17 A reads the bracketed portion a little below after some repetition of matter
18 I. O. वापोणामिति
19 I. O. अभित्वाशूवनोऽनामा इति
20 I. O. सर्व्वे इति
21 I. O. अनन्तस्य ऋस्य
22 I. O. and A कान्लिको
23 I. O. नमोस्तु ते
24 I. O. सत्वा, A the entire sentence as पाप त्वां समाधत्तेति
25 I. O. अयर्व्वमिततमिति
26 I. O. ०जज्ञमिति, A ०जननमिति
27 I. O. ऽप्सुया, A अप्स्वया
28 I. O. लोकद्वारमिति for the bracketed portion

साम], अथर्ववेदे वसवस्त्वा [1]गायत्रेणेति। आदित्यानाम्—ऋग्वेदयजुर्वेदयोः इमा गिर आदित्येभ्य इति, सामवेदे [2][तत्त्वा यामीति], अथर्ववेदे [3]उदित्युदिहीति। मरुताम्—ऋग्वेदे आविद्युन्म[4]द्भिरिति, यजुर्वेदे [5]ईदृक्षास इति, सामवेदे गावश्चिद् [6][घा समन्यव] इति, अथर्ववेदे मरुतां [7]मन्व इति। ब्रह्मणः—ऋग्वेदे ब्रह्म जज्ञानमिति, यजुर्वेदे आ ब्रह्मन्निति, सामाथर्वणोः ब्रह्म जज्ञानमिति। अच्युतस्य—ऋग्वेदे अतो देवा इति, यजुर्वेदसामवेदयोः इद विष्णुरिति, अथर्ववेदे उरु [8]विष्ण इति। ईशस्य—ऋग्वेदे इमा रुद्रायेति, यजुर्वेदे मा [9]नस्तोक इति, सामवेदे आ वो[10] राजानमिति, अथर्ववेदे भवो दिवो भव इति। अर्कस्य—चित्रं देवानामिति वेदचतुष्टयेऽपि। वनस्पतेः—ऋग्वेदे अव सृजा वनस्पत इति, यजुर्वेदे [11]अय हित्वा[12]स्वधितिरिति, सामवेदे नित्यस्तोत्रो वनस्पतिरिति, अथर्ववेदे [13][मोदकामत् सा वनस्पतीनिति]। ] एवं [14]होमं समाप्य, सामवेदव्यतिरिक्ता[15] ऋत्विजो यथासम्भवमासामेव देवतानां सूक्तानि जपेयुः।

तथा च सूक्तानि। ऋग्वेदे—आ [16]तु न इति विनायकसूक्तं नवर्चम्। आदित्यस्य आदित्याना[17][मवसेत्यादि षडृचं] सूक्तम्। त्वं सोम प्र[18]चिकित इति सोमस्य त्रयोविंशतृचं सूक्तम्। [19]समिधाग्निं [20]दुवस्यतेत्यङ्गारकस्य[21] त्रिशतृचं सूक्तम्। [22]उद् बुध्यध्वमिति बुधस्य द्वादशर्चं सूक्तम्। [23]यस्तस्तम्भेति बृहस्पतेरेकादशर्चं सूक्तम्। शुक्रन्ते अन्यदिति शुक्रस्य चतुष्कं सूक्तम्। आपो हि ष्ठेति शनैश्चरस्य नवर्चं सूक्तम्। कया नश्चित्र इति राहोः

1 I. O. and A गायत्रिणेति
2 I. O. उन्वयामीति and A उनुयामिति
3 I. O. and A उदिन्युदिहीति
4 I. O. ०नभिरिति, A आविद्युन्मद्भिरिति
5 I. O. ईदृक्षास, A ईदृक्षारम
6 I. O. व्यासमन्यव
7 I. O. ध्वज, A मन्व
8 I. O. विष्णो इति, A विष्णोरिति
9 I. O. नस्तेक
10 I. O. धो
11 I. O. and A अयं
12 I. O. सुधितिरिति, A स्वधितिरिति
13 I. O. मोदक्रामसो वसस्पतानिति A सोमक्रामसो वनस्पतेरिति
14 I. O. हेमं
15 A omits it
16 I. O. क्र०, A मुनमिति
17 A मिमोपरिसर्व्व for the bracketed portion
18 I. O. चिकित्, A चिविति
19 I. O. समिधग्निं
20 I. O. दुरस्यते इति। अङ्गारकस्य, A वनस्पते इत्यङ्गारकस्य
21 A त्रिंशतृचं
22 I. O. उद् ध्यास्वति, A उद् बुध्यमिति
23 A यस्तम्भेति, I. O. पयसतस्तम्भ ति

पश्चदशर्च सूक्तम् । युञ्जन्ति ब्रध्नमिति केतोर्दशर्च सूक्तम् । इन्द्रमि[1]द्गाथिन इति इन्द्रस्य दशर्च सूक्तम् । [2][अग्निः समिमिति] अग्नेः सप्तर्च सूक्तम् । [3]परेयिवांसमिति यमस्य [4]षोड़शर्च सूक्तम् । [5]यस्यामितानीति निर्ऋतेर्दशर्च सूक्तम् । [6][मो षु] वरुणेति वरुणस्य पञ्चर्च सूक्तम् । वात आ वात्विति वातस्य [7]त्र्यृच सूक्तम् । कुविदङ्ग[8] नमसा य इति सोमस्य सप्तर्च सूक्तम् । [9][आ नो भद्रा इति [10]महेशानस्य दशर्च सूक्तम् ।] [11]स्वप्नः स्वप्नाधिकरण [12][इत्यनन्तस्य पञ्चर्च सूक्तम् । ऋजु[13]रिच्छंस इति ब्रह्मणश्चतुष्कं सूक्तम् । [14]जगृभ्मा त ] इति वसूनामष्टर्च सूक्तम् । इमा गिर आदित्येभ्य इत्यादित्यानां सप्तदशर्च सूक्तम् । मरुतो [15][ यस्य हि ] क्षये इति [16]मरुतां दशर्च सूक्तम् । ऋजुरि[17]च्छंस इति ब्रह्मणश्चतुष्कं सूक्तम् । सहस्रशीर्षा पुरुष इत्यच्युतस्य षोड़शर्च सूक्तम् । आ [18]ते पितरितीशस्य [19]पञ्चदशर्च सूक्तम् । चित्रं देवानामित्यर्कस्य [20]षड्चं सूक्तम् । [21][अञ्जन्ति त्वामध्वर ] इति वनस्पतेरेका[22]दशर्च सूक्तम् ।

यजुर्वेदे—आशुः शिशान दति [23]शाक्रं सूक्तम् । [24]अस्याजरास इत्याग्नेयं सूक्तम् । [25]अषाढमिति सौम्यं सूक्तम् । [26]रुद्राध्यायरूपं रौद्रं सूक्तम् । सहस्रशीर्षेति वैष्णवं सूक्तम् ।

[सामवेदे तु सूक्तानि न सन्त्येव][27] ।

1 Both I. O. and A ०सिद्गाथिन
2 A अग्निरिति
3 I. O. परेयिवांसमिति. A परेपितरमिति
4 I. O. षोड़र्च
5 A यस्यमवानिमि
6 I. O. गोषु, A गोस
7 A षष्टर्च
8 I. O. कविदङ्गं, A कविदङ्ग
9 I. O. सप्तर्च सूक्तं for the bracketed portion
10 A ईशानस्य
11 A स्वप्नः सप्ताधिकरण and I. O. omits स्वप्नः
12 A omits the bracketed portion
13 I. O. ०विष्णुस
14 I. O. जगृमो न
15 A यस्याहि and I. O. यस्याहं
16 I. O. वायोर्दशर्च
17 I. O. ०विष्णुस, A ०रिषंस
18 I. O. तो
19 A पञ्चदशस्य before this
20 A षड़र्च
21 A omits the bracketed portion
22 I. O. ०कविंशत्यर्चं
23 A शाक्तं
24 I. O. अस्याजराम, A अस्यजराम
25 I. O. आषाढमिति, A अपांशु इति
26 A रुद्रध्यायजपं
27 A सामवेदे प्रकाशप्रधान इति वम्रवाणमिति द्वादशर्च सूक्तं सौम्यम् । वैष्णवी संहिता विष्णुसूक्तम् । रुद्रसंहिता रौद्रं सूक्तम् ।

अथर्ववेदे—[1]गणपते गणपतिमिति विनायकसूक्तम्। [2]यद्राजानमिति सोमसूक्तम्। त्वया [3]मन्य इति भौमसूक्तम्। [4]दर्शोऽसीति [5][बुधसूक्तमेकर्चम्[6]। [7]यामाहुतिमिति बृहस्पतिसूक्तम्। येना[8]वपदिति शुक्रसूक्तम्। सहस्रबाहुरिति शनैश्चरसूक्तम्। [9][राहू राजानमिति] राहोरेकर्चं सूक्तम्। [10][केतुं कृण्वन्निति] ] [11][केतोरेकर्चं सूक्तम्।] [12]इन्द्रो [13]जयातीति इन्द्रसूक्तम्। अग्ने[14]मन्व इति अग्निसूक्तम्। [15]यमस्य [16]लोकादिति यमसूक्तम्। अपेत एत्विति निर्ऋतिसूक्तम्। उदुत्तमं वरुणेति वरुणसूक्तमेकर्चम्। वायोः सवितुरिति वायुसूक्तम्। आ प्यायस्वेति सोमसूक्तम्। यो[17][अग्नौ रुद्र इती]शानसूक्तम्। नमोऽस्तु सर्पेभ्य इत्यनन्तसूक्तम्। [18]ब्रह्मज्येष्ठा इति ब्रह्मसूक्तम्। अस्मिन्वसु वसव इति वसूनां सूक्तम्। [19][आयं गौरित्यादित्यानां] सूक्तम्। मरुतां [20]मन्व इति मरुतां सूक्तम्। ब्रह्म [21]जज्ञानमिति रौद्रं ब्रह्मसूक्तम्। [22]उरु विष्णो इत्यच्युतस्य[23] सूक्तमेकर्चम्। [24][भवाशर्वौ मन्वे वामितीशसूक्तम्।] यस्येदमा [25]रज इत्यर्कसूक्तम्। [26]ध्रुवस्तिष्ठेति वनस्पतिसूक्तम्।

एवं सूक्तजपानन्तरं सर्वेर्त्विजो [27][यथायथं होमशेषं] समापयेयुः। ततो गुरुः कृत-

---

1 I. O. omits it
2 A यद्राजानमिति
3 I. O. मन्यो ; A मान्या
4 A यशोसीति
5 A omits the bracketed portion here and reads some portion of it a little below.
6 I. O. बुधसूक्तं
7 I. O. आहुतिमिति
8 I. O. ०चवदिति
9 I. O. राजानमि
10 I. O. omits the bracketed portion
11 I. O. omits the bracketed portion
12 A इन्द्र
13 Both I. O. and A यजातीति
14 I. O. मुंश्च,
15 A यम
16 I. O. लोका इति ; A लोक इति
17 I. O. रुद्रो अयाविति and A रुद्रा अगाविति
18 I. O. ब्रह्मस्य०, A ब्रह्मा०
19 I. O. आयज्ञौरित्यादित्यानां and A आयङ्गौरित्यादित्यानां
20 I. O. मर्म ; A मग्नि
21 Both I. O. and A यज्ञानमिति
22 I. O. तवो ; A उरो
23 A इत्यचात
24 I. O. भवकेशाव्वौ मनवेवाङमि ईश सूक्तं and A भवाकशाव्वौ रुमवै वाहमिति ब्रह्मसूक्तं for the bracketed portion
25 Both I. O. and A रुज
26 I. O. ध्रुव०
27 A यथामशेषं

नित्ययजमानसहितः[1] पुष्पधूपौ माषभक्तञ्चादाय, तूर्य्येषु नदत्सु मण्डपाद् बहिर्निर्गत्य, स्वस्व-दिक्क्रमेण इन्द्रादिलोकपालान् प्रत्येक[2]मेह्येहीत्याद्युक्तमन्त्रैरावाह्य, आवाहनानन्तरमेव [3]ॐ इन्द्राय नम इत्यादि-प्रणवादिनमोऽन्तस्वनाममन्त्रैः प्रत्येकं सम्पूज्य, तथैव प्रत्येकं वलिं दद्यात् ।

[4]ततः शुचिस्थाने मण्डलिकाः कृत्वा, त्रैलोक्ये यानि [5]भूतानीत्यादीनि पठित्वा, त्रैलोक्यस्थेभ्यः [6][स्थावरेभ्यो भूतेभ्यो] नमः, [7][त्रैलोक्यस्थेभ्यश्चरेभ्यो भूतेभ्यो नमः], ब्रह्मणे नमः, विष्णवे नमः, शिवाय नमः, देवेभ्यो नमः, दानवेभ्यो नमः, गन्धर्वेभ्यो नमः, यक्षेभ्यो नमः, राक्षसेभ्यो नमः, पन्नगेभ्यो नमः, ऋषिभ्यो नमः, मनुभ्यो नमः, देवमातृभ्यो नमः, इति प्रत्येकं सम्पूज्य, माषभक्तवलिं दद्यात् ।

[8]तत ऋत्विग्भ्यो हैमकुण्डलसूत्रकटकाङ्गुरीयकाणि [9]विचित्राणि वासांसि शय्याः, एकै-त्विग् देयाश्च[10] [11]द्विगुणद्रव्यघटितां कुण्डलादिसामग्रीं, द्विगुणं वस्त्रं, द्विगुणद्रव्यकृताश्च[12] शय्यां गुरवे दद्यात् । तद् यथा—ॐ अद्यामुकामुकसगोत्रेभ्यः अमुकामुकवेदामुकामुकशाखा-ध्यायिभ्यः अमुकामुकदेवशर्मभ्यो युष्मभ्यं कृतैतदधिवासनकर्मप्रतिष्ठार्थं दक्षिणां यथायथमेतानि हैमकुण्डलयुग[13]-यज्ञोपवीत-कटकाङ्गुरीयकाणि, [14][एतानि विचित्र]-वस्त्राणि, एताश्च शय्या ददानि । ब्राह्मणाः स्वस्तीति ब्रूयुः । ततः प्रथमलिखितक्रमेण ब्राह्मणत्रयं पुण्याहादिवाचनं कारयेत् ।

एतदपि ऋत्विगुपवेशनादि—मध्यब्राह्मणवाचनान्तं कर्म सर्वमहादानसाधारणम् । तत ऋत्विजो मङ्गलगीतवाद्य[15]-घोषेषु सत्सु [16]स्वस्वकुण्डसमीपस्थकुम्भचतुष्टयजलेन यजमानं स्नापयेयुः ।

ततो यजमानः[17]शुक्लमाल्यवस्त्रधरः पुष्पाञ्जलिमादाय तुलां त्रिः प्रदक्षिणीकृत्य, नमस्त

1 I. O. कृतनित्ययजमानसहित A कृतनित्यो यजमानसहितं
2 I. O. ०मह्ये हीत्याद्युक्त० and A ०मिन्द्राद्युक्त०
3 I. O omits ॐ
4 Both I.O. and A अत:
5 Both I. O. and A भूतानि इत्यादि
6 A स्थानेभ्यो
7 I. O. omits the bracketed portion, A त्रैलोकास्थेभ्यो भूतेभ्यो नम:
8 A अत: शुचिस्नाता
9 A चित्राणि
10 A omits च
11 A द्वि for द्वि
12 A ०कृतां
13 A ०युत
14 I. O. च चित्र
15 I. O. adds गीत here
16 I. O. कुम्भ and A स्वस्वकुण्ड for स्वस्वकुण्ड
17 A adds शुद्धमना: after यजमान:

इत्यादिभिरस्मात् [1][ संसारसागरादित्यन्त-]मन्त्रैरामन्त्र्य, पुष्पाञ्जलिनार्चयेत्। ततः पुनरपि तुलां प्रदक्षिणीकृत्य, खड्गचर्म[2]-कवचधरो [3]धृतसर्वालङ्कारो [4]वामदक्षिणक्रमेण करद्वयधृत[5][हैमधर्मराजसूर्यप्रतिमः उत्तरभागे तुलामारुह्य], पूर्वस्थापितहरिप्रतिमामुखं पश्यन् तिष्ठेत्। तत ऋत्विजो दक्षिणतुलाभागे सुवर्णमुत्कृष्टं यजमानसाम्यादधिकं यथा भवति तथा दद्युः। पुष्टिकामस्तु तथाधिकं दापयेत्, [6]यथा सुवर्णाधारस्य भूमिस्पर्शो भवति।

ततस्तत्रैव क्षणं स्थित्वा, नमस्ते इत्यादि मन्त्रद्वयं [7][पठेत्। ततोऽवतीर्य, आत्मतुलितं सुवर्णं गुर्व्रृत्विक्प्रमुखनानाब्राह्मणेभ्य ] उत्सृज्य दद्यात्। तद्यथा—ॐ अद्य यथासम्भवगोत्रनामभ्यो [8]गुर्वृत्विक्प्रमुखब्राह्मणेभ्यो मत्स्यपुराणोक्त-[9]तुलापुरुषदानफलप्राप्तिकामोऽहम् एतदुपकल्पितोपकरणालङ्कारसहितस्वशरीरतुलितं पञ्चवर्णवितानसहितं साधिकमति-[10][निर्मलं[11] काञ्चनं ददानि। गुर्वृत्विजः स्वस्तीत्युक्त्वा, सावित्रीं पठित्वा, सुवर्णमिदमग्निदैवतमित्युक्त्वा,][12] यथाशाखं कामस्तुतिं [13]पठेयुः।

ततो गुर्वृत्विग्भ्यो ग्रामं रत्नानि च दक्षिणां दद्यात्। तद् यथा—ॐ [14]अद्यामुकामुकसगोत्रेभ्योऽमुकामुकवेदामुकामुकशाखाध्यायिभ्योऽमुकामुकदेवशर्मभ्यो युष्मभ्यं कृतैतद्दानकर्मप्रतिष्ठार्थं [15]दक्षिणामियदुत्पत्तियोग्यां भूमिमेतानि च[16] रत्नानि ददानि। प्रतिग्रहीतारः स्वस्तीत्युक्त्वा स्वं स्वं सुवर्णभागं प्रत्येकं स्पृशेयुः। वितानञ्च वाक्यमन्तरेण गुरवे प्रतिपादनीयं, गुर्वृत्विक्प्रमुखब्राह्मणेभ्यस्तद्दानासम्भवात्। एवं गुर्वृत्विक्प्रमुखब्राह्मणदेयमहादानेषु सर्वेषु बोद्धव्यम्। यद्वा आत्मतुलितसुवर्णस्यार्द्धं गुरवे अपरमर्द्धमृत्विग्भ्यश्च[17] दद्यात्। तत्र दानवाक्ये—ॐ अद्यामुकामुकसगोत्रेभ्योऽमुकामुक-[18]वेदामुकामुकशाखाध्यायिभ्योऽमुकामुकदेवशर्मभ्यो युष्मभ्यं मत्स्यपुराणोक्तभाग-[19]व्यवस्थया फलपुष्पोपशोभितपञ्चवर्णवितानकसहितमिति च [20]विशेषः।

---

1 A संसारादिपर्यन्त

2 I. O. क्षताङ्गन for कवच

3 A व्रतसर्व्वाङ्गालङ्कारा

4 Both I. O. and A omit वाम

5 A हैमतुलासमारुह्य for the bracketed portion

6 A वथा

7 A पठित्वा only for the bracketed portion

8 A सर्व्वत्विक॰

9 A omits तुला

10 I. O. साधिकमभि ; A साधिकमिति

11 I. O. निर्म्मितं

12 A omits the bracketed portion

13 A पठेत

14 A अद्यामुकशाखाध्यायिभ्योऽमुकदेवशर्मभ्यो

15 A दक्षिणामिदं योग्या

16 A omits च

17 I. O. omits च

18 A ०वेदशाखाध्यायिभ्यो

19 I. O. omits भाग

20 A शेष:

ततो जापकेभ्यो दक्षिणां दद्यात् । [1]ॐ अद्यामुकामुकसगोत्रेभ्यः अमुकामुकवेदामुकामुकशाखाध्यायिभ्यः अमुकामुकदेवशर्मभ्यो युष्मभ्यं कृतैतच्छान्तिकाध्यायजपकर्मप्रतिष्ठार्थं दक्षिणामेतत् काञ्चनं ददानि । जापकाः स्वस्तीति वदेयुः[2] । ततो यथासम्भवं दानसमयोप[3]-स्थितान् दीनानाथांश्च [4]तण्डुलकपर्दकादिभिस्तर्पयेत् । ततः [5]पूर्ववद् ब्राह्मणत्रयं पुण्याहादिवाचनं कारयेत् । ततः शीघ्रं तत सुवर्णं यथायथं [6]विभज्य दद्यात् । [7][अत्र च दानवाक्ये] अमुकदेशे अमुककाले इत्युक्त-[8][तत्तन्निमित्तोल्लेखः कर्तव्यः । एवञ्चावर्ता[9]न्तरेष्वपि यत्र देशकालविशेषश्रुतिरस्ति, तत्रा-[10]मुकदेशे अमुककाले इति [11]तदुल्लेखः करणीयः ।

इति तुलापुरुषमहादानं समाप्तम् । ]

1 A omits ॐ
2 A वदेत्
3 A ॰स्थित
4 I. O. तद्दाल for तण्डुल
5 A पूर्वं
6 Both I. O. and A omit it
7 I. O. अत्र दाने वाक्ये and A तत्र दानवाक्ये
8 A मिति only for the bracketed portion
9 I. O. र्नां for र्तां
10 I. O. omits अमुकदेशे
11 I. O. उल्लेखः

तथा हिरण्यगर्भ[1]महादानम्। ( मत्स्यपुराणम्—२७५ अः )

अथातः संप्रवक्ष्यामि महादानमनुत्तमम्।
नाम्ना हिरण्यगर्भाख्यं महापातकनाशनम् ॥१॥
पुण्यं दिनमथासाद्य तुलापुरुषदानवत्।
ऋत्विङ्मण्डपसम्भार भूषणाच्छादनादिकम् ॥२॥
कुर्यादुपोषितस्तद्वल्लोकेशावाहनं बुधः।
पुण्याहवाचनं कृत्वा तद्वत् कृत्वाधिवासनम् ॥३॥

तद्वदुपोषितः—तुलापुरुषवद् गुर्वृत्विग्जापकैः सह कृतोपवासो यजमान इत्यर्थः।

ब्राह्मणं [2]रचयेत् कुण्डं तपनीयमयं शुभम्।
द्वासप्तत्य-[3]ङ्गुलोच्छ्रायं हेमपङ्कज-[4]गर्भवत् ॥४॥

हेमपङ्कजगर्भवदिति मध्यस्थापितसौवर्णपद्ममित्यर्थः।

त्रिभागहीन-[5][विस्तारमाज्य]-क्षीराभिपूरितम्।
दशास्त्राणि सरत्नानि दात्रं [6][सूचीं तथैव] च ॥५॥

अभिपूरितम् एकदेशपूरितम्, 'अभिरभागे' (१।४।९१) इति पाणिनिसूत्र एवाभिशब्दस्यैकदेश-[7]वाचित्वेन प्रसिद्धत्वात्। दशास्त्राणि [अस्त्राणीव अस्त्राणि प्रधानफलसाधनानीत्यर्थः][8]

हेमनालं [9]सपिटकं बहिरादित्यसंयुतम्।
तथैवा[10]वरणं नाभेरुपवीतञ्च काञ्चनम् ॥६॥

[पिटकं जातकोपवेशनार्थं पट्टकम्][11]। नाभेरावरणं—नाभ्याच्छादनार्थं सुवर्णपत्रकृतं[12] वस्त्राकारम्।

पार्श्वतः स्थापयेत्तद्वद्धेमदण्डकमण्डलुम्।
पद्माकारं पिधानं स्यात् समन्तादङ्गुलाधिकम् ॥७॥

---

1 A omits महा
2 I. O. भारयेत्
3 A omits ल्य
4 I. O. adds गर्भज before गर्भवत्
5 A विभाद्य
6 A घृषिस्तथैव
7 A ०वादित्वेन
8 A अस्त्राणि अनीकास्त्राणि प्रधानानीत्यर्थः, I. O. अस्त्राणीव शास्त्राणि प्रधानानीत्यर्थः
9 A सपिठकं
10 I. O. ०वरणान्नाभे०
11 A पिठकं स्वल्पपट्टी for the bracketed portion
12 I. O. ०कृत

मुक्तावलीसमोपेतं पद्मरागदलान्वितम् ।
तिलद्रोणोपरिगतं वेदिमध्ये ततोऽर्चयेत् ॥८॥

अनेन [1]विधानेन अनुष्ठानकाले गर्भमुखाच्छादनं कर्तव्यम्, अन्यत्र तद्विनियोगाश्रवणात् । पद्मरागदलान्वितम् उत्कृष्ट-[2]माणिक्यखण्डान्वितम् ।

ततो मङ्गलशब्देन ब्रह्मघोष-[3]रवेण च ।
सर्वौषध्युदक[4]स्नानस्नापितो वेदपुङ्गवैः ॥९॥

सर्वौषध्युदकमिति [5]कुण्डसमीपस्थकुम्भजलव्यतिरिक्तं सर्वौषधिमिश्रितं जलं, कुण्डसमीपस्थ[6]कुम्भजलविनियोगस्याग्रे 'चतुर्भिः कलसै'रित्यादिना[7] वक्ष्यमाणत्वात् ।

शुक्लमाल्याम्बरधरः सर्वाभरणभूषितः ।
[8][ इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः ॥१०॥
नमो हिरण्यगर्भाय हिरण्यकवचाय च ।
सप्तलोकसुराध्यक्ष जगद्धात्रे नमो नमः] ॥११॥
भूर्लोकप्रमुखा लोकास्तव गर्भे व्यवस्थिताः ।
ब्रह्मादयस्तथा देवा नमस्ते विश्वधारिणे ॥१२॥
नमस्ते भुवनाधार नमस्ते भुवनाश्रय[9] ।
नमो हिरण्यगर्भाय [10]गर्भे यस्य [11][ पितामहः ॥१३॥
यतस्त्वं [12]सर्वभूतात्मा भूते भूते ] व्यवस्थितः ।
तस्मान्मामुद्धराशेषदुःखसंसारसागरात् ॥१४॥
[13]एवमामन्त्र्य तन्मध्यमाविश्यास्त उदङ्मुखः ।
मुष्टिभ्यां परिसंगृह्य धर्मराजचतुर्मुखौ ।
जानुमध्ये शिरः कृत्वा [14]तिष्ठेदुच्छ्वासपञ्चकम् ॥१५॥

---

1 I. O. च विधानेन ; A विधानेन
2 I. O. omits कृष्ट
3 I. O. ०वर्णेन
4 I. O. स्नानस्नापिते ; A स्नाने स्नापितो
5 A कुण्डल०
6 I. O. कुण्ड०
7 I. O. omits ना
8 A omits the bracketed portion.
9 Both I. O. and A भुवनाश्रयः
10 I. O. ब्रह्मालोक
11 A omits the bracketed portion
12 I. O. नरभूतात्मा
13 I. O. एवमासद्य
14 A तिष्ठेदुच्छ्रायपङ्कजं, I. O. वेष्टेदुच्छ्रासपञ्चकं

गर्भाधानं पुंसवनं सीमन्तोन्नयनं तथा ।

कुर्युर्हिरण्यगर्भस्य ततस्ते द्विजपुङ्गवाः ॥१६॥

[ तत्तत्[1]संस्कारानुष्ठानाभिध्यानं कृत्वा तत्तत्संस्कारप्रधानमन्त्रान् [2]पठेयुरित्यर्थः ।

गीतमङ्गलघोषेण गुरुरुत्थापयेत्ततः । ][3]

जातकर्मादिकाः कुर्युः क्रियाः षोडश चापराः ॥१७॥

अत्रापि तत्तत्संस्काराभिध्यान[4]पूर्वकप्रधानमन्त्रपाठो बोद्धव्यः, संस्काराणां तदानीं[5] करणासम्भवात् ।

[6]सूच्यादिकञ्च गुरवे दत्त्वा मन्त्रमिमं पठेत्[7] ।

नमो हिरण्यगर्भाय [8][ब्रह्मगर्भाय वै नमः ।

चराचरस्य जगतो गृहभूताय] वै नमः ॥१८॥

माताहं जनितः[9] पूर्वं मर्त्यधर्मामरोत्तम[10] ।

त्वद्गर्भसम्भवा[11]दिव दिव्यदेहो भवाम्यहम् ॥१९॥

चतुर्भिः कलसैर्भूयस्ततस्ते द्विजपुङ्गवाः ।

स्नानं कुर्युः प्रसन्नाङ्गाः[12] सर्वाभरणभूषिताः ॥२०॥

कलसैरिति होमकुण्डसमीपस्थैः । कुर्युः कारयेयुः ।

[13]देवस्य त्वेतिमन्त्रेण स्थितस्य कनकासने ।

अद्य जातस्य तेऽङ्गानि [14]अभिषेक्ष्यामहे वयम् ।

दिव्येनानेन वपुषा [ चिरं जीव ][15] सुखी भव ॥२१॥

कनकासने स्थितस्य [16]कनकमयासनोपविष्टस्य । [17]'देवस्य त्वे'ति मन्त्रेण, 'अद्य जातस्य तेऽङ्गानि' इत्यादि-[18]पुराणमन्त्रेण च स्नपनं कारयेयुः ।

1 I. O. संस्थाचा for संस्कारा
2 I. O. पठेदित्यर्थः
3 A the bracketed portion as तत्तत्संस्कारान् कन्यामुत्थाय यन्नतः
4 A °ध्यान°
5 I. O. तदानीं
6 A माल्यादिकञ्च
7 A जपेत्
8 A the bracketed portion as गर्भभूताय
9 A जनितं
10 A नरोत्तमः and I. O. नरोत्तमाः for °मरोत्तम
11 A °दिव for °दिव
12 B and I. O. प्रसन्नाङ्ग
13 A देवस्य
14 I. O. अभिषेक्ष्यामहे
15 I. O. चिरञ्जीव for the bracketed portion
16 A कनकासनो°
17 A omits it
18 I. O. °पूरक°

ततो हिरण्यगर्भं [1]तं तेभ्यो दद्याद्विचक्षणः ।
ते पूज्याः सर्वभावेन [2]बहवो वा तदाज्ञया ॥२२॥
[3]तत्रोपकरणं सर्वं गुरवे विनिवेदयेत् ।
पादुकोपानहौ छत्रं चामरासनभाजनम् ।

उपकरणमित्युपकरणत्वेन गुरवे देयमित्यर्थः ।

ग्रामं वा विषयं वापि यदन्य[4]द्दयितं भवेत् ॥२३॥
अनेन विधिना यस्तु पुण्येऽहनि निवेदयेत् ।
हिरण्यगर्भदानं स ब्रह्मलोके महीयते ॥२४॥
[5]पुरेषु लोकपालानां प्रतिमन्वन्तरं वसेत् ।
कल्पकोटिशतं यावद् ब्रह्मलोके महीयते ॥२५॥
कलिकलुष[6]-विमुक्तः पूजितः सिद्धसङ्घै-
रमरचमरमालावीज्यमानोऽप्सरोभिः ।
पितृशतमथ बन्धून् पुत्र[7]-पौत्राननेका-
नपि नरक[8]-निमग्नांस्तारयेदेक एव ॥२६॥
इति पठति [9][य इत्थं] [10]यः शृणोतीह सम्यङ्
मधुरिपुपुर-[11]लोके पूज्यते सोऽपि सिद्धैः ।
मतिमपि च जनानां[12] यो ददाति प्रियार्थं
विबुधपतिजनानां नायकः स्यादमोघम् ॥२७॥

प्रयोगः

अत्र यजमानः[13] समुत्पन्नहिरण्यगर्भमहादानदानेच्छः[14] तुलापुरुषमहादानलिखितं[15] खड्गचर्म[16]-मयढालसन्नाह-तुलास्थापनीयहरिप्रतिमासहित-सालङ्कार-तुला-वामहस्तग्राह्यसूर्यप्रति

---

1 A omits it
2 Corrected from M. P. and I. O. A बहुभो
3 A ततोपकरण
4 A भूषित for दयित
5 A दूरेषु
6 A ०कलुक०
7 A ०पौत्रान्धिकान्पि
8 A ०निमग्नास्तारकोदक
9 Corrected from M. P. I. O. इत्थ and A यद् for the bracketed portion
10 A omits it
11 A ०पुरा०
12 A जनाना
13 I. O. यजमान
14 A ०महादानेषु
15 A ०लिखित
16 I. O. ०मयाढ्न० and A ०मयातन० for ०मयढाल०

मा-बहिःसर्वसम्भारम्, अधिकत्वेनाभिमत[1]-शुद्धसुवर्णघटितं स्वाङ्गुलेन [2]द्वासप्तत्यङ्गुलोच्छ्रायमुपर्यधोऽष्टचत्वारिंशदङ्गुलविस्तारं सुदृढ[3]-तलकान्वितं [4]कुण्डं, तन्मुखाच्छादनार्थं पद्माकारं [5]कुण्डमुखवेष्टनेनाङ्गुलाधिकमुत्कृष्टमाणिक्यभूषितं [6]मुक्तास्रग्विभूषितं सौवर्णं[7] पिधानं, कुण्डगर्भस्थापनार्थमभिमतपरिमाणसुवर्णघटितं पद्मं, कुण्डपूरणार्थं घृतं क्षीरञ्च[8], कुण्डपार्श्व-[9]स्थापनार्थमभिमतसुवर्णघटित-[10][ दात्र-सूची ]-[11][ कुश नाल ]-करण्डोलिकाः, सौवर्ण-[13]पत्रोत्खाटितादित्यप्रतिमां, [14]नाभ्याच्छादनार्थं [14][सौवर्णपत्र-[15]रचितवस्त्राकारं, सौवर्णं यज्ञोपवीतं, दण्डं, कमण्डलुं, दाताद्यलङ्करणार्थं रत्नानि च, कुण्डाधःस्थापनार्थं तिलद्रोणं यजमानप्रथमस्नानार्थं तीर्थजलं सर्वौषधिञ्च, वामकरधारणार्थं ] हैमीं[16] चतुर्मुखब्रह्मप्रतिमां[17], गुरुदक्षिणार्थं काष्ठपादुकायुगोपानद्युग-[18]च्छत्रचामरासनभाजनानि चोत्पादयेत्। ततस्तुलापुरुषोक्त-[19]समयानामन्यतमस्य पूर्वतरदिने यजमानगुर्वृत्विग्जापकास्तुलापुरुष[20]-वद्धविष्यभोजनादिकं कृत्वा, निवेदनसङ्कल्पवाक्ययोस्तुलापुरुषपदस्थाने [21]हिरण्य-गर्भपदं प्रक्षिप्य यथायथं निवेदनं सङ्कल्पञ्च कुर्युः। अपरदिने च[22] यजमानस्तुलापुरुष-[23][वद्-गोविन्दा]-द्याराधनादिमधुपर्कदानान्तं कर्म[24] गोविन्दाद्यभ्यर्चन-ब्राह्मणानुज्ञापन-[25]-दानसङ्कल्प-पुण्याहादिवाचन-वरणवाक्येषु तुलापुरुषपदस्थाने हिरण्यगर्भपदं प्रक्षिप्य कुर्यात्। ततो गुर्वृत्विग्-[26][यजमानजापका उपवसेयुः। अपरदिने ] च कृतनित्यास्तुलापुरुषवदग्निस्थापनादि मध्यब्राह्मणवाचनान्तं कर्म यथायथं कुर्युः। एवञ्च मध्यब्राह्मण-[27]वाचनान्तं कर्म तुलापुरुष-

---

1 I. O. and A स्वदन् for शुद्ध
2 A द्वामप्ताङ्गुलो०
3 I. O. ०तलिकान्वितं, A ०तुलिकान्वितं
4 A omits it
5 A कण्ड
6 A omits it
7 A सौवर्णा
8 A क्षीरं जरसामग्रीञ्च, B क्षीरार्जनसामग्रीं, I. O. क्षीरार्जनसामग्रीञ्च
9 A कुण्डपार्श्व
10 A दातवयचि for the bracketed portion
11 I. O. कुशजाल and A कलम for the bracketed portion
12 Both I. O. and A ०ङ्कटिता०
13 I. O. नाभुभ्याच्छादनार्थं
14 A omits the bracketed porportion
15 I. O पात्र for पत्र
16 A हैमां, I. O. हैम
17 I. O. ०प्रतिमा
18 I. O. ०पानयुग०, A ०पानद्व०
19 A ०समानानाना० for ०समयाना०
20 A ०पुरुषा०
21 A हिरण्यगर्भ
22 I. O. omits it
23 A वद्गोविन्दा for the bracketed portion
24 Both I. O. and A omit it
25 A ०ज्ञापकं
26 A यजमानाद्यपरे for the bracketed portion
27 A ०वचनान्तं

[1]प्रोक्तमनुसन्धायानुष्ठातव्यम् । [2]तत ऋत्विजः [3]सपिधानं हेम -[4]कुण्डमानीय प्रधान-वेदिकायां लिखितचक्रोपरि [5]तिलद्रोणं विकीर्य [6][तत्रारोपयेयुः ] । [7][कुण्डमध्ये हैमं पद्मं निधाय ] [8][यजमानोपवेशनयोग्यं यथा भवति, तथा कुण्डं घृतक्षीराभ्यां पूरयेयुः । कुण्ड-पार्श्वतश्च[9] हैमानभिमतरत्नयुता[10][ न् दात्र-]सूची-नाल-पिटक-बर्हि-रादित्यप्रतिमा-[11]नाभ्यावरण-यज्ञोपवीत-दण्डकमण्डलून् संस्थापयेयुः । ] ततो यजमानं स्वस्ववेदस्थाभि-षेक-[12] मन्त्रैः सर्वौषधिमिश्रजलेन[13]स्नपयेयुः । तदा च मङ्गल-[14][तूर्यवन्दि-]घोषान् कारयेयुः ।

[15][ततो यजमानः] शुक्लमाल्याम्बरधरो धृतसर्वालङ्कारः पुष्पाञ्जलिमादाय 'नमो हिरण्य-गर्भाये'त्यादि —'दुःखसंसारसागरा'दित्यन्त-[16]मन्त्रैर्हिरण्यगर्भमामन्त्र्य पुष्पाञ्जलिनार्चयेत् । ततो दक्षिणक्रमेण हस्तद्वय-[17]धृतहैमधर्मराज-[18]चतुर्मुखप्रतिमो [19]हिरण्यगर्भमध्यं प्रविश्योद-ङ्मुख उपविश्य जानुमध्यार्पितशिरा[20] [21]उच्छ्वासपञ्चकं यावत्तिष्ठेत् । तदा च[22] ब्राह्मणाः पिधानेन [23]कुण्डमाच्छाद्य हिरण्यगर्भस्य गर्भाधानपुंसवनसीमन्तोन्नयनसंस्कारानभिध्याय[24] स्वस्वगृह्योक्तांस्तत्तत्संस्कारप्रधानमन्त्रान् पठेयुः । ततो गुरुर्मङ्गलतूर्यगीतवन्दिघोषेषु सत्सु [25]हिरण्यगर्भस्थं यजमानं करे [26]विधृत्योत्थापयेत् । तत [27][ऋत्विजो हिरण्यगर्भा-न्निर्गतस्य] यजमानस्य संस्कारार्थं स्वस्वगृह्यविहितान् जातकर्मादिषोडशसंस्कारानभिध्याय तत्तत्संस्कारप्रधानमन्त्रान् पठेयुः ।

1 A ०गन्ध०
2 A तत्र
3 A समिधादान
4 A कुण्डसमानीय
5 A तिलाद्रोणं
6 A तत्र for the bracketed portion
7 I. O. omits the bracketed portion. A गुर्ब्विग् for it
8 I. O. omits the bracketed portion
9 A कुण्डपार्श्वतः
10 A दगात्र for the bracketed portion
11 A मासादावरण
12 Both I. O. and A omit षक
13 I. O. ०जलकुम्भचतुष्टयेन
14 A पूर्ण्ववङ्ग for the bracketed portion
15 A ततश्च
16 A सागरेत्यादि०
17 I. O. ०द्वयं
18 I. O. ०हिरण्यगर्भप्रतिमो, A चतुर्मुखप्रतिमा
19 A हिरण्यमध्ये
20 I. O. ०शिर
21 I. O. उच्छ्वास०, A उच्छ्वास०
22 I. O. ब्राह्म after this
23 I. O. कुम्भ०
24 A omits ध्याय
25 A हिरण्यस्थ
26 A विधृत्योपयेत्
27 A reads the bracketed portion as ऋत्विक्हिरण्यगर्भान्वितस्य

संस्काराश्च षोडश ऋग्वेदे—जातकर्म नामकरणं निष्क्रमणम् अन्नप्राशनं चूडाकरणम् उपनयनं त्रीणि वेदव्रतानि स्नानं विवाहः देवपितृमनुष्यभूतब्रह्मणां पञ्चमहायज्ञाः। यजुर्वेदे तु नामकरणं नास्ति, [1]चत्वारि वेदव्रतानीति [2]विशेषः। सामवेदे नामकरणमस्ति, अन्नप्राशनं [3]नास्तीति यजुर्वेदाद्विशेषः। अथर्ववेदे—जातकर्म निष्क्रमणम् अन्नप्राशनं गोदानम् उपनयनं सावित्रीव्रतं [4]वेदव्रतं सावित्रीव्रतविसर्जनं [5]वेदव्रतविसर्जनं समावर्तनं विवाहः पञ्चमहायज्ञाश्चेति।

ततो यजमानः पूर्वोक्तं दानादिकं गुरवे प्रतिपादयेत्। ततो 'नमो हिरण्यगर्भाय [6]ब्रह्मगर्भाय वै नमः' इत्यादि मन्त्रद्वयं [7]जपेत। तत ऋत्विजोऽ[8]ष्टौ वरणादिलब्धालङ्कारैरलङ्कृताः कनकमयासनोपविष्टं यजमानं 'देवस्य त्वे'ति वेदचतुष्टयस्थमन्त्रेण 'अद्य जातस्य तेऽङ्गानी'त्यादिना च पुराणमन्त्रेण कुण्डसमीपस्थकुम्भचतुष्टयजलेन स्नपयेयुः।

ततो यजमानः शुक्लमाल्याम्बरधरो धृतसर्वालङ्कारो गुर्वृत्विक्प्रमुखनानाब्राह्मणेभ्यो हिरण्य-[9]गर्भमुत्सृज्य दद्यात्। तद्यथा—[10]ॐ अद्य यथासम्भवगोत्रनामभ्यो गुर्वृत्विक्प्रमुखब्राह्मणेभ्यो मत्स्यपुराणोक्तहिरण्यगर्भ-[11]महादानदानफलप्राप्तिकामोऽहमेतं[12] हिरण्यगर्भं[13] ददानि। प्रतिग्रहीतारः स्वस्त्यत्युक्त्वा सावित्रीं पठित्वा हिरण्यगर्भोऽयं विष्णुदैवतः' इत्युक्त्वा[14] यथाशाखं कामस्तुतिं पठेयुः।

ततो गुरवे पादुकोपानच्छत्रचामरासन-[15]भाजनग्रामान् दक्षिणां दद्यात्। तद्यथा—[16]ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामेतानि पादुकोपानच्छत्रचामरासनभाजनानि [17]इयदुत्पत्तियोग्यांश्च भूमिं ददानि। स्वस्तीति गुरुर्वदेत्।

[18]तत ऋत्विग्भ्यो दक्षिणादानम्। तद् यथा—[19]ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं

1 A चत्वदि, I. O. रवानि
2 I. O. शेष:
3 A नास्ति
4 I. O. देवव्रत
5 I. O. इदं व्रतविसर्जनं, A omits it
6 I. O. विश्वगर्भाय, A. गर्भभूताय
7 I. O. पठेत्
8 I. O. क ष्णा for ऽष्टौ
9 A omits गर्भं
10 A omits it
11 Both I. O. and A omit महादान
12 A ०कामोमेत
13 A हिरण्य
14 I. O. ०दैवतमित्युक्त्वा
15 I. O. omits भाजन
16 A omits it
17 A यदुत्पत्ति०
18 A ततो
19 A omits it

युष्मभ्यमहं दक्षिणा[1]मियदुत्पत्तियोग्यां भूमिम् एतानि च[2] रत्नानि ददानि। स्वस्तीति प्रत्येकमृत्विजो ब्रूयुः। ततो गुर्वृत्विजः स्वं स्वं सुवर्णभागं स्पृशेयुः। यद्वा गुरवे हिरण्यगर्भस्यार्द्धम् [3]ऋत्विग्भ्यश्चार्द्धं दद्यात्। तत्र च—ॐ अद्यामुकामुकसगोत्रेभ्योऽमुकामुक-[4]वेदामुकामुकशाखाध्यायिभ्योऽमुकामुक-[5]देवशर्मभ्यो युष्मभ्यं मत्स्यपुराणोक्तभागव्यवस्थया तिलद्रोणारोपितं[6] फल-[पुष्पोपशोभितं पञ्चवर्ण]-[7]वितानकसहितमिति च पूर्वदानवाक्याद्विशेषः।

ततो यजमानस्तुलापुरुष-[8]वज्जापकेभ्यो दक्षिणादानं दीनानाथादितर्पणं ब्राह्मणवाचनं [9]त्वरया यथायथं हिरण्यगर्भप्रतिपादनञ्च कुर्यात्।

इति हिरण्यगर्भमहादानं समाप्तम्[10]।

---

1 A ॰मिदं यदुत्पत्तियोग्यां
2 A omits it
3 A omits it
4 A omits वेदामुकामुक
5 I. O. omits देव
6 I. O. ॰रोपितां
7 A पुष्प for the bracketed portion
8 A ॰जापकेभ्यो
9 A कृत्वा
10 I. O. omits it

## तथा ब्रह्माण्डमहादानम्। ( मत्स्यपुराणम्—२७६अः)

अथातः संप्रवक्ष्यामि ब्रह्माण्डविधिमुत्तमम्।
[1]यच्छ्रेष्ठं सर्वदानानां महापातकनाशनम्॥१॥
पुण्यं दिनमथासाद्य तुलापुरुषदानवत्।
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम्।
लोकेशावाहनं तद्वदधिवासनकं तथा॥२॥
[2]कुर्याद्विंशपलादूर्द्ध्वमासहस्रा[3]च्च शक्तितः।
शकल[4]-द्वयसंयुक्तं ब्रह्माण्डं[5] काञ्चनं बुधः॥३॥
दिग्गजाष्टसमायुक्तं षड्वेदाङ्गसमन्वितम्।
[6]लोकपालाष्टकोपेतं मध्यस्थितचतुर्मुखम्।
शिवाच्युतार्कशिखरमुमालक्ष्मीसमन्वितम्॥४॥

शिवाच्युतार्कशिखरम् ऊर्द्ध्वभागोत्खाटितशिवाच्युतार्कमूर्तिम्[7]।

वस्वादित्यमरुद्गर्भं महारत्नसमन्वितम्।
वितस्तेरङ्गुलशतं यावदायामविस्तरम्॥५॥

वस्वादित्यमरुद्गर्भं गर्भोत्खाटितवस्वष्टक-द्वादशादित्य-सप्तमरुद्गणमूर्तिम्[8]। महारत्नसमन्वितम् उत्कृष्टरत्नसमन्वितम्। वितस्तेरङ्गुलशतं यावदित्यनेन वितस्तेरारभ्याङ्गुलशतं यावत् स्वेच्छया दैर्घ्यविस्ताराभ्यां ब्रह्माण्डं [9]कर्तव्यमित्यर्थः।

कौषेयवस्त्रसंवीतं तिलद्रोणोपरि न्यसेत्।
तथाष्टादशधान्यानि समन्तात् [10]परिवारयेत्॥६॥

अष्टादश[11][धान्यानि प]रिभाषोक्तानि।

पूर्वेणानन्तशयनं[12] प्रद्युम्नं पूर्वदक्षिणे।
प्रकृतिं दक्षिणे पार्श्वे सङ्कर्षणमतः परम्॥७॥

1 I. O. यच्छ्रेष्ठं
2 I. O. कुर्याद्विंशत्पला०
3 A ०स्रा:
4 A कलस०, I. O. कलश०
5 A ब्रह्माण्ड
6 A लोकपालो०
7 I. O. ०मूर्त्ति:, A ०मूर्त्ति
8 I. O. ०मूर्त्ति:
9 Both I. O. and A omit कर्तव्यम्
10 I. O. परिकल्पयेत्
11 A omits the bracketed portion
12 A ०शायिनं

[1][अनन्तशयनं जलशायिनम् ।]

पश्चिमे चतुरो वेदाननिरुद्धमतः परम् ।

[2][अग्निमुत्तरतो हैमं वासुदेवमतः]परम् ॥८॥

समन्तात् [3]गुडपीठस्थानर्चयेत् काञ्चनान् बुधः ।

स्थापयेद्वस्त्रसंवीतान् पूर्णकुम्भान् दशैव तु ॥९॥

काञ्चनान् काञ्चनपलोत्खाटितान् ।

दशैव धेनवो देयाः [4]सहैमाम्बरदोहनाः ।

पादुकोपानहच्छत्रचामरासनदर्पणैः ।

भक्ष्य-[5]भोज्यान्नदीपेक्षुफलमाल्यानुलेपनैः ॥१०॥

भक्ष्यं पिष्टकं मूलञ्च, फलस्य [6]स्वशब्दोपात्तत्वात् । [7]एतैश्च पादुकादिभिः सहितः दश धेनवो देयाः पार्श्वतः स्थाप्या इत्यर्थः ।

[8]होमाधिवासनान्ते च स्नापितो वेदपुङ्गवैः ।

इममुच्चारयेन्मन्त्रं त्रिधा कृत्वा प्रदक्षिणम् ॥११॥

[9]होमाधिवासनान्ते इति [10]पूर्वमेव देवतारोपणरूपस्याधिवासनस्योक्तत्वाद्धिरण्यगर्भादिषु तथा दर्शनाच्च होमं लोकपालाद्यावाहनपूजा-[11][पर्यन्तं समाप्याधिवासनं] देयद्रव्यस्य वेद्युप-[12]रिस्थापनम् । ततः स्नापितो मन्त्रं पठेदिति सम्बन्धो बोद्धव्यः ।

नमोऽस्तु विश्वेश्वर विश्वधाम

जगत्सवित्रे भगवन्नमस्ते ।

[13]सप्तर्षिलोकामरभूतलेश

[14]गर्भेण सार्द्धं वितराभि-[15]रक्षाम् ॥१२॥

---

1 A अनन्त शायिन for the bracketed portion

2 I. O. अत: for the bracketed portion

3 I. O. पीठस्थानमच येत्, A पीठस्थानार्च येत्

4 I. O. सहेमाम्बरदोहना:, A कृत्विग्भ: सुरदोहना:

5 Corrected from M. P. A. B and I. O. भोजन for भोज्यान्न

6 A मूलशब्दोपात इति

7 A तैश्च

8 A होमादि०

9 A होमादि०

10 A पूर्व only

11 Both I. O. and A पर्यन्तशयनाधिवासनं for the bracketed portion

12 A omits रि

13 Both I. O. and A सप्तर्षि-लोकासनभूतलेश

14 I. O. adds गर्भेश before this

15 A भि for भि

ये दुःखितास्ते सुखिनो भवन्तु
[1]प्रयान्तु पापानि चराचराणाम् ।
[2]त्वद्दानशस्त्राहतपातकानां
ब्रह्माण्डदोषाः प्रलयं व्रजन्तु ॥१३॥
एवं [3]प्रणम्यामरविश्वगर्भं
दद्याद्द्विजेभ्यो दशधा विभज्य ।
[4]भागद्वयं तत्र गुरोः प्रकल्प्य
समं भजेच्छेषमतः क्रमेण ॥१४॥
स्वल्पेषु होमं गुरुरेक एव
कुर्यादथैकाग्निविधानयुक्त्या[5] ।
स एव [6]सम्पूज्यतमोऽल्पवित्तै-
र्यथोक्तवस्त्राभरणादिकेन ॥१५॥

स्वल्पेषु प्रचुरदानासमर्थेषु दातृषु सतसु गुरुरेक एव पूजनीयः ।

इत्थं य एतदखिलं पुरुषोऽत्र कुर्याद्
ब्रह्माण्डदानमधिगम्य महद्विमानम् ।
[7]निर्धूतकल्मष-विशुद्ध[तनुर्मुरारे][8]-
रानन्दकृत् पदमुपैति सहाप्सरोभिः[9] ॥१६॥
सन्तारयेत् पितृपितामहपुत्रपौत्र-
[10]बन्धुप्रियातिथिकलत्र-[11]शताष्टकं सः ।
ब्रह्माण्डदान-[12]शकलीकृतपातकौघ-
मानन्दयेच्च जननीकुलमप्यशेषम् ॥१७॥
इति पठति शृणोति वा य एवं
सुरभवनेषु गृहेषु धार्मिकाणाम् ।

1 I. O. omits it
2 A दुर्गानशास्त्राहत०
3 A प्रणम्यमेववर्षिगर्भ
4 A भागवयं
5 A ०युक्त्या
6 A पूज्यश्च तमाल्पवित्त०
7 A निर्द्धूत०
8 A ममरारे for the bracketed portion
9 A सहाप्सरोभिः
10 A मातृ०
11 A ०शताष्टकं
12 Both I. O. and A ०सकली०

मतिमपि च ददाति [1]मोदतेऽसा-
[2]वमरपतेर्भवने सहाप्सरोभिः ॥१८॥

प्रयोगः

अत्र यजमानः समुपजातब्रह्माण्डमहादानदानेच्छस्तुलापुरुषमहादानलिखितं खड्गचर्ममय-ढाल[3]सन्नाह—तुलास्थापनीयहरिप्रतिमा—[4][सालङ्कारतुला]—हस्तग्राह्यप्रतिमा—वहिःसर्व-सम्भारम्, अधिकत्वेन विंशतिसंख्यपलेभ्यः ऊर्द्ध्वं सहस्रपलावधि अभिमतकाञ्च[नघटितं][5], दैर्घ्यप्रस्ताराभ्यां[6] वितस्तिमारभ्याङ्गुलशतपर्यन्तम्, सम्पुटमेलनीयखण्डद्वयरूपम्,[7] अन्तरुत्-खाटितचतुर्मुखब्रह्म-[8]वस्वष्टक-द्वादशादित्य-[9]सप्तमरुद्गणप्रतिमं, वहिः स्वस्वदिक्क्रमोत्-खाटितैरावतादि-[10] दिग्गजाष्टकेन्द्रादिलोकपालप्रतिमम्, अभिमत-[11] स्थानपङ्क्तयुत्खाटित-शिक्षाकल्पनिरुक्तच्छन्दोज्योतिषव्याकरणरूप-वेदाङ्गषट्कप्रतिमम्, उपरिखण्डोर्द्ध्व-[12]भागोत्-खाटित-शिवाच्युतार्कोमालक्ष्मीप्रतिमम्, अभीष्टोत्कृष्टरत्नखचितं ब्रह्माण्डं ; ब्रह्माण्ड-[13][पूर्वादि-दिगत्र]स्थापनार्थं काञ्चनान्तरविरचितपत्रोत्खाटित-जलशायि-प्रद्युम्न-प्रकृति-सङ्कर्षण-वेदचतु-ष्टयानिरुद्धाग्निवासुदेवप्रतिमाः. जलशाय्यादिप्रतिमास्थापनार्थमष्टौ गुडपिण्डान्, ब्रह्माण्डा-च्छादनार्थं कोषकारतन्तु[14]-निर्मितं वस्त्रं, ब्रह्माण्डस्थापनार्थं तिलद्रोणं, ब्रह्माण्ड-[15]पार्श्व-स्थापनार्थमष्टादश[16][धान्यानि, दश]कुम्भान्, तद्वेष्टनार्थं [17]दश वस्त्राणि, ब्रह्माण्डपार्श्व-[18]-स्थापनार्थं दश धेनूः, तदलङ्करणार्थं दश हैमश्रृङ्गयुगवस्त्राणि, उपदोहनार्थं दशकांस्यपात्राणि, ब्रह्माण्ड-[19]पार्श्वस्थापनार्थञ्च काष्ठमयपादुकायुगोपानद्युगच्छत्रचामरासनदर्पणपिष्टकसामग्रयन्न-सामग्री-[20] ऋतुफलमूलमाल्यानुलेपनसामग्रीरुत्पादयेत् । ततस्तुलापुरुषोक्तसमयानामन्यतमस्य

1 I. O. omits मोदतेऽ
2 Both I. O. and A ०रमर०
3 I. O. मयवर्म सह तुला and मयातुल for मयढाल
4 A साला
5 I. O. omits the bracketed portion
6 A दैर्घ्यप्रस्ताभ्यां
7 A ०द्वयम्
8 A. O. सुष्टक and A ष्टट
9 I. O. omits सप्त
10 A omits दि
11 A स्थापनं०
12 I. O. भागानुत्खाटित, A भागादुत्खाटित
13 A reads the bracketed portion as पूर्व दिशि
14 A न्तु for तन्तु
15 Both I. O. and A omit पार्श्व
16 A omits the bracketed portion
17 A अष्टादश
18 I. O. omits पार्श्व
19 I. O. omits पार्श्व
20 I. O. adds दीपसामग्री after this

पूर्वतरदिने यजमान-[1]गुर्वृत्विग्जापकास्तुलापुरुषवद्धविष्यभोजनादिकं[2] कृत्वा, निवेदनसङ्कल्पवाक्ययोस्तुलापुरुषपदस्थाने ब्रह्माण्डपदं प्रक्षिप्य यथायथं निवेदनं सङ्कल्पञ्च कुर्युः। ततोऽपरदिने यजमानस्तुला-[3]पुरुषवद् गोविन्दाद्याराधनादि-मधुपर्कदानान्तं[4] कर्म[5] गोविन्दाद्य[6]र्चनब्राह्मणानुज्ञापन[7]-दानसङ्कल्प-पुण्याहादिवाचन-[8]वरणवाक्येषु तुलापुरुषपदस्थाने ब्रह्माण्डपदं प्रक्षिप्य कुर्यात्। ततो गुर्वृत्विग् यजमानजापका उपवसेयुः। अपरदिने च कृतनित्या[9]स्तुलापुरुषवदग्निस्थापनादि-मध्यब्राह्मणवाचनान्तं कर्म यथायथं कुर्युः। एवञ्च मध्यब्राह्मणवाचनान्तं कर्म तुलापुरुषग्रन्थमनुसन्धायानुष्ठातव्यम्। तत ऋत्विजः पूर्वघटितं यथोक्तरूपं सम्पुटमिलित-[10]शकलद्वयनिर्मितं ब्रह्माण्डमानीय, प्रधानवेद्यां लिखितचक्रोपरि तिलद्रोणं विकीर्य, [11]तदुपरि स्थापयित्वा, कौषेयवस्त्रेणाच्छाद्य, ब्रह्माण्डस्य [12]सर्वपार्श्वेष्वष्टादशधान्यानि आरोपयेयुः। ततो ब्रह्माण्डस्य पूर्वादिक्रमेण गुड-[13]पिण्डानामुपरि पूर्वोक्त-[14]जलशाय्यादिप्रतिमाः स्थापयेयुः। गुरुश्च ताः[15] क्रमेणैव प्रणवादिचतुर्थ्यन्तेन नमोऽन्तेन स्वनाममन्त्रेण प्रत्येकं पूजयेत्। तत ऋत्विजो ब्रह्माण्डपार्श्वे[16] वस्त्रवेष्टितग्रीवान् दश पूर्णकुम्भान्, [17]हेमशृङ्गीर्वस्त्राच्छादिताः सकांस्यदोहना दश धेनूः, पादुकाद्युपकरणञ्चा[18]रोपयेयुः। ततो मङ्गलगीतवाद्यवन्दिघोषेषु सत्सु कुण्डसमीपस्थकुम्भचतुष्टयजलेन यजमानं स्नापयेयुः।

ततो यजमानः शुक्लमाल्याम्बरधरो धृतसर्वालङ्कारः पुष्पाञ्जलिमादाय ब्रह्माण्डं त्रिः प्रदक्षिणीकृत्य 'नमोऽस्तु विश्वेश्वरे'त्यादि मन्त्रद्वयं पठित्वा पुष्पाञ्जलिनाभ्यर्च्य प्रणम्य [19]गुर्वृत्विग्भ्यो दद्यात्। [20][ तद् यथा—ॐ ] अद्यामुकामुकसगोत्रेभ्योऽमुकामुकवेदामुकामुकशाखाध्यायिभ्योऽमुकामुकदेवशर्मभ्यो युष्मभ्यं मत्स्यपुराणोक्त-ब्रह्माण्डमहादान-[21]दानफलप्राप्तिकामोऽहं मत्स्यपुराणोक्तभागव्यवस्थया [22]एतन्महारत्नभूषितं कौषे[23]-यवस्त्रसंवीतं तिल-

1 I. O. यजमान:
2 Both I. O. and A ०भोजनादि
3 I. O. पुरुषवद् and A पुरुषपद्वद्
4 A ०दानाचरणान्तं
5 Both I. O. and A omit it
6 A ०भ्यर्चन
7 A ०ख्यापन
8 A वरण twice
9 A कृतनित्यकृत्य०
10 Both I. O. and A ०सकल०
11 Both I. O. and A तत्रोपरि
12 I. O. सव्यपार्श्वं अष्टादश धान्यानि
13 I. O. ०पिष्टा०
14 A ०जलशय्यादि०, I. O. ०कूर्मेगर्य्यादि०
15 I. O. भाव
16 A ०पार्श्व
17 A हैमवस्त्राच्छादितान्
18 A omits च
19 A ऋत्विग्भ्यो
20 A omits the bracketed portion
21 A omits दान
22 A एतं महा०
23 I. O. adds महा before वस्त्र

द्रोणस्थापितमष्टादशधान्यसहितं गुडपीठस्थकाञ्चनानन्तशयन[1]-प्रद्युम्न-प्रकृति-सङ्कर्षण-वेद-चतुष्टयानिरुद्धाग्नि-वासुदेव-प्रतिमासहितं वस्त्रसंवीतपूर्णकुम्भदशक[2]-हेमशृङ्गवस्त्राच्छादित-सकांस्य[3]-दोहनधेनुदशक[4]-सहितं पादुकोपानच्छत्रचामरासनदर्पणभक्ष्यभोजनदीपेक्षुमाल्यफलानुलेपन-पुष्पफलोपशोभित-[5]पञ्चवर्ण-वितानकसहितं ब्रह्माण्डं ददानि ।

प्रतिग्रहीतारः स्वस्तीत्युक्त्वा सावित्रीं पठित्वा, ब्रह्माण्डमिदं विष्णुदैवतमित्युक्त्वा यथाशास्त्रं कामस्तुतिं पठेयुः[6] । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं युष्मभ्यमहं दक्षिणामियदुत्पत्तियोग्यां भूमिमेतानि च रत्नानि ददानि, प्रतिग्रहीतारः स्वस्तीत्युक्त्वा ब्रह्माण्डं स्पृशेयुः । ततस्तुलापुरुषवज्जापकेभ्यो दक्षिणादानं दीनानाथादितर्पणं पुण्याहादिवाचनञ्च [7][कृत्वा, ब्रह्माण्डं] दशधा विभज्य, भागद्वयं गुरवे, ऋत्विग्भ्यश्चाष्टौ भागान् त्वरया प्रतिपादयेत् । यथोक्तस्वल्पब्रह्माण्डदाने तु [8]गुरुरेकाग्निवत् [9]सर्वम् ऋत्विगादिकर्तव्यं स्वगृह्योक्तविधिना शान्तिकाध्यायजपवह्निः[10] कुर्यात् । [11]जापकास्तु [12]पूर्ववदेव कार्याः । कुशमयश्च ब्रह्मा कार्यः । तदा च यजमानो गुरवे [13]तत् [14][सर्वं महादानं] सम्प्रदानैकवचनोहेन दद्यात् ।

इति ब्रह्माण्डमहादानं[15] समाप्तम्[16] ।

---

1 A ग्राग्नि
2 A द्वय
3 A omits दोहन
4 A द्वय
5 I. O. ॰रूप॰
6 A पठेत्
7 A omits the bracketed portion
8 I. O. गुरवेवैकाग्निवत्, A गुरवेकाग्निवत्
9 A सर्व
10 I. O. शान्तिकाध्याजपं च, A शान्तिकध्याय जपं वह्निः
11 A जापकास्तु, I. O. याजकास्तु
12 A सर्वत्रादरा:
13 A omits it
14 A reads the b. p. as सर्वमहादान
15 A ब्रह्माण्डदानमाहात्म्यं
16 I. O. omits it

**तथा कल्पपादपमहादानम्।** ( मत्स्यपुराणम्—२७७ अः )

कल्पपादपदानाख्यमतः परमनुत्तमम् ।
महादानं प्रवक्ष्यामि सर्वपातकनाशनम् ॥१॥
पुण्यं दिनमथासाद्य तुलापुरुषदानवत् ।
पुण्याहवाचनं कृत्वा लोकेशावाहनं तथा ॥२॥
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम् ।
काञ्चनं कारयेद्वृक्षं नानाफलसमन्वितम् ॥३॥
नानाविहगवस्त्राणि भूषणानि च कारयेत् ।
शक्तितस्त्रिपलादूर्द्ध्वमा[1]-सहस्रात् प्रकल्पयेत् ॥४॥
अर्द्ध-[2]क्लृप्तं सुवर्णस्य कारयेत् कल्पपादपम् ।
गुडप्रस्थोपरिष्टाच्च [3]सितवस्त्रयुगावृतम् ।
अर्द्ध-[4]क्लृप्तं यावदुपात्तसुवर्णस्यार्द्धेन निर्मितम् ।
ब्रह्मविष्णुशिवोपेतं पञ्चशाखं सभास्करम् ॥५॥
कामदेवमधस्ताच्च सकलत्रं प्रकल्पयेत् ।
सन्तानं [5]पूर्वतस्तद्वत् [6]तुरीयांशेन कल्पयेत् ।
मन्दारं दक्षिणे पार्श्वे श्रिया सार्द्धं घृतोपरि ॥६॥

सन्तानं [7]पूर्वतस्तद्वदिति [8]गुडप्रस्थस्थं सितवस्त्रयुगावृतमित्यर्थः। कामदेवमधस्ताच्चेति सन्तानवृक्षस्याधस्तात् सकलत्रं कामदेवं प्रकल्पयेदिति योजना[9], मन्दारादिषु एकैकदेवतासम्बन्धश्रुतेः ।

पश्चिमे पारिभद्रन्तु[10] सावित्र्या सह जीरके ।
सुरभीसंयुतं तद्वत्[11] तिलेषु हरिचन्दनम् ।
तृतीयांशेन कुर्वीत सौम्येन फलसंयुतम् ॥७॥

---

1 I. O. ०सा०
2 A ०क्लृप्ता
3 A वसित०
4 A ०क्लृप्तं
5 A पूर्व्ववत for पूर्वत
6 I. O. बहुवीआंशेन
7 A पूर्व्ववत् तद्वत् इति
8 A गुडप्रस्थं
9 A योजनं
10 I. O. पारिभद्रन्तु. M. P. पारिजातन्तु
11 A तत्त,

क्षौमेयवस्त्रसंयुक्तानिन्नुमाल्यफलान्वितान् ।

तृतीयांशेन सन्तानघटनावस्थितसुवर्णतृतीयभागेन । सौम्येन उत्तर[1]-दिग्भागेन ।

तथाष्ट[2] पूर्णकलसान् पादुकासनभाजनान्[3] ॥८॥

दीपि[4]कोपानहच्छत्रचामरासनसंयुतम् ।

पादुकासनभाजनान् पादुकासनभाजनसहितानित्यर्थः । आसनपदं चात्र कलसावस्थानो-चितासनपरं, चामरासनसंयुतमिति[5] पुनरासनपदश्रवणात् ।

फलपङ्क्तियुतं तद्वदुपरिष्टा[6][द् वितानकम् । ]

तथाष्टादशधान्यानि समन्तात् परिकल्पयेत् ॥६॥

होमाभिवासनान्ते तु स्नापितो वेदपुङ्गवैः ।

त्रिः प्रदक्षिणमावृत्य मन्त्रमेतमुदीरयेत् ॥१०॥

नमस्ते कल्पवृक्षाय चिन्तितार्थप्रदायिने[7] ।

विश्वम्भराय देवाय नमस्ते विश्वमूर्त्तये[8] ॥११॥

यस्मात्त्व[9]मेव विश्वात्मा ब्रह्मा स्थाणुर्दिवाकरः ।

[10]मूर्तामूर्तं परं बीजमतः पाहि सनातन ॥१२॥

त्वमेवामृतसर्वस्वमनन्तपुरुषोऽव्ययः ।

सन्तानाद्यैरुपेतः सन्[11] पाहि संसारसागरात् ॥१३॥

एवमामन्त्र्य तं [12]दद्यात् गुरवे कल्पपादपम् ।

चतुर्भ्यश्चापि ऋत्विग्भ्यः सन्तानादीनि कल्पयेत् ॥१४॥

एतेन चत्वार [13]एवर्त्विजः कर्तव्याः, कुशमयाश्चत्वारो ब्रह्माण इत्युक्तं [14]भवति ।

स्वल्पेष्वेकाग्निवत् कुर्याद् [15]गुरुरेवाभिपूजितः ।

न वित्तशाठ्यं कुर्वीत न च विस्मयवान् भवेत्[16] ॥१५॥

1 I. O. ०द्दिग्विभागेन

2 A तथा

3 A ०भाजाम

4 A द्वीप०

5 A omits इति

6 A तिलानां and I. O. त्रिलानां for the bracketed portion

7 Corrected from M. P. A चिन्तितामप्रदायकः, B चिन्तिभानु प्रदाय ते, I. O. चिन्तितार्थप्रदाय च

8 A ०मूर्त्तिने

9 A ०नुमेव, I. O. ०त्वामेव

10 Both I. O. and A मूर्त्तामूर्त्त परं.

11 I. O. स

12 A त्रिदाद्

13 I. O. एव चर्त्विजः, A एवद्विजः

14 A सम्भवति

15 A गुरवैवाभिपूजितः, I. O. गुरवे ग्रातिपूजितः, M. P. गुरवे चाभि-पूजनम्

16 A नरः

[1][न च विस्मयवान्] इयन्मया दत्तमिति नाहङ्कारवान् भवेदित्यर्थः ।

अनेन विधिना यस्तु [प्रदद्यात् कल्पपादपम् ][2] ।
सर्वपापविनिर्मुक्तः सोऽश्वमेधफलं लभेत् ॥१६॥
[3][अप्सरोभिः परिवृतः] सिद्धचारणकिन्नरैः ।
भूतान् भव्यांश्च मनुजांस्तारयेदात्मसम्मितान् ॥१७॥
स्तूयमानो दिवः पृष्ठे पुत्रपौत्रप्रपौत्रवान् ।
विमानेनार्कवर्णेन विष्णुलोकं स गच्छति ॥१८॥
दिवि कल्पशतं तिष्ठेद्राजराज्यो भवेत्ततः ।
[4]नारायण-बलोपेतो नारायणपरायणः ।
नारायणकथासक्तो[5] नारायणपुरं व्रजेत् ॥१९॥
यो वा पठेत् [6]कनककल्पतरुप्रदानं
यो वा शृणोति पुरुषोऽल्पधनः स्मरेद् वा ।
सोऽपीन्द्रलोकमधिगम्य सहाप्सरोभि-
र्मन्वन्तरं वसति पापविमुक्तदेहः ॥२०॥

प्रयोगः

अत्र यजमानः समुपजातकल्पपादप-[7]महादानदानेच्छस्तुलापुरुषलिखितं खड्गचर्म-[8]मयढाल-सन्नाहतुलास्थाप्यहरिप्रति[9] [मा-सालङ्कारतुला-हस्तप्राप्य-प्रतिम-] ऋत्विक्चतुष्टय-[10]वरणदक्षिणा-सामग्रीवहिः सर्वसम्भारम्, अधिकत्वेन पलत्रयादूर्द्ध्वं सहस्रपलावधि यथेष्टं काञ्चन-मुपादाय तस्यार्द्धेन [11]कल्पपादपमपरार्द्धेन समभागेन सन्तानं [12][मन्दारं पारिभद्रं ] हरि-चन्दनम् एवं पञ्च तरून् पञ्चशाखान् सौवर्णनानाफलपक्षि-हैमपत्रनिर्मितानेकवस्त्राकारसहितान्

1 Both I. O. and A omit the bracketed portion
2 Supplied from M. P. A, B and I. O. महादानं निवेदयेत्
3 A reads the bracketed portion as अमरोपिभि: परिवृत:
4 I. O. नारायणोबलोपेतो, A नारायणोबलोपेता
5 Both I. O. and A ०भक्तो
6 A कल्पतरुप्रदानां, M. P. सकल-कल्प०
7 A ०दानस्यानेषु
8 I. O. मयाञ्जन and A मयाञ्चल for मयढाल
9 A omits the bracketed portion
10 A ०वरणादि०
11 I. O. कल्पपादमपरार्द्धेन, A कल्प-पादपरार्द्धेन
12 I. O. reads the bracketed portion as मन्दारपरिभद्र

केयूरकुण्डलाद्यभिमतालङ्कारभूषितान्, एषामाच्छादनार्थं श्वेतवस्त्रयुगपञ्चकं. तरूणा[1]मधः-स्थापनार्थम् गुडप्रस्थद्वयं, प्रत्येकं [2][प्रस्थपरिमितान् पात्रस्थ]-घृतजीरक-[3]तिलांश्च[4], -कल्पवृक्षाधः-स्थापनार्थम् अभीष्टसुवर्णान्तर[5]-पत्रोत्-[6]खाटिता ब्रह्मविष्णु-[7]शिवभास्करप्रतिमाः, यथोक्तक्रम-तरुचतुष्टयाधःस्थापनार्थम् अभिमतसुवर्णान्तरपत्रोत्खाटिताः सरति-कामदेव-लक्ष्मी-सावित्री-सुरभिप्रतिमाश्च[8], कल्पतरु-[9]पार्श्वस्थापनार्थम् [10][ अष्टौ कुम्भान् तदधःस्थापनार्थं] कुशादि-निर्मितासनाष्टकं, कुम्भाच्छादनार्थं कौषेयवस्त्राष्टकं, कुम्भपार्श्वस्थापनार्थम् [11]इक्षुदण्डाष्टकं पुष्पमाल्या-[12]ष्टकसामग्रीं यथेष्टफलाष्टकं पादुकायुगाष्टकं कांस्यभाजनाष्टकञ्च, कल्पतरुपार्श्वा-र्पणार्थं दीपिकोपानद्युगच्छत्रचामरा-[13]सनाष्टादशधान्यानि चोत्पादयेत् ।

ततस्तुलापुरुषोक्तसमयानामन्यतमस्य पूर्वतरदिने यजमानगुर्वृत्विग्जापकाः तुलापुरुषव-द्धविष्यभोजनादिकं कृत्वा, निवेदनसङ्कल्पवाक्ययोस्तुलापुरुषपदस्थाने [14]कल्पपादपपदं प्रक्षिप्य यथायथं निवेदनं सङ्कल्पञ्च कुर्युः ।

ततोऽपरदिने यजमानस्तुलापुरुषवद् गोविन्दा-[15]द्याराधनादि-मधुपर्कदानान्तं कर्म[16] गोविन्दा-द्यभ्यर्चन-ब्राह्मणानुज्ञापन-दानसङ्कल्प-पुण्याहादिवाचन-वरणवाक्येषु तुलापुरुषपदस्थाने [17]कल्प-पादपपदं प्रक्षिप्य कुर्यात् । ततो गुर्वृत्विग् यजमानजापका उपवसेयुः ।

अपरदिने च कृतनित्यास्तुलापुरुषवदग्निस्थापना[18][दि-मध्यब्राह्मणवाचना]न्तं कर्म यथा-यथं कुर्युः । एवञ्च मध्यब्राह्मणवाचनान्तं कर्म तुलापुरुषग्रन्थमनुसन्धाय अनुष्ठातव्यम् । तत ऋत्विजः कल्पतरुमानीय प्रधानवेद्यां लिखितचक्रमध्ये गुडप्रस्थं दत्त्वा [19]तदुपरि स्थापयेयुः । ततस्तस्याधो गुडप्रस्थोपरि पङ्क्तिक्रमेण सुवर्ण-[20]पत्रोत्खाटिता ब्रह्मविष्णुशिव-[21]भास्करप्रतिमाः

1 I. O. ०मत्र०, A ०मर०
2 Both I. O. and A प्रस्थपरिमिताभाव for the bracketed portion
3 I. O. ०त्तीरक०
4 A तिला:
5 I. O. ०न्तरं
6 A पात्रोत्०, I. O. मन्त्रोत्०
7 A ०शिवाच्युतार्कप्रतिमा:
8 I. O. ०प्रतिमा
9 I. O. ०पार्श्व
10 Both I. O. and A omit the bracketed portion
11 A इक्षुकाष्टकं
12 Both I. O. and A ०मालाः०
13 Both I. O. and A omit सना
14 A कल्पपादपपदं
15 I. O. omits न्द्रा
16 I. O. and A omit it
17 A कल्पपादपपदं
18 A omits the bracketed portion
19 A परि
20 I. O. ०यन्त्रोत्०
21 A ०शिवा०

**तथा गोसहस्रमहादानम्।** ( मत्स्यपुराणम्—२७८ अः )

अथातः सम्प्रवक्ष्यामि महादानमनुत्तमम् ।
गोसहस्रप्रदानाख्यं सर्वपापहरं परम् ॥१॥
पुण्यां तिथिमथासाद्य युग[1]-मन्वन्तरादिकाम् ।
[2]पयोव्रतस्त्रिरात्रं स्यादेकरात्रमथापि वा ॥२॥

दानदिनात् पूर्वत्रिरात्रं दुग्धमात्रमाहारं कुर्यात, अशक्तावेकरात्रमित्युन्नेयम् ।

लोकेशावाहनं कुर्यात्तुलापुरुषदानवत् ।
पुण्याहवाचनं तद्वद्धोमकार्यन्तथैव च ॥३॥
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम् ।
वृषं लक्षणसंयुक्तं वेदिमध्येऽधिवासयेत् ॥४॥

वृषलक्षणञ्च विष्णुधर्मोत्तर उक्तम्, तद् यथा—

[3][तस्याः सुतं] परीक्षेत [4]वृषभं लक्षणान्वितम् ।
उन्नतस्कन्धककुद[5]-मृजुलाङ्गुलकम्बलम् ॥५॥
महाकटितटस्कन्धं वैदूर्यमणिलोचनम् ।
प्रवालशफशृङ्गाग्रं सुदीर्घबलवालधिम् ॥६॥
नवाष्टादशसंख्यैर्वा तीक्ष्णाग्रै[6]-र्दशनैः शुभैः ।
मल्लिकाक्षश्च [7]मोक्तव्यो गृहेऽपि धनधान्यदः ॥७॥

तथा(वि. ध. १।१४६।४७-५५)—

[8]मोक्तव्यानाञ्च [9]धूर्याणां भूयो वक्ष्यामि लक्षणम् ।
[10]स्वस्तिकाकारशृङ्गाश्च मेघौघसदृशस्वनाः ॥८॥

---

1 A ०मन्तरादिकं
2 I. O., A and M. P. पयोव्रतं त्रिरात्रं
3 A तस्मात्तु पश्चं for the bracketed portion
4 A वृषभं
5 A omits म
6 A ०ह्रस्वैः
7 I. O. योक्तव्यः, A योक्तव्यं
8 I. O. and A योक्तव्यानाञ्च
9 I. O. कार्याणां, A and V. D. धार्याणां
10 A स्वस्तिकाकारशृङ्गाया

महाप्रमाणाश्च तथा मत्तमातङ्गगामिनः ।
[1]महोरस्का महोत्साहा[2] महाबलपराक्रमाः ॥९॥
शिरः कर्णौ ललाटञ्च वालधिश्चरणानि च[3] ।
[4]नेत्रपार्श्वे च कृष्णानि शस्यन्ते चन्द्रमस्त्विषः[5] ।
श्वेतान्येतानि शस्यन्ते कृष्णस्य तु विशेषतः ॥१०॥
भूमौ कर्षति लाङ्गूलं प्रलम्बस्थूल[6]-वालधिः ।
पुरस्ता[7]-दुन्नतो नीचः[8] पृष्ठतश्च प्रशस्यते ॥११॥
शक्तिध्वजपताकाभा येषां [9]राजिर्विराजते ।
अनड्वाहस्तु[10] ते धन्या वित्तजीवजयावहाः ॥१२॥
प्रदक्षिणं[11] निवर्तन्ते स्वयं [12][ये विनिवर्तिताः ] ।
समुन्नत[13]-शिरोग्रीवा धन्यास्ते यूथवर्धनाः ॥१३॥
रक्तश्रृङ्गाग्रनयनः[14] श्वेनवर्णो भवेद् यदि ।
शफैः [15]प्रवालसदृशैर्नास्ति [16]धन्यतरस्ततः ॥१४॥
एते धूर्याः[17] प्रयत्नेन [18]मोक्तव्या यदि वा वृषाः ।
धारिताश्च तथा [19]मुक्ता धनधान्यविवर्धनाः ॥१५॥ इति ।
[ गोसहस्राद्विनिष्कृष्य गवां दशकमेव वा । ][20]
गोसहस्रं बहिः कुर्याद् वस्त्रमाल्यविभूषितम् ॥१६॥

गोसहस्राद् विनिष्कृष्येति [21][ गोसहस्रात पृथक्कृत्य ], एतेन दशाधिकं गोसहस्रमुत्पाद्य 'गोसहस्रं बहिः कुर्या'दिति श्रुतेः ।

---

1 I. O. महोवचा, A' महारोचा
2 A महोत्साहो V. D. महोक्ष सा
3 A वा
4 I. O. नेत्रे पार्श्वे
5 Both I. O. and A चन्द्रमस्त्विषः
6 A ०स्तुल०
7 I. O. ०दुद्यतो, A ०लन्यतो, V. D. ०न्न तथा
8 Both I. O. and A नीलः
9 A रजिं and I. O. वाचि for राजि
10 A अनड्वाहस्त्व, I. O. अनड्वाहाश्च
11 A प्रदक्षिण
12 A' परिनिवर्त्तिताः for the bracketed portion
13 I. O. समुद्गत
14 A यन for नयनः
15 I. O. प्रधान०
16 A धान्यवतस्ततः
17 I. O. धार्याः, A' भार्या, V. D. धन्याः
18 Both I. O. and A योक्तव्या
19 I. O. युक्ता
20 M. P. omits the bracketed portion
21 A' reads the bracketed portion as गोसहस्रात्पृथक्कृत्वस

स्थापयेयुः । [1]तत्पूर्वतोऽधस्तादारोपित-सरतिकामदेवप्रतिमं [2][गुडप्रस्थोपरि सन्तानं, कल्पतरुदक्षिणतोऽधःसमारोपितलक्ष्मीप्रतिमं घृतप्रस्थोपरि मन्दारं, [3][कल्पतरुपश्चिमतः अधः-] समारोपितसावित्रीप्रतिमं जीरकप्रस्थोपरि पारिभद्रं, [4][कल्पतरूत्तरतः अधः-]समारोपित-सुरभिप्रतिमं] तिलप्रस्थोपरि [5]हरिचन्दनञ्चारोपयेयुः । सर्वांश्च वृक्षान् प्रत्येकं[6] सितवस्त्रयुगेनाच्छादयेयुः । [7][अष्टासु च दिक्षु] प्रत्येकं कौषेयवस्त्राच्छादितान् इक्षुदण्डफलान्वितान् माल्यालङ्कृतान् अष्टौ [8]पूर्णकुम्भान् पार्श्वारोपितपादुकायुगभाजनासनेष्वारोप्य, कल्पतरुपार्श्वे[9] पूर्वोक्तदीपिका-[10]द्युपकरणमारोपयेयुः ।

[11]ततो मङ्गलतूर्यगीत-[12]वन्दिघोषेषु सत्सु ऋत्विजः कुण्डसमीपस्थकुम्भचतुष्टयजलेन यजमानं स्नापयेयुः । ततो यजमानः शुक्लमाल्याम्बरधरो धृतसर्वालङ्कारः पुष्पाञ्जलिमादाय कल्पपादपं [13]त्रिः [14]प्रदक्षिणीकृत्य, 'नमस्ते कल्पवृक्षाये'त्यादि 'पाहि संसारसागरा'दित्यन्त-मन्त्रान् पठित्वा, पुष्पाञ्जलिनाभ्यर्च्य गुर्वृत्विग्भ्यो यथायथं दद्यात् ।

ॐ अद्यामुकामुकसगोत्रेभ्यः अमुकामुकवेदामुकामुकशाखाध्यायिभ्यः अमुकामुकदेवशर्मभ्यो युष्मभ्यं मत्स्यपुराणोक्तकल्पपादपमहादान[15]-दानफलप्राप्तिकामोऽहं मत्स्यपुराणोक्तभागव्यवस्थया एतं गुडप्रस्थारोपितं सौवर्णब्रह्मविष्णुशिवभास्कर-[16][प्रतिमासितवस्त्रयुगान्वितं गुडप्रस्थारोपितसौवर्णसरतिकामदेवप्रतिमासितवस्त्रयुगान्वितसौवर्णसन्तानसहितं घृतप्रस्थारोपितसौवर्णलक्ष्मीप्रतिमासितवस्त्रयुगान्वितसौवर्णमन्दारसहितं जीरकप्रस्थारोपितसौवर्णसावित्री-]प्रतिमासितवस्त्रयुगान्वितसौवर्ण-[17]पारिभद्रसहितं तिलप्रस्थारोपितसौवर्णसुरभिप्रतिमासितवस्त्रयुगान्वितसौवर्णहरिचन्दनसहितं कौषेयवस्त्र-[18]युगवेष्टितग्रीवेक्षुमाल्यफलान्वित-कुशासनस्थ[19]-

1 I. O. omits तत्
2 A omits the bracketed portion
3 I. O. कल्पतरो: for the bracketed portion
4 I. O. कल्पतरोरध:
5 A omits हरि
6 A प्रत्येक
7 I. O. अष्टासु दिक्षु, A अष्टादिक्षु
8 A omits पूर्ण
9 A पार्श्वं
10 I. O. has a lacuna here, A द्यू
11 A omits it
12 I. O. वाद्य for वन्दि
13 A omits it
14 A प्रदक्षिणीकृत्य
15 A omits दानफल
16 A omits the bracketed portion
17 A सन्तान before this
18 I. O. omits युग
19 A omits स्थ

-पादुकायुगकांस्यभाजनयुत-पूर्णकुम्भाष्टक[1]-[दीपिकोपानद्][2]-युगच्छत्रचामरासन--[3]फलमाल्ययुत-पञ्चवर्णवितानकाष्टादशधान्ययुतं [4]कल्पपादपं ददानि ।

[5]प्रतिग्रहीतारः स्वस्तीत्युक्त्वा सावित्रीं पठित्वा यथायथम् 'अमुकपादपोऽयं [6]विष्णु-दैवतः' इत्युक्त्वा यथाशाखं कामस्तुतिं पठेयुः । ततो दक्षिणादानम् । ॐ अद्य कृतैतद्दान-प्रतिष्ठार्थं युष्मभ्यमहं दक्षिणामियदुत्पत्तियोग्यां भूमिम् एतानि च[7] रत्नानि ददानि । प्रतिग्रहीतारः स्वस्तीत्युक्त्वा प्रत्येकं [8][तरून् मूलेषु] स्पृशेयुः । ततो यजमानस्तुलापुरुष-वज्जापकेभ्यो दक्षिणादानं दीनानाथादितर्पणं ब्राह्मणवाचनञ्च कुर्यात् । ततः कल्पपादपं[9] गुरवे, [10][सन्तानकादींश्च चतुरो] वृक्षान् [11]ऋग्वेदादिक्रमेण चतुर्भ्य ऋत्विग्भ्यो निवेदयेत् । [12][स्वल्पकल्पपादपदाने तु] [13]गुरुरेकाग्निवत् स्वगृह्योक्तविधिना सर्वं ब्रह्माण्डदानवत् कुर्यात् ।

इति कल्पपादपमहादानं समाप्तम् ।

1 A omits क
2 A पादुकापानह for the bracketed portion
3 A omits फल
4 A कल्पपादामहादानमहं
5 A गृहीतारः
6 Both I. O. and A विष्णुदैवत-मित्युक्त्वा
7 A omits it
8 A तरुमूलेषु for the bracketed portion
9 Both I. O. and A कल्पपाद-पञ्च
10 Both I. O. and A read the bracketed portion as सन्तान-कादींश्चतुरो
11 A ऋग्वेदादि०
12 I. O. स्वल्पकल्पपादपदानेषु and A स्वल्पपादपदाने तु
13 I. O. गुरुरेवैकाग्निवत्

गोसहस्रं दत्त्वा तद्दिने दुग्धमात्राहारो भवेदित्यर्थः ।

श्रावयेच्छृणुयाद्वापि महादानानुकीर्तनम् ।
तद्दिनं ब्रह्मचारी स्याद् य इच्छेद् विपुलां श्रियम् ॥३२॥

तद्दिने च [1]महादानग्रन्थं शृणुयात्, [2][अन्यान्यपि श्रावयेत् ।] [3]यदा विपुलश्रीकामो भवति, तदा तद्दिनं ब्रह्मचर्यमाचरेदित्यर्थः ।

अनेन विधिना यस्तु गोसहस्रप्रदो भवेत् ।
सर्वपापविनिर्मुक्तः सिद्धचारणसेवितः ॥३३॥
विमानेनार्कवर्णेन किङ्किणीजालमालिना ।
सर्वेषां लोकपालानां [4][लोके सम्पूज्यते ] सुरैः ॥३४॥
प्रतिमन्वन्तरं तिष्ठेत् पुत्रपौत्रसमन्वितः ।
सप्तलोकानतिक्रम्य ततः शिवपुरं व्रजेत् ॥३५॥
शतमेकोत्तरं तद्वत् पितॄणां [5]तारयेद् बुधः ।
मातामहानां तद्वच्च पुत्रपौत्रसमन्वितम्[6] ॥३६॥
यावत् [7]कल्पशतं तिष्ठेद्राजराजो भवेत् पुनः ।
अश्वमेधशतं कुर्याच्छिवध्यानपरायणः ।
वैष्णवं योगमास्थाय ततो मुच्येत बन्धनात् ॥३७॥
[8]पितरश्चाभिनन्दन्ति [9][गोसहस्रप्रदं सुतम्[10] ।
[11]अपि स्यात [12]स्वकुलेऽ]स्माकं पुत्रो दौहित्र एव वा ॥३८॥
गोसहस्रप्रदो भूत्वा [13][नरकादुद्धरिष्यति ॥
तस्य कर्मकरो वा स्यादपि द्रष्टा तथैव च ।
संसारसागरादस्माद् योऽस्मान् सन्तारयिष्यति ॥३९॥

1 A महादानविधिग्रन्थं
2 I. O. omits the bracketed portion
3 A तदा
4 A लोकेशः पूज्यते for the bracketed portion
5 A तारयेद् ध्रुवः
6 A and M. P. ०समन्वितः
7 A कल्पनात
8 A पितरश्चापि नन्दन्ति
9 A. गोदाने only for the bracketed portion
10 I. O. शुभं
11 Corrected from M. P. A. B and I. O. अस्य
12 I. O. सुकर्म
13 A नरस्य तु only for the bracketed portion

इति पठति य एतद् गोसहस्रप्रदानं
सुर-]भवनमुपेतः संस्मरेद् वाथ पश्येत् ।
अनुभवति मुदं [1][वा मुच्यमानो] निकामं
प्रहतकलुषभावः सोऽपि यातीन्द्रलोकम् ॥४०॥

प्रयोगः

अत्र यजमानः समुत्पन्नगोसहस्रमहादानदानेच्छ-[2]स्तुलापुरुषलिखितं खड्गचर्म-[3]मयढाल-सन्नाह-तुला[4]-स्थापनीयहरिप्रतिमा-[5]सालङ्कारतुला-हस्तमात्र-[6]प्रतिमाबहिः [7]सर्वं सम्भारम्, अधिकत्वेन दशाधिकाः सहस्रं गास्तथोक्तलक्षणयुतं वृषमेकं, [8]गोदशकवृष-[9][पूजार्थं प्रत्येकं वस्त्रं] पूजोपकरणञ्च, पलशतोपरिपलसहस्रत्रयपर्यन्ताभिमतसुवर्णघटितानि [10]यथेच्छनाना-[11]रत्नालङ्कृतनन्दिकेश्वरं, [गोदशकालङ्करणार्थं घण्टिका[12]-तिलक-ललाटपट्टाभिमत[13]-रत्न-खचितशृङ्ग[14]-युगानाञ्च दश स्थानानि][15] गोसहस्रालङ्करणार्थञ्च शृङ्ग[16]-युगाभीष्टतिलकाद्य-लङ्काराणां सहस्रं स्थानानि, तथा गोदशकालङ्कारार्थं ताम्रदोहन-कोषकारतन्तुकर्पटचामराणां दश स्थानानि. नन्दिकेश्वर-दशोत्तरगो-[17][सहस्रवृषाणां] पूजार्थम् [18]अलङ्करणार्थञ्च बहुतर-गन्धमाल्यसामग्रीं, [19]गोदशकपार्श्वस्थापनार्थञ्च काष्ठमय-[20]पादुकायुगोपानद्युगच्छत्रकांस्य-भाजनासनानां [21]दश स्थानानि, गोसहस्रालङ्करणार्थं वस्त्रयुगसहस्रम् अभीष्टपरिमाणरौप्यखुर-चतुष्कसहस्रञ्च, नन्दिकेश्वरालङ्करणार्थं कौषेयवस्त्रं, नन्दिकेश्वरारोपणार्थं लवण-[22][द्रोणं तत्]-

1 Corrected from M. P. I. O. वा वाच्यमानो and A वाध्यमानो for the bracketed portion
2 A omits दानेच्छ
3 I. O. मयाञ्जन, A मयाचन् for मयढाल
4 Both I. O. and A add पुरुष after तुला
5 A omits सालङ्कार
6 A तुलाबहिः
7 A omits सर्वं
8 I. O. गोदक०
9 A omits the bracketed portion
10 I. O. यथेष्ट०
11 A omits रत्ना
12 I. O. योदशकालङ्करणार्थघण्टिक
13 I. O. omits त
14 I. O. ०शृङ्गं
15 A गोदशकालङ्करणार्थंदशसंख्यघण्टिका... शृङ्गयुगानि for the bracketed portion
16 I. O. शृङ्गं
17 A सहस्राणां for the bracketed portion
18 A अलङ्कारार्थञ्च
19 A गोदश०
20 A omits पादुका
21 A omits दश
22 A द्रोणवत् for the bracketed portion

सुवर्णश्रृङ्गाभरणं रौप्यपादसमन्वितम् ।

अन्तः [1]प्रवेश्य दशकं वस्त्रमाल्यैस्तु पूजयेत् ॥१७॥

सुवर्णश्रृङ्गाभरणं सुवर्णश्रृङ्गं सुवर्णाभरणञ्च । एतदाभरणं [2]गोसहस्रस्यैव, गोदशके 'अन्तः[3] प्रवेश्ये'[4][त्यादिना अ]लङ्कारान्तरश्रुतेः । [5]अन्तः प्रवेश्य मण्डपाभ्यन्तरं [6]प्रवेशयेत्यर्थः ।

सुवर्णघण्टिका[7]-युक्तं ताम्रदोहनकान्वितम् ।

सुवर्णतिलकोपेतं हेमपट्टैरलङ्कृतम् ॥१८॥

कौषेयवस्त्रसंवीतं माल्यगन्धसमन्वितम् ।

[8][नानारत्नमयैः श्रृङ्गैश्चामरैश्चोपशोभितम् ।

पादुकोपानहच्छत्रभाजनासनसंयुतम् ॥१९॥][9]

गवां दशकमध्ये स्यात् [10]काञ्चनो नन्दिकेश्वरः ।

कौषेयवस्त्रसंवीतो नानारत्नसमन्वितः ॥२०॥

[11]लवणद्रोणशिखरे माल्येक्षुफलसंयुतः ।

कुर्यात् पलशतादूर्द्धं सर्वमेतदशेषतः ॥२१॥

शक्तितः पलसाहस्र[12]-त्रितयं यावदेव तु ।

सर्वमेतदिति नन्दिकेश्वरदशोत्तरगोसहस्रसौवर्णालङ्कारादिकम् ।

गोशतेऽपि दशांशेन सर्वमेतत् समाचरेत् ॥२२॥

पुण्यकालं समासाद्य गीतमङ्गलनिःस्वनैः ।

[13]गोशतेऽपि दशांशेनेति गोसहस्रे यदुक्तं तस्य सर्वस्य [14]दशमांशेन ।

सर्वौषध्युदक[15]-स्नानस्नापितो वेदपुङ्गवैः ।

इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः ॥२३॥

1 A पुरस्य
2 I. O. गोसहस्यैव
3 I. O. तु
4 A ति नाना for the bracketed portion
5 I. O. चन:
6 A मण्डपायन्तरं
7 A ०घटिका०
8 I. O. हेममरवयुतैः, M. P. हेमरत्नमयैः
9 A omits the bracketed portion
10 I. O. कौञ्चनो
11 A मवण०
12 I. O. ०साहस्रं
13 A omits it
14 Both I. O. and A दशांशेन
15 A स for दक

नमो वो विश्वमूर्तिभ्यो विश्वमातृभ्य एव च ।
लोकाधि-[1]वासिनीभ्यश्च रोहिणीभ्यो नमो नमः ॥२४॥
[2][गवामङ्गेषु तिष्ठन्ति] भुवनान्येकविंशतिः ।
ब्रह्मादयस्तथा देवा रोहिण्यः [3]पान्तु मातरः ॥२५॥
गावो ममाग्रतः सन्तु गावः पृष्ठत एव च ।
गावः शिरसि मे नित्यं गवां मध्ये वसाम्यहम् ॥२६॥
यस्मात्त्वं वृषरूपेण धर्म एव सनातनः ।
[4][अष्टमूर्तेरधिष्ठानमतः पाहि सनातन ॥२७॥ ]
इत्यामन्त्र्य ततो दद्याद् गुरवे नन्दिकेश्वरम् ।
[5][सर्वोपकरणोपेतं गोयुगञ्च विचक्षणः ॥२८॥

सर्वोपकरणोपेतमिति [6]छत्राद्युपकरणसहितं नन्दिकेश्वरं, ] गोयुगञ्च पादुकाद्युपकरण-सहितमित्यर्थः ।

ऋत्विग्भ्यो [7][धेनुमेकैकां दशकाद् ] विनिवेदयेत् ।
गवां शतमथैकैकं [8]तदर्धं वाथ विंशतिम् ॥२९॥
दश पञ्चाथ वा दद्यादन्येभ्यस्तदनुज्ञया ।
[9]नैका बहुभ्यो दातव्या यतो दोषकरी भवेत ॥३०॥

अत्र [10]सर्वत्र ऋत्विग्देयगवीभ्यो[11] द्विगुणा गावो गुरवे देयाः, [12]ऋत्विग्देयैकधेनुतो 'गोयुगञ्च[13] विचक्षणः' इत्यनेन गुरवे द्विगुणगवीदानश्रुतेः । शतार्धादिदाने त्वन्येभ्योऽपि गुर्वृत्विगनुज्ञया देयाः ।

बह्वयस्त्वेकस्य दातव्याः [14]धीमतारोग्यवृद्धये ।
पयोव्रतः पुनस्तिष्ठेदेकाहं [15]गोसहस्रदः ॥३१॥

---

1 A ०वासनीभ्यश्च, I. O. ०वासवीभ्यश्च
2 A गवां मार्गप्रतिष्ठन्ति for the bracketed portion
3 A सर्व्वे
4 A omits the bracketed portion
5 A omits the bracketed portion
6 I. O. छत्राद्युप०
7 A reads the bracketed portion as धेनुमेकैकं दश वा
8 A तदूर्द्ध
9 A नैको
10 A सर्व्वे
11 I. O. ०गवीभ्योऽपि
12 I. O. ऋत्विग्देयैक०, A ऋत्विग्देयक०
13 A गोयुगञ्च
14 Corrected from M. P. A. B and I. O. श्रीमदारोग्य०
15 A ०देकाहन्तु सहस्रदः

पार्श्वस्थापनार्थमिक्षुं यथेष्टं फलानि, यजमानस्नानार्थं [1]सर्वौषधिञ्चोत्पाद्य, तुलापुरुषोक्त[2]-समयानामन्यतमस्य [3]पूर्वचतुर्थदिने प्रातः कृतनित्यो यजमानः शुचिर्गृहीतोदक[4]-पूर्णताम्रपात्र उदङ्मुखः सङ्कल्पयेत्।

ॐ मत्स्यपुराणोक्तगोसहस्रमहादानकर्म [5][ कर्तुम् अद्यादिदिनचतुष्टयं ] गोसहस्रमहादान-प्राच्योदीच्याङ्ग[6]-भूतं दुग्धमात्राहारमहं[7] करिष्ये। अशक्तौ तु [8][दानपूर्वदिन एव[9] पयोव्रतो भवेत्। तदा ] पूर्वदिन एव प्रातः सङ्कल्पः[10]। वाक्ये [11]च [12]दिनचतुष्टयपदस्थाने दिनद्वय-मिति निवेशो विशेषः। गुर्वृत्विग्जापकास्तु दानदिनपूर्वतरदिने तुलापुरुषवद् हविष्यभोजनादि कृत्वा, निवेदनसङ्कल्पवाक्ययोस्तुलापुरुषपदस्थाने गोसहस्र[13]-पदं प्रक्षिप्य यथायथं निवेदनं सङ्कल्पञ्च [14]कुर्युः। अपरदिने यजमानः तुलापुरुषवद् गोविन्दाद्याराधनादि-मधुपर्कदानान्तं गोविन्दा-[15]द्यर्चन ब्राह्मणानुज्ञापन- [16]दानसङ्कल्प-पुण्याहादिवाचन-वरणवाक्येषु[17] तुलापुरुषपद-स्थाने गोसहस्रपदं प्रक्षिप्य कुर्यात्। ततो गुर्वृत्विग्जापका [18][उपवसेयुः, यजमानस्तु क्षीर]-[19]मात्राहारो भवेत्। अपरदिने [20][कृतनित्या यजमानादय]-स्तुलापुरुष-[21][वदग्निस्थापनादि मध्यब्राह्मणवाचनान्तं ]कर्म यथायथं कुर्युः। एवञ्च मध्यब्राह्मणवाचनान्तं कर्म तुलापुरुष-[22]-ग्रन्थमनुसन्धाय [23]सर्वत्रानुष्ठातव्यम्।

1 A सर्वौषधिकाद्ध्रविष्यति तस्य करो वा स्यादपि द्रष्टा तथैव च। संस रमागता-दस्मात् संभविष्यति। इति पठति य एतद्-गोसहस्रप्रदानं। अधिकं
2 A omits क्त
3 A omits पूर्व
4 I. O. omits क
5 A स च चतुष्टय for the bracketed portion
6 A ०तुर्थं
7 A omits महं
8 A पूर्वदिने पयोव्रतस्तदा for the bracketed portion
9 I. O. omits एव
10 Both I. O. and A सङ्कल्प
11 I. O. omits it, A तु
12 A स चतुष्टयस्थाने
13 A omits स
14 I. O. कुर्यात
15 A ०द्यर्चन
16 I. O. omits दान
17 A omits षु
18 A स्तत्मादय for the bracketed portion
19 I. O. माहारो
20 A कृतनित्यो यजमान for the bracketed portion
21 A वदादि मध्यब्राह्मणवाचनं for the bracketed partion
22 A ०ग्रहममनुसन्धाय, I. O. ०ग्रन्थमन
23 A omits सर्वत्र

तत ऋत्विजः पूर्वघटितं नन्दिकेश्वर-[1][मानीय, दशाधिकं गोसहस्रं सवृषञ्चानीय, वृषं प्रधान]-वेद्यां लिखितचक्रोपरि स्थापयित्वा तत्पार्श्वे लवणद्रोण-[2]राशिमारोप्य, तदुपरि[3][नन्दिकेश्वरमारोप्य, कौषेयवस्त्रेणाच्छाद्य, तत्पार्श्वे माल्येक्षुफलानि यथेच्छमारोपयेयुः]। ततः [4][पूर्वानीतदशाधिक]-गोसहस्राद् गोदशकमुत्कृष्टं पृथक् कृत्वा, [5]गोसहस्रं [6][मण्डपबहिः वस्त्रमाल्यसौवर्ण]-शृङ्गतिलकाद्यभिमताभरणैः रौप्यखुरैश्चालङ्कारयेयुः[7]। गोदशकन्तु मण्डपं प्रवेश्य नन्दिकेश्वरवेष्टनेन स्थापयेयुः [8]उक्तालङ्कारैश्चालङ्कारयेयुः। तत्पार्श्वे चोक्तपादुकाद्युपकरणानि स्थापयेयुः। ततो यजमानस्तद्गोदशकम् अभीष्टवस्त्रमाल्यादिभिः पूजयेत्। तत ऋत्विजो [9][मङ्गलगीततूर्यवन्दिघोषेषु सत्सु], कुण्डसमीपस्थ-[10][कुम्भचतुष्टयजलं सर्वौषधिमिश्रं कृत्वा, तेन] यजमानं स्नापयेयुः।

ततो यजमानः शुक्लमाल्याम्बरधरो [11]धृतसर्वालङ्कारः पुष्पाञ्जलिमादाय 'नमो वो विश्वमूर्तिभ्य' इत्यादि—'पाहि सनातन' इत्यन्त-मन्त्रान् पठित्वा, दश गाः प्रदक्षिणीकृत्य पुष्पाञ्जलिनार्चयित्वा, गोसहस्रं वृषं नन्दिकेश्वरञ्च गन्धमाल्यादिभिरभ्यर्च्य गुर्वृत्विक्प्रमुखब्राह्मणेभ्यो दद्यात्। [12][तद् यथा—ॐ] अद्य यथासम्भवगोत्रनामभ्यो गुर्वृत्विक्प्रमुखब्राह्मणेभ्यो मत्स्यपुराणोक्तगोसहस्रमहादान[13]-दानफलप्राप्तिकामोऽहं मत्स्यपुराणोक्तभागव्यवस्थया [14]एता वृषकाञ्चन- [15]रत्नालङ्कृत-लवणद्रोणशिखरारोपित-कौषेयवस्त्राच्छादित-[16] [फलमाल्येक्षुसहित-नन्दिकेश्वरसहित-सौवर्णघण्टिका-तिलक-ललाटपट्ट रत्नखचितशृङ्गयुगालङ्कृत-कौषेयवस्त्राच्छादित-माल्यगन्धसमन्वित-चामरोपशोभित-पार्श्वन्यस्त]- पादुकायुगोपानद्युग-च्छत्र- भाजनासन-[17]गोदशकसहिता [18]वस्त्रमाल्यभूषिताः सुवर्णशृङ्गाः सुवर्णाभरणा रौप्यपादाः सहस्रं गा ददानि।

---

1 A दानाय दशाधिकं सह for the bracketed portion

2 A omits राशि

3 A नन्दिकेश्वरं यथेष्टमारोपयेयुः for the bracketed portion

4 A पूर्व्वोक्त for the bracketed portion

5 I. O. गोसहस्र

6 A सवर्ण only for the bracketed portion

7 A °ङ्कारयेयुः, I. O. °ङ्करेयुः

8 A चालङ्कारै°

9 A मङ्गलतूर्य्यघोषेषु for the bracketed portion

10 A कुम्भचतुष्टयस्थसर्व्वौषधिमिश्रजलेन for the bracketed portion

11 A परिहितालङ्कारः

12 A omits the bracketed portion

13 A omits दान

14 A एतद

15 A omits रत्न

16 A omits the bracketed portion

17 A गोदश°

18 A वस्त्राणि माल्यभूषिताः

प्रतिग्रहीतारः स्वस्तीत्युक्त्वा सावित्रीं पठित्वा 'गाव एता रुद्रदेवताः' इत्युक्त्वा, यथाशाखं कामस्तुतिं पठेयुः। ततो गुरवे ऋत्विग्भ्यश्च दक्षिणां दद्यात्। तद् यथा—ॐ अद्य कृतैतद्दानकर्मप्रतिष्ठार्थं युष्मभ्यमहं दक्षिणामियदुत्पत्तियोग्यां भूमिमेतानि रत्नानि च[1] ददानि। ब्राह्मणाः स्वस्तीत्युक्त्वा यथायथं गाः पुच्छेषु गृह्णीयुः। यद्वा गुर्वृत्विग्भ्य एव दद्यात्। तत्र दानवाक्ये ॐ अद्यामुकसगोत्रेभ्योऽमुकामुकवेदामुकामुकशाखाध्यायिभ्योऽमुकामुकदेवशर्मभ्यो युष्मभ्यं फलपुष्पोपशोभितपञ्चवर्णवितानकसहिता इति च[2] निवेशो विशेषः। तत्र च सोपकरणनन्दिकेश्वरसहितं गोयुगं[3] गोशतद्वयञ्च गुरवे देयम्। [4][शेषे ऋत्विजां समो विभागः।] ततो यजमानस्तुलापुरुषवज्जापकेभ्यो दक्षिणादानं, दीनानाथादितर्पणं, पुण्याहादिवाचनम्, उक्तक्रमेण ब्राह्मणेभ्यो विभज्य गोसहस्रप्रतिपादनञ्च कुर्यात्। ततस्तद्दिनं बन्धुसहितो महादानविधिग्रन्थं श्रुत्वा दुग्धमात्राहारस्तिष्ठेत्। विपुलश्रीकाम-[5] [स्तु तद्दिनं] ब्रह्मचर्यमाचरेत्।

नन्दिकेश्वरसहितगो-[6]शतदाने तु गोदशकस्थाने गौरेका, पूर्वघटितनन्दिकेश्वरालङ्कारादिसुवर्णदशमभागसुवर्णेन नन्दिकेश्वरालङ्कारादिघटनम्। तदा [7]च [8]मण्डपाभ्यन्तरप्रवेशिताया गोरेकत्वेन विभागासम्भवात् [9]'स्वल्पेष्वि'ति पूर्वोक्तरदानयोः श्रुतेः, अस्य [10]सन्दंशपाठाच्च गुरुरेव ब्रह्माण्डदानवत् [11]सर्वं कुर्यात्।

इति गोसहस्रमहादानं [12]समाप्तम्।

---

1 I. O. च before रत्नानि
2 A omits it
3 I. O. गोयुतं
4 A omits the bracketed portion
5 A म्नुतिकद्दिनं
6 A ०महस्रदाने
7 A omits it
8 A मण्डपाभ्यान्तरप्रवेशं
9 I. O. स्वकल्पेष्विति
10 A मध्यमपाठाच्च
11 A omits it
12 I. O. omits it

## अथ कामधेनुमहादानम् । ( मत्स्यपुराणम्—२७६ अः )

अथातः संप्रवक्ष्यामि [1][कामधेनुविधिं परम् ]

सर्वकामफलं नृणां महापातकनाशनम् ॥१॥

लोकेशावाहनं तद्वद्धोमकर्माधिवासनम् ।

तुलापुरुषवत् कार्यं [2]कुण्डमण्डपवेदिकम् ॥२॥

स्वल्पेप्वेकाग्निवत् [3]कुर्याद् गुरुरेव समाहितः ।

काञ्चनस्यातिशुद्धस्य [4][धेनुं वत्सञ्च] कारयेत् ॥३॥

[5][धेनुं वत्सञ्चेत्यनेन] धेन्वर्थोपात्तसुवर्णेनैव [6]स्वेच्छया [7]वत्सकल्पनमुक्तम् ।

उत्तमा पलसाहस्रा[8] तदर्धेन तु मध्यमा ।

कनीयसी तदर्धेन कामधेनुः प्रकीर्तिता ॥४॥

शक्तितस्त्रिपलादूर्द्ध्वमशक्तोऽपीह कारयेत् ।

वेद्यां कृष्णाजिनं न्यस्य गुडप्रस्थसमन्वितम् ॥५॥

[9][न्यसेदुपरि तां धेनुं महारत्नैरलङ्कृताम् । ]

[10]कुम्भाष्टकसमोपेतां [11]नानाफलसमन्वितताम् ॥६॥

महारत्नैरुत्कृष्टरत्नैः ।

तथाष्टादशधान्यानि समन्तात् परिकल्पयेत् ।

इक्षु-[12]दण्डाष्टकं [13]तद्वन्नानाफलसमन्वितम् ।

भाजनं चासनं तद्वत्ताम्रदोहनकं तथा ॥७॥

---

1 A कामधेनुपरापरं for the bracketed portion

2 A कुण्डं मण्डपवेदिकं

3 A कार्य्यं

4 A धेनोर्वत्सञ्च

5 A धेनोर्वत्सञ्चेत्यनेन

6 A स्वेच्छयाया

7 A वत्सङ्कल्पनं कुर्य्यात् युक्तं. I. O. वत्सकल्पयुक्तं

8 A साहस्री

9 A omits the bracketed portion

10 I. O. कुम्भाष्टके०

11 A नारायणसमन्वितं

12 A ०८भाष्टकं

13 A तद्वत् नारायणसमन्वितं

कौषेयवस्त्रद्वय-[संप्रयुक्तां[1]
दीपातपत्राभरणाभिरामाम्[2] ।
सचामरां[3] कुण्डलिनीं[4] सघण्टां[5]
[6]गायत्रिका-पादुक-रौप्यपादाम्[7] ॥८॥ ][8]

[9]गायत्रिका अक्षमाला ।

रसैश्च सर्वैः परितोऽभिजुष्टां[10]
हरिद्रया पुष्पफलैरनेकैः ।
अजाजि-[11]कुस्तुम्बुरुशर्कराभि-
र्वितानकञ्चोपरि पञ्चवर्णम् ॥६॥

रसैः सर्वैरिति लवणादिभिः षड्भिः । अजाजी [जीरकः[12] । कुस्तुम्बुरु धान्याकम्[13] ।

स्नातस्ततो मङ्गलवेदघोषैः
प्रदक्षिणीकृत्य सपुष्पहस्तः । ][14]
आवाहयेत्तां गुडधेनुमन्त्रै[15]-
र्द्विजाय दद्यादथ दर्भपाणिः ॥१०॥

बहुतरमत्स्यपुराणपुस्तकेषु गुडधेनुमन्त्रैरिति पाठदर्शनात् गुडधेनूक्त-'या लक्ष्मी'रित्यादि-[16][मन्त्रपाठोऽत्र]मन्त्रपाठश्चात्र कर्तव्यः । द्विजाय दद्यादिति श्रुतेः [17]कृत्स्नैव कामधेनुर्गुरवे देया, ऋत्विग्भ्यस्तु दक्षिणामात्रम्[18] ।

---

1 I. O. ०संप्रयुक्ता
2 I. O. ०भरणातिवासा
3 I. O. सचामरा
4 I. O. कुण्डलिनो
5 I. O. सघण्टा
6 I. O. गात्रिका
7 I. O. रौप्यपादा
8 A reads the bracketed portion as संयुक्तानिलौसंघण्टां मात्रिकां पादुका रौप्यापादाद
9 I. O. गात्रिका, A मात्रिका
10 Both I. O. and A ०जुष्टा
11 A कस्तुम्बुरु०
12 I. O. जीरकं
13 I. O. धन्याकं
14 A रकक only for the bracketed portion
15 A ०मन्त्रै०, M. P. गुडधेनुमन्त्रै०
16 Both I. O. and A omit the bracketed portion
17 Both I. O and A कृत्स्नैव
18 I. O. ०मात्रार्थं, A ०मात्रन्ते

[1]त्वं सर्वदेवगण-[2][मन्दिरमङ्गभूता
विश्वेश्वरि त्रिपथ]-गोदधिपर्वतानाम् ।
[3]त्वद्दान-[4]शस्त्रशकलीकृतपातकौघः
प्राप्तोऽस्मि निर्वृतिमतीव परान्नमामि ॥११॥
लोके यथेप्सित-[5]फलानुविधायिनीं त्वा-
मासाद्य को हि [भवदुःखमुपैति मर्त्यः ][6] ।
संसारदुःखशमनाय [ यतस्व कामं ][7]
त्वां कामधेनुमिति देवगणा वदन्ति ॥१२॥
आमन्त्र्य शीलकुल[8]-रूपगुणान्विताय
विप्राय यः कनकधेनुमिमां प्रदद्यात् ।
प्राप्नोति धाम स पुरन्दरदेव[9]-जुष्टं
कन्यागणैः परिवृतं[10] पदमिन्दुमौलेः[11] ॥१३॥

प्रयोगः

अत्र यजमानः समुपजात[12]-कामधेनुमहा[13]-दानदानेच्छुस्तुलापुरुषलिखितं खड्गचर्म[14]-मय-
ालसन्नाह-तुलास्थापनीयहरिप्रतिमा-सालङ्कारतुला[15]-हस्तग्राह्यप्रतिमाबहिः[16] सर्व-[17]सम्भारम्,
प्रधिकत्वेन सुवर्णपलसहस्रनिर्मिता[18]-मुत्तमां—सुवर्णपलशतपञ्चकनिर्मितां मध्यमां—सुवर्णसार्द्ध-
ालशतद्वयनिर्मितां कनीयसीम्—[19]अशक्तौ पलत्रयादूर्द्ध्वं यथाशक्त्युपात्तसुवर्ण-[20][घटिताम्

---

1 Both I. O. and A omit it
2 A omits the bracketed portion
3 A तद्दान, I. O. त्व न
4 A omits शस्त्र
5 A फलाविधिधिनी
6 A ततवदुमुपैतिमर्थः
7 I. O. यतः सकामं, A ततुपकामे
8 A ०कल०
9 A धाम for देव
10 I. O. and M. P. परिवृतः
11 A ०मिन्दामौलि
12 I. O. ०जाता०
13 A दाने for दानदानेच्छ
14 I. O. मयार्जन and A मयाहन्न for मयटाल
15 I. O. ०तुल
16 I. O. ०ग्राह्यप्रतिमावहिः, A ०प्राप्त प्रतिमाहिः
17 A ०सम्भावमावधिकत्वेन
18 A ०निर्मितं
19 अशक्तौ:
20 A घटितस्वतक्षया for the bracketed portion

उत्कृष्ट]-रत्नालङ्कृतां [1][सवत्सां धेनुं], धेन्ववस्थापनार्थं कृष्णाजिनं गुडप्रस्थञ्च, [2]धेन्वलङ्करणार्थं [3]यथेष्टसुवर्णघटितचन्द्रतिलक-ललाटपट्टिका-कुण्डलयुग-[4]घण्टा-रौप्यखुर-[5][चतुष्टयस्फाटिकाद्य]-माला-चामराणि, धेन्वाच्छादनार्थं कौषेयवस्त्रयुगं, धेनुपार्श्वस्थापनार्थं [6]कुम्भाष्टकातिप्रचुरनाना-[7]फलाष्टादशधान्येक्षुदण्डाष्टक—कांस्यभाजनासन—ताम्रदोहन---दीपसामग्री-च्छत्रपादुकायुगानि, धेन्वग्रतः स्थापनार्थं मधुरादिरसषट्क-हरिद्रानानाविध-[8]पुष्पार्हणसामग्री-जीरक-धान्याक-शर्कराश्चोत्पादयेत् ।

ततस्तुलापुरुषोक्तसमयानामन्यतमस्य पूर्वतरदिने गुर्वृत्विग्यजमानजापकाः तुलापुरुषवद्धविष्यभोजनादिकं कृत्वा, निवेदनसङ्कल्पवाक्यगोस्तुलापुरुषपदस्थाने हिरण्यकामधेनुपदं प्रक्षिप्य निवेदनं सङ्कल्पञ्च [9]कुर्युः । अपरदिने [10]च यजमानस्तुलापुरुषवद्गोविन्दाद्याराधनादि-[11]मधुपर्कदानान्तं गोविन्दा-[12]यर्चन-ब्राह्मणानुज्ञापन-दानसङ्कल्पपुण्याहादिवाचन-वरण-वाक्येषु तुलापुरुषपदस्थाने हिरण्यकामधेनुपदं प्रक्षिप्य कुर्यात् । ततो गुर्वृत्विग्यजमानजापका उपवसेयुः ।

अपरदिने च कृतनित्या[13]-स्तुलापुरुष-[14]वदग्निस्थापनादिमध्यब्राह्मणवाचनान्तं कर्म यथायथं कुर्युः । एवञ्च मध्यब्राह्मणवाचनान्तं कर्म तुलापुरुष-[15]ग्रन्थमनुसन्धायानुष्ठातव्यम् । तत ऋत्विजः सवत्सां धेनुं प्रधान-[16]वेदीमध्यलिखितचक्रोपरि कृष्णाजिनमास्तीर्य तदुपरि गुडप्रस्थं निधाय तत्रारोप्य, पूर्वोक्तालङ्कारैरलङ्कृत्य, कौषेयवस्त्रयुगेनाच्छाद्य, धेनुपार्श्वे [17]पूर्णकुम्भाष्टकं [18][नानाविधफलानि अष्टादशधान्यानि] [19]बहुनानाविधफलमिक्षुदण्डाष्टकं कांस्यभाजन-

---

1 A omits the bracketed portion
2 A धेनुरलङ्करणार्थं
3 A यथेच्छ०
4 I. O. घण्टा
5 I. O. चतुष्पाटिकाद्य, A चतुस्फाटिकाद्य
6 I. O. adds कृष्णाजिनं before this
7 A omits फला
8 I. O. ०पुष्पार्च्चन०
9 A कुर्यात्
10 I. O. omits it
11 A ०वरणान्तं
12 A ०द्यभ्यर्चन
13 A कृतनित्य०
14 A omits व
15 A ०बहु०
16 A omits वेदी
17 I. O. omits पूर्ण, A च before पूर्ण
18 I. O. नानाविधधान्यानि for the bracketed portion
19 I. O. बहु०, A रस०

[1]पीठिका-ताम्रदोहन-दीप-च्छत्र-पादुका[2]-युगान्यारोपयेयुः। धेन्वग्रतश्च[3] मधुरादिरसषट्कं हरिद्रां[4] नानाविधपुष्पाणि[5] नानाविधफलानि[6][जीरकं धान्याकं शर्कराञ्च स्थापयेयुः।

ततो][7]मङ्गलगीतवाद्यवन्दिघोषेषु [8]सत्सु कुण्डसमीपस्थकुम्भचतुष्टयजलेन स्वस्ववेदोक्ताभि-[9]षेचनिकमन्त्रैर्यजमानं स्नापयेयुः। ततो यजमानः शुक्लमाल्याम्बरधरो धृतसर्वालङ्कारः कुशहस्तः पुष्पाञ्जलिमादाय[10][कामधेनुं प्रदक्षिणीकृत्य] 'या लक्ष्मी'रित्यादि[11][मन्त्रैः 'त्वं सर्वदेवगणे'त्यादि-] 'देवगणा वदन्ती'[12][त्यन्त-मन्त्राभ्याश्चामन्त्र्य] [13]पुष्पाञ्जलिनाभ्यर्च्य गुरवे दद्यात्। तद् यथा—ॐ अद्यामुकसगोत्राय अमुकवेदामुकशाखाध्यायिने अमुकदेवशर्मणे तुभ्यं मत्स्यपुराणोक्तहिरण्यकामधेनुमहादानदान[14]-फलप्राप्तिकामोऽहम् एतां कृष्णाजिन-न्यस्तगुडप्रस्थारोपितामुत्कृष्टरत्नसौवर्णचन्द्रतिलकललाटपट्ट-कुण्डलयुग-घण्टा-रौप्यखुर-स्फाटिका-क्षमाला चामरालङ्कृतां [15]कौषेयवस्त्रयुगाच्छादितां [16][पूर्णकुम्भाष्टक-नानाफलाष्टादशधान्य-फलसहितेक्षुदण्डाष्टक-कांस्यभाजनासन-ताम्रदोहन-दीपच्छत्र-पादुकायुग--सर्वरस--हरिद्रा--नाना-विध पुष्प-फल-जीरक-धान्याक-शर्करायुतां] पञ्चवर्ण-वितानकसहितां [17]सवत्सां हिरण्य[18]-कामधेनुं ददानि। गुरुः स्वस्तीत्युक्त्वा सावित्रीं पठित्वा 'हिरण्यकामधेनुरियं विष्णुदैवते'त्युक्त्वा यथाशास्त्रं कामस्तुतिं पठेत्। ततो गुरुर्त्विग्भ्यो दक्षिणां दद्यात्। ॐ अद्य कृतैतद्दान-[19][कर्मप्रतिष्ठार्थं युष्मभ्यमहं] दक्षिणाम् [20]इयदुत्पत्तियोग्यां भूमिमेतानि च रत्नानि ददानि। स्वस्तीति ब्राह्मणा ब्रूयुः। गुरुस्तु [21]स्वस्त्यनन्तरं [22][धेनुं पुच्छे] गृह्णीयात्। ततो यजमान-

---

1 A पट्टिका
2 I. O. पादुक
3 A धेनुग्रतः
4 Both I. O. and A हरिद्रा
5 A नानाविधपुष्पाद्दं ण सामग्री
6 A omits it
7 A जीरकधान्याकशर्कराश्चारोप्य for the bracketed portion
8 A omits it
9 I. O. ०षेचनमन्त्रै०
10 I. O. omits the bracketed portion
11 A omits the bracketed portion
12 I. O. त्यन्तमन्त्राभ्याञ्चामन्त्र्य and A त्यन्तं पठित्वा for the bracketed portion
13 I. O. प्रदक्षिणीकृत्य before this and A reads this as कामधेनुं पुष्पाञ्जलिना संपूज्य
14 A omits one दान
15 A omits it
16 I. O. omits the bracketed portion
17 A सवासमां
18 A omits हिरण्य
19 A omits the bracketed portion
20 A इमामुत्पत्ति०
21 I. O. स्वस्त्यनन्तरं
22 A धेनुपुच्छं for the bracketed portion

स्तुलापुरुषवज्ज्ञापकेभ्यो दक्षिणां दत्त्वा दीनानाथादींस्तर्पयित्वा ब्राह्मण-[1]स्वस्तिवाचनञ्च कृत्वा, त्वरया[2] [गुरवे कामधेनुं प्रतिपादयेत्]। पलत्रयादूर्द्ध्वं यथाशक्ति स्वल्पमहा-[3]दानदाने तु [4]गुरुरेव स्वगृह्योक्तविधिना [5]सर्वं ब्रह्माण्डवत् कुर्यात्।

इति हिरण्यकामधेनुमहादानं [6]समाप्तम्।

1 Both I. O. and A omit स्वस्ति
2 I. O. कामधेनुं दापयेत् for the bracketed portion
3 A omits दान
4 Both I. O. and A गुरवे
5 A omits it
6 I. O. omits it

## [तथा हिरण्याश्वमहादानम् ।][1] ( मत्स्यपुराणम्—२८०अः)

अथातः संप्रवक्ष्यामि हिरण्याश्वविधिं परम् ।
यस्य प्रसादाद् [2]भुवने अनन्तं[3] फलमश्नुते ॥१॥

पुण्यां तिथिमथासाद्य कृत्वा ब्राह्मणवाचनम् ।
लोकेशावाहनं कुर्यात् तुलापुरुषदानवत् ॥२॥

ऋत्विङ्मण्डप[4]-सम्भारभूषणाच्छादनादिकम् ।
स्वल्पेष्वे-[5][काम्निवत् कुर्याद्धेम]-वाजिमखं बुधः ॥३॥

स्थापयेद्वेदिमध्ये तु कृष्णाजिनं[6] तिलोपरि ।
कौषेयवस्त्रसंवीतं कारयेद्धेमवाजिनम् ॥४॥

शक्तितस्त्रिपलादूर्द्ध्वमासहस्रपलाद् बुधः ।
पादुकोपानहच्छत्रचामरासन[7]-भाजनैः ॥५॥

उपेतमिति सम्बन्धः ।

पूर्णकुम्भाष्ट [8][कोपेतं माल्येक्षु]-फलसंयुतम् ।
शय्यां सोपस्करां तद्वद्धेममार्तण्डसंयुताम् ॥६॥

सोपस्करां [9]मशकवारणी-[[10]गेण्डुक-दीपिका-पीठ-पादुकाव्यजनादिकलोक-प्रसिद्धोपकरणान्विताम् ।][11]

ततः सर्वौषधिस्नानस्नापितो वेदपुङ्गवैः ।
इममुच्चारयेन्मन्त्रं[12] गृहीतकुसुमाञ्जलिः ॥७॥

नमस्ते सर्वदेवेश वेदाहरणलम्पट ।
वाजिरूपेण मामस्मात् पाहि संसारसागरात् ॥८॥

---

1 A omits the bracketed portion
2 I. O. भवने, A गुणवान्
3 A ध्रमन्त, M. P. चानन्तं
4 A ०मण्डल०
5 A व च कुर्य्यात्तु मिदं for the bracketed portion
6 I. O. and M. P. कृष्णाजिन
7 I. O. ०चामरासन०
8 A कौषेयमाल्य for the bracketed portion
9 A omits it
10 A गण्डुक
11 I. O. and B गण्डूकादियुतां for the bracketed portion
12 A ०मन्त्र

त्वमेव सप्तधा भूत्वा छन्दोरूपेण भास्करम्[1] ।
यस्माद् भ्रामयसे[2] लोकानतः पाहि सनातन[3] ॥९॥
एवमुच्चार्य गुरवे तमश्वं प्रतिपादयेत् ।
दत्त्वा पापक्षयाद्भानोर्लोकमाप्नोति शाश्वतम् ॥१०॥
गोभिर्विभवतः सर्वा-[4]नृत्विजश्चापि पूजयेत् ।
सर्वेश्वा[5]-त्योपकरणं गुरवे विनिवेदयेत् ॥११॥

[6]अत्योपकरणम् अश्वोपकरणम्, निरुक्ते अश्ववाचित्वेना-[7] त्यशब्दस्योक्तेः ।

सर्वं शय्यादिकं [8]दत्त्वा भुञ्जीतातैलमेव हि ।
पुराणश्रवणं तद्वत् कारयेद्भोजनादिकम् ॥१२॥

पुराणश्रवणं मत्स्यपुराणादिश्रवणम् । भोजनादिकं [9][ब्राह्मणभोजनं वस्त्रदानादिकञ्च ।]

इमं हिरण्याश्वविधिं करोति यः
पुण्यं समासाद्य दिनं नरेन्द्र[10] ।
विमुक्तपापः स पुरं मुरारेः[11]
प्राप्नोति सिद्धै[12]-रभिपूजितः सन् ॥१३॥
इति पठति य इत्थं हेमवाजिप्रदानं
सकलकलुषमुक्तः [13][सोऽश्वयुक्तेन भूयः ।
कनकमयवि] मानेनार्कलोकं [14][प्रयात-
त्रिदश]-पतिवधूभिः पूज्यते योऽथ पश्येत् ॥१४॥
यो वा शृणोति पुरुषोऽल्पधनः स्मरेद्वा
हेमाश्वदानमभिनन्दयतीह लोके ।

---

1 A भास्करः; M. P. भास्कर
2 I. O. भ्रामययत्, A यामयसे, M. P. भामयसे
3 A सनातनः
4 A ॰मृत्विजश्चापि
5 A श्वो and I. O. रो for श्वो
6 Both I. O. and A चात्योपकरणम
7 I. O. ॰श्वमत्यस्यार्थः, A ॰श्वमत्य-स्योक्तत्वात्
8 I. O. omits it
9 Both I. O. and A ब्राह्मण भोजनादिकं वस्त्रादिकञ्च for the bracketed portion
10 I. O. नरेन्द्रः, A नरेन्द्रं
11 Both I. O. and A मुरारे
12 A सिद्धै॰
13 A omits the bracketed portion
14 A and M. P. प्रयाति त्रिदश for the bracketed portion

सोऽपि प्रयाति [1]हतकल्मषशुद्धदेहः
स्थानं पुरन्दर-[2]महेश्वरलोकजुष्टम् ॥

प्रयोगः

अत्र यजमानः समुपजातहिरण्याश्वमहा-[3]दानदानेच्छः[4] तुलापुरुषलिखितं खङ्ग-चर्म[5]-मय-ढालसन्नाह-[6]तुलास्थापनीयहरिप्रतिमा--सालङ्कारतुला-हस्तग्राह्यदेवताप्रतिमा--ऋत्विग्दक्षिणाबहिः [7]सर्वसम्भारम्, अधिकत्वेन [8]पलत्रयादूर्द्ध्वं पलसहस्रावध्यभीष्टसुवर्णेन घटितमश्वं, तदधः[9]-स्थापनार्थं कृष्णाजिनं तिलांश्च, [10]अश्वाच्छादनार्थं [11]कौषेयवस्त्रम्, [12]अश्वपार्श्वेस्थापनार्थं [13]पादुकायुगोपानद्युग-च्छत्र-चामरासन-[14]कांस्यभाजन-[15][कुम्भाष्टकेक्षुफलानि, यथोपकल्पितोपस्करयुतां] शय्यां, तत ऊर्द्ध्वं स्थापनार्थं यथेष्ट[16]-हेम-[17]पत्रोत्खाटितसूर्यप्रतिमां प्रचुर-[18]माल्यार्जनसामग्रीम्, ऋत्विग्भ्यो दक्षिणार्थमभिमतसंख्या गाः, यजमान-स्नपनार्थं सर्वौषधि-[19]श्चोत्पादयेत्।

ततस्तुलापुरुषोक्तसमयानामन्यतमस्य पूर्वतरदिने गुर्वृत्विग्यजमानजापकास्तुलापुरुषवद्धविष्यभोजनादि[20] कृत्वा, निवेदनसङ्कल्पवाक्ययोस्तुलापुरुषपदस्थाने हिरण्याश्वपदं प्रक्षिप्य निवेदनं सङ्कल्पञ्च कुर्युः। अपरदिने च यजमानः पूर्ववद् गोविन्दाद्याराधनादि मधुपर्क-[21][दानान्तं कर्म] गोविन्दाद्यभ्यर्चन[22]-ब्राह्मणानुज्ञापन[23]-दानसङ्कल्प-पुण्याहादिवाचन-वरणवाक्येषु तुलापुरुषपदस्थाने हिरण्याश्वपदं [24]प्रक्षिप्य कुर्यात्। ततो गुर्वृत्विग्यजमानजापका उपवसेयुः। अपरदिने च तुलापुरुष-[25]वदग्निस्थापनादि मध्यब्राह्मण-[26]वाचनान्तं कर्म यथायथं [27]कुर्युः। एवञ्च मध्यब्राह्मणवाचनान्तं कर्म तुलापुरुषग्रन्थमनुसन्धाय अनुष्ठातव्यम्।

---

1 I. O. कृत०
2 A स for महेश्वर
3 Both I. O. and A omit दान
4 A ०दानेषु
5 I. O. ०मयाङ्ग, A ०मयाच्छन्न
6 I. O. तु, A तुलापुरुष for तुला
7 Both I. O. and A सर्व०
8 A पत्रमादूर्द्ध्वं
9 A तदध०
10 Both I. O. and A आच्छादनार्थं
11 I. O. कौशेयवस्त्रं
12 A omits अश्व
13 A पादुकोपानद्युग
14 A omits कांस्य
15 A सोपस्करयुतां for the bracketed portion
16 A यथेष्ट०
17 I. O. यन्त्रोत्खाटित, A परोखोचित
18 A माल्यसामग्रीं
19 I. O. ०श्चोपपादयेत्
20 A ०दिकं
21 A दानादिवरणान्तं for the bracketed portion
22 I. O. ०भ्यर्चन
23 A ०ज्ञापना
24 I. O. पक्षिप्य
25 A omits व
26 A वचनान्तं
27 I. O. omits it

तत ऋत्विजो[1] हिरण्याश्वं प्रधानवेद्यां लिखितचक्रोपरि कृष्णाजिनमास्तीर्य तदुपरि [2]तिलान् दत्त्वा तत्रारोप्य कौषेयवस्त्रेणाच्छादयेयुः । [3]अश्वपार्श्वे च काष्ठमयपादुकायुगोपानद्युग-च्छत्र-[4]चामरासन-कांस्यभाजन-पूर्णकुम्भाष्टकेक्षुयष्टि-यथेच्छफलमाल्यानि, अभीष्टदारुमयखट्वा-स्तीर्ण-कम्बल-[5][पटीतूलिकादिरूपां] [6][गण्डोपधान-मशकवारणो]-[7][दीपिका-पीठ-पादुका-व्यजन]-सहिताम् उपरिदत्तसौवर्णमार्तण्डप्रतिमाञ्च[8] शय्यां स्थापयेयुः । ततः कुण्डसमीपस्थ-कुम्भचतुष्टयजलं सर्वौषधिमिश्रं कृत्वा, तेन तूर्यगीतनन्दिघोषेषु [9]सत्सु यजमानं स्नापयेयुः । ततो यजमानः शुक्लमाल्याम्बरधरो धृतसर्वालङ्कारः पुष्पाञ्जलिमादाय अश्वं प्रदक्षिणीकृत्य 'नमस्ते सर्व-[10]देवेशे'त्यादि—'पाहि [11]सनातने'त्यन्तमन्त्राभ्यामामन्त्र्य पुष्पाञ्जलिनाभ्यर्च्य गुरवे दद्यात् । तद् यथा—[12]ॐ अद्यामुकसगोत्राय अमुक-[13]वेदामुकशाखाध्यायिने अमुक-देवशर्मणे तुभ्यं मत्स्यपुराणोक्तहिरण्याश्वमहादान-[14]दानफलप्राप्तिकामोऽहम् एतं कृष्णाजिन-न्यस्ततिलोपरिस्थापितं कौषेयवस्त्राच्छादितं पादुको-[15]पानच्छत्रचामरासनभाजन-[16]पूर्णकुम्भाष्ट-केक्षुफलमाल्य-यथोप-[17]कल्पितोपस्करसहितोर्द्ध्वन्यस्तसौवर्णमार्तण्ड-[18]प्रतिमाशय्या-पञ्चवर्णविता-नकसहितं हिरण्याश्वं ददानि ।

गुरुः स्वस्तीत्युक्त्वा सावित्रीं पठित्वा 'हिरण्याश्वोऽयं विष्णुदैवत' इत्युक्त्वा यथाशास्त्रं कामस्तुतिं पठेत् । ततो गुरवे दक्षिणां दद्यात् । ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं [19]तुभ्यमहं दक्षिणामियदुत्पत्तियोग्यां भूमिमेतानि च[20] रत्नानि ददानि । गुरुः स्वस्तीत्युक्त्वा अश्वं[21] [22]कर्णे गृह्णीयात् । तत ऋत्विग्भ्यो दक्षिणां दद्यात् । तद् यथा—ॐ अद्यामुकामुकसगोत्रेभ्योऽ-मुकामुकवेदामुकामुकशाखाध्यायिभ्योऽमुकामुकदेवशर्मभ्यो युष्मभ्यं [23]हिरण्याश्वमहादानकर्मणि

1 A ऋत्विजा
2 A तातिलान
3 A अश्वपार्श्वे
4 A चामर
5 A पट्टतुलिकादिकारूपं for the bracketed portion
6 I. O. गण्डक and A गेण्डुक for the bracketed portion
7 B omits the bracketed portion
8 A ०प्रतिमां
9 A omits it
10 Both I. O. and A ०देवेभ्य
11 I. O. संसारसागरादित्यस्मन्त्र-स्त्वमामन्त्र्य, A संसारमन्त्रेणामामन्त्र्य
12 A omits it
13 A वेद for वेदामुक
14 A omits दाम
15 A परि for पान
16 I. O. omits पूर्ण
17 I. O. कल्पितपुस्कर०
18 A omits प्रतिमा
19 A omits it
20 I. O. omits it
21 I. O. अश्व
22 A omits it
23 I. O. हिरण्याश्वदानकर्म्मणि, A महादानकर्मणि

कृतकर्मप्रतिष्ठार्थं दक्षिणा-[1]मेता गा ददानि। ऋत्विजः स्वस्तीति प्रत्येकं ब्रुयुः। ततो यजमानस्तुलापुरुषवज्जापकेभ्यो दक्षिणादानं[2] दीनानाथादितर्पणं ब्राह्मणवाचनं त्वरया हिरण्याश्वप्रतिपादनञ्च[3] कुर्यात्। ततः [पुराणश्रवणं कृत्वा][4] अभिमतसंख्यान् ब्राह्मणान् भोजयित्वा [वस्त्रादिनाभ्यर्च्य स्वयम् अतैलं भुञ्जीत][5]। स्वल्पमहादाने तु [6]गुरुरेव सर्वं [7]ब्रह्माण्डदानवत् कुर्यात्।

इति हिरण्याश्वमहादानं [8]समाप्तम्।

1 A ०मेतानि गां, I. O. ०मेतां गां
2 I. O. दक्षिणां दद्यात्
3 I. O. ०प्रतिपादनं
4 A पुराणश्रवणञ्च कुर्यात् for the bracketed portion
5 A वस्त्राणि दद्यात् for the bracketed portion
6 A गुरवे, I. O. गुरवे च
7 A ब्रह्माण्डवत्
8 I. O. omits it

## [1]तथा हिरण्याश्वरथमहादानम्। ( मत्स्यपुराणम्— २८१ अः )

अथातः सम्प्रवक्ष्यामि महादानमनुत्तमम्।
पुण्यमश्वरथं नाम महापातकनाशनम् ॥१॥
पुण्यं दिनमथासाद्य कृत्वा ब्राह्मणवाचनम्।
लोकेशावाहनं कुर्यात्तुलापुरुषदानवत् ॥२॥
[2]ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम्।
कृष्णाजिने[3] तिलान् कृत्वा काञ्चनं[4] स्थापयेद्रथम् ॥३॥
सप्ताश्वं चतुरश्वं वा चतुश्चक्रं सुकूवरम्।
[5]इन्द्रनीलेन कुम्भेन ध्वजरूपेण संयुतम् ॥४॥

कूवरो युगवन्धनदण्डः। इन्द्रनीलेन इन्द्रनीलसहितेन ध्वजरूपेण ध्वजाकारेण[6] कुम्भेन, यद्वा इन्द्रनीलनिर्मितेनैव[7] कुम्भेनेत्यर्थः।

लोकपालाष्टकोपेतं पद्मरागदलान्वितम्।
चत्वारः[8] पूर्णकलसा धान्यान्यष्टादशैव तु ॥५॥

पद्मरागदलान्वितं पद्मरागखण्डयुक्तम्। चत्वारः पूर्णकलसाः स्थाप्याः। अष्टादश धान्यानि च पार्श्वतः [9]स्थापनीयानि।

कौषेयवस्त्रसंयुक्तमुपरिष्टाद्वितानकम्।
माल्येक्षुफलसंयुक्तं पुरुषेण समन्वितम् ॥६॥

[10][पुरुषेण सौवर्ण]-पुरुषेण सहितं रथमित्यर्थः।

यो यद्भक्तः पुमान् कुर्यात् स तन्मन्त्राधिवासनम्।
[11]छत्रचामरकौषेयवस्त्रोपानहपादुकाः ॥७॥

यो यद्भक्तः स पुरुष-[12]स्तत्तत्प्रतिमारूपं [13]रथ आरोपयेदित्यर्थः।

---

1 A omits it
2 A ऋत्विग्म ण्ड for ऋत्विङ्मण्डप
3 A कृष्णाजिन
4 I. O. काञ्चने
5 M. P., I. O. and A ऐन्द्रनीलेन
6 Both I. O. and A omit it
7 A ०निर्मितेन
8 A चत्वार
9 A स्थापनीयानि
10 I. O. omits the bracketed portion
11 A पुष्प०
12 A ०स्तद्तत्प्रतिरूपं
13 A रथमारोपयेदित्यर्थः

गोभिर्विभवतः सार्द्धं दद्याच्च शयना-[1]सनम् ।

[2][आ भारा]-त्त्रिपलादूर्द्ध्वं शक्तितः कारयेच्छुभम् ॥८॥

[3][आ भारात्]पलसहस्रद्वयं यावत् ।

[4]अश्वाष्टकेन संयुक्तं चतुर्भिरथ वाजिभिः ।

द्वाभ्यामथ युतं [5]कुर्या[6]द्धेमसिंहध्वजान्वितम् ॥९॥

अनेन उक्तसंख्यानामन्यत[7]मसंख्यया [8]प्रत्यक्षाश्वयुक्तं रथं[9] परिकल्पितापरहेमसिंहध्वजान्वितञ्च कुर्यादित्यर्थः ।

चक्ररक्षावुभौ तस्य तुरगस्थावथाश्विनौ ।

पुण्यकालं ततः प्राप्य पूर्ववत् स्नापितो द्विजैः[10] ॥१०॥

त्रिः प्रदक्षिणमावृत्य गृहीतकुसुमाञ्जलिः ।

शुक्लमाल्याम्बरो[11] [12]दद्यादिमं मन्त्रमुदीरयन् ॥११॥

नमो नमः पापविनाशनाय

विश्वात्मने वेदतुरङ्गमाय ।

धाम्नामधीशाय भवाभवाय

पापौघदावानल देहि शान्तिम् ॥१२॥

[13]वस्वष्टकादित्यमरुद्गणानां

त्वमेव धाता परमं निधानम् ।

[14]यतस्ततो मे हृदयं [15]प्रयातु

[16]धर्मैकतानत्वमघौघनाशात् ॥१३॥

1 Both I. O. and ०शनं
2 Both I. O. and A अभावा for the bracketed portion
3 Both I. O. and A अभावात्
4 A अश्वाष्केन
5 Both I. O. and A दद्या०
6 A ह्यैम०
7 I. O. ०तमया संख्यया, A ०तमपलसंख्यया
8 I. O. युक्त again before this
9 A रथो
10 A द्विजः
11 A ०म्बरधरो
12 A दद्याम
13 I. O. वसुष्टका०, A वस्वकाष्टका०
14 Both I. O. and A यतस्ततो
15 A प्रयान्त
16 A धर्मैकतानत्व०, I. O. धर्म्मैकतामत्व०

इति तुरगरथप्रदानमेतद्
भवभयसूदनमत्र यः करोति ।
स कलुषपटलैर्विमुक्तदेहः
परमुपैति पदं पिनाकपाणेः ॥१४॥

देदीप्यमान[1]-वपुषा विजितप्रभाव-
माक्रम्य मण्डलम-[2]खण्डितचण्डभानोः ।
[3]सिद्धाङ्गनानयन-[4]षट्पदपीयमान-
[5]वक्त्राम्बुजोऽम्बुजभवेन चिरं सहास्ते ॥१५॥

इति पठति[6] शृणोति वा य एतत्
[7]कनकतुरङ्गरथप्रदानमस्मिन् ।
न स नरकपुरं व्रजेत् कदाचि
न्नरकरिपोर्भवनं प्रयाति भूयः ॥१६॥

प्रयोगः

अत्र यजमानः समुपजातहिरण्याश्वरथमहादान[8]-दानेच्छस्तुलापुरुषलिखितं[9] खड्गचर्म-[10]मयडाल--सन्नाह--[11]तुलास्थापनीयहरिप्रतिमा--सालङ्कारतुला -हस्तमात्यदेवताप्रतिमा--यथोक्त-वितानबहिः सर्वं सम्भारम्, अधिकत्वेन पलत्रयादूर्द्ध्वं पलसहस्रद्वयपर्यन्तम् अभिमतपरिमाण-सुवर्णघटितं सप्ताश्वं चतुरश्वं वा [12]चतुश्चक्रं शोभन-[13]कूवरम् एकपार्श्वे[14]-न्यस्तेन्द्रनील-खचित[15]-हैम[16]कुम्भयुक्तध्वजम् अपरपार्श्वेन्यस्तहैमसिंहयुक्तध्वजं पद्मरागाख्यमाणिक्या-लङ्कृतं[17] स्वस्वदिक्क्रमोत्खाटितेन्द्रादिलोकपालप्रतिमाष्टकं[18] [19]रथं,तदग्रचक्रद्वयपार्श्वा-[20]रोपणार्थं

1 I. O. omits मान
2 Corrected from M. P. I. O. ०खण्डसचण्डभानोः, A ०खण्डमचण्ड-भानोः
3 A सिद्धाङ्गना०
4 A ०षटपद०
5 A वक्राम्बुजा०
6 A पठति
7 A कनतुरगरथप्रदानमस्मि
8 A दा for दान
9 Both I. O. and A ०लिखित
10 I. O. मयार्जन and A मयातुम for मयडाल
11 I. O. तुला०
12 A चतुश्चक्र
13 I. O. ०कूवरं
14 A ०पार्श्वे
15 A omits खचित
16 A ०कुम्भाग्रध्वजम
17 A ०कृत
18 A ष्टकं
19 A पुष्यं
20 I. O. ०पार्श्व०

सुवर्ण-[1]पल्वोत्खाटि-[2][ताश्वारूढ़ाश्विनी]-कुमारप्रतिमाद्वयं-[3]रथमध्यारोपणार्थम् अभिमतसुवर्ण-[4]घटितेष्टदेवताप्रतिमां, रथारोपणार्थं कृष्णाजिनं तिलांश्च, रथपार्श्वस्थापनार्थं कलसचतुष्टयम् अष्टादशधान्यानि बहुविधमाल्यसामग्रीम् [5]इक्षुं फलानि छत्र-चामर-कौषेयवस्त्रोपानत्पादुका-युगानि [6]यथेच्छनिर्मितं शयनीयम् आसनञ्च, [7][यथाशक्ति गाः] यथाशक्ति [8][अष्टौ [9][चतुरो द्वौ] वा खरूपाश्वान्,] रथोर्द्ध्वमण्डपबन्धनार्थं कौषेयवस्त्रसंयुक्तं यथोक्तं वितानकञ्चोत्पादयेत् । ततस्तुलापुरुषोक्तसमयानामन्यतमस्य पूर्वतरदिने यजमान-गुर्व्वृत्विग्-जापकास्तुलापुरुषवद्धविष्य-भोजनादि[10] कृत्वा, निवेदनसङ्कल्पवाक्ययोस्तुलापुरुषपदस्थाने हिरण्याश्वरथपदं प्रक्षिप्य यथा-यथं निवेदनं सङ्कल्पञ्च कुर्युः । अपरदिने च यजमानस्तुलापुरुषवद् गोविन्दाद्याराधनादि-मधुपर्कदानान्तं कर्म, गोविन्दाभ्यर्चन-ब्राह्मणानुज्ञापन-दानसङ्कल्प-पुण्याहादिवाचन-वरणवाक्येषु तुलापुरुषपदस्थाने हिरण्याश्व-[11]रथपदं प्रक्षिप्य कुर्यात । ततो गुर्व्वृत्विग्यजमानजापका उपवसेयुः । अपरदिने च कृतनित्या[12]-स्तुलापुरुषवदग्निस्थापनादि मध्यब्राह्मणवाचनान्तं कर्म यथायथं कुर्युः । एवञ्च मध्यब्राह्मणवाचनान्तं कर्म तुलापुरुषग्रन्थमनुसन्धाय अनुष्ठातव्यम् ।

ततं ऋत्विजः प्रधानवेद्यां लिखितचक्रोपरि कृष्णाजिनमास्तीर्य तत्र तिलान् दत्त्वा तदुपरि [13]रथमारोप्य तन्मध्ये [14]घटितेष्टदेवताप्रतिमामारोप्य, अग्रचक्र-[15]द्वयसन्निधावश्विनी[16]कुमारा-[17]वारोप्य, उपरि छत्रं विधृत्य, अधः पादुकोपानद्युगे दत्त्वा, रथपार्श्वे [18][चामरमारोप्य, कौषेयवासोमाल्यै रथमलङ्कृत्य, रथपार्श्वे पूर्णकुम्भचतुष्टयमष्टादशधान्यानि फलानीक्षुदण्डं शय्यामासनं गा उक्तसंख्यानामन्यतमसंख्यमश्वञ्च] स्थापयेयुः । ततो मङ्गलगीतवाद्यवन्दि-घोषेषु सत्सु यजमानं कुण्डसमीपस्थकुम्भचतुष्टयजलेन स्नापयेयुः । ततो यजमानः[19]शुक्ल-

---

1 I. O. ०पल्वोत्०
2 A तश्वारूढ़ for the bracketed portion
3 A omits it
4 A ०घटितामीष्टदैवतप्रतिमां, I. O. ०घटितेष्टदैवताप्रमां
5 A इक्षु
6 I. O. यथेष्ट०
7 I. O. omits the bracketed portion
8 A अलङ्करणानि for the bracketed portion
9 I. O. omits the bracketed protion
10 A ०भोजनाह्निकं
11 A omits रथ
12 A कृतनित्य०
13 A रथं समारोप्य
14 A घटित for घटितेष्ट
15 I. O- omits द्वय
16 A omits नी
17 A omits वा
18 A omits the bracketed portion
19 A omits शुक्ल

माल्याम्बरधरो धृतसर्वालङ्कारः पुष्पाञ्जलिमादाय रथं त्रिः[1] प्रदक्षिणीकृत्य 'नमो नमः पाप-[2]विनाशनाये'त्यादि मन्त्रद्वयं पठित्वा, पुष्पाञ्जलिनाभ्यर्च्य गुर्वृत्विक्-प्रमुखनानाब्राह्मणेभ्य उत्सृज्य दद्यात्। [3][तद् यथा—] ॐ अद्य यथासम्भवगोत्रनामभ्यो[4] गुर्वृत्विक्-प्रमुखब्राह्मणेभ्यो मत्स्यपुराणोक्त-हिरण्याश्वरथ[5]-महादान-[6]दानफल-प्राप्तिकामोऽहम् एतं कृष्णाजिनन्यस्ततिलारोपितं [7][हैमाश्वारूढाश्विनी]-कुमारद्वयसहितं [8][सौवर्ण-[9]मुकप्रतिमान्वितं छत्रचामरकौषेयवस्त्रपादुकायुगोपानद्युगमाल्यपूर्णकुम्भचतुष्टयाष्टादशधान्यकौषेयवस्त्रसंयुक्त-वितानकेतु[10]-फलेयद्ध[11]वीशयना[12]सनेयदश्वसहितं] हिरण्याश्वरथं ददानि।

ततो गुर्वृत्विजः स्वस्तीत्युक्त्वा सावित्रीं पठित्वा 'हिरण्याश्वरथोऽयं विष्णुदैवत' इत्युक्त्वा यथाशाखं कामस्तुतिं पठेयुः। ततो यजमानो [13]गुर्वृत्विग्भ्यो दक्षिणां दद्यात। तद् यथा —ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं युष्मभ्यमहं दक्षिणामियदुत्पत्तियोग्यां भूमिमेतानि च रत्नानि [14]ददानि। गुर्वृत्विजः स्वस्तीत्युक्त्वा [15]प्रत्येकं स्वं स्वं सुवर्णभागं स्पृशेयुः। यद्वा गुर्वृत्विग्भ्य एव दद्यात्। तद्दानवाक्ये ॐ अद्यामुकामुकसगोत्रेभ्योऽमुकामुकवेदामुकामुकशाखाध्यायिभ्यो-ऽमुकामुकदेवशर्मभ्यो युष्मभ्यमिति, मत्स्यपुराणीय-तुलापुरुषोक्तभागव्यवस्थयेति च विशेषः। ततस्तुलापुरुषवज्जापकेभ्यो दक्षिणादानं दीनानाथादि-[16]प्रीणनं ब्राह्मणवाचनं त्वरया यथायथं हिरण्याश्वरथप्रतिपादनञ्च कुर्यात्।

इति हिरण्याश्वरथमहादानं [17]समाप्तम्।

---

1 A omits it
2 I. O. ०विनाशायेत्यादि
3 A omits the bracketed portion
4 I. O omits भ्यो
5 A omits रथ
6 A omits दान
7 A हैमाश्वरूढात्म for the bracketed portion
8 A omits the bracketed portion
9 I. O. ०सक०
10 I. O. ०षु
11 I. O. च for द्ध
12 I. O. ०सनहिरण्याश्वसहितं
13 A ऋत्विग्भ्यो
14 A च
15 A omits it
16 A ०तर्पणं
17 I. O. omits it

## [1]तथा हेमहस्तिरथमहादानम्। ( मत्स्यपुराणम्—२८२ अः )

अथातः संप्रवक्ष्यामि हेमहस्तिरथं शुभम् ।
यस्य प्रदानाद्भुवनं वैष्णवं याति वै नरः ॥१॥
[2]पुण्यां तिथिमथासाद्य [ तुलापुरुषदानवत् ।
विप्रवाचनकं ][3] कुर्याल्लोकेशावाहनं बुधः ।
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम् ॥२॥
[4]अत्राप्युपोषितस्तद्वद्ब्राह्मणैः सह [5]शोभनम् ।
कुर्यात् पुष्परथाकारं काञ्चनं मणिभूषणम् ॥३॥
वलभीभिर्विचित्राभिश्चतुश्चक्रसमन्वितम् ।

[6][पुष्परथाकारं क्रीडारथाकारम् । वलभीभिः चतुष्पार्श्वेस्थितोर्द्ध्वद्विशीर्षकमशीर्षकाकाराभिः । विचित्राभिः विविधरूपाभिः । ]

लोकपालाष्टकोपेतं [7][ब्रह्मार्कशिवसंयुतम् ॥४॥
मध्ये नारायणोपेतं ] लक्ष्मीपुष्टिसमन्वितम् ।
कृष्णाजिने[8] तिलद्रोणं कृत्वा [9]संस्थापयेद्रथम् ॥५॥
तथाष्टादशधान्यानि भाजनासन-[10]चन्दनैः ।

सहितानीति शेषः ।

दीपिकोपानहच्छत्रं दर्पणं पादुकान्वितम् ॥६॥
ध्वजे तु गरुडं कुर्यात् [11]कूवराग्रे विनायकम् ।
[12][नानाफलसमायुक्तमुपरिष्टाद्वितानकम् ॥७॥

1 A अथ
2 I. O. पुण्यां तिथिं समासाद्य, A पुण्या तिथिं अथासाद्य
3 A कृत्वा ब्राह्मणवाचनं । तुलापुरुषवत् for the bracketed portion
4 I. O. तत्रा०
5 A भोजनं
6 A omits the bracketed porrion
7 A omits the bracketed portion
8 A कृष्णाजिनं
9 I. O. संस्थापयेत् पुरं
10 A ०बन्धनैः
11 A कुवेराग्रे
12 A omits the bracketen portion

कौषेयं[1] पञ्चवर्णञ्च [2]अम्लानकुसुमान्वितम् । ]
चतुर्भिः कलसैः सार्द्धं गोभिरष्टाभिरन्वितम् ॥८॥
चतुर्भिर्हेममातङ्गैर्मुक्तादामविभूषितम्[3] ।
स्वरूपतः करिभ्याञ्च युक्तं कृत्वा निवेदयेत् ॥९॥
कुर्यात् पञ्चपलादूर्द्ध्व-[4][मा भाराच्चापि] शक्तितः ।

अटवीश्वरान् सुलभतरकरिणो बहुसुवर्णार्जनासमर्थान् प्रतीदं [5]पाञ्चपलिकं महादान-मुन्नेयम् ।

[6][ततो मङ्गलशब्देन] स्नापितो वेदपुङ्गवैः ॥१०॥
त्रिः प्रदक्षिणमावृत्य गृहीतकुसुमाञ्जलिः ।
इममुच्चा[7]रयन्मन्त्रं ब्राह्मणेभ्यो [8]निवेदयेत् ॥११॥

नमो नमः [9]शङ्करपद्मजार्क-
लोकेशविद्याधरवासुदेवैः ।
त्वं सेव्यसे वेदपुराणयज्ञ-
तेजोमय स्यन्दन पाहि तस्मात् ॥१२॥
[10]यत्तत् पदं परमगुह्यतमं मुरारे-
रानन्दहेतु गुणरूपविमुक्तमन्तः ।
योगैकमानसदृशो मुनयः समाधौ
पश्यन्ति तत् त्वमसि नाथ [11]रथेऽधिरूढः ॥१३॥
यस्मात्त्वमेव भवसागर-[12]संप्लुताना-
मानन्दभाण्ड-[13]भूतमध्वरपानपात्रम् ।
तस्मादघौघशमनेन कुरु प्रसादं
चामीकरेभरथ माधव सम्प्रदानात् ॥१४॥

---

1 I. O. कौशेय
2 I. O. सुम्लान०
3 A ०विभूषितैः
4 A मभावाद्दपि and M. P. मा भाराद्दपि for the bracketed portion
5 I. O. पञ्चपलिकं, A पञ्चपलैक
6 A ततश्च मानामङ्गल्येन for the bracketed portion
7 I. O. A and M. P. ०रन्निमन्त्रं
8 A निवेदनं
9 A omits शङ्कर
10 I. O. तत्तत्
11 I. O. रथाधिरूढः, M. P. रथाधिरूढ
12 I. O. संप्लुताना०
13 A ०भूत०

इत्थं प्रणम्य कनकेभरथप्रदानं
यः कारयेत् सकलपापविमुक्तदेहः ।
विद्याधरामरमुनीन्द्रगणाभिजुष्ट[1]
प्राप्नोत्यसौ पदमतीन्द्रियमिन्दुमौलेः ॥१५॥
कृतदुरितविताना[2]तुल्लसद्वह्निजाल-
व्यतिकरकृतदाहोद्वेगभाजोऽपि बन्धून् ।
नयति च पितृपुत्रान्[3] रौरवादप्यशेषात्
कृतगजरथदानः शाश्वतं [4]सद्म विष्णोः ॥

प्रयोगः

अत्र यजमानः समुत्पन्नहेमहस्तिरथ[5][महादानदानेच्छ]-स्तुलापुरुषलिखितं[6] खड्ग-चर्ममय-ढाल[7]--सन्नाह-तुलास्थापनीयहरिप्रतिमा-सालङ्कारतुला-हस्तग्राह्य-देवताप्रतिमा-यथोक्तवितानबहिः सर्वं सम्भारम्, अधिकत्वेन पलपञ्चकादूर्द्ध्व[8] [8]पलसहस्रद्वयपर्यन्तम् अभिमतपरिमाणसुवर्णघटितं संग्रामोचितसंस्थाना[9]ख्रादिसामग्रीशून्यं चतुश्चक्रम् अभिमतरत्नखचितं ध्वजा-[10]ग्रारोपित-सौवर्णगरुडं कूवराग्रारोपितसौवर्णविनायकं प्रान्तेषु विविधसौवर्णपत्रावलीविचित्राभि-[11]रूर्द्ध्व-द्विपत्त्रकमशीर्षकाकृतिभिर्वलभीभि-[12]र्वेष्टितम् अग्रारोपितहैमहस्तिचतुष्टयं स्वस्वदिक्क्रमोत्खाटिते-न्द्रादिलोकपाल-[13]प्रतिमाष्टकम् अभिमत-[14]पङ्क्तयुत्खाटितब्रह्मार्कशिवप्रतिमं रथं, रथालङ्करणार्थं मुक्ताहारं, रथमध्यारोपणार्थं सुवर्णान्तर-[15]पत्त्रोत्खाटितां लक्ष्मी-[16][पुष्टिसहितां नारायण-प्रतिमां, रथारोपणार्थं कृष्णाजिनं तिलद्रोणञ्च,[17]अग्रस्थापनार्थं हैमहस्तिचतुष्टयं[18], सम्मुखस्थाप-

---

1 A ०जुष्ट
2 I. O. ०मुल्लसद्वह्निजाल० A ०मन्म-सत्वाङ्कुजाल०
3 I. O. ०पुत्राद्, A ०पूराद्
4 A सद्म
5 A महादान for the bracketed portion
6 A ०लिखित
7 I. O. मयाङ्ग and A मयाङ्ग for मयढाल
8 A पलपञ्च for पल
9 I. O. ०ख्रादि, A ०ख्रादिता for ०ख्रादि
10 I. O. या for ग्रा
11 A ०रूर्द्ध्व, विपत्त्र०
12 I. O. र्वलभीर्तिभि०, A omits it
13 I. O. प्रतिमाष्टकाभिमत०
14 I. O. पङ्क्त्योत्०
15 I. O. यत्नोत्खाटितां, A पात्रोत्-खाटितं
16 A प्रपञ्चयुतं only for the bracketed portion
17 I. O. अग्रस्थापित
18 I. O. ०चतुष्टय

नार्थं [1]स्वरूपहस्तिद्वयं, रथपार्श्वस्थापनार्थम् अष्टादशधान्य-कांस्यभाजनासन-चन्दन-दीपसामग्री-छत्र-दर्पण-पादुकायुगोपानद्युग-कुम्भचतुष्टयगवाष्टकानि, रथोद्ध्व मण्डपबन्धनार्थं कौषेयवस्त्रमयं वर्णपञ्चक-[2]युक्तं ] वितानकं, तदलङ्करणार्थम् अम्लानपुष्पमाल्यसामग्रीं विविधफलानि चोत्पादयेत्।

ततस्तुलापुरुषोक्तसमयानामन्यतमस्य पूर्वतरदिने यजमानगुर्वृत्विग्जापकास्तुलापुरुषवद्धविष्यभोजनादि[3] कृत्वा, निवेदनसङ्कल्पवाक्ययोस्तुलापुरुषपदस्थाने हेमहस्तिरथ-[4]पदं [5]निवेश्य [6][ यथायथं निवेदनं सङ्कल्पञ्च ] कुर्युः। अपरदिने च यजमानस्तुलापुरुषवद् गोविन्दाद्याराधनादि मधुपर्कदानान्तं गोविन्दाद्यभ्यर्चन[7]-ब्राह्मणानुज्ञापन-दानसङ्कल्प-पुण्याहादि-[8][वाचन-वरण]वाक्येषु तुलापुरुषपदस्थाने हेमहस्तिरथपदं निवेश्य कुर्यात्। ततो गुर्वृत्विग्-यजमानजापका उपवसेयुः। अपरदिने च[9] कृतनित्यास्तुलापुरुषवदग्निस्थापनादि मध्यब्राह्मणवाचनान्तं कर्म यथायथं कुर्युः। एवञ्च मध्यब्राह्मणवाचनान्तं कर्म तुलापुरुषग्रन्थमनुसन्धाय अनुष्ठातव्यम्।

तत ऋत्विजः प्रधानवेद्यां लिखितचक्रोपरि कृष्णाजिनमास्तीर्य तदुपरि तिलद्रोणं विकीर्य, तत्र रथमारोप्य मुक्ताहारे-[10]णालङ्कृत्य, रथमध्ये लक्ष्मीपुष्टिसहितां नारायणप्रतिमामारोपयेयुः[11]। [12]रथाग्रतश्च [13]हैमहस्तिचतुष्टयं पङ्क्त्यारोप्य [14]तत्पुरतः [15]स्वरूपहस्तिद्वयमारोपयेयुः। रथपार्श्वे [16]चाष्टादशधान्य कांस्यभाजनासन-चन्दन--दीपोपानद्युग-काष्ठमयपादुकायुगच्छत्रदर्पणकुम्भचतुष्टयगवाष्टकानि [17]यथाशोभं स्थापयेयुः। ततो मङ्गलगीतवाद्यवन्दिघोषेषु सत्सु [18]कुण्डसमीपस्थ-कुम्भचतुष्टयजलेन [19]यजमानं स्नपयेयुः। ततो यजमानः शुक्लमाल्याम्बरधरो धृतसर्वालङ्कारः पुष्पाञ्जलिमादाय रथं त्रिः प्रदक्षिणीकृत्य 'नमो नम' इत्यादि—'माधव सम्प्रदाना'दित्यन्त-

---

1 I. O. सुरूप०
2 I. O. ०युक्तं
3 A ०भोजनादिकं
4 A महादान between रथ and पदं
5 A प्रक्षिप्य
6 A सङ्कल्पं only for the bracketed portion
7 I. O. ०भ्यर्चन
8 A omits the bracketed portion
9 A omits it
10 A ०णालालङ्कृत्य
11 A ०मारोपयेत्
12 A omits it
13 A हैम०
14 I. O. एतत् पुरतः
15 I. O. सुरूपहस्तिद्वय०, A स्वरूपहस्तद्वय०
16 A चाष्टादशधान्यानि
17 A यथाशक्ति
18 A कुण्डचतुष्टय for कुण्ड
19 A omits it

[1]मन्त्रैरामन्त्र्य, पुष्पाञ्जलिनाभ्यर्च्य प्रणम्य गुर्वृत्विक्प्रमुख-ब्राह्मणेभ्य उत्सृज्य दद्यात् । [2][तद् यथा] । [3]ॐ अद्य यथासम्भवगोत्रनाम-गुर्वृत्विक्-प्रमुखब्राह्मणेभ्यो मत्स्यपुराणोक्तहेमहस्ति-[4]रथमहादानदानफलप्राप्तिकामोऽहम् एतं कृष्णाजिनन्यस्ततिलद्रोणा[5]-रोपितं [6]स्वरूपहस्तिद्वय-युक्तं मुक्तादामोपशोभितं [7]लक्ष्मीपुष्टिसहितनारायणान्वितम् अष्टादश धान्य-कांस्य-[8]भाजनासन-चन्दन- दीपोपानद्युगच्छत्रदर्पणपादुकायुग--विविधफलसमायुक्ताम्लानकुसुमान्वित--[9]वितानक -कुम्भ-चतुष्टयगवाष्टकसहितं [10]हेमहस्तिरथं ददानि । गुर्वृत्विजः स्वस्तीत्युक्त्वा सावित्रीं पठित्वा 'हेमहस्तिरथोऽयं विष्णुदैवत' इत्युक्त्वा यथाशाखं कामस्तुतिं पठेयुः । ततो यजमानो गुर्वृत्विग्भ्यो दक्षिणां दद्यात् । तद् यथा—ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं युष्मभ्यमहं दक्षिणामियदुत्पत्ति-योग्यां भूमिमेतानि च[11] रत्नानि ददानि । गुर्वृत्विजः प्रत्येकं स्वस्तीत्युक्त्वा स्वं स्वं सुवर्णभागं स्पृशेयुः । यद्वा गुर्वृत्विग्भ्य एव दद्यात् । [12]तत्र ॐ अद्यामुकामुक-सगोत्रेभ्योऽमुकामुक-[13]वेदामुकामुकशाखाध्यायिभ्योऽमुकामुकदेवशर्मभ्यो युष्मभ्यमिति मत्स्यपुराणीय-तुलापुरुषभाग-व्यवस्थयेति च पूर्वदानवाक्ये विशेषः । ततो यजमानस्तुलापुरुषवज्जापकेभ्यो दक्षिणादानं दीनानाथादितर्पणं ब्राह्मणवाचनं त्वरया यथायथं हेमहस्तिरथ-[14]प्रतिपादनञ्च कुर्यात् ।

इति हेमहस्तिरथमहादानं [15]समाप्तम् ।

1 A मन्त्रैरामन्त्र्य
2 I. O. omits it
3 A omits it
4 I. O. omits रथ
5 A ०द्रोण०
6 I. O. सुरूप०
7 A लक्ष्मीपुष्टिसहितं only
8 A ०भाजनचामर०
9 A कनक
10 A हैम०
11 A च after रत्नानि
12 A तत्र
13 A वेद for वेदामुकामुक
14 A प्रकृति for प्रति
15 I. O. omits it

[1]तथा पञ्चलाङ्गलकमहादानम् । (मत्स्यपुराणम्—२८३ अः)

अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।
पञ्चलाङ्गलकं नाम महापातकनाशनम् ॥१॥
पुण्यां तिथिमथासाद्य युगादिग्रहणादिकाम् ।
भूमिदानं नरो दद्यात् पञ्चलाङ्गलकान्वितम् ॥२॥
[2][खेटं वा खर्वटं] वापि ग्रामं[3] वा शस्यशालिनम् ।
निवर्तनशतं वापि [4][तदर्द्धं वापि] शक्तितः ॥३॥

[5]खर्वटो ग्रामशतद्वयप्रधानभूतो ग्रामः । क्रोशैकविस्तारो ग्रामः [6][खेट इति प्रसिद्धः] । निवर्तनपरिमाण[7]-मत्रैव वक्ष्यते ।

सारदारुमयान् कृत्वा हलान् पञ्च [8]विलक्षणान् ।
सर्वोपकरणैर्युक्तानन्यान् [9][पञ्च च काञ्चनान्] ॥४॥

सारदारुमयान् तुलापुरुषोक्तशालादिदारुप्रभवान् । सर्वोपकरणैर्युक्तान् [10]ईशायुग-योक्त्रा[11]-दिभिर्दारु-[12][मयैः काञ्चन]मयैश्च [13][यथाक्रमं युक्तानित्यर्थः । ]

वृषान् लक्षणसंयुक्तान्[14] दशैव तु धुरन्धरान् ।
सुवर्णशृङ्गाभरणान्[15] [16]मुक्तालाङ्गूलभूषितान् ॥५॥

लक्षणसंयुक्तान् गोसहस्र-[17]महादानोक्तलक्षणोपेतान् । सुवर्णशृङ्गाभरणान् सुवर्णशृङ्गान्, सौवर्णग्रैवेयकललाटपट्ट-[चन्द्ररूपालङ्कारयुक्तान् ।

---

1 I. O. अथा
2 I. O. खेटकर्वटकं, A कवटां खटकां and M. P. खर्वटं खेटकं for the bracketed portion
3 I. O. ग्राम्यं
4 A तदर्द्धमपि for the bracketed portion
5 Both I. O. and A कर्वटो
6 A खेट and I. O. प्रसिद्ध: for the bracketed portion
7 A omits परिमाण
8 A and M. P. विचक्षण:
9 A पञ्चचककानना for the bracketed portion
10 A omits ईशा
11 A योक्त्रा०
12 A omits the bracketed portion
13 A reads the bracketed portion as यथाक्रमयुक्तामित्यर्थः:
14 A लक्षणसंयुक्ता
15 I. O. ०भरणा
16 A युक्तालाङ्गलभूषिताम्
17 A omits महा

रौप्यपादाग्रतिलकान् रक्तकौषेय][1]-भूषणान् ।

स्रग्दामचन्दनयुतान् शालायामधिवासयेत् ॥६॥

रौप्यपादाग्रतिलकान् रौप्यपादाग्रान् रौप्यतिलकानित्यर्थः । शालायां दानमण्डपे, [2]चतुष्पक्षादीनामप्य-[3][थर्ववेदे शालात्वश्रुतेः] । तथा च [4]['या द्विपक्षा चतुष्पक्षा षट्-पक्षा या निमीयते' (अथर्व ६।३।२१) ] इत्यादिः[5] [6]शालाभिधायको मन्त्रः ।

पर्जन्यादित्यरुद्रेभ्यः पायसं निर्वपेच्चरुम् ।

एकस्मिन्नेव कुण्डे तु [7][गुरुर्यस्मै निवेदयेत् ] ॥७॥

गुरुर्यस्मै निवेदयेदिति यमृत्विजं[8] [9]गुरुरादिशति स कुर्यादित्यर्थः ।

[10]पालाशाः समिधस्तद्वदाज्यं कृष्णतिलांस्तथा ।

तुलापुरुषवत् कुर्याल्लोकेशावाहनं बुधः ॥८॥

तद्वदिति पालाश[11]-समिदाज्यकृष्णतिलान् पर्जन्यादित्यरुद्रेभ्यो जुहुयादित्यर्थः ।

ततो मङ्गलशब्देन शुक्लमाल्या-[म्बरो बुधः । ][12]

मङ्गलशब्देन स्नातः शुक्लमाल्याम्बरधर[13] इत्यर्थः ।

[14]आहूय द्विजदाम्पत्यं हेमसूत्राङ्गुरीयकैः ।

कौषेयवस्त्रकटकैर्मणिभि[15]-श्चाभिपूजयेत् ॥९॥

द्विजदाम्पत्यं पत्नीसहितं गुरुमेवेत्यर्थः ।

शय्यां सोपस्करां तद्वद्धेनुमेकां पयस्विनीम् ।

तथाष्टादशधान्यानि समन्तादधिवासयेत् ॥१०॥

सोपस्करां गेण्डुकादिसहिताम् ।

1 A ताम्रादि शेष for the bracketed portion

2 I. O. चतुःपक्षा॰ A चतुष्का॰

3 A reads the bracketed portion as अदिशावच्छ्रुतिः

4 Corrected from A. V. I. O. पार्श्विपक्षा चतुःपक्षा यो निमीयत and ई पक्षा चतुःपक्षाम्बा परिमीयतः for the bracketed portion

5 Both I. O. and A इत्यादि

6 A शलाभिधान

7 A omits the bracketed portion

8 A यमृत्विज

9 A गुरुरदिशति

10 A पालासाः, I. O. पलाशाः

11 A पाला॰

12 A म्बरधर इति for the bracketed portion

13 Both I. O. and A omit धर

14 A आयह्रय

15 A ॰र्मौक्ताभि॰

ततः [प्रदक्षिणं कृत्वा][1] गृहीतकुसुमाञ्जलिः ।
इममुच्चारयेन्मन्त्रमथ सर्वं निवेदयेत् ॥११॥

[2][सर्वं निवेदयेत्] गुरवे सर्वं निवेदयेदित्यर्थः, तस्यैव प्रक्रान्तत्वात् ।

यस्मा-[3]द्देवगणाः सर्वे[4] [स्थावराणि चराणि][5] च ।
धुरन्धराङ्गे तिष्ठन्ति तस्माद्भक्तिः [6]शिवेऽस्तु मे ॥१२॥
यस्माच्च भूमिदानस्य कलां नार्हन्ति षोडशीम् ।
[7]दानान्यन्यानि मे भक्तिधर्मे एव दृढा[8] भवेत् ॥१३॥
दण्डेन सप्तहस्तेन त्रिंशद्दण्डा [9]निवर्तनम् ।
त्रिभागहीनं गोचर्ममानमाह प्रजापतिः ॥१४॥
[10]मानेनानेन यो दद्या-[11]न्निवर्तनशतं बुधः ।
विधिनानेन तस्याशु क्षीयते पापसंहतिः[12] ॥१५॥
तदर्द्धमथवा दद्यादपि गोचर्ममात्रकम् ।
[13][भवनस्थानमात्रं वा] सोऽपि पापैः प्रमुच्यते ॥१६॥
यावन्ति [14]लाङ्गलकमार्गमुखाणि भूमे-
र्भासाम्पतेर्दुहितुरङ्ग-[15]जरोमकाणि ।
[तावन्ति शङ्करपुरे][16] स समा हि तिष्ठेद्
भूमिप्रदानमिह यः कुरुते मनुष्यः ॥१७॥
गन्धर्वकिन्नरसुरासुरसिद्ध[17]-संघै-
राधूतचामरमुपेत्य महद्विमानम् ।

1 A कृत्य, M. P. प्रदक्षिणीकृत्य
2 A omits the bracketed portion
3 A दे for द्दे
4 A सर्वे
5 A चराणि स्थावराणि for the bracketed portion
6 A शिवास्तु मे
7 A दानान्यदि
8 A दृढो
9 A निवर्त्तनं
10 I. O. मानेन
11 A न्नि for न्नि
12 A ०संहृति
13 Corrected from M. P. A तन्नन्नं स्थानमात्रञ्च and I. O. भवनस्थानमेवं वा for the b. p.
14 Corrected from M. P. I. O. लाङ्गलककर्ममुखानि, A लाङ्गलमुख मुखानि
15 A ०यामलोकानि
16 A reads the bracketed portion as भवन्ति शङ्करपुरे शङ्करपुरे
17 A सिद्धस्य for सिद्ध

सम्पूज्यते पितृपितामह-[1]बन्धुयुक्तः
शम्भोः पुरं व्रजति चामरनायकः सन् ॥१८॥
[2][नेन्द्रत्वमप्यधिगतं त्वयमभ्युपैति]
गोभूमिलाङ्गलधुरन्धरसम्प्रदानात् ।
तस्मादघौघपटलक्षयकारि भूमे-
र्दानं विधेय-[3]मतिभूमिभवाभवाय ॥१९॥

प्रयोगः

[4]अत्र यजमानः समुत्पन्न-पञ्चलाङ्गलक-[5]महादानदानेच्छ[6]-स्तुलापुरुषलिखितं खड्ग-चर्म-[7]मयढाल-सन्नाह--[8]तुलास्थापनीयहरिप्रतिमा--सालङ्कारतुला[9]-हस्तग्राह्य-[10]देवताप्रतिमाबहिः सर्वं सम्भारम्, अधिकृत्वेन [11][यथोक्त-खेट-खर्वट]-ग्राम-निवर्तनादीनामन्यतमां[12] भूमिं, तथा सारदारुमयानि ईशा-दण्डयोक्त्रा[13]-द्युपकरणान्वितानि पञ्च लाङ्गलानि, सौवर्णानि च[14] सोपकरणानि पञ्च [15]हलानि, यथोक्तलक्षणान् दश वृषान्, तदलङ्करणार्थं सुवर्णश्टङ्गयुग[16]-दशकं, सौवर्णचन्द्रग्रैवेयकललाटपट्टदशकं, मुक्ताहारांश्च[17] दश, रौप्यं[18] खुरचतुष्कदशकं, [19][तिलकदशकञ्च, दश] पुष्पमाल्यसामग्रीं[20] चन्दनञ्च, वृषाच्छादनार्थं रक्तकौषेयवस्त्रदशकञ्च, पञ्चलाङ्गलपार्श्वस्थापनार्थं यथेच्छखट्वास्तीर्णकम्बल-[21][पटीतूलिकारूपां गण्डोपधान[22]-मशकवारणी]-सहितां शय्यां, बहुक्षीरां धेनुमष्टादशधान्यानि च, [23]सपत्नीकगुरुपूजार्थं [24]हेमयज्ञोपवीताङ्गुरीयक[25]-

1 A संघ for बन्धु
2 A reads the bracketed portion as मन्त्वहृयमप्यधिकगतत्वय-स्वपैति
3 B ॰मभिभूमि॰, I. O. ॰मभिभूति॰, M. P. ॰मिति भूतिभवोद्भवाय
4 I. O. तत्र
5 I. O. ॰लाङ्गल॰
6 A भ for च्छ
7 I. O. मयाट्टम and A मयाक्रम for मयढाल
8 A ॰तुला॰
9 A ॰तुला I. O. omits it
10 Both I. O. and A omit देवता
11 A यथोक्ता खट कर्कट for the bracketed portion
12 A ॰तमरूपां
13 A ॰योक्ता॰
14 A omits it
15 A लाङ्गलानि
16 A omits युग
17 I. O. मुक्ताहाराश्च
18 A रौप्य
19 A omits the bracketed portion
20 Both I. O. and A ॰सामग्री
21 A ॰पट्टतुलिकापरिगेन्दुपधानदीपिका-पीठपादुकाव्यजन for the bracketed portion
22 I. O. गण्डोपधानां
23 A सापत्नेक॰
24 A adds यथेच्छ here
25 I. O. ॰लीयक

वलय-मुक्काहार-कौषेयवस्त्राणि, [1]होमार्थपायसचरुसाधनार्थं [2]धान्यमुदूखलं [3]मुषलं [4]सूर्पं चरुस्थालीं दुग्धसामग्रीं [5]लौहयन्त्रिकां [6]पालाशसमिधः कृष्णतिलान् [7]घृतञ्चोत्पादयेत् ।

ततस्तुलापुरुषोक्तसमयानामन्यतमस्य पूर्वतरदिने गुर्वृत्विग्यजमानजापकास्तुलापुरुषवद्धविष्यभोजनादिकं कृत्वा, निवेदनसङ्कल्पवाक्ययोस्तुलापुरुषपदस्थाने पञ्चलाङ्गलकपदं निवेश्य [निवेदनं[8] सङ्कल्पञ्च][9] कुर्युः । अपरदिने च[10] यजमानः पूर्ववद् [11]गोविन्दाद्याराधनादि मधुपर्कदानान्तं कर्म गोविन्दाय-[12][भ्यर्चन-ब्राह्मणानु]-ज्ञापन-दानसङ्कल्प-पुण्याहादिवाचनवरण-वाक्ये-[13][षु तुला]-पुरुषपदस्थाने पञ्चलाङ्गलकपदं निवेश्य कुर्यात् । ततो गुर्वृत्विग्यजमानजापका उपवसेयुः । अपरदिने च कृतनित्या ऋत्विजस्तुलापुरुषवदग्नि-[14][स्थापनं स्वस्व]कुण्डे[15] कुर्युः । ततो [16][गुरुर्यमृत्विजमादिशति स] स्वगृह्योक्तविधिना [17]स्वकुण्डे पायसचरुं [18]साधयेत् । ततो गुर्वृत्विग्यजमानजापकास्तुलापुरुषवद्[19] वनस्पतिहोमान्तं कर्म यथायथं कुर्युः । ततश्चरुसाधयिता ऋत्विक् पर्जन्यादित्यरुद्रेभ्यः स्वगृह्यविधिना—ॐ[20] पर्जन्याय स्वाहा, ॐ[21] आदित्याय स्वाहा, ॐ[22] रुद्राय स्वाहेति पायसचरुहोमं कृत्वा, तथैव [23]पालाशसमिद्धोममाज्यहोमं[24] [25]कृष्णतिलहोमं च कुर्यात् । ततो गुर्वृत्विग्यजमान-जापकास्तुलापुरुषवन्मध्यब्राह्मण-[26]वाचनान्तं कर्म यथायथं कुर्युः । तत ऋत्विजो दारुमयानि

1 A होमार्थं
2 A वाक्य for धान्य
3 A omits it
4 A सूर्पं
5 A लौहपत्रिकां
6 A पालाससमिधः, I. O. पलाशसमिधः
7 A घृताञ्चोपपाद्येत्
8 I. O. निवेदन
9 A omits the bracketed portion
10 A omits it
11 A गोव for गो
12 I. O reads the bracketed portion as भ्यर्चयन् ब्राह्मणार्थं
13 A omits the bracketed portion
14 A स्थापनादिनेषु for the bracketed portion
15 Both I. O. and A कुण्डेषु
16 I. O. the reads bracketed portion as गुर्वृत्विग्यजमानसहित स्व
17 A कुण्डे
18 A स्थापयेत्
19 A omits वद्
20 Both I. O. and A omit it
21 Both I. O. and A omit it
22 Both I. O. and A omit it
23 A पालास०, I.O. पलाश०
24 I. O.०होम
25 A कृत्वा for कृष्ण
26 I. O. ०वाचनार्थं

पञ्च, [1]हैमानि च पञ्च लाङ्गलानि प्रधानवेद्यां लिखितचक्रोपरि स्थापयित्वा[2], तत्-[3][पार्श्वे च] वृषान् यथोक्तालङ्कारैरलङ्कृत्य स्थापयित्वा, यथोक्तशय्यां[4] धेनुमष्टादश धान्यानि च स्थापयेयुः।

ततो मङ्गलगीतवाद्यवन्दिघोषेषु सत्सु कुण्डसमीपस्थकुम्भचतुष्टयजलेन [5][स्नापयेयुर्यजमानम्। ततो] यजमानो धृतशुक्लमाल्याम्बरो[6] धृतसर्वालङ्कारः सपत्नीकः गुरुमाहूय यथायथम-[7][वोक्ता]-लङ्कारैरलङ्कृत्य गृहीतपुष्पाञ्जलिर्लाङ्गलानि प्रदक्षिणीकृत्य, [8]'यस्माद्देवगणा' इत्यादिमन्त्राभ्यामामन्त्र्य पुष्पाञ्जलिनाभ्यर्च्य यथोक्तोपकरणसहितां[9] भूमिं तस्मै दद्यात्। तद् यथा—ॐ अद्यामुकसगोत्राय अमुकवेदामुकशाखाध्यायिने अमुकदेवशर्मणे[10] तुभ्यं मत्स्यपुराणोक्तपञ्चलाङ्गलक[11]-महादान-[12]दानफलप्राप्तिकामोऽहं हैम-[13][शृङ्ग-हैमभूषण]-[14]मुक्ताभूषित--[15][लाङ्गूल--रूप्यपाद--रूप्यतिलक[16]--स्रग्दामालङ्कृत--रक्तकौषेयाच्छादितवृषदशक-सहितसोपस्करशय्या-धेन्वष्टादशधान्य-सोपकरण--[17]सारदारुमय]-लाङ्गलपञ्चक-सोपकरणकाञ्चन-मयलाङ्गल-[18][पञ्चक-फल]-पुष्पोपशोभित[19]-पञ्चवर्णवितानकसहिताम् अमुकरूपां प्रियदत्तां भूमिं ददानि। गुरुः स्वस्तीत्युक्त्वा सावित्रीं पठित्वा, 'भूमिर्विष्णुदैवते'त्युक्त्वा यथाशाखं कामस्तुतिं पठेत्। ततो गुर्वृत्विग्भ्यो दक्षिणां दद्यात्। ॐ अद्य कृतैतत्-[20]कर्मप्रतिष्ठार्थं [21]युष्मभ्यमहं दक्षिणा-[22]मेतामियदुत्पत्तियोग्यां भूमिमेतानि च रत्नानि ददानि। स्वस्तीति [23]ब्राह्मणा

1 I. O. हैमानि, A हैममयानि
2 I. O. स्थापयिता
3 A पार्श्वे only for the bracketed portion
4 Both I. O. and A ॰शय्या
5 I. O. omits the bracketed portion
6 A ॰म्बरः, I. O. ॰म्बरधरो
7 I. O. वोक्ता, A omits the bracketed portion
8 A तथा॰
9 I. O. ॰सहिता
10 I. O. omits शर्मणे
11 A ॰लाङ्गल॰
12 A omits दान
13 I. O. वृषभ for the bracketed portion
14 A युक्तभूमि for मुक्ताभूषित
15 A omits the bracketed portion
16 I. O. ॰तिल
17 I. O. सत्व for सार
18 A पञ्चसमन्वित for the bracketed portion
19 I. O. ॰शोभितं
20 A दान for कर्म
21 A युष्मभ्यमहं
22 I. O. omits एताम्, A इमाम् for एतामियद्
23 A omits it

ब्रूयुः। ततो यजमानस्तुलापुरुष-[1]वज्ञापकेभ्यो दक्षिणादानं दीनानाथादितर्पणं ब्राह्मण-वाचनञ्च कुर्यात्। ततस्त्वरया तद्भूमि[2]-प्रतिपादनं कुर्यात्। गुरुस्तु[3][स्वभूमिं प्रदक्षिणी-कुर्यात् ]।

[4][इति पञ्चलाङ्गलकमहादानं समाप्तम्]।

1 A omits व
2 I. O. तभूमि॰
3 A भूमिप्रदक्षिणं कुर्यात् for the bracketed portion
4 I. O. इति पञ्चलाङ्गलकमहादानं and A पञ्चलाङ्गलमहादानं समाप्तं for the bracketed portion

## तथा धरामहादानम् । ( मत्स्यपुराणम्—२८४ अः )

अथातः सम्प्रवक्ष्यामि धरादानमनुत्तमम् ।
पापक्षयकरं नृणाममङ्गल्य[1]-विनाशनम् ॥१॥
कारयेत् पृथिवीं हैमीं[2] जम्बुद्वीपानुकारिणीम् ।
[3][मर्यादापर्वतवतीं मध्ये मेरुसमन्विताम्[4] ] ॥२॥

मर्यादापर्वतवतीमित्यादिना जम्बुद्वीपानुकरणमेव कथितम् । मर्यादा-[5]पर्वताश्च हिमवद्धेमकूट-[6]निषधमाल्यव-[7]द्गन्धमादननीलश्वेतशृङ्गयाख्या विष्णुपुराणोक्ताः[8] ।

लोकपालाष्टकोपेतां नववर्षसमन्विताम्[9] ।
नदीनद-[10]शतोपेतां सप्तसागरवेष्टिताम् ॥३॥

नववर्षाणि [11][वा मेरुं] [12]वेष्टयित्वा स्थित इलावृतः, [13][मेरोः पूर्वतो] भद्राश्वः, [14][मेरोः पश्चिमतः ] केतुमालः, [15]मेरुदक्षिणतो हरिवर्षं, हरिवर्षदक्षिणतः किम्पुरुषं, किम्पुरुषदक्षिणतो भारतं, मेरोरुत्तरे रम्यकं, रम्यकोत्तरतो हिरण्मयं, हिरण्मयोत्त-[16][रत उत्तरकुरवः] । एतानि[17] नव वर्षाणि पृथिव्यामुत्खाटयेदित्यर्थः । सप्तसागराश्च लवणेक्षुसुरासर्पिर्दधिदुग्धाम्बुमयाः ।

महारत्नसमाकीर्णां वसुरुद्रार्कसंयुताम् ।
हेम्नः पलसहस्रेण तदर्धेनाथ शक्तितः ॥४॥
शतत्रयेण वा कुर्याद्द्विशतेन शतेन वा ।
कुर्यात् पञ्चपलादूर्द्ध्वमशक्तोऽपि [18]विचक्षणः ॥५॥

1 I. O. ०मङ्गल०
2 A हैमां
3 I. O. omits the bracketed portion
4 A ०समन्वितं
5 A ०पर्व्वताश्च, I. O. ०पर्व्वताः
6 A निषेध०
7 A द्गु for द्ग
8 A ०क्ताः
9 I. O. ०समन्विताः
10 M. P. ०समोपेतां
11 A omits the bracketed portion and reads a long irrelevant matter here
12 I. O. वेष्टत्वा
13 A पूर्व्वतः only for the b p.
14 A मेरो पार्श्वगतः for the b. p.
15 A मेरुः दक्षिणतो
16 A रेतो कुरु for the b. p.
17 A adds च after this
18 I. O. विचक्षणाः

पलपञ्च-[1]कादूर्द्ध [2]पलसहस्रान्तमित्यर्थः ।

तुलापुरुषवत् कुर्याल्लोकेशावाहनं बुधः ।
ऋत्विङ्मण्डप-[3]सम्भारभूषणाच्छादनादिकम् ॥६॥
वेद्यां कृष्णाजिनं कृत्वा [तिलानुपरि [4]विन्यसेत् । ][5]
तथाष्टादशधान्यानि [6][रसांश्च लवणादिकान्] ॥७॥
तथाष्टौ [7]पूर्णकलसान् समन्तात् [8]परिवारयेत् ।
[9][वितानकञ्च कौषेयं] फलानि विविधानि च ॥८॥

समन्तादिति [10]यथाविधिनियोगस्थानम् ।

[11]तथांशुकानि रम्याणि श्रीखण्डशकलानि[12] च ।
[13]इत्येवं [14]रचयित्वा [15]तामधिवासनपूर्वकम् ॥९॥
शुक्लमाल्याम्बरधरः शुक्लाभरणभूषणः[16] ।

शुक्लाभरणं मुक्तारजत-[17]कर्पूरमयम् ।

प्रदक्षिणं ततः कृत्वा गृहीतकुसुमाञ्जलिः ॥१०॥
पुण्यकालमथासाद्य मन्त्रानेतानुदीरयेत् ।
नमस्ते [18]सर्वदेवानां त्वमेव भवनं यतः ॥११॥
धात्री च[19] सर्वभूतानामतः पाहि वसुन्धरे[20] ।
[वसु[21] धारयसे यस्माद्वसु चातीव निर्मलम् ][22] ॥१२॥

---

1 A omits का
2 I. O. पलशतपर्यन्तमित्यर्थः
3 I. O. ०संहार०
4 A' वेशयेत्
5 M. P. reads the b. p. as तिलानामुपरि न्यसेत्
6 Corrected from M. P. I. O. and A' रसाश्च लवणादय:
7 I. O. पूर्व्वकलसान्
8 M. P. परिकल्पयेत्
9 I. O. वितानञ्च सकौशेयं for the b. p.
10 A' यथायोगं कुर्वीत
11 I. O. तथा शुक्लानि
12 A' ०सकलानि
13 I. O. इत्येव
14 M. P. कारयित्वा
15 A तु for ता
16 M. P. ०भूषितः
17 I. O. ०कपूर०
18 A ०देवता
19 I. O. धात्रीव
20 A वसुन्धरा
21 I. O. वसुं
22 A omits the bracketed portion

वसुन्धरा ततो जाता तस्मात् पाहि [1]भयादलम् ।
चतुर्मुखोऽपि [2]नो गच्छेद् यस्मादन्तं [3]तवाचले ॥१३॥
अनन्तायै [4]नमस्तस्मात् पाहि संसार-[5]सागरात् ।
त्वमेव लक्ष्मीर्गोविन्दे[6] शिवे गौरीति [7]संस्थिता ॥१४॥
गायत्री ब्रह्मणः पार्श्वे ज्योत्स्ना चन्द्रे रवौ प्रभा ।
बुद्धिर्बृहस्पतौ ख्याता मेधा [8]मुनिषु संस्थिता ॥१५॥
विश्वं व्याप्य स्थिता यस्मात्ततो विश्वम्भरा मता ।
[9]धृतिः स्थितिः क्षमा क्षोणी[10] पृथ्वी वसुमती रसा ॥१६॥
एताभिर्मूर्त्तिभिः पाहि [11]देवि संसारसागरात् ।
[12]एवमुच्चार्य तां देवीं ब्राह्मणेभ्यो निवेदयेत् ॥१७॥

ब्राह्मणेभ्यो गुर्वृत्विग्भ्यः ।

[13][धरार्धं वा] चतुर्भागं गुरवे प्रतिपादयेत् ।
[14]शेषञ्चैवाथ ऋत्विग्भ्यः प्रणिपत्य विसर्जयेत् ॥१८॥

[15][प्रतिपत्य विसर्जयेदिति] ब्राह्मणान् प्रणिपत्य विसर्जयेदित्यर्थः ।

अनेन विधिना यस्तु दद्याद्धेम-[16][धरां बुधः] ।
पुण्यकाले तु संप्राप्ते स पदं याति वैष्णवम् ॥१९॥
विमानेनार्कवर्णेन किङ्किणीजालमालिना ।
नारायणपुरं गत्वा कल्पत्रयमथा-[17]वसेत् ।
पितृपुत्र-[18]प्रपौत्रांश्च[19] तारयेदेकविंशतिम् ॥२०॥
इति पठति य इत्थं यः शृणोति प्रसङ्गा-
दपि कलुषवितानैर्मुक्त[20]-देहः समन्तात् ।

---

1 A तयादम्
2 A नागच्छेद
3 I. O. बलाचले
4 I. O. वमन्तस्मात्
5 I. O. ०काधयात्, M. P. ०कर्दमात
6 A ०न्द्रो
7 M. P. चास्थिता
8 Corrected for M. P. I. O. स्वामिषु, A गुरु
9 I. O. हृत्ति
10 I. O. क्षौणी
11 A देवी
12 I. O. एवमुच्चार्य
13 A धरार्धं for the b. p.
14 A शायञ्चैवाथ
15 A omits the b. p.
16 A धरासुर: and M. P. धरां शुभाम् for the b. p.
17 A ०वसत्
18 A omits प्र
19 M. P. reads the whole word as पितॄन् पुत्रांश्च पौत्रांश्च
20 I. O. ०र्मुक्त०

दिव-[1]ममरवधूभिर्याति [2]संप्रार्थ्यमानः
पदममरसहस्रैः सेवितं [3]चन्द्रमौलेः ॥२१॥

प्रयोगः

अत्र यजमानः समुपजातधरामहादानदानेच्छस्तुलापुरुषलिखित[4]-खड्गचर्म[5]मयडालसमाहृ-तुला--[6]स्थापनीयहरिप्रतिमा--सालङ्कारतुला--हस्तग्राह्यप्रतिमा--यजमानार्थ--[7]हैमालङ्कार–यथोक्त-वितानबर्हिः सम्भार-[8]मधिकत्वेन पलपञ्चकादूर्द्ध्वं [9]पलशतैक-पलशतद्वय-पलशतत्रय-पलशत-पञ्चक-पलसहस्राणां यथा-[10]शक्त्यन्यतमपरिमाणेन सुवर्णेन घटितां मण्डलाकृतिं बहिरुत्-[11]खाटित-सान्तराल-सप्तसागराकार-वलयसप्तक-वेष्टितां मध्ये पूर्वपश्चिमायतरेखाषट्केन समभागसप्तकविभक्तां कृत्वा मध्यभागञ्च पूर्वपश्चिमायत-[12]रेखाद्वयसंलग्नदक्षिणोत्तरायतरेखा-द्वयेन [13]समं भागत्रयं कृत्वा मध्यभागमध्ये [14]पृथ्व्यग्रं [15]स्वस्वदिगुत्खाटितेन्द्रादिलोक-[16]पालाष्टकवेष्टितशिरसं [17][यथेच्छस्थान-प्रत्युत्खाटित]-वस्वष्टैकैकदशरुद्रद्वादशादित्यं पद्मव-राटाकृति-[18]मुन्नतं मेरुं निर्माय मेरु-[19]पूर्वपश्चिमरेखयोर्यथाक्रमरेखायतं[20] मेरोः किञ्चिद-[21]वनतं [22]माल्यवन्तं गन्धमादनञ्च पर्वताकृतिं निर्माय मेरोर्दक्षिणोत्तररेखा-[23][द्वये रेखायतं] मेरु[24]-समानोच्छ्रायं यथाक्रमं नीलं निषधञ्च पर्वताकारं [25]घटयित्वा नीलदक्षिणरेखा-द्वये यथाक्रमं रेखायतं [26][नीलात् किञ्चिदवनतं] [27]हेमकूटं हिमवन्तञ्च घटयेत् ।

---

1 I. O. ०मनवरभृतिर्याति
2 M. P. सम्प्रार्थ्यमानो, I. O समाज्य-मानः
3 Corrected from M. P. I. O. चन्द्रमौलि, A चन्द्रमौलिः
4 Both I. O. and A लिखितं
5 Both I. O. and A मयाक्ष
6 I. O. पापनीय for स्थापनीय
7 A हैमा०
8 I. O. ०मानमानकत्वेन
9 I. O. पलशतत्रयं शतपञ्चकपल-सहस्राणां and A पलशतद्वयपलशत-द्वयपलशतैकपलशतपञ्चपलसहस्राणां
10 A ०शक्ति अभिमत०
11 I. O. ०पाटित
12 I. O. ०खेरा०
13 A omits it
14 I. O. पृथ्वं, A पृथ्यं
15 I. O. स्वर्गतुखातकाटितेन्द्रादि०, A सुसुदि...दि०
16 I. O. ०पालाम्तक०, A ०पालाष्टकाo
17 I. O. reads the bracketed portion as सुखेच्छसा ०पक्षखाटित
18 I. O. ०सुपूतं
19 I. O. omits पूर्वं
20 A ०यथाक्रमं लिखायातां
21 A ०स्तरित
22 I. O. माल्यवतां
23 A reads द्वय for the bracketed portion
24 I. O. ०समानोक्ष
25 A घटित्वा
26 A reads नीलाकिञ्चिदनतं for the bracketed portion
27 A हिमकूटं again after this, I. O. हैमकूट

[1][निषधोत्तररेखाद्वये यथाक्रमं रेखायतं निषधात किञ्चिदवनतं[2] श्वेतं शृङ्गिणञ्च पर्वताकारं घटयेत ।] एवञ्च [3][नवान्तरालैर्नववर्ष[4]-विभागवतीं] [5]जम्बुद्वीपानुकारिणीं तत्तत्स्थानरेखोत्खाटित-[6]बहुतरसरिन्नदाकारां यथेच्छोत्कृष्टरत्नखचितां पृथ्वीं[7] तदारोपणार्थं कृष्णाजिनं तिलांश्च पृथ्वीमण्डलोद्बन्धनार्थं[8] कौषेयवस्त्रसहितं पञ्चवर्णवितानकं पृथ्वीपार्श्वस्थापनार्थमष्टादशधान्य[9]-लवणादिरसपट्क-[10]पूर्णकुम्भाष्टक-नानाफल[11]-[12]नानाविधोत्कृष्टवस्त्राणि यथेष्टं चन्दनखण्डांश्च, यजमानार्थं यथेष्टं मुक्तारजतकर्पूरनिर्मिताल[13]-ङ्कारांश्चोत्पादयेत् । ततस्तुलापुरुषोक्तसमयानामन्यतमस्य पूर्वतरदिने गुर्वृत्विग्यजमानजापकास्तुलापुरुषवद्धविष्यभोजनादिकं कृत्वा निवेदनसङ्कल्पवाक्ययोस्तुलापुरुषपदस्थाने[14] धरापदं[15] निवेश्य यथायथं निवेदनं[16] सङ्कल्पञ्च कुर्युः । अपरदिने च यजमानस्तुलापुरुषवद् गोविन्दाद्याराधनादि-मधुपर्कदानान्तं कर्म [17]गोविन्दाभ्यर्चन-ब्राह्मणानुज्ञापनदानसङ्कल्प-पुण्याहवाचन-वरणवाक्येषु तुलापुरुषपदस्थाने धरापदं निवेश्य कुर्यात् । ततो गुर्वृत्विग्यजमानजापका[18] उपवसेयुः । अपरदिने च कृतनित्यास्तुलापुरुषवदग्निस्थापनादिमध्यब्राह्मणवाचनान्तं कर्म यथायथं कुर्युः । एवञ्च हविष्यादिमध्यब्राह्मणवाचनान्तं कर्म तुलापुरुषग्रन्थ-[19]मनुसन्धायानुष्ठातव्यम् । तत ऋत्विजः पृथ्वीं लिखितचक्रोपरि कृष्णाजिनमास्तीर्य तत्र तिलान् दत्त्वा तदुपरि समारोपयेयुः । पृथ्वीपार्श्वे चाष्टादशधान्यरसषट्कपूर्णकुम्भाष्टक-नानाफल-नानाविधोत्कृष्टवस्त्रत्रय-चन्दनखण्डत्रयाणि चारोपयेयुः । ततो मङ्गलगीतवाद्यवन्दिघोषेषु सत्सु कुण्डसमीपस्थकुम्भचतुष्टयजलेन [20]यजमानं स्नपयेयुः । यज-

---

1 I. O. omits the bracketed portion
2 A किञ्चिदवत
3 A reads the bracketed portion as नवधा नववर्षाणि भावतीं and inserts a long matter of the next chapter between नवधा and नववर्षाणि
4 I. O. ०वर्षा०
5 I. O. जम्बुद्वीपार्थकारिणीं
6 I. O. ०बहुतर
7 I. O. पृथ्वी, A पृथिवीं
8 Both I. O. and A बन्धनार्थं
9 A धान्यै, I. O. प्राप्य
10 Both I. O. and A omit पूर्ण
11 I. O. नानाफलदां
12 A नानौषधोत्कृष्ट०
13 A ०ङ्कारश्चोत्पादयेत्, I. O. ०ङ्कारानुत्पादयेत्
14 I. O. ०स्थानेन
15 I. O. धरासुतं
16 I. O. निवेदनं
17 A गोविन्दाद्यभ्यर्चन, I. O. गोविन्दाभ्यर्चन
18 I. O. ०कामुका
19 I. O. ०मनुसन्धायानुष्ठात:
20 I. O. omits it

मानस्तु शुक्लमाल्याम्बरधरो [1]धृतशुक्लसर्वाङ्गालङ्कारः पुष्पाञ्जलिमादाय पृथ्वीं प्रदक्षिणीकृत्य 'नमस्ते सर्वदेवाना'मित्यादि 'देवि संसारसागरा'दित्यन्तमन्त्रैरामन्त्र्य पुष्पाञ्जलिनाभ्यर्च्य गुरुर्त्विग्भ्यो दद्यात्। तद् यथा—ॐ अद्यामुकामुकसगोत्रेभ्योऽमुकामुक-[2]वेदामुकामुकशाखाध्यायिभ्योऽमुकामुकदेवशर्मभ्यो युष्मभ्यं मत्स्यपुराणोक्तधरामहादानदानफलप्राप्तिकामोऽहं मत्स्यपुराणोक्तभागव्यवस्थयैतां[3] कृष्णाजिनन्यस्ततिलोपरि[4] [5]स्थापितामष्टादशधान्यरसषट्क-पूर्णकुम्भाष्टककौषेयवस्त्रान्वितपञ्चवर्णवितानकबहुविधफलोत्कृष्टवस्त्रतयचन्दनखण्डान्वितां जम्बुद्वीपानुकारिणीं धरां ददानि। प्रतिग्रहीतारः स्वस्तीत्युक्त्वा सावित्रीं पठित्वा धरेयं विष्णुदैवतेत्युक्त्वा यथाशाखं[6] कामस्तुतिं पठेयुः। तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं दक्षिणामियदुत्पत्तियोग्यां भूमिमेतानि च[7] रत्नानि ददानि। स्वस्तीति ब्राह्मणाः प्रत्येकमुक्त्वा पृथ्वीं प्रदक्षिणीकुर्युः। ततो यजमानस्तुलापुरुषवज्जापकेभ्यो दक्षिणादानं दीनानाथादितर्पणं पुण्याहवाचनं कृत्वा त्वरया पृथ्वीं विभज्य यथायथं प्रतिपादयेत्।

इति धरामहादानं [8]समाप्तम्।

---

1 A धृतसर्वाङ्गालङ्कारः

2 Both I. O. and A omit वेदामुकामुक

3 A reads एतां just before this word

4 I. O. ०तिलोपरि

5 I. O. स्थापयितामष्टा०, A स्थापितामष्टा०

6 I. O. यथायथं

7 I. O. वर, A reads च after रत्नानि

8 I. O. omits it

## तथा विश्वचक्रमहादानम् । ( मत्स्यपुराणम्—२८५अः)

अथातः सम्प्रवक्ष्यामि महादानमनुत्तमम् ।
विश्वचक्रमिति ख्यातं महापातकनाशनम् ॥१॥
तपनीयस्य शुद्धस्य [1]विश्वचक्रन्तु कारयेत् ।
श्रेष्ठं पलसहस्रेण तदर्धेन तु मध्यमम् ॥२॥
तस्यार्धेन कनिष्ठं[2] स्याद्विश्वचक्रमुदाहृतम् ।
अन्यद्विंशपलादूर्ध्वमशक्तोऽपि निवेदयेत् ॥३॥
षोडशारं ततश्चक्रं [3]भ्रमन्नेम्यष्टकावृतम् ।

[4][ भ्रमन्नेम्यष्टकावृतमिति समभागसान्तरालाष्टवेष्टनचक्रनिर्गतशल्याप्राकृतिनेम्यष्टकावेष्टितम् । ]

नाभिपद्मे स्थितं विष्णुं योगारूढं[5] चतुर्भुजम् ॥४॥
[6]शंखचक्रेऽस्य पार्श्वे तु देव्यष्टकसमावृतम् ।

नाभिपद्मे[7] चक्रमध्य[8]-स्थिताष्टदलपद्मे । देव्यष्टकञ्च विमलोत्कर्षिणी[9]ज्ञाना-[10] क्रिया योगा [11]प्रह्वी सत्या [12]ईशानीति ।

द्वितीयावरणे तद्वत् पूर्व-[13][तो जलशायिनम्] ॥५॥
अत्रिर्भृगुर्वशिष्ठश्च [14]ब्रह्मा [15]कश्यप एव च ।
मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः ॥६॥

---

1 M. P. विष्वाद्दिषु
2 I. O. करिष्य
3 Corrected from M. P. A भ्रमिनेम्यष्टकावृतं, I. O. भ्रमिनेम्य-ष्टकावृतं
4 I. O. reads the bracketed portion as समभागसान्तराष्टवेष्टनचक्रनिर्गतं शल्याप्राकृतिनेम्यष्टकावेष्टितं, while A as वृतमिति समभाग-न्तराष्टवेष्टनचक्रवहिर्निर्गत्य शल्याप्राकृति-नेम्यष्टवेष्टितं
5 I. O. योगारूढ
6 A ०च क्रस्य
7 A ०पद्म
8 I. O ०मध्य०
9 I. O. ०कर्षणा०
10 I. O. ज्ञाना
11 I. O. प्रह्वी
12 I. O. प्रमानीति, A ईशानेति
13 I. O. ओजनमाशिनं for the bracketed portion
14 Corrected from M. P. Both I. O. and A ब्रह्म
15 A काश्यप

रामो रामश्च कृष्णश्च बुद्धः कल्कीति च क्रमात् ।
तृतीयावरणे गौरी मातृभिर्वसुभि-[1]र्युता ॥७॥
चतुर्थे द्वादशादित्या वेदाश्चत्वार एव च ।

मातरश्च ब्रह्माणी माहेश्वरी कौमारी वैष्णवी वाराही इन्द्राणी [2][रुद्राणीति सप्त] । वसव आदित्याश्च तुलापुरुषोक्ताः । वेदाः प्रसिद्धाः ।

पञ्चमे पञ्चभूतानि रुद्राश्चैकादशैव तु ॥८॥
लोकपालाष्टकं [3]षष्ठे दिङ्मातङ्गास्तथैव च[4] ।

पञ्चभूतानि प्रसिद्धानि । रुद्राश्च अजैकपात्[5] अहिर्बुध्नः[6] विरूपाक्षः रैवतः[7] बहुरूपः [8]त्र्यम्बकः सुरेश्वरः [9]सावित्रः [10]जयन्तः पिनाकी अपराजितः । लोकपालाष्टकं दिङ्मातङ्गाष्टकञ्च प्रसिद्धम् ।

सप्तमेऽस्त्राणि सर्वाणि मङ्गलानि च कारयेत् ॥९॥
अन्तरान्तरतो[11] देवान् विन्यसेदष्टमे पुनः ।

अस्त्राणि [12]बहूनि [13]शक्तिर्दण्डः खड्गः पाशः ध्वजः गदा शूलमिति । मङ्गलाष्टकञ्च सिंहः [14]वृषः गजः कलसः व्यजनं वैजयन्ती भेरी दीपश्चेति । अन्तरान्तरतो[15] देवानित्यादिना [16]अन्यानपि देवान् स्वेच्छया अष्टमावरणान्तरालेषु विन्यसेदित्यर्थः । तत्र च विनायकनवग्रह-स्कन्दाश्विनीकुमार-[17]सागर-लक्ष्मी-गङ्गायमुना[18]-निवेशः [19][प्रायश उक्तः] ।

तुलापुरुषव-[20]च्छेषं समन्तात् परिकल्पयेत् ॥१०॥
ऋत्विङ्मण्डपसम्भार-भूषणाच्छादनादिकम् ।
विश्वचक्रं ततः कुर्य्यात् कृष्णाजिनतिलोपरि ॥११॥
तथाष्टादश धान्यानि [21][रसांश्च लवणादिकान्] ।
पूर्णकुम्भाष्टकञ्चैव वस्त्राणि विविधानि च ॥१२॥

---

1 I. O. ०वृता
2 A रुद्राणी सप्त and I. O. रुद्राणीति काश: for the bracketed portion
3 A तद्वत्
4 A तु
5 A अजैकपाद
6 I. O. अहिर्बंध्र:
7 I. O. adds हर: after this
8 I. O. त्राम्बुक:
9 A सावित्र, I. O. सावित्र:
10 I. O. जयन्त:
11 I. O. अन्तरान्तराऽष्टौ
12 A वज्र
13 Both I. O. and A शक्तिर्दण्ड:
14 I. O. धूप:
15 I. O. omits तो
16 I. O. तानपि
17 A च०
18 A गङ्गयमुनाया
19 I. O. प्रायशोक्त:, A प्रायशो युक्त
20 I. O. ०च्छेषं
21 Corrected from M. P. Both I. O. and A रसाश्च लवणादय:, for the bracketed portion

माल्येक्षुफलरत्नानि वितानञ्चापि [1]कल्पयेत् ।
ततो मङ्गलशब्देन स्नातः शुक्लाम्बरो गृही ।
होमाधिवासनान्ते [2]तु गृहीतकुसुमाञ्जलिः ॥१३॥
इममुच्चारयेन्मन्त्रं त्रिः कृत्वा तु प्रदक्षिणम् ।
नमो [3]विश्वमयायेति विश्वचक्रात्मने नमः ॥१४॥
परमानन्दरूपी[4] त्वं पाहि नः पापकर्दमात् ।
[5]तेजोमयमिदं यस्मात्[6][सदा पश्यन्ति योगिनः ॥१५॥
[7][दयितं त्रिगुणातीतं] विश्वचक्रं नमाम्यहम् ।
वासुदेवे स्थितं चक्रं चक्रमध्ये तु माधवः[8] ॥१६॥
अन्योन्याधाररूपेण प्रणमामि [9]स्थिताविह ।
विश्वचक्रमिदं यस्मात्] सर्वपापहरं[10] हरेः[11] ॥१७॥
[12][आयुधञ्चापि वासश्च भवादुद्धर मामतः] ।
[13][इत्यामन्त्र्य तु[14] यो] दद्याद्विश्वचक्रं विमत्सरः ॥१८॥
विमुक्तः सर्वपापेभ्यो विष्णुलोके महीयते ।
वैकुण्ठलोकमासाद्य चतुर्बाहुः सनातनः ॥१९॥
सेव्यतेऽप्सरसां [15]सङ्घैस्तिष्ठेत कल्पशतत्रयम्[16] ।
प्रणमेद्वाथ यः कृत्वा विश्वचक्रं दिने दिने ।
तस्यायुर्वर्धते नित्यं लक्ष्मीश्च विपुला भवेत् ॥२०॥

---

1 M. P. कारयेत्
2 M. P. वै
3 A विश्वरूपायेति
4 I. O. ०रूपं
5 I. O. तेभ्यो गदामिदं
6 A omits the bracketed portion
7 M. P. reads हृदि तत्त्वं गुणातीतं for the bracketed portion
8 I. O. माधवं
9 I. O. स्थिताविह
10 A सर्व्वपापोपहं
11 M. P. परम्
12 I. O. reads the bracketed portion as स्वाम्बरञ्चापि नामस्य भवादुत्तरमागतः
13 I. O. reads b. p. as एवमित्वा ततो
14 M. P. च
15 I. O. सर्व्वं तिष्ठेत्
16 A ०त्रयं

इति सकलजगत्सुराधि[1]-वासं वितरति [2]यस्तपनीयषोडशारम् ।
हरि-[3]भवनमुपागतः स [4]सिद्धैश्चिर-[मुपगम्य[5] नमस्यते][6] [7][शिरोभिः ॥२१॥
[8]अशुभदर्शनतां प्रयाति] शत्रोर्मदनसुदर्शनताञ्च [9]कामिनीभ्यः ।
[10][स सु]-दर्शनकेशवानुरूपः [11]कनकसुदर्शनदानदग्धपापः ॥२२॥
कृतगुरुदुरितानि [12]षोडशारप्रवितरण[13]-प्रवराकृतिर्मुरारेः ।
अभिभवति भवोद्भवन्ति भीत्या भवमभितो [14]भुवने भयानि भूयः ॥२३॥

प्रयोगः

अत्र यजमानः समुपजातविश्वचक्रमहादानदानेच्छस्तुलापुरुषलिखित[15]-खङ्गचर्ममय-ढाल[16]-सन्नाह-तुलास्थापनीयहरिप्रतिमा-सालङ्कारतुलाहस्तग्राह्यप्रतिमाबहिः सर्वसम्भारमधिकृत्वेन यथेच्छमुत्तमं[17] सुवर्णपलसहस्रेण मध्यमं पलशतपञ्चकेन[18] कनिष्ठं सार्द्धपलशतद्वयेन विंशति-संख्यपलादूर्द्ध्वं [यथाशक्त्युपात्त-सुवर्ण][19]--घटिताष्टदल-[20]पूर्वादिकमोत्खाटित विमलाद्यष्टशक्ति सहित-मध्योत्खाटित-[21]यथोक्तविष्णुप्रतिमं पद्मं कृत्वा [22]पद्मस्य समन्तादूर्द्ध्वं षोडशवण्डिका-[23]युतं[24]समभागसान्तरालाष्टकुण्डलवेष्टितं बहिर्निर्गत-[25]शल्याग्राकृतिनेम्यष्टकयुतं द्वितीयावरण-मुपरि[26][कुण्डलावच्छिन्नासु षोडशसु कोष्ठिकासु][27]पूर्वादिक्रमोत्खाटित-जलशाय्यादिषोडशदेवता-प्रतिमं तृतीयावरणे तथैव[28] पूर्वादि[29]-क्रमकोष्ठि[30]-कोत्खाटितगौर्यादिषोडशदेवताप्रतिमं चतुर्था-

---

1 I. O. रि for धि
2 Corrected from M. P. I. O. यतुपनीय०, A यः पनीयसोडशारैः
3 I. O. ०भवनादुपागतः
4 A सिद्ध०
5 M. P. ०मभिगम्य
6 A reads the bracketed portion as मधिगमस्यते
7 I. O. reads the bracketed portion as प्रियेति सायुक्तदर्शनतां
8 M. P. शुभदर्शनतां
9 I. O. कामिनीभ्यः
10 I. O. सद्य for the b. p.
11 I. O. कनकसुदर्शनस्य पापः
12 I. O. षोडशार्चि०
13 M. P. ०तरणे
14 Corrected from M. P. Both I. O. and A भवने
15 Both I. O. and A ०लिखितं
16 Both I. O. and A मयाच्छन्न for मयढाल
17 I. O. ०मुत्तमः
18 I. O. ०त्वेन
19 A यथाशक्त्युपपन्नः स्ववन for the b. p.
20 I. O. पूर्व्वादिभिः
21 I. O. omits यथोक्त
22 A omits it
23 I. O. ०युप
24 A समभा for समभाग
25 I. O. शल्यायाग्राक्तिनेष्टयेयुः
26 I. O. ०वरणेष्वर
27 I. O. reads the bracketed portion as कुण्डलावच्छिन्नार्थे षोडशसु काष्ठिकार्थे
28 I. O. तद्वेन
29 I. O. पूर्व्वाभि०
30 A omits कोष्ठि

वरणे [1]पूर्वादिक्रमकोष्ठिकोत्खाटित-द्वादशादित्य-[2]वेदचतुष्टयप्रतिमं पञ्चमावरणे पूर्वादिक्रम-कोष्ठिकोत्खाटित-पञ्चमहाभूतादि[3]-षोडशप्रतिमं षष्ठावरणे पूर्वादिक्रमकोष्ठिकोत्खाटितलोक-पालादिषोडशप्रतिमं सप्तमावरणे पूर्वादिक्रमकोष्ठिकोत्खाटिता-[[4]अष्टक-मङ्गलाष्टकाकारम् अष्ट-मावरणे पूर्वादिक्रम-कोष्ठिकोत्खाटित] [5]-विनायकादिदेवताप्रतिमाषोडशकं चक्रं चक्रारोपणार्थं कृष्णाजिनं तिलांश्च [6]चक्रालङ्करणार्थं माल्यसामग्रीं यथेष्टं रत्नानि नानाविधवस्त्रत्रयञ्च चक्रपार्श्वे-स्थापनार्थमष्टादशधान्य-लवणादिरसषट्क-कुम्भाष्टकेक्षुफलानि ऊर्द्ध्वं बन्धनार्थं यथेच्छं वितान-ञ्चोत्पादयेत् । ततस्तुलापुरुषोक्तसमयानामन्यतमस्य पूर्वतरदिने गुर्वृत्विग्यजमानजापकास्तुला-पुरुषवद्धविष्यभोजनादिकं कृत्वा निवेदनसङ्कल्पवाक्ययोस्तुलापुरुषवदस्थाने विश्वचक्रपदं प्रक्षिप्य निवेदनं सङ्कल्पञ्च कुर्युः । अपरदिने च[7] यजमानस्तुलापुरुषवद्गोविन्दाद्याराधनादि-मधुपर्क-[8][दानान्तं कर्म] [9]गोविन्दाद्यभ्यर्चन-[10]ब्राह्मणानुज्ञापन-दानसङ्कल्प-पुण्याहादिवाचन-वरण-वाक्येषु तुलापुरुषपदस्थाने विश्वचक्रपदं प्रक्षिप्य कुर्यात् । ततो गुर्वृत्विग्यजमानजापका उप-वसेयुः । अपरदिने च कृतनित्यास्तुलापुरुषवदग्निस्थापनादि-मध्यब्राह्मणवाचनान्तं [11]कर्म यथायथं कुर्युः । एवञ्च मध्यब्राह्मणवाचनान्तं [12]कर्म तुलापुरुषग्रन्थमनुसन्धायानुष्ठातव्यम् । तत ऋत्विज-श्चक्रं वेदीमध्ये लिखितचक्रोपरि कृष्णाजिनमास्तीर्य्य तत्र तिलान् दत्त्वा तत्रारोप्य वस्त्रमाल्यैरल-ङ्कृत्य चक्रपार्श्वेऽष्टादशधान्यानि लवणादिरसषट्क-[13]पूर्णकुम्भाष्टकमिक्षुदण्डान् फलानि चारोप्य मङ्गलगीतवाद्यवन्दिघोषेषु सत्सु कुण्डसमीपस्थकुम्भचतुष्टयजलेन यजमानं स्नपयेयुः । ततो यजमानः शुक्लमाल्याम्बरधरो[14] धृतसर्वा-[15]लङ्कारः पुष्पाञ्जलिमादाय चक्रं त्रिः प्रदक्षिणीकृत्य 'नमो [16]विश्वमयाये'त्यादि[17]['भवाद्धर मामत' इत्यन्त]-मन्त्रैरामन्त्र्य गुर्वृत्विक्प्रमुखब्राह्मणेभ्य उत्सृज्य दद्यात् । तद् यथा—ॐ अद्य यथासम्भवगोत्रनाम-गुर्वृत्विक्प्रमुखब्राह्मणेभ्यो मत्स्य-पुराणोक्त विश्वचक्र-[18]महादान-दानफलप्राप्तिकामोऽहमेतत् कृष्णाजिनन्यस्ततिलारोपितमाल्य-

1 I. O. पूर्व्वाक्रम०
2 I. O. देव०
3 A ०भूतानि
4 I. O. त्र्याष्टक०
5 A पञ्चमङ्ग for the bracketed portion
6 I. O. चक्रालङ्काराथं
7 A omits it
8 A दानान्त for the b. p.
9 I. O. गोविन्दाद्यभ्यर्चन, A गोविन्दा-भ्यर्च्च न
10 I. O. ब्राह्मणार्थज्ञापन
11 A omits it
12 A omits it
13 I. O. पूर्ण्णं for पूर्ण
14 A शुक्लमाल्याम्बर:
15 A omits ङ्का
16 A विश्वमयेत्यादि
17 A reads भवाद्धर मामतः इति for and I. O. omits, the bracketed portion
18 A omits महादान

[1]रत्ननानाविधवस्त्राढ्या[2]--दशधान्य-रसषट्कपूर्णकुम्भाष्टकेक्षुदण्ड[3]--फलवितानसहितं विश्वचक्रं ददानि। गुर्वृत्विजः स्वस्तीत्युक्त्वा सावित्रीं पठित्वा विश्वचक्रमिदं विष्णुदैवतमित्युक्त्वा यथाशाखं कामस्तुतिं पठेयुः। ततो यजमानो गुर्वृत्विग्भ्यो दक्षिणां दद्यात्। तद् यथा—ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं युष्मभ्यमहं दक्षिणामि-[4]यदुत्पत्तियोग्यां भूमिमेतानि च[5] रत्नानि ददानि। गुर्वृत्विजः प्रत्येकं स्वस्तीत्युक्त्वा स्वं स्वं भागं स्पृशेयुः। यद्वा गुर्वृत्विग्भ्य एव दद्यात्। [6]तत्र ॐ अद्यामुकसगोत्रेभ्योऽमुकामुकवेदामुकामुकशाखाध्यायिभ्यो-[7][ऽमुकामुकदेवशर्मभ्यो युष्मभ्यमिति मत्स्यपुराणीयतुलापुरुषोक्तभागव्यवस्थयेति च पूर्वदानवाक्याद्विशेषः। ततस्तुलापुरुषवर्ज्जापकेभ्यो] दक्षिणादानं दीनानाथादितर्पणं ब्राह्मणवाचनं यथायथं त्वरया विश्वचक्रप्रतिपादनञ्च कुर्यात्।

इति विश्वचक्रमहादानं [8]समाप्तम्।

1 A वस्त्र०
2 A omits ढ्या
3 A omits दण्ड
4 A ०मामु० for ०यदु०
5 A omits it
6 I. O. omits it
7 A omits the bracketed portion
8 I. O. omits it

**तथा महाकल्पलतामहादानम्।** ( मत्स्यपुराणम्—२८६ अः )

अथातः संप्रवक्ष्यामि महादानमनुत्तमम् ।
महाकल्पलता[1]नाम [2]पातकावलिनाशनम् ॥१॥
पुण्यां तिथिमथासाद्य कृत्वा ब्राह्मणवाचनम् ।
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम् ॥२॥
तुलापुरुषवत् कुर्य्याल्लोकेशावाहनं बुधः ।
चामीकरमयीः कुर्य्याद्दश कल्पलताः शुभाः ॥३॥
नानापुष्पफलोपेता [3]नानांशुकविभूषिताः ।
विद्याधरसुपर्णानां मिथुनैरुपशोभिताः ॥४॥

[4]सुपर्णानां किन्नराणाम् ।

[5]हारानादितसुभिः सिद्धैः फलानि च [6]विहङ्गमैः ।
लोकपालानु-[7]सारिण्यः कर्तव्या-[8]स्तासु देवताः ॥५॥

लोकपालानुसारिण्य इति लोकपालसमानाः [9]कर्तव्याः ।

ब्राह्मीमनन्तशक्तिञ्च लवणस्योपरि न्यसेत् ।
अधस्ता[10]-ल्लतयोर्मध्ये [11][महाखड्गधरे शुभे ॥६॥

[12]पद्मशङ्खकरे] इति क्वचित् पाठः ।

---

1 Corrected from M. P. I. O. ०लत', A' ०लता
2 I. O. पातकाकलिनाशनम्, M. P. महापातकनाशनम्
3 A' नानायुक०
4 I. O. सपर्णानां
5 A' हारादिभिः च भि, M. P. पुष्पाद्यादि०
6 I. O. विहङ्गमाः
7 A ०सारिण्यः, M. P. ०कारिण्यः
8 Corrected from M. P. I. O. ०स्तासु, A' ०स्ताय
9 I. O. ल्लतयः, A ल्लत:
10 Corrected from M. P. I. O. ०स्तयो०, A' ०स्त्र यो०
11 I. O. पद्मखड्ग तथा शङ्ख करेषु for the bracketed portion
12 M. P. reads this for महाखड्गधरे, just above, which is hinted at here.

[1][इभासनस्था तु गुडे] पूर्वतः कुलिशायुधा ।
रजनीसंस्थिताग्नेयी[2] स्रुवपाणिरथा-[3]नले ॥७॥

रजनी [4]हरिद्रा ।

[5][याम्ये च] महिषारूढा गदिनी तण्डुलोपरि ।
[6][घृते तु नैर्ऋती स्थाप्या] सखड्गा [7]दक्षिणापरे ॥८॥

[8][दक्षिणापरे नैर्ऋत्याम् ।]

वारुणे [9]वारुणी क्षीरे [10]सर्पस्था नागपाशिनी ।
पताकिनी च वायव्ये [11]मृगस्था शर्करोपरि ॥९॥
सौम्या तिलेषु संस्थाप्या [12][शङ्खिनी निधि]-संस्थिता ।
माहेश्वरी [13]वृषगता नवनीते [14]तु शूलिनी ॥१०॥
मौलिन्यो[15] वरदास्तद्वत् कर्तव्या बालकान्विताः[16] ।
[17]शक्तया पञ्चपलादूर्ध्वमासहस्रात् प्रकल्पयेत् ॥११॥

मौलिन्यो[18] [19][मुकुटान्विताः, वरदाः प्रसन्नमूर्तयः,] बालकान्विता[20] क्रोडनिहित[21]-पुत्रकाः । [22][एतेन क्रोडनिविष्टवाम]-कर-[23]विधृतपुत्रका दक्षिणहस्तविधृत[24]-यथोक्तशस्त्राः प्रसन्न-

---

1 Corrected from M. P. I. O. इत्यासनस्तातगड्हे and A स्वर्णासनस्था माहेन्द्र for the bracketed portion
2 M. P. ०ग्नायी
3 Corrected from M. P. I. ०ग्नले, A ०चला
4 I. O. हरिता
5 Corrected from M. P. I. O. याम्येन and A यःम्यान्तु for the bracketed portion
6 Corrected from M. P. I. O. घृतेन नैर्ऋतास्थाप्यां and A नैर्ऋत्यां चनिस्थाप्या for the bracketed portion
7 A च घृतोपरि
8 A omits the bracketed portion
9 I. O. वारुण
10 M. P. ०सर्पस्था
11 I. O. तृणस्था
12 Corrected from M. P. I. O. शङ्खेन निधि and A कौबेरी दिशि for the b. p.
13 M. P. वृषारूढा
14 M. P. त्रिशूलिनी
15 I. O. मौलिन्या
16 I. O. बालकार्थिना
17 I. O. उक्ता
18 I. O. मौलिन्या
19 A मुकुटाढ्याः for the b. p.
20 I. O. बालकार्थिताः
21 I. O. ०निहृत०
22 I. O. एतेनोत्कविनिविष्टकाम for the b. p.
23 A धृतपुत्रिका
24 I. O. धृत for विधृत

मूर्तयो [1]बद्धमुकुटा सवाहना घटनीयाः । अनुक्तवाहनानान्तु [2]ब्राह्म्याग्नेयीनैर्ऋतीनान्तु [3]तत्तल्लोकपालवाहनान्येव [4]वाहनानि लोकपालानुसारिण्य इति श्रुतेः । तेन[5] हंसारूढा ब्राह्मी छागारूढा आग्नेयी[6][नरारूढा नैर्ऋती घटनीया] । अनन्तस्य [7][तु क्वचिद्वाहना-दर्शनात्] अनन्तशक्तिर्वाहनशून्यैव कर्तव्या ।

सर्वासामुपरि[8]स्थाप्यं पञ्चवर्णं वितानकम् ।
धेनवो दशकुम्भाश्च वस्त्र-[9]युग्मानि चैव हि ॥१२॥
मध्यमे द्वे तु [10]गुरवे ऋत्विग्भ्योऽ[11]न्यास्तथैव च ।
ततो मङ्गलशब्देन स्नातः शुक्लाम्बरो बुधः ।
त्रिः प्रदक्षिणमावृत्य मन्त्रमेत-[12]मुदीरयेत् ॥१३॥

नमो नमः पापविनाशिनीभ्यो ब्रह्माण्ड-[13][लोकेश्वरपालिनीभ्यः ।
आशंसिताभिक्ष्यफलप्रदाभ्यो] दिग्भ्यस्तथा कल्पलतावधूभ्यः ॥१४॥
इति सकल-[14]दिगङ्गनाप्रदानं भवभयसूदनकारि यः करोति ।
अभिमतफलदे स [15]नाकलोके वसति [16][पितामहवत्सराणि [17]त्रिंशत् ॥१५॥
पितृ-]शतमथ तारयेद्भवाब्धेर्गुरु[18]-दुरितौघविघातशुद्धदेहः[19] ।
सुरपति-[20]वनितासहस्रसंघैः[21] परिवृतमम्बु-[22]रुहोद्भवाभि-[23]वन्द्यः ॥१६॥

---

1 A बद्धमुकुटाः
2 I. O. ब्राह्मान्वेयीनैर्ऋतानां
3 A तल्लोकपालाश्च
4 I. O. वाहनादि
5 I. O. तेव
6 I. O. नरयानारूढा निर्ऋती for the bracketed portion
7 I. O. मुकुटित्व वाहनादर्शनात् for the b. p.
8 A ०ष्याः, I. O. ०ष्याव
9 Corrected from M. P. I. O. ०युग्मादि, A ०पुष्पाणि
10 A omits it
11 A ०न्यासवैकुण्ठानि
12 A ०नुज for सु
13 A reads the bracketed portion as पुण्यं फलोप्रदेभ्यो
14 A दिग्लता for दिगङ्गना
15 M. P. नागलोके
16 A omits the bracketed portion
17 I. O. त्रिंशत्
18 M. P. भव for गुरु
19 I. O. ०देहं
20 A वसिष्ठ for वनिता
21 M. P. ०संख्यैः
22 M. P. ०जसंसदाभि०
23 Corrected from M. P. I. O. ०नन्द्यं, A ०वएवन्द्यं

[1][इति विधानमिदं [2]दिगङ्गनानां कनक]-कल्पलताविनिवेदने ।
पठति यः स्मरतीह [3]तथेक्षते [4]स पदमेति पुरन्दरसेवितम् ॥१७॥

प्रयोगः

अत्र यजमानः समुपजातमहाकल्पलतामहादानदानेच्छस्तुलापुरुषलिखितखड्गचर्ममय-ढाल[5]-सन्नाह-तुलास्थापनीयहरिप्रतिमा-[6]सालङ्कारतुला-हस्तग्राह्यप्रतिमा--बहिः सर्वसम्भारमधिकत्वेन [7][पलपञ्चकादूर्ध्वं पलसहस्रावधि] यथेच्छहेमनिर्मिताः स्थानस्थानघटितविद्याधर-किन्नर-मिथुन[8]-सिद्धगणाः [9]पल्लवाग्रनिर्मितयथेच्छाकृति-[10][पुष्पफल-[11]ग्रहणार्थिपक्षिगणः] सिद्धहस्तासक्तयथेच्छसंख्यमुक्ताहारसहिता नानाविध-[12]चित्रालङ्कादिवस्त्रोपशोभिता दशलताः तासामधःस्थापनार्थं [13]यथेच्छहैम-[14]पत्नीत्खाटिता यथोक्तरूपा [15]ब्राह्म्यादिदशप्रतिमाः तदारोपणार्थं लवणगुडहरिद्रातण्डुलघृतक्षीर[16]-शर्करातिल[17]-नवनीतानि [18]लतापार्श्वस्थापनार्थं धेनुदशकं [19][कुम्भदशकं [20]वस्त्रयुगदशकञ्चोत्पादयेत् ] । [21]ततस्तुलापुरुषोक्तसमयानामन्यतमस्य पूर्वतरदिने गुर्वृत्विग्यजमानजापकास्तुलापुरुषवद्धविष्यभोजनादिकं कृत्वा निवेदनसङ्कल्प-वाक्ययोस्तुलापुरुषपदस्थाने महाकल्पलतापदं निवेश्य [22]निवेदनं सङ्कल्पञ्च कुर्युः । अपरदिने च यजमानः पूर्ववद्गोविन्दाद्याराधनादि मधुपर्कदानान्तं[23] कर्म गोविन्दा-[24]भ्यर्चन-[25][ब्राह्मणानुज्ञापन-[26]दानसङ्कल्प]-पुण्याहादिवाचन-वरणवाक्येषु तुलापुरुषपदस्थाने महाकल्पलतापदं

---

1 A omits the bracketed portion
2 Corrected from M. P. I. O. षदिङ्गना
3 I. O. तथेषु तैः
4 A omits it
5 Both I. O. and A ०मन्नाच्छन्न०
6 A omits सा
7 A omits the bracketed portion
8 A मिथुन
9 A पल्लगायनिर्मिताय०, I. O. पल्लवाग्रनिर्मित०
10 A omits the bracketed portion
11 I. O. ग्रहणोथ for ग्रहणार्थि
12 I. O. चित्रनेत्रादि for चित्रालङ्कादि
13 A omits the whole word
14 I. O. यन्त्रो for पत्नी
15 A ब्राह्म्यादिश, I. O. ब्राह्म्यादि
16 I. O. चोराजैनसामग्रों for चोर
17 I. O. मल for तिल
18 I. O. लतत् for लता
19 A omits the bracketed portion
20 I. O. वर्ष०
21 A adds यजमानः between ततः and तुलापूरुषोक्त०
22 I. O. निवेदन
23 I. O. ०दानान्त
24 I. O. ०ध्यर्थन, A ०भ्यर्चन
25 A ब्राह्मण for the bracketed portion
26 I. O. omits it

प्रक्षिप्य कुर्य्यात् । ततो गुर्वृत्विग्यजमानजापका उपवसेयुः । अपरदिने च कृतनित्यास्तुलापुरुषवदग्निस्थापनादिमध्यब्राह्मणवाचनान्तं कर्म यथायथं कुर्युः । एवञ्च मध्यब्राह्मणवाचनान्तं[1] कर्म तुलापुरुषग्रन्थमनुसन्धायानुष्ठातव्यम् । [2][तत ऋत्विजः] प्रधानवेद्यां लिखितचक्रोपरि *लतानां मध्यात् पूर्वादि-[3]दिक्क्रमेणाष्टौ लताः समारोप्य लतामण्डलमध्ये लताद्वयञ्चारोप्य* [4][तदधो लवणं दत्त्वा तत्र ब्राह्मीमनन्तशक्तिञ्चारोप्य] पूर्वादिदिक्क्रमारोपिता-[5]ष्टलताधः क्रमेण गुडादिद्रव्याणि दत्त्वा तेषु क्रमात् कुलिशायुधादिशक्तिप्रतिमाः [6][समारोपयेयुः । लतापार्श्वे दशधेनूः पूर्ण]-कुम्भदशकं दशवस्त्रयुगानि च स्थापयेयुः । ततो मङ्गलगीत-[7]वाद्यवन्दिघोषेषु सत्सु कुण्डसमीपस्थकुम्भचतुष्टयजलेन [8]यजमानं स्नापयेयुः । ततो यजमानः शुक्लमाल्याम्बरधरो धृतसर्वालङ्कारः पुष्पाञ्जलिमादाय लतास्त्रिः प्रदक्षिणीकृत्य 'नमो नमः पाप-[9]विनाशिनीभ्य' इत्यादि [10][मन्त्रं पठित्वा] पुष्पाञ्जलिनाभ्यर्च्य [11]गुर्वृत्विग्भ्यो दद्यात् । तद् यथा—ॐ अद्यामुकसगोत्रेभ्योऽमुकामुकवेदामुकामुकशाखाध्यायिभ्योऽमुकामुकदेवशर्मभ्यो युष्मभ्यं [12]मत्स्यपुराणोक्त-कल्पलतामहादानदानफलप्राप्तिकामोऽहं मत्स्यपुराणोक्त-[13]भागव्यवस्थयैता लवणगुडहरिद्रातण्डुलघृतक्षीर[14]-शर्करातिल[15]-नवनीतार्पित सौवर्णब्रह्मानन्त-[16][कुलिशायुधाग्नियमनिर्ऋति]-वरुणवायुसोममहेश्वरशक्तिप्रतिमासहिताः पञ्च-[17]वर्ण-वितानक-धेनुदशक-कुम्भदशक[18]-वस्त्रयुगदशकान्विता[19] दशकल्पलता ददानि । प्रतिग्रहीतारः स्वस्तीत्युक्त्वा सावित्रीं पठेयुः । ततो गुरुः कल्पलतेयं[20] विष्णुदैवतेति[21] ब्रूयात्[22] । [23]ऋत्विजस्तु प्रत्येकं [24]कल्पलतैषा

---

1 A ०वाचनं
2 A omits the bracketed portion
3 I. O. omits दिक्
4 A omits the bracketed portion
5 I. O. ०स्तुलताधक्रमेण
6 A यथायोग्यं पितृपूर्व for the bracketed portion
7 A omits वाद्य
8 A omits it
9 A ०विनाशनाय
10 A मन्त्रेण for the bracketed portion
11 A ऋत्विग्भ्यो
12 A omits मत्स्य.. क्त
13 I. O. adds कृत before भाग
14 I. O. ०क्षीरं, A omits it
15 I. O. ०ति, A omits it
16 A omits the bracketed portion and reads irrelevant matter of ten lines here
17 A रस
18 I. O. omits कुम्भदशक
19 I. O. ०विता
20 I. O. कल्पलते
21 I. O. ०दैवते इति
22 A ब्रूयुः
23 A प्रति before this
24 A कल्पलतेयं

विष्णुदेवतेति ब्रूयुः। ततो यथाशाखं कामस्तुतिं पठेयुः। तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं युष्मभ्यमहं दक्षिणा-[1]मियदुत्पत्तियोग्यां [2]भूमिमेतानि च रत्नानि ददानि। ब्राह्मणाः [3]स्वस्तीत्युक्त्वा [4][प्रत्येकं कल्पलताः] स्पृशेयुः। ततस्तुलापुरुषवज्ज्ञापकेभ्यो दक्षिणादानं[5] दीनानाथादितर्पणं ब्राह्मणवाचनं त्वरया कल्पलतानां[6] [7]यथायथं [8]प्रतिपादनञ्च [9]कुर्य्यात्।

इति [10]महाकल्पलतामहादानं [11]समाप्तम्।

---

1 A ०मिमां उत्पत्ति०
2 A omits भूमिम्
3 I. O. स्वस्तीति
4 I. O. प्रत्येकमुच्चमिताः and A कल्पलताः for the bracketed portion
5 A omits दानं
6 A कल्पलतां
7 A omits it
8 A प्रतिपदनञ्च, I. O. पादनञ्च
9 A कुर्य्युः
10 A कल्पलतामहादनं
11 I. O. omits it

## तथा सप्तसागरमहादानम्। ( मत्स्यपुराणम्—२८७ अः )

अथातः सम्प्रवक्ष्यामि महादानमनुत्तमम्।
सप्तसागरकं नाम [1]सर्वपापविनाशनम् ॥१॥
पुण्यं दिनमथासाद्य कृत्वा ब्राह्मणवाचनम्।
तुलापुरुषवत् कुर्य्याल्लोकेशावाहनं बुधः ॥२॥
ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम्।
कारयेत् सप्त कुण्डानि काञ्चनानि विचक्षणः ॥३॥
प्रादेशमात्राणि तथारत्नि[2]-मात्राणि वा[3] पुनः।
कुर्य्यात् सप्तपलादूर्द्ध्वमा सहस्राच्च शक्तितः ॥४॥
संस्थाप्यानि च सर्वाणि कृष्णाजिनतिलोपरि।
प्रथमं [4]पूरयेत् कुण्डं लवणेन विचक्षणः ॥५॥
द्वितीयं [5]पयसा तद्वत्तृतीयं सर्पिषा [6]बुधः।
चतुर्थं तु[7] गुडेनैव [8][दध्ना पञ्चममेव तु] ॥६॥
षष्ठं शर्करया तद्वत् सप्तमं तीर्थवारिणा।
स्थापयेल्लवण-[9][स्यान्तर्ब्रह्माणं] काञ्चनं शुभम् ॥७॥
केशवं क्षीरमध्ये तु घृतमध्ये महेश्वरम्।
भास्करं गुडमध्ये तु [10][दधिमध्ये [11]निशाधिपम्] ॥८॥
[12]शर्क्करायां न्यसेल्लक्ष्मीं जलमध्ये तु पार्वतीम्।
सर्वेषु सर्वरत्नानि धान्यानि च समन्ततः ॥९॥

---

1 I. O. महापापविनाशनं, M. P. सर्व-पापप्रणाशनम्
2 A वह्नि for रत्नि
3 M. P. वै
4 I. O. पूजयेत्
5 A पायसापूर्णं for पयसा तद्वत्
6 M. P. पुनः
7 A च
8 M. P. दध्ना पञ्चममेव च and A दत्वा दत्वा च पञ्चमं for the bracketed portion
9 A स्यान्ते ब्रह्माणं and M. P. स्यं तु ब्रह्माणं for the bracketed portion
10 A omits the b. p.
11 Corrected from M. P. I. O. नराधिपं
12 A सर्पिषि तु

तुलापुरुषवच्छेष-[1]मत्रापि परिकल्पयेत् ।
ततो वारुणहोमान्ते स्नापितो वेदपुङ्गवैः ॥१०॥
त्रिः प्रदक्षिणमावृत्य मन्त्रानेतानुदीरयेत् ।

ततो वारुणहोमान्त इति पददर्शनाद्विनायकादिदेवताहोमानन्तरं[2] चतुर्ष्वपि कुण्डेषु वारुणमन्त्रेण [3]वरुणायैकाहुतिर्देया ।

नमो वः सर्व-[4]सिन्धूनामाधारेभ्यः सनातनाः ।
जन्तूनां प्राणदेभ्यश्च समुद्रेभ्यो नमः नमः ॥११॥
क्षीरोदकाज्य[5]-दधिमाधुर[6]-लावणेक्षुसारामृतेन भुवनत्रयजीवसंघान् ।
[7]आनन्दयन्ति वसुभिश्च यतो भवन्तस्तस्मान्ममाप्यघविघातमलं [8]विदध्वम् ॥१२॥
यस्मात् [9]समस्तभुवनेषु भवन्त एव तीर्थामरासुर-[10]सुगन्धमणिप्रदानम् ।
[11]पापक्षयामृतविलेपनभूषणाय[12] [13]लोकस्य बिभ्रति तदस्तु ममापि लक्ष्मीः ॥१३॥
इति ददाति [14]रसामृतसंयुताञ्छुचिरविस्मयवानिह सागरान् ।
अमलकाञ्चनरत्न[15]-मयानसौ पदमुपैति [16]हरेरमरार्चितः ॥१४॥
सकलपाप[17]-विघातविराजितं[18] पितृपितामहपुत्र-[19]शतत्रयम् ।
नरकलोकसमाकुलमप्यलं[20] झटिति [21]नयत्यसौ शिवमन्दिरम् ॥१५॥

---

1 I. O. ०मन्त्रादि
2 A ०होमान्तरं
3 A वरुणयाहुतिर्देया
4 M. P. ०भूतानां०
5 Corrected from M. P. I. O. ज्या and A ज्य for ज्य
6 Corrected from M. P. I. O. and A माधव
7 A ध्यादीपयन्ति
8 I. O. विधध्वं, M. P. दिशन्तु
9 A समभुवनेषु
10 Corrected from M. P. I. O. सुगन्धमणिप्रभावं, A गन्धार्थमणिप्रभानं
11 Corrected from M. P. I. O. पापक्षयाम्बर०, A ०क्षयाम्ब०
12 I. O. ०भूषणेषि
13 A कस्य
14 Corrected from M. P. I. O. रसामरसंयुचि०, A रसामरसमयुताञ् शुचि०
15 M. P. वर्ण for रत्न
16 Corrected from M. P. I. O. हरेरमलाहतः, A हरेरमाहतः
17 A omits पाप
18 M. P. ०विधौतविराजितः
19 M. P. ०कुलवकाम्
20 M. P. ०मप्ययं
21 I. O. रमुमसौ, A नीतुरसौ, M. P. सोऽपि नयेत्

अत्र यजमानः समुपजातसप्तसागरमहादान-[1]दानेच्छस्तुलापुरुषलिखित-खड्गचर्म-[2]मय-ढालसम्राह-तुला[3]-स्थापनीयहरिप्रतिमा-सालङ्कारतुला--हस्तग्राह्यदेवताबहिः सर्वसम्भारमधिकत्वेन सप्तपलादूर्द्ध्वं पलसहस्रावधि यथेच्छसुवर्णघटितान् सप्तोभयतः प्रादेशमात्रान्[4] रत्निमात्रान्[5] वा कुण्डाकारान् [6]सागरान् तदवस्थापनार्थं कृष्णाजिनानि तिलांश्च कुण्डसप्तकपूरणार्थं लवणं क्षीरं[7] दधि घृतं गुडं [8]शर्करां तीर्थोदकञ्च कुण्डमध्यस्थापनार्थं यथेच्छसुवर्ण-[9]पत्नोत्खाटिता [ब्रह्मकेशवमहेश्वरादित्येन्द्रलक्ष्मीपार्वतीप्रतिमाः सर्वरत्न-[10]घटितलोकसप्तकञ्च कुण्डपार्श्वे-स्थापनार्थमष्टादशधान्यानि चोत्पादयेत्। ततस्तुलापुरुषोक्तसमयानामन्यतमस्य पूर्वतरदिने गुर्व्रृत्विग् यजमानजापकास्तुलापुरुषवद्ध[11]-विष्यभोजनादिकं कृत्वा निवेदनसङ्कल्पवाक्ययोस्तुला-पुरुषपदस्थाने सप्तसागरपदं निवेश्य निवेदनं[12] सङ्कल्पञ्च कुर्युः। अपरदिने च यजमानस्तुला-पुरुष-[13]वद्गोविन्दा-[14]द्याराधनादि मधुपर्कदानान्तं कर्म गोविन्दाद्यभ्यर्चन[15]-ब्राह्मणानुज्ञापन-दानसङ्कल्प-पुण्याहादिवाचन-वरणवाक्येषु तुलापुरुषपदस्थाने सप्तसागरपदं निवेश्य कुर्य्यात्। ततो गुर्व्रृत्विग् यजमानजापका उपवसेयुः। अपरदिने च[16] कृतनित्यक्रियास्तुलापुरुष-[17][वदग्नि-स्थापनादि]मध्यब्राह्मणवाचनान्तं कर्म [18]यथायथं कुर्युः। तत्र च वनस्पतिहोमान्ते तुला-पुरुषोक्तमन्त्रेण एकाहुत्या वरुणाय होमोऽधिकः। एवञ्च मध्यब्राह्मणवाचनान्तं कर्म तुला-पुरुषग्रन्थमनुसन्धायानुष्ठातव्यम्। तत्र ऋत्विजः सप्तकुण्डानि प्रधानवेदीमध्यलिखित-[19]चक्रो-परि कृष्णाजिनान्यास्तीर्य्य तत्र तिलान् दत्त्वा तत्रारोप्य लवणादिभिः क्रमेण पूरयित्वा सर्व-रत्नपूर्वोक्तब्रह्मकेशवादिप्रतिमा-[20]सप्तकगर्भाणि कृत्वा कुण्डपार्श्वेष्वष्टादशधान्यानि[21] स्थापयेयुः। ततो मङ्गलगीतवाद्यवन्दिघोषेषु सत्सु कुण्डसमीपस्थकुम्भचतुष्टयजलेन यजमानं स्नपयेयुः। ततो यजमानः शुक्लमाल्याम्बरो धृतसर्वालङ्कारः पुष्पाञ्जलिमादाय सागरान् त्रिः प्रदक्षिणीकृत्य

---

1 A omits दानेच्छः
2 Both I. O. and A मयाच्छम्रं
3 A स्तुलापुरुष for तुला
4 I. O. प्रादेशमात्रा
5 I. O. रत्निमात्रान्या, A रत्निमात्राय
6 A omits it
7 I. O. क्षीराज्यमसामर्यों
8 Both I. O. and A शर्करा
9 I. O. ०पात्रोत्खाटिता, A ०पत्रोत् -खाटित
10 I. O. पोट्टलिका for घटितलोक
11 A ह for वद्ध
12 I. O. निवेदन
13 A omits व
14 I. O. omits द्या
15 I O ०भ्यर्थन
16 A omits च
17 A दग्निस्थापनार्थं for the b. p.
18 A यथा
19 I. O. ०चक्राकारं
20 A ०सप्त०
21 A ०रत्नानि

'नमो वः सर्वसिन्धूना'मित्यादि-[1]['तदस्तु ममापि लक्ष्मी'रित्यन्त]-मन्त्रैरभिमन्त्र्य पुष्पाञ्जलिनाभ्यर्च्य ][2]गुरुर्त्विक्प्रमुखब्राह्मणेभ्य उत्सृज्य दद्यात् । तद् यथा—ॐ अद्य यथासम्भवगोत्रनाम-[3]गुरुर्त्विक्प्रमुखब्राह्मणेभ्यो मत्स्यपुराणोक्त-सप्तसागरमहादानदानफलप्राप्तिकामोऽहमेतान् कृष्णाजिनन्यस्ततिला[4]-रोपितान् लवणक्षीरसर्पिर्गुडदधिशर्करातीर्थोदकपूरितान् सर्वरत्नगर्भान् मध्यस्थितसौवर्णब्रह्मकेशवमहेश्वरादित्येन्द्रलक्ष्मीपार्वतीप्रतिमानष्टादशधान्यपञ्चवर्ण-[5]वितानकसहितान् सप्तसागरान् ददानि । गुरुर्त्विजः स्वस्तीत्युक्त्वा सावित्रीं पठित्वा सप्तसागरा एते विष्णुदैवता इत्युक्त्वा यथाशाखं कामस्तुतिं पठेयुः । ततो गुरुर्त्विग्भ्यो दक्षिणादानम् । तद् यथा—ॐ अद्य कृतैतद्दानकर्मप्रतिष्ठार्थं युष्मभ्यमहं दक्षिणामियदुत्पत्तियोग्यां भूमिमेतानि च[6] रत्नानि ददानि । गुरुर्त्विजः स्वस्तीत्युक्त्वा स्वं स्वं भागं स्पृशेयुः । गुरुर्त्विग्भ्य एव वा दद्यात् । तत्र दानवाक्येऽमुकामुकसगोत्रेभ्योऽमुकामुक-[7]वेदामुकामुकशाखाध्यायिभ्योऽमुकामुकदेवशर्मभ्यो युष्मभ्यमिति मत्स्यपुराणोक्तभागव्यवस्थयेति [8][च विशेषः ] । ततस्तुलापुरुषवज्जापकेभ्यो दक्षिणादानं दीनानाथादितर्पणं ब्राह्मणवाचनं त्वरया यथायथं सप्तसागरप्रतिपादनञ्च कुर्यात् ।

इति सप्तसागर-[9]महादानं [10]समाप्तम् ।

1 A तत्रोक्त for the bracketed portion, I. O. तत्रोम् etc.

2 A reads the bracketed portion within the chap. viz. महाकल्पलतामहादानम्

3 A ऋत्विक्प्रमुखा०

4 A ०तिलाव

5 I. O. वितान०

6 I. O. omits it

7 A omits वेदामुकामुक

8 A वशेष: for the bracketed portion

9 A दान for महादानं

10 I. O. omits it

## [1]तथा रत्नधेनुमहादानम्। ( मत्स्यपुराणम्—२८८ अः )

अथातः सम्प्रवक्ष्यामि [2]महादानमनुत्तमम् ।
[3][रत्नधेनुरिति ख्यातं ] गोलोकफलदं नृणाम् ॥१॥
पुण्यं दिनमथासाद्य तुलापुरुषदानवत् ।
लोकेशावाहनं कृत्वा ततो धेनुं प्रकल्पयेत् ॥२॥
भूमौ कृष्णाजिनं [4]कृत्वा लवणद्रोणसंयुतम् ।
धेनुं रत्नमयीं कुर्य्यात् सङ्कल्प्य[5] विधिपूर्वकम् ॥३॥

[6]सङ्कल्प्य विधिपूर्वकमिति [7]यथोक्तं [8]तत्तदवयवरचनां लवणोपरि [9]लेखया कृत्वेत्यर्थः ।

स्थापयेत् पद्मरागाणामेकाशीतिं[10]मुखे बुधः ।
पुष्परागशतं तद्वद्घोणायां परिकल्पयेत् ॥४॥
ललाटे हेमतिलकं मुक्ताफलशतं दृशोः ।
भ्रूयुगे विद्रुमशतं शुक्ती कर्णद्वये [11]स्मृते ॥५॥
काञ्चनानि च शृङ्गाणि शिरो [12]वज्रशतात्मकम् ।
ग्रीवायां नेत्र-[13]पटकं [14]गोमेदकशतान्वितम् ॥६॥

शृङ्गाणीति बहुवचनं वत्सशृङ्गापेक्षम्[15] ।

इन्द्रनीलशतं पृष्ठे वैदूर्य्यशत-[16]पार्श्वके ।
स्फाटिकैरुदरं [17]कार्य्यं सौगन्धिक-[18]शतं कटिम् ॥७॥

1 A अथ
2 A महादानमनुदानमनुत्तमं
3 M. P. रत्नधेन्विति विख्यातं for the bracketed portion
4 I. O. दत्वा
5 A सङ्कल्प
6 A सङ्कल्प
7 I. O. यथोक्त
8 A तत्तदेवावयवरचनं
9 A रेखाया
10 Corrected from M. P. Both I. O. and A शीति
11 A स्पृशेत्
12 A रज for वज्र
13 A ०मटकं, M. P. ०पटलं
14 A गोमेदशतकान्वितं
15 A ०पेक्षया
16 Corrected from M. P. Both I. O. and A ०पार्श्वकौ
17 M. P. तद्वत्
18 M. P. ०शतैः

स्फाटिकैरिति शतसंख्यैः संख्याविशेषाकाङ्क्षायां शतसंख्यसन्दंशपाठात् ।

[1][खुरा हेममयाः ] कार्य्याः पुच्छं मुक्तावलीमयम् ।
सूर्य्यकान्तेन्दुकान्तौ च घ्राणे कर्पूरचन्दने ॥८॥

अत्रेन्दु-[2]कान्तस्य सर्वथा प्राप्त्यभावात् [3]अप्राप्तप्रतिनिधानेन शुद्धस्फाटिकग्रहणम् ।

कुङ्कुमानि च रोमाणि [4][रौप्यं नाभिञ्च] कारयेत् ।
[5][गारुत्मतशतं तद्वदपाने परिकल्पयेत् ] ॥९॥
[6]तथान्यानि च रत्नानि स्थापयेत् सर्वसन्धिषु ।
कुर्य्याच्छर्करया जिह्वां गोमयञ्च गुडात्मकम् ॥१०॥
गोमूत्रमाज्येन तथा दधि दुग्धं[7] स्वरूपतः ।
पुच्छाग्रे चामरं दद्यात् समीपे ताम्रदोहनम् ॥११॥
कुण्डलानि च हैमानि भूषणानि च शक्तितः ।
कारयेदेवमेवन्तु चतुर्थांशेन वत्सकम् ॥१२॥

भूषणानि ग्रैवेयकललाटपट्टघण्टिकाः ।

तथा [8]धान्यानि सर्वाणि पादाश्चेक्षुमयाः [9]शुभाः ।
नानाफलानि सर्वाणि [10]पञ्चवर्णं वितानकम् ॥१३॥
एवं [11]विरचितां कृत्वा तद्वद्धोमाधिवासनम् ।
ऋत्विग्भ्यो दक्षिणां [12]दद्याद्धेनुमा-[13]मन्त्र्य यत्नतः ।

एवं विरचितां होमाधिवासनं कृत्वा विरचितामामन्त्र्य गुडधेनूक्त-[14]मन्त्रैरामन्त्र्य इदञ्चोदाहरेदिति [15]वक्ष्यमाणेन सम्बन्धः ।

गुडधेनुवदावाह्य इदञ्चोदाहरेत्ततः ॥१४॥

---

1 I. O. खुरो हेममयः for the bracketed portion
2 I. O. न्न for न्दु
3 A अप्राप्त्या०, I. O. omits अप्राप्त and reads प्रतिनिधानेन only
4 A रौप्यान्नाभिञ्च and M. P. रौप्यनाभिं च for the b. p.
5 Supplied from M. P. A omits it, I. O. गरुत्मतशतस्तद्वद-पाने etc.
6 A तथापाने
7 M. P. दधिदुग्धं
8 I. O. omits धा
9 M. P. स्मृताः
10 A पञ्चवर्णां
11 A विचितां, M. P. विरचनं
12 I. O. दत्वा for दद्यात्
13 M. P. ०मन्त्रयेत्ततः
14 I. O. ०मन्त्रं only
15 I. O. वक्ष्यमाणे

त्वं सर्वदेवगणधाम यतः पठन्ति रुद्रेन्द्रचन्द्र[1]-कमलासन[2]-वासुदेवाः ।
तस्मात् समस्तभुवनत्रयदेहयुक्ता मां पाहि देवि भवसागरपीड्यमानम् ॥१५॥
आमन्त्र्य [3]चैवमभितः [4]परिवृत्य भक्त्या दद्याद्द्विजाय गुरवे जलपूर्विकां ताम् ।
यः पुण्यमाप्य दिनमत्र कृतोपवासः पापैर्विमुक्ततनुरेति पदं मुरारेः ॥१६॥
इति सकलविधिज्ञो रत्नधेनुप्रदानं वितरति स विमानं प्राप्य [5]देदीप्यमानम् ।
सकलकलुषमुक्तो बन्धुभिः पुत्रपौत्रैः [6]स हि [7]मदनसरूपः [8]स्थानमभ्येति शम्भोः ॥१७॥

अत्र यजमानः समुपजातरत्नधेनुमहा-[9]दानदानेच्छस्तुलापुरुषलिखितखड्गचर्म-[10]मयढाल-सन्नाहतुलास्थापनीयहरिप्रतिमा-सालङ्कारतुला-हस्तमात्रप्रतिमा-बहिः सर्वसम्भारमधिकृत्वेन धेनु-मुखनिर्माणार्थमेकाशीतिं वत्समुखार्थञ्चैकविंशतिं पद्मरागरत्नानि धेनु-[11]घोणार्थं पुष्परागशतं वत्स-[12]घोणार्थञ्च पञ्चविंशतिं पुष्परागाणि धेनुललाटार्थं यथेच्छहेम-[13]घटितं तिलकं वत्स-ललाटार्थञ्च तच्चतुर्थभागहेममयतिलकं धेनुनेत्रद्वयार्थं मुक्ताफलशतं वत्सनेत्रद्वयार्थञ्च [14]पञ्चविंशतिं मौक्तिकानि धेनुभ्रूयुगार्थं विद्रुमशतं वत्सभ्रूयुगार्थञ्च पञ्च-विंशतिं विद्रुमाणि धेनुकर्णद्वयार्थं बृहच्छुक्तिद्वयं वत्सकर्णद्वयार्थञ्च स्वल्पशुक्तिद्वयं धेनु-शृङ्गार्थं यथेच्छहेमघटितं बृहच्छृङ्गयुगं वत्सशृङ्गार्थञ्च तच्चतुर्थांशहेममयशृङ्गयुगं धेनु-शिरोऽर्थं हीरकशतं वत्सशिरोऽर्थञ्च[15] [16]पञ्चविंशतिं हीरकाणि धेनुग्रीवार्थं[17] [18]बृह-न्नेत्रपटं गोमेदशतञ्च वत्सग्रीवार्थञ्च स्वल्पनेत्रपटं [19]पञ्चविंशतिं गोमेदरत्नानि धेनु-पृष्ठार्थमिन्द्रनीलशतं वत्सपृष्ठार्थञ्च[20] [21]पञ्चविंशतिमिन्द्रनीलानि धेनुपार्श्वद्वयार्थं वैदूर्य-शतं वत्सपार्श्वद्वयार्थञ्च [22]पञ्चविंशतिवैदूर्यरत्नानि धेनूदरार्थं शतं स्फाटिकखण्डान् [23][वत्सोदरार्थञ्च तच्चतुर्थभागस्फाटिकखण्डान् ] धेनुकट्यर्थं सौगन्धिकशतं वत्सकट्यर्थञ्च[24]

1 M. P. सूर्य for चन्द्र
2 I. O. ०भिप for ०सन
3 A चेवमतित:, I. O. विधिमभित:, M. P. चत्यमभित:
4 Corrected from M. P. Both I. O. and A परिवर्त्त्य
5 A दीप्यमानं
6 Corrected from M. P. Both I. O. and A सह for स हि
7 A दमनस्वरूपं
8 A स्थापन for स्थान
9 A omits दान
10 Both I. O. and A मयाच्छन्न
11 I. O. ०घोषणार्थं
12 I. O. ०घोषणार्थञ्च
13 A omits घटितं
14 A पञ्चविंशति, I. O. विंशतिं
15 I. O. ०र्थं
16 A विंशति
17 ०र्थञ्च
18 A adds यथेच्छहेमघटितं before this
19 I. O. पञ्चविंशति, A पञ्चविंशतिञ्च
20 A ०पृष्ठार्थं
21 A omits पञ्च
22 A omits पञ्च
23 A omits the bracketed portion
24 A ०कट्यर्थं

पञ्चविंशतिसौगन्धिकानि धेनुखुरार्थं यथेच्छहेमघटितखुरचतुष्कं [1][वत्सखुरार्थञ्च तच्चतुर्थभागहेममयं खुरचतुष्कं] धेनुपुच्छार्थं यथेच्छमुक्तानिर्मितां मुक्तावलीं वत्सपुच्छार्थञ्च[2] तच्चतुर्थांश-[3]निर्मितां मुक्तावलीं धेनुदक्षिणनासापुटार्थं यथेच्छकर्पूरसहितं सूर्यकान्तं धेनुवामनासापुटार्थं यथेच्छचन्दनसहितं [4]विशुद्धस्फाटिकखण्डं वत्सदक्षिणनासापुटार्थञ्च[5] [6]धेन्वर्थचतुर्थभागकर्पूरसहितं [7]स्वल्पसूर्यकान्तं तद्वामनासापुटार्थञ्च[8] धेनुचतुर्थांशचन्दनसहितं स्वल्प-[9]विशुद्धस्फाटिकखण्डं धेनुरोमार्थं यथेच्छकुङ्कुमं वत्सरोमार्थञ्च तच्चतुर्थभागकुङ्कुमं धेनुनाभ्यर्थं यथेच्छराजतचक्रिकां वत्सनाभ्यर्थञ्च तच्चतुर्थांश[10]-राजत[11]-चक्रिकां [12]धेन्वपानार्थं मरकतशतं [13]वत्सापानार्थञ्च पञ्चविंशतिमरकतानि [14][धेनुगात्रसन्ध्यर्थं यथेच्छोक्तव्यतिरिक्तरत्नानि वत्साङ्गसन्ध्यर्थञ्च तच्चतुर्थांशरत्नानि] [15][धेनुजिह्वार्थं यथेच्छशर्करां वत्सजिह्वार्थञ्च तच्चतुर्थांशशर्करां] धेनुगोमयार्थं यथेच्छं[16] गुडं वत्सगोमयार्थं तच्चतुर्थांशगुडं धेनुमूत्रार्थं[17] यथेच्छं घृतं [18]वत्समूत्रार्थञ्च तच्चतुर्थांशं घृतं धेन्वर्थं वत्सार्थञ्च बृहत्स्वल्प [19]दधिस्थानद्वयं दुग्धार्जनसामग्रीञ्च धेनुपुच्छाग्रार्थं यथेच्छं चामरं वत्सपुच्छाग्रार्थञ्च स्वल्पचामरं धेन्वर्थं यथेच्छताम्रदोहनं [20][वत्सार्थञ्च स्वल्पताम्रदोहनं] धेन्वलङ्कारार्थं[21] यथेच्छहेमघटितं[22] कुण्डलयुगं ग्रैवेयकं ललाटपट्टिकां[23] घण्टिकाञ्च[24] वत्सालङ्कारार्थञ्च[25] तच्चतुर्थांशहेमनिर्मितं[26] कुण्डलयुगं ग्रैवेयकाद्यलङ्करणञ्च धेनुपादार्थं

---

1 A omits the bracketed portion
2 A ०पुच्छार्थं
3 A omits निर्मितां
4 A शुद्ध०
5 A ०पुटार्थं
6 I. O. धेनु for धेन्वर्थ
7 A अल्प०
8 A ०पुटार्थं
9 A omits वि
10 A omits श
11 I. O. ०रजत०
12 I. O. धेनु अपानार्थं, A धेनु पानार्थं
13 A वत्सपानार्थञ्च
14 A omits the bracketed portion
15 A reads the bracketed portion as उभयो जिह्वार्थं तथा शर्करा
16 Both I. O. and A omit it
17 I. O. धेनुगोमूत्रार्थं
18 I. O. वत्सगोमूत्रार्थं
19 A omits दधिस्थानद्वयं
20 A omits the bracketed portion
21 A ०ङ्करणार्थं
22 A सुवर्णघटितं
23 A ०पट्टकं
24 I. O. घण्टिकाञ्च
25 A ०ङ्करणार्थं
26 A चतुर्थांशहेमनिर्मितं

[1]बृहदिक्षुदण्डचतुष्टयं वत्सपादार्थञ्च स्वल्पेक्षुदण्डचतुष्टयं [2]सवत्सधेन्ववस्थानार्थं बृहत्-स्वल्पकृष्णाजिनद्वयं लवणद्रोणं लवणाढकञ्च धेनुपार्श्वेस्थापनार्थञ्चा[3]-ष्टादशधान्यानि बहूनि च[4] नानाफलान्युत्पादयेत्। ततस्तुलापुरुषोक्तसमयानामन्यतमस्य पूर्वतरदिने गुर्वृ-त्विग् यजमानजापकास्तुलापुरुषवद्धविष्यभोजनादिकं कृत्वा [5]निवेदनसङ्कल्पवाक्ययोस्तुलापुरुष-पदस्थाने रत्नधेनुपदं निवेश्य यथायथं निवेदनं[6] सङ्कल्पञ्च कुर्युः। अपरदिने च[7] यज-मानस्तुलापुरुषवद्-[8] [गोविन्दाद्याराधनादि मधुपर्कदानान्तं कर्म गोविन्दाद्यभ्यर्चन-ब्राह्मणानु-ज्ञापन-दानसङ्कल्प-पुण्याहादि]-वाचन-वरणवाक्येषु तुलापुरुषपदस्थाने रत्नधेनुपदं प्रक्षिप्य कुर्यात्। ततो गुर्वृत्विग् यजमानजापका उपवासं कुर्युः। अपरदिने च कृतनित्यक्रिया-स्तुलापुरुषवदग्निस्थापनादिमध्य-[9]ब्राह्मणवाचनान्तं कर्म यथायथं कुर्युः। एवञ्च मध्य-[10]ब्राह्मण-वाचनान्तं कर्म तुलापुरुषग्रन्थमनुसन्धायानुष्ठातव्यम्। [11][तत ऋत्विजः] प्रधानवेदीमध्ये लिखितचक्रोपरि बृहत्कृष्णाजिनमास्तीर्य तदुपरि लवणद्रोणं दत्त्वा तत्र रेखया धेन्वा-कारं प्राङ्मुखम् [12]उदक्पादमालिख्य मुखस्थाने[13] एकाशीतिं पद्मरागरत्नानि घोणायां पुष्प-रागशतं ललाटे हैमतिलकं नेत्रयोर्मुक्ताफलशतं [14][भ्रूयुगे विद्रुमशतं कर्णद्वये शुक्तिद्वयं हैमकुण्डलद्वयञ्च शृङ्गयोः काञ्चनयुगं शिरसि हीरकशतं ग्रीवायां नेत्रपटं गोमेदशतञ्च पृष्ठे इन्द्रनीलशतं पार्श्वयोः वैदूर्यशतम्] [15]उदरे स्फाटिकखण्डान् कट्यां [16]नीलसौगन्धिक-शतं जङ्घास्थाने इक्षुदण्डचतुष्टयं खुरस्थाने हैमखुरचतुष्कं[17] पुच्छे मुक्तावली पुच्छाग्रे चामरं दक्षिणनासापुटे सूर्यकान्तं कर्पूरञ्च वामनासापुटे [18]सुविशुद्धस्फाटिकखण्डं चन्दनञ्च रोमस्थाने कुङ्कुमं नाभिस्थाने [19]रजतचक्रिकां अपानस्थाने मरकतशतं सर्वाङ्गसन्धिषु

1 A इक्षुदण्डचतुष्कं
2 A सवत्सधेनुस्थापनार्थं च
3 A धेनुस्थापनार्थं । वमार्थं ञ्च
4 A omits च
5 A ब्राह्मणवाचन for निवेदन
6 Both I. O. and A निवेदन
7 A omits it
8 A reads the bracketed portion as गोविन्दाद्यभ्यर्चनाराधनादि वरणान्तं कर्म समाप्य ब्राह्मणवाचन
9 I. O. ब्रह्म for ब्राह्मण
10 I. O. ब्रह्म०
11 A omits the bracketed portion
12 I. O. उदक०, A omits it
13 A मुखस्थानं
14 A omits the bracketed portion
15 I. O. omits it
16 A omits नील
17 A ०चतुष्टयं
18 A omits सु
19 A रजतञ्च चन्द्रिकां

[1]यथेच्छरत्नानि जिह्वास्थाने शर्करां गोमयस्थाने गुडं मूत्रस्थाने घृतम् [2]आपीनसन्निधौ ताम्र-दोहनं स्वरूपतो दधि दुग्धञ्चारोपयेयुः। ततो [3]धेनुं हैमग्रैवेयकललाटपट्ट-[4]घण्टिकाभिरलं-कुर्युः। धेनुपार्श्वे चाष्टादशधान्यानि [5]नानाफलानि चारोप्य धेनु-[6]पार्श्वास्तीर्णकृष्णाजिन-न्यस्त-लवणाढकोपरि धेनुनिर्माणक्रमेणैव सकलद्रव्य[7]-चतुर्थांशेन प्राङ्मुखमुदक्पादञ्च वत्सं कल्पयेयुः। ततो मङ्गलगीत-[8][वाद्यवन्दि]-घोषेषु सत्सु कुण्डसमीपस्थ[9]-कुम्भचतुष्टयजलेन यजमानं स्नपयेयुः। ततो यजमानः शुक्लमाल्याम्बरधरो धृतसर्वालङ्कारः पुष्पाञ्जलिमादाय रत्नधेनुं गुडधेनूक्तैर्यालक्ष्मीरित्यादिमन्त्रैरत्नोक्तेन[10] च [11][त्वं सर्वदेवगण धामेत्यादि]-मन्त्रेणाभिमन्त्र्य प्रदक्षिणीकृत्य पुष्पाञ्जलिनाभ्यर्च्य गुरवे दद्यात्। तद्यथा-ॐ अद्यामुकसगोत्रायामुक-[12]वेदा-मुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं मत्स्यपुराणोक्तरत्नधेनुमहादान-[13]दानफलप्राप्तिकामोऽह-मेतां कृष्णाजिनन्यस्त-द्रोणचतुर्थांशलवणन्यस्त-धेनुचतुर्थांश-पद्मरागमुख-पुष्परागघोण-हैमतिलक-ललाट--मुक्ताफलनेत्रयुग--विद्रुमभ्रूयुग-शुक्तिकर्णद्वय--हैमकुण्डलालङ्कृत-काञ्चनशृङ्ग--वज्रशिरो-नेत्र-[14]पटगोमेदग्रीवेन्द्रनीलपृष्ठ-वैदूर्यपार्श्वद्वय-स्फाटिकोदर-[15]नीलसौगन्धिककटि-हैमखुरेक्षुपाद-मुक्तावलीपुच्छ-[16]चामरपुच्छाग्र-सकर्पूरसूर्यकान्तदक्षिणनासापुट--सचन्दन-[17]विशुद्धस्फाटिकवाम-नासापुट-कुङ्कुमरोमक-राजतनाभि-[18]मरकतापान-नानारत्नाङ्गसन्धि शर्कराजिह्व-गुडगोमयाज्यमूत्र-ताम्रदोहनान्वित-दधिदुग्धसहित-हैमग्रैवेयक-[19]ललाटपट्ट-[20]घण्टिकालङ्कृतवत्ससहितां[21]कृष्णा-जिनन्यस्तलवणद्रोणोपरिस्थितामेकाशीतिपद्मरागमुखीं पुष्परागशतघोणां हैमतिलकललाटां मुक्ताफलशतनेत्रयुगां विद्रुमशत-[22]भ्रूयुगां शुक्तिकर्णयुगां[23] हैमकुण्डलालङ्कृतां काञ्चनशृङ्गीं

---

1 I. O. यथेच्छतररत्नानि, A यथेच्छ-वत्नानि
2 A अपान॰
3 A धेनु, I. O. omits it
4 I. O. ॰खण्डिका॰
5 A omits it
6 I. O. ॰पार्श्व॰
7 I. O. व for द्रव्य
8 A वाद्यैं for the b. p.
9 A omits कुण्डसमीपस्थ
10 ॰मोक्तेन
11 I. O. तुभ्यं सर्वदेवगणाभ्र इत्यादि and A त्वां सर्वदेवमानीत्यादि for the b. p.
12 A omits वेदामुक
13 Both I. O. and A omit दान
14 A मुक्ताफल for पट
15 I. O. omits नील
16 A omits it
17 I. O. परिशुद्ध॰
18 A मरकतपीन
19 A reads ललाटपट्ट and places it before ग्रैवेयक
20 I. O. ॰घण्टिका॰
21 A ॰वत्सहितां
22 A omits भ्रू
23 A omits युगां

हीरकशतशिरसं नेत्रपटगोमेदशतग्रीवामिन्द्रनीलशतपृष्ठां वैदूर्य्यशतपार्श्वद्वयां स्फाटिकशतोदरां नीलसौगन्धिकशतकटिं [1]हैमखुरामिक्षुपादां मुक्तावलीपुच्छां [2]चामरपुच्छाग्रां सकर्पूरसूर्य्यकान्तदक्षिणनासापुटां [3]सचन्दन-[4]विशुद्धस्फाटिकवामनासापुटां कुङ्कुमरोमिकां राजतनाभिं मरकतशतापानां नानारत्नसर्वाङ्गसन्धिं[5] शर्कराजिह्वां गुडगोमयामाज्यमूत्रां [6]ताम्रदोहनान्वितां दधिदुग्धसहितां हैमग्रैवेयकललाट-[7]पट्टघण्टिकालङ्कृतामष्टादशधान्य-[8]बहुविधफल-पञ्च-[9]वर्णवितानकसहितां रत्नधेनुं ददानि । गुरुः स्वस्तीत्युक्त्वा सावित्रीं पठित्वा रत्नधेनुरियं विष्णुदैवतेत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । ततो गुर्व्वृत्विग्भ्यो दक्षिणां दद्यात् । तद् यथा—ॐ अद्य कृतैतद्दान[10]-कर्मप्रतिष्ठार्थं युष्मभ्यमहं दक्षिणामियदुत्पत्तियोग्यां भूमिमेतानि [11]च रत्नानि ददानि । गुर्व्वृत्विजः स्वस्तीति ब्रूयुः । गुरुस्तु स्वस्त्यनन्तरं धेनुं पुच्छे गृह्णीयात् । ततस्तुलापुरुषवज्जापकेभ्यो दक्षिणादानं दीनानाथादितर्पणं पुण्याहवाचनं [12][त्वरया रत्नधेनुप्रतिपादनञ्च] कुर्यात् ।

इति रत्नधेनुमहादानं [13]समाप्तम् ।

---

1 I. O. हैम०
2 A चामरपुच्छाग्रां, I. O. चामर-प्रग्रपुच्छाग्रां
3 A omits the whole word
4 I. O. ०शुद्ध०
5 Both I. O. and A ०सन्धि
6 A omits ता
7 I. O. ०पट्टां घण्टिका०
8 A विविध०
9 A omits वर्ण
10 Both I. O. and A omit the word दान
11 A reads च after रत्नानि
12 A reads the b. p. as इयारत्न धेनुप्रतिङ्गतञ्च
13 I. O. omits it

## तथा महाभूतघटमहादानम्। ( मत्स्यपुराणम्—२८६ अः )

अथातः सम्प्रवक्ष्यामि महादानमनुत्तमम् ।
महाभूतघटं नाम महापातकनाशनम् ॥१॥
पुण्यां तिथिमथासाद्य कृत्वा ब्राह्मणवाचनम् ।
ऋत्विङ्मण्डपसम्भार-[1]भूषणाच्छादनादिकम् ॥२॥
तुलापुरुषवत् कुर्याल्लोकेशावाहनादिकम् ।
कारयेत् काञ्चनं कुम्भं [2]महारत्नचितं बुधः ॥३॥
प्रादेशादङ्गुलशतं यावत् कुर्यात् प्रमाणतः ।
क्षीराज्यपूरितं तद्वत् कल्पवृक्षसमन्वितम् ॥४॥

तद्वदिति [3]काञ्चनम् ।

पद्मासनगतांस्तत्र [4]ब्रह्मविष्णुमहेश्वरान् ।
वराहेणोद्धृतां तद्वत् कुर्यात् पृथ्वीं सपङ्कजाम् ॥५॥

[5][वराहेणोद्धृतां तद्वदिति वराहवामकूर्परस्थितां सपङ्कजां]पद्महस्ताम् ।

[[6]वरुणञ्चासनगतं काञ्चनं मकरोपरि][7] ।
[8]हुताशनं मेषगतं वायुं [9]कृष्णमृगासनम् ॥६॥
[10]तथाकाशाधिपं कुर्यान्मूषकस्थं विनायकम् ।
[11]विन्यसेद्घटमध्ये तान् वेदपञ्चकसंयुतान् ॥७॥

तथेति काञ्चनमित्यर्थः। आकाशाधिपं विनायकमिति सम्बन्धः। एतेन पञ्च-[12]महाभूतान्युक्तानि ।

---

1 A भुवमा०
2 A ०रत्नविभं, M. P. ०रत्नाचितं
3 A महारत्नखचित-काञ्चनमय-कल्पवृक्षान्वितमित्यर्थः:
4 A ब्राह्म०
5 A omits the bracketed portion
6 I. O. पञ्च०
7 A reads the bracketed portion as वरुणञ्चासनं कमलोपरि
8 A कुम्भासनं
9 Corrected from M. P. Both I. O. and A कृतमृगासनं
10 M. P. तथा कोशाधिपं
11 M. P. विन्यस्य०
12 A omits महा

ऋग्वेदस्याक्षसूत्रं स्याद्यजुर्वेदस्य पङ्कजम् ।
सामवेदस्य वीणा स्याद्[1][वेणुं दक्षिणतो न्यसेत् ] ॥८॥
अथर्ववेदस्य पुनः स्रुवस्रुवौ [2]कमलं करे ।
पुराणवेदो वरदः साक्षसूत्रकमण्डलुः॥९॥

अथर्ववेदस्य दक्षिणे स्रुकस्रुवौ वामे पद्मम् । वरदः प्रसन्नमूर्तिः । एतेन सर्व एव द्विभुजाः कार्याः ।

परितः सर्वधान्यानि चामरासनदर्पणम् ।
पादुकोपानहच्छत्रदीपिका-[3]भूषणानि च ॥१०॥

भूषणानि प्रसिद्धानि ग्रैवेयकादीनि ।

शय्याञ्च जलकुम्भांश्च[4] पञ्चवर्णवितानकम् ।
स्नात्वाधिवासनान्ते तु मन्त्रमेतमुदीरयेत् ॥११॥
नमो वः सर्वदेवानामाधारेभ्यश्चराचरे ।
महाभूताधि[5]-देवेभ्यः शान्तिरस्तु शिवं मम ॥१२॥
यस्मान्न किञ्चिदप्यस्ति महाभूतैर्विनाकृतम् ।
ब्रह्माण्डे सर्वभूतेषु तस्माच्छ्रीरक्षयाऽस्तु मे ॥१३॥
इत्युच्चार्य्य महाभूतघटं यो विनिवेदयेत् ।
सर्वपापविनिर्मुक्तः [6]स याति परमां गतिम् ॥१४॥
विमानेनार्कवर्णेन पितृबन्धुसमन्वितः ।
स्तूयमानो वरस्त्रीभिः पदमभ्येति [7]वैष्णवम् ॥१५॥
षोडशैतानि यः कुर्य्यान्महादानानि मानवः ।
न तस्य पुनरावृत्तिरिह लोकेऽभिजायते ॥१६॥
इति पठति य इत्थं वासुदेवस्य पार्श्वे
ससुतपितृकलत्रः संश्रृणोतीह सम्यक् ।

---

1 Corrected from M. P. I. O. यजुर्दक्षिणतो भवेत् and A यजुर्दक्षिणतो भवेत् for the bracketed portion
2 A दक्षिणे
3 A ०भूषणेन
4 I. O. जलकुम्भाञ्च
5 Corrected from M. P. I. O. नि and A दि for धि
6 Corrected from M. P. I. O. and A प्रयाति
7 A शाश्वतं

[1]मुररिपुभवने वा मन्दिरे [2]वार्कलक्ष्म्यो-
रमरपुरवधूभिर्मोदते सोऽपि कल्पम् ॥१७॥

प्रयोगः

अत्र यजमानः समुपजातमहाभूतघटमहादानदानेच्छस्तुलापुरुषलिखित-खड्गचर्ममयढाल[3]-सन्नाह-तुलास्थापनीयहरिप्रतिमा-सालङ्कारतुला-हस्तप्रमाणप्रतिमा-बहिः[4]सर्वसम्भारमधिकत्वेन प्रादेशादूर्द्ध्वमङ्गुल-शतमध्यमभिमतपरिमाण[5]-सुवर्णघटितमुत्कृष्टाभिमतरत्नखचितं [6][कुम्भं तन्मध्यस्थापनार्थं कल्पपादपमहादानोक्ताकृतिमभिमतपरिमाणहेमघटित]-कल्पतरुं यथेच्छसुवर्ण-[7]प्रत्नोत्खाटिताः पूर्वोक्ताकारा ब्रह्मविष्णुमहेश्वरपृथ्वीवरुण-[8]हुताशनवायुविनायक-ऋग्यजुः-सामाथर्व-[9]पुराणप्रतिमाः कुम्भपूरणार्थं [10]क्षीरार्जनसामग्री-[11]माज्यञ्च घटपार्श्वस्थापनार्थमष्टादशधान्यचामरासनदर्पणपादुकायुगोपानद्युग[12]-च्छत्रदीपिकाशय्या--[13]पूर्णकुम्भाष्टकानि[14][महाभूतघटालङ्करणार्थं यथेच्छं हैमग्रैवेयकाद्यलङ्कारां]-श्चोतपादयेत्। ततस्तुलापुरुषोक्तसमया-[15]नामन्यतमस्य पूर्वतरदिने गुर्वृत्विग्यजमानजापकास्तुलापुरुषवद्धविष्यभोजनादिकं कृत्वा निवेदनसङ्कल्पवाक्ययोस्तुलापुरुषपदस्थाने महाभूतघटपदं प्रक्षिप्य यथायथं निवेदनं सङ्कल्पञ्च कुर्युः। अपरदिने च यजमानस्तुलापुरुषवद्गोविन्दाद्याराधनादिमधुपर्कदानान्तं कर्म गोविन्दाद्यभ्यर्चन[16]-ब्राह्मणानुज्ञापन-दानसङ्कल्पपुण्याहादिवाचन-वरणवाक्येषु तुलापुरुषपदस्थाने महाभूतघटपदं [17]निवेश्य कुर्यात्। ततो [18]गुर्वृत्विग्यजमानजापका उपवसेयुः। अपरदिने च कृतनित्यास्तुलापुरुषवदग्निस्थापनादिमध्यब्राह्मणवाचनान्तं कर्म यथायथं कुर्युः। एवञ्च मध्यब्राह्मणवाचनान्तं कर्म तुलापुरुषग्रन्थमनुसन्धायानुष्ठातव्यम्। तत ऋत्विजः प्रधानवेदीमध्ये लिखितचक्रोपरि महाभूतघटमारोप्य घृतक्षीराभ्यां पूरयित्वा तन्मध्ये कल्पतरुं यथोक्तदेवताप्रतिमाश्च स्थापयित्वा कुम्भपार्श्वे चाष्टादशधान्यचामरासनदर्पणपादुकायुगोपानद्युगच्छत्रदीपिकालङ्कार-

---

1 Corrected from M. P. I. O. पुर and A सुर for मुर
2 A वार्कलक्ष्म्या: अमर०, M. P. वार्कलक्ष्म्या त्वमर०
3 Both I. O. and A मयाच्छन्न for मयढाल
4 A omits सर्व
5 A omits परिमाण, I. O. मभिमत again after परिमाण
6 A omits the bracketed portion
7 I. O. प्रत्नोत्०
8 I. O. हुताश, A हुताशन
9 A ०द्र for पुराण
10 A क्षीरार्जन०
11 A ०माज्यञ्च, I. O. ०वाज्य
12 A omits युग
13 A omits पूर्ण
14 A omits the b. p.
15 A omits ना
16 I. O. ०भ्यर्चन
17 A प्रक्षिप्य
18 A ऋत्विग०

यथेच्छनिर्मितशय्या-पूर्णकुम्भाष्टकान्युपकल्पयेयुः। ततो मङ्गलगीतवाद्यवन्दिघोषेषु [1][सत्सु कुण्डसमीपस्थकुम्भचतुष्टयजलेन यजमानं स्नपयेयुः। ततो यजमानः शुक्लमाल्याम्बरो धृतसर्वालङ्कारः पुष्पाञ्जलिमादाय कुम्भं प्रदक्षिणीकृत्य 'नमो वः सर्वदेवाना'मित्यादि 'श्रीरक्षयास्तु म' इत्यन्तमन्त्राभ्यामामन्त्र्य पुष्पाञ्जलिनाभ्यर्च्य गुर्वृत्विक्प्रमुखब्राह्मणेभ्य] उत्सृज्य दद्यात्। तद् यथा—ॐ अद्य यथासम्भवगोत्र[2]-नामगुर्वृत्विक्प्रमुखब्राह्मणेभ्यो मत्स्यपुराणोक्त-महाभूतघट-महादानदानफलप्राप्तिकामोऽहमेतं क्षीराज्यपूरितं [3]हैमकल्पवृक्षसमन्वितं सौवर्णब्रह्मविष्णुमहेश्वर-पृथ्वीवरुणहुताशनवायुविनायकवेदपञ्चकप्रतिमाष्टादशधान्यचामरासनदर्पणपादुकायुगोपानद्युग-च्छत्रदीपिकाभूषणशय्यापूर्णकुम्भाष्टक-[4]पञ्चवर्णवितानकयुतं महाभूतघटं ददानि। ततो गुर्वृत्विजः स्वस्तीत्युक्त्वा सावित्रीं पठित्वा महाभूतघटोऽयं विष्णुदैवत इत्युक्त्वा यथाशाखं कामस्तुतिं पठेयुः। [5][ततो गुरवे ऋत्विग्भ्यश्च दक्षिणां दद्यात्। तद् यथा—ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं युष्मभ्यमियदुत्पत्तियोग्यां भूमिमेतानि च रत्नानि ददानि। गुर्वृत्विजः प्रत्येकं स्वस्तीत्युक्त्वा स्वं स्वं सुवर्णभागं स्पृशेयुः।] अथवा गुर्वृत्विग्भ्य एव महाभूतघटं दद्यात्। तत्र दानवाक्ये ॐ अद्यामुकामुकसगोत्रेभ्योऽमुकामुकवेदामुकामुकशाखाध्यायिभ्योऽमुकामुकदेवशर्मभ्यो युष्मभ्यमिति मत्स्यपुराणोक्त-भागव्यवस्थयेति च विशेषः। ततस्तुलापुरुषवज्ज्ञापकेभ्यो दक्षिणादानं दीनानाथादितर्पणं ब्राह्मणवाचनं त्वरया यथायथं महाभूतघटप्रतिपादनञ्च कुर्य्यात्।

[6][इति महाभूतघटमहादानं समाप्तम्।]

इति महाराजाधिराज-[7][निःशङ्क-शङ्कर]-श्रीमद्बल्लालसेनदेवविरचिते

श्रीदानसागरे महा[8]-दानावर्तः॥

---

1 A प्रदक्षिणीकृत्य only for the bracketed portion

2 A वेद between गोत्र and नाम

3 A सरत्नहैम for हैम

4 I. O. पञ्चवितानवर्णयुतं

5 A omits the bracketed portion

6 Both I. O. and A omit it

7 A निःशङ्करभुवनज्योति for the bracketed portion

8 I. O. adds another दान here

# अथ विष्णुदैवताचलदानावर्तः । (२)

## अथाचलदानप्रशंसा ।

मत्स्यपुराणे (८३ अः) [ नारद उवाच । ][1]

भगवन् श्रोतुमिच्छामि दानमाहात्म्यमुत्तमम् ।
यदक्षयं परे लोके देवर्षिगणपूजिते[2] ॥१॥

उमापतिरुवाच ।

[3][मेरोः प्रदानं वक्ष्यामि दशधा मुनिसत्तम[4] ।
यत्प्रदानान्नरो लोकानाप्नोति सुरपूजितान् ॥२॥
पुराणेषु च वेदेषु यज्ञेष्वायतनेषु च । ]
[5][ न तत्फलमधीतेषु ] कृतेष्विह यदश्नुते ॥३॥
तस्माद्विधानं[6] वक्ष्यामि पर्वतानामनुक्रमात् ।
प्रथमो धान्यशैलः स्याद्द्वितीयो लवणाचलः ॥४॥
गुडाचलस्तृतीयस्तु चतुर्थो हेमपर्वतः ।
पञ्चमस्तिलशैलः स्यात् षष्ठः कार्पासपर्वतः ॥५॥
सप्तमो घृतशैलश्च रत्नशैलस्तथाष्टमः ।
राजतो नवम-[7]स्तद्वद्दशमः शर्कराचलः ॥६॥

एतेनाचलप्रशंसा-स्वरूपसंकीर्तने[8] ।

वक्ष्ये विधानमेतेषां यथा-[9]वदनुपूर्वशः ।
अयने विषुवे पुण्ये व्यतीपाते दिनक्षये ॥७॥
[10]शुक्लपक्षे तृतीयायामुपरागे शशिक्षये ।
विवाहोत्सवयज्ञेषु द्वादश्यामथ वा पुनः ॥८॥

---

1 Supplied from M. P. Both I. O. and A omit the b. p.
2 M. P. ०पूजित
3 A omits the bracketed portion
4 M. P. ०पुङ्गव
5 I. O. तत्फलं समधीतेषु for the b. p.
6 A ०विदान
7 A omits स्त
8 A ०संकीर्तनेन च
9 A चे for व
10 A शुक्लापक्ष

शुक्लायां पञ्चदश्यां वा पुण्यर्क्षे वा[1] विधानतः ।

धान्यशैलादयो देया यथाशास्त्रं विधानतः ॥९॥

शुक्लायां द्वादश्यामिति सम्बन्धः । शशिक्षय इत्यमावास्यायां भेदेनोपादानात् पञ्चदश्या-[2]मित्यनेन पौर्णमासी-[3]प्राप्तिः ।

[4][तीर्थे वायतने] वापि गोष्ठे वा भवनाङ्गने ।

एतेन कालदेशावुक्तौ ।

मण्डपं कारयेद् भक्त्या चतरस्रमुदङ्मुखम् ।

[5]प्रागुदक्प्रवणं तद्वत् प्राङ्मुखं [6]वा [7]विधानतः ॥१०॥

[8]विधानतः शिल्पशास्त्रविधानतः ।

गोमये-[9]नोपलिप्तायां भूमावास्तीर्य्य वै कुशान् ।

तन्मध्ये पर्वतं कुर्य्याद् विष्कम्भपर्वतान्वितम् ॥११॥

## अथ धान्याचलदानम् ।

धान्यद्रोणसहस्रेण भवेद्गिरिरिहोत्तमः ।

मध्यमः पञ्चशतिकः कनिष्ठः स्यात्त्रिभिः [10]शतैः ॥१२॥

[11]द्रोणपरिमाणञ्च परिभाषायामुक्तमनुसन्धेयम् ।

मेरुर्महा[12]-व्रीहिमयश्च[13] मध्ये सुवर्णवृक्षत्रयसंयुतः स्यात् ।

पूर्वेण मुक्ताफलवज्रयुक्तो याम्येन गोमेदकपुष्परागैः ॥१३॥

मध्ये [14]मूर्द्धभागमध्ये शर्कराचले मेरोरुपरीति वक्ष्यमाणत्वात् । वृक्षत्रयञ्च मन्दारपारिजातकल्पपादपाख्यम् । हरिचन्दनसन्तानौ च मेरुपूर्वपश्चिमभागयोरारोपणीयौ शर्कराचले तथा वक्ष्यमाणत्वात् ।

पश्चाच्च गारुत्मतनीलरत्नैः [15]सौम्येन वैदूर्य्यसरोजरागैः ।

श्रीखण्डखण्डैरभितः [16]प्रवाललतान्वितः शुक्तिशिलातलः स्यात् ॥१४॥

---

1 A च
2 A ०मिति
3 A reads it with तीर्थे in the next line as प्राप्तिस्तीर्थे
4 M. P. reads the b. p. as तीर्थेष्वायतने
5 I. O. प्रागुदक्प्लवं
6 M. P. च
7 A भागतः
8 A adds इति to this
9 A and M. P. नागु for नोप
10 Corrected from M. P. I. O. शतैः, A शतः
11 A शतः द्रोणं
12 I. O. ०महान्
13 M. P. ०व्रीहिमयस्तु, A ०हैममयश्च
14 A मूर्द्ध०
15 Corrected from M. P. A सोम्येन, I. O. याम्येन
16 M. P. प्रवालैर्वंतान्वितः

प्रवालमुक्तान्वित इति क्वचित् पाठः ।

ब्रह्माथ[1] विष्णुर्भगवान् [2]पुरारिर्दिवाकरोऽप्यत्र हिरण्मयः स्यात् ।

मूर्द्धन्यधः[3]-स्थानममत्सरेण कार्य्यन्त्वनेकैश्च[4] पुनर्द्विजौघैः ॥१५॥

[5]द्विजौघा ऋषिसंघाः पक्षिसंघाश्च । ब्रह्मादिदेवगणोऽत्र [6]मेरोर्मूर्द्धनि हिरण्मयः स्यात् । [7]तस्मान्मूर्द्धन्यधःस्थानममत्सरेण यजमानेनानेकैर्द्विजौघैः सहितं कार्य्यम् । 'मूर्द्धन्यवस्था गतमत्सरेण कार्य्यास्त्वनेकेऽथ पुनर्द्विजौघा'[8] इति [9]क्वचित् पाठः । अस्यार्थः—ब्रह्मादयो मूर्द्धन्यवस्थितयः कार्य्याः । [10]मूर्द्धन्यवस्थेभ्यस्तेभ्योऽथानन्तरं[11] द्विजौघाः कार्य्या इति । तदनयोः पाठयोरर्थस्थानेन[12] कश्चिद्विशेषः ।

चत्वारि शृङ्गाणि च राजतानि [13]नितम्बभागेष्वपि राजतः स्यात् ।

[14]तथेक्षु-[15]वंशावृतकन्दरस्तु घृतोदकप्रस्रवणैश्च[16] दिक्षु ॥१६॥

इक्षुरेव वंशः [17]इक्षुवंशः, घृतमेवोदकं घृतोदकम् ।

शुक्लाम्बराण्य[18]-म्बुधरावली स्यात् पूर्वेण पीतानि च[19] दक्षिणेन ।

वासांसि पश्चादथ कर्वुराणि [20]रक्तानि चैवोत्तरतो [21]घनानि ॥१७॥

रौप्यान्महेन्द्र-[22]प्रमुखांस्तथाष्टौ संस्थाप्य लोकाधिपतीन् क्रमेण ।

नाना-[23][फलानि च] समन्ततः स्यान्मनोरमं [24]माल्यविलेपनञ्च ॥१८॥

क्रमेण स्वदिक्क्रमेण ।

1 I. O. ०च

2 Corrected from M. P. I. O. मुरारि, A भरारि

3 M. P. and I. O. व for ध:

4 I. O. ०कश्च

5 A omits it

6 I. O. मेरो मूर्द्धनि

7 A मूर्द्धन्यधस्थान०, I. O. तस्मान्मूर्द्धाधःस्थान०

8 I. O. ०स्त्वनेकपुनर्द्विजौघा

9 A omits it

10 A मूर्द्धन्यवस्थितेभ्य०

11 A हिरण्मया

12 A ०रत्नुष्ठानेन

13 Corrected from M. P. A तम्ब०, I. O. मितम्ब०

14 I. O. तदिक्षु०

15 A वंशवृतकन्दरस्तु

16 A ०प्रश्रवणश्च, M. P. ०प्रस्रवणैश्च

17 A omits it

18 I. O. ण्य for ण्य

19 I. O. व

20 I. O. वस्त्राणि

21 M. P. घनाढ्यौ, A घनानि

22 Corrected from M. P. A ०प्रमुखानथाष्टौ, I. O. ०विमुखानथाष्टौ

23 I. O. फलानीव and M. P. फलाढ्यौ च for the b. p.

24 I. O. माल्य०

[1][वितानकं चोपरि पञ्चवर्ण]-मम्लानपुष्पाभरणं सितं वा[2] ।।१९।।

इत्थं निवेश्यामरशैल-[3][मग्रेय मेरोस्तु विष्कम्भ]-गिरीन् क्रमेण ।

तुरीयभागेण [4]चतुर्दिशञ्च संस्थापयेत् पुष्पविलेपनाढ्यान्[5] ।।२०।।

प्रत्येकं तुरीयभागेण विष्कम्भगिरीन् स्थापयेत् लवणाचले तथा दर्शनात् ।

पूर्वेण मन्दरमनेक-[6]फलावलीभिर्युक्तं यवैः कनकभद्रकदम्बचिह्नम्[7] ।

कामेन काञ्चनमयेन विराजमानमाकारयेत् कुसुमवस्त्रविलेपनाढ्यम्[8] ।।२१।।

यवैर्मन्दरमाकारयेदिति [9]सम्बन्धः । कनक[10]-भद्रकदम्बचिह्नं कनकमयस्वरूपकदम्बतरु-चिह्नम् ।

क्षीरारुणोदसरसाऽथ[11] वनेन चैवं रौप्येण शक्तिघटितेन विराजमानम् ।

क्षीरपूर्णरौप्यकुण्डरूपेणारुणोदसरसा रौप्येण च वनेन विराजमानं मन्दरमिति सम्बन्धः ।

याम्येन गन्धमादनोऽत्र[12] निवेशनीयो गोधूमसञ्चयमयः कलधौतजम्बा[13] ।।२२।।

हैमेन [14]यज्ञपतिना घृतमानसेन वस्त्रैश्च राजतवनेन च संयुतः स्यात् ।।२३।।

कलधौतजम्बा सौवर्णजम्बुतरुणा सहित इत्यर्थः । अत्र च मानससरोऽपि घृतपूर्णरौप्य-[15][कुण्डरूपमन्यस्यैव सरसस्तथा दर्शनात् ] ।

[16]पश्चात्तिलाचलमनेकसुगन्धिपुष्पसौवर्णपिप्पलहिरण्मयहंसयुक्तम् ।

आकारयेद्रजतपुष्पवनेन तद्वद्वस्त्रान्वितं दधिसितोदसरस्तथाग्रे[17] ।।२४।।

तद्वदिति सितोदसरोऽपि दधिपूर्णराजतकुण्डरूपमित्यर्थः ।

1 Corrected from M. P. A वितानपरितानपरिपञ्चवर्णं and I. O. वितानमत्रोपरिपञ्चवस्तु for the b. p.

2 M. P. च

3 Corrected from M. P. I. O. मरयमतस्तुवैस्तम्भ and A वर्ध्यमतस्तविम्भ for the b. p.

4 I. O. चतुर्द्यश्च

5 Corrected from M. P. A ०ढ्या, I. O. ०ढ्याम्

6 Corrected from M. P. A फलावलीभिर्युक्तं, I. O. ०फला-वलीभिर्युक्ता

7 M. P. ०चिह्नः

8 I. O. ०थं

9 I. O. समर्थः

10 Both I. O. and A omit it

11 Corrected from M. P. I. O. ०सरसाथ, A ०सरसा च

12 I. O. ०मदनोव, M. P. ०मदनच

13 I. O. ०जम्बाः, A ०धस्मा, M. P. ०युक्तः

14 Corrected from M. P. I. O. यत्नपतिना, A धत्नपतिना

15 A reads the b. p. as कुण्डानुरूपमिति तथा पश्चिमायां

16 I. O. तथा । तिलाचल०

17 I. O. ये for थे

संस्थाप्य तं विपुलशैलमथोत्तरेण शैलं [1]सुपार्श्वमपि माषमयं सुवर्णम् ।
पुष्पैश्च हैमवटपादप-[2][शेखरं त]-माकारयेत् कनकधेनुविराजमानम् ॥२५॥
[3][माक्षीकभद्र]-सरसा च वनेन तद्वद्रौप्येण भास्वरवता च [4]युतं [5]विधाय ।

भास्वरवता दीप्तिमद्वृक्षसहितेन । एतावतोत्कृष्टरजत-[6]युतत्वं वनस्योक्तम् । अत्र च विष्कम्भपर्वतस्थदेवतानां मेरुसम्मुखतयाऽवस्थापनम्, शर्कराचले तथाभूतक्रमस्य वक्ष्यमाणत्वात् ।

होमश्चतु-[7]भिरथ वेदपुराणविद्भिर्दान्तैरनिन्द्यचरिताकृतिभिर्द्विजेन्द्रैः ॥२६॥
पूर्वेण हस्त-[8]मितमत्र विधाय कुण्डं कार्य्यस्तिलैर्यवघृतेन समित्कुशैश्च ।
रात्रौ-[9][च जागर]-मनु-[10]द्रत-[11]गीततूर्य्यैरावाहनं च कथयामि शिलोच्चयानाम् ॥२७॥
त्वं सर्वदेव-[12]गणधाम[13]-निधे विरुद्धमस्मद्गृहेष्वमरपर्वत नाशयाशु ।
क्षेमं विधत्स्व[14][कुरु शान्ति]-मनुत्त-[15][मां नः] सम्पूजितः
परमभक्तिमता मयाद्रे[16] ॥२८॥

त्वमेव भगवानीशो ब्रह्मा विष्णुर्दिवाकरः ।
मूर्तामूर्तं परं [17]बीजमतः पाहि [18]सनातन ॥२९॥
यस्मात्त्वं लोकपालानां विश्वमूर्तेश्च मन्दिरम् ।
रुद्रादित्यवसूनाञ्च तस्माच्छान्तिं प्रयच्छ मे ॥३०॥
यस्मादशून्यममरैर्नारीभिश्च [19]शिरस्तव ।
तस्मान्मामुद्धराशेषदुःखसंसारसागरात् ॥३१॥

---

1 I. O सुपासुमपि
2 I. O. शेषवस्तु for the b. p.
3 Corrected from M. P. I. O. माक्षीवभद्र and A माक्षीक only for the b. p.
4 I. O. सुतं
5 M. P. निधाय
6 I. O. ०घटितत्वं
7 I. O. ०र्द्विरथ
8 Corrected from M. P. Both I. O. and A मुख for मित
9 Corrected from M. P. A प्रजागर and I. O. च जागत for the b. p.
10 Corrected from M. P. A व्रत, I. O. ०द्रत
11 Corrected from M. P. A गीतवाद्यै०, I. O. गीतमूर्च्य०
12 A ०गुण०
13 I. O. ०धाम०
14 A गमच्छोभ्वि for the b. p.
15 Corrected from M. P. Both I. O. and A मार्थ: for the b. p.
16 I. O. मयाद्रे, M. P. मया हि
17 A जीवमत:
18 I. O. सनातन:
19 A शिवपात: and M. P. शिवेन च

एवमभ्यर्च्य तं मेरुं मन्दर-[ञ्चापि पूजयेत् ][1] ।
यस्माच्चैत्ररथेन त्वं [2][भद्राश्वेन च वर्षतः] ।
शोभसे मन्दर क्षिप्रमतस्तुष्टिकरो भव ॥३२॥
[3]यस्माच्चूडामणिर्जम्बुद्वीपे त्वं गन्धमादन[4] ।
गन्धर्ववनशोभावानतः कीर्त्तिर्दृढाऽस्तु मे ॥३३॥
यस्मात्त्वं केतु-[5]मालेन वैभ्राजेन वनेन च ।
हिरण्मयाश्वत्थशिखस्तस्मा-[6]त्तुष्टिर्ध्रुवाऽस्तु[7] मे ॥३४॥
उत्तरैः कुरुभिर्यस्मात् सावित्रेण वनेन च ।
सुपार्श्व राजसे नित्यमतः श्रीरक्षयाऽस्तु मे ॥३५॥
एवमामन्त्र्य तान् सर्वान् [8][प्रभाते विमले पुनः] ।
स्नात्वाऽथ गुरवे दद्यान्मध्यमं पर्वतोत्तमम् ॥३६॥
विष्कम्भपर्वतान् दद्यादृत्विग्भ्यः क्रमशो [9]मुने ।
[10]गाश्च दद्याच्चतुर्विंशत्यथवा[11] दश नारद[12] ॥३७॥
[13][शक्तितः सप्त चाष्टौ वा पञ्च दद्यादशक्तिमान् ] ।
एकां वा गुरवे दद्यात् कपिलाञ्च पयस्विनीम् ॥३८॥

अत्र चैक-[14]कपिलादान-[15][पक्षे ऋत्विग्भ्यः] शक्तितः काञ्चनं दक्षिणां दद्यात् ।

पर्वतानामशेषाणामेष एव विधिः[16] स्मृतः ।
त एव पूजने मन्त्रास्त एवोपस्कराः स्मृताः ॥३९॥

1 M. P. ञ्चाभिपूजयेत्
2 Corrected from M. P. I. O. भद्राश्ववर्षेण च and A भद्रास्वेन च शोभसे for the b. p.
3 Corrected from M. P. I. O. यस्माच्चभामणि॰, A ॰द्वीपं
4 A ॰मादनं
5 I. O. ॰मालेन
6 A and M. P. पुष्टि for तुष्टि
7 A ॰रयास्तु
8 I. O. प्रभातैर्विमलैश्च for the b. p.
9 I. O. द्विज
10 A गास्तु
11 Corrected from M. P. I. O. ॰श्चतुर्विंशदथवा, A ॰श्चतुर्विंशदथवा
12 Corrected from M. P. I. O. नारद, A omits it
13 A reads the b. p. as शक्तितः सप्त चाष्टौ तथा पञ्च प्रदद्यादप्यशक्तिमान् and M. P. reads it as नव सप्त तथाष्टौ वा पञ्च दद्यादशक्तिमान्
14 I. O. ॰कापिल॰
15 A पक्षे for the b. p.
16 A विधः

ग्रहाणां लोकपालानां ब्रह्मादीनाञ्च सर्वदा ।
स्वमन्त्रेणैव [1]सर्वत्र होमः शैलेषु पठ्यते ॥४०॥
उपवासी भवेन्नित्यमशक्तौ[2] नक्तमिष्यते ।
विधानं [3]सर्वशैलानां क्रमशः शृणु नारद ।
दानकाले च ये मन्त्राः पर्वतेषु [4]च यत् फलम् ॥४१॥
अन्नं [5]ब्रह्म यतः प्रोक्त-[6][मन्नं प्राणाः प्रकीर्तिताः] ।
[अन्नाद्भवन्ति भूतानि जगदन्नेन वर्तते ॥४२॥
अन्नमेव [7]यतो लक्ष्मीरन्नमेव जनार्दनः ।
धान्यपर्वतरूपेण पाहि तस्मान्नगोत्तम ॥४३॥
अनेन विधिना यस्तु दद्या-[8]द्धान्यमयं गिरिम् ।
मन्वन्तरशतं साग्रं देवलोके महीयते ][9] ॥४४॥
अप्सरोगणगन्धर्वैराकीर्णेन विराजता ।
विमानेन दिवः पृष्ठमायाति [10]मुनिसत्तम ।
[11]कर्मक्षये राजराज्यमाप्नोतीह न संशयः ॥४५॥

प्रयोगः

अत्र दानदिने यथाशक्तितो ब्राह्मणेभ्यो भोजनदानं स्वयमक्षार[12]-लवणभोजनं [13]पर्वतानां ब्राह्मण-[14]गृहप्रस्थापनञ्च शर्कराचले सर्वशैल[15]-साधारण्येन वक्ष्यमाणत्वादूहनीयम् । अत्र [16]चानुक्रमपि पुण्याहादिवाचनं 'लोके च [17]भूतिकर्मस्वेतदादीन्येव वाक्यानि स्युर्यथा पुण्याहं [18]-स्वस्त्यृद्धिमित्याप'स्तम्ब-(आप. ध. सू. १।४।१३।६)-वचनात् प्रथमतः [19]कर्तव्यम् । अत्र यजमानः समुपजातधान्याचल-दानेच्छुः प्रथमं वृद्धिश्राद्धसामग्रीं ब्राह्मणत्रयं[20] स्वस्तिवाचनार्थ-

1 M. P. सर्वेषु
2 M. P. ०शक्ते
3 A तव वक्ष्यामि
4 I. O. omits it
5 I. O. ब्रह्मा
6 M. P. reads the b. p. as मन्नं प्राणाः प्रतिष्ठिताः
7 M. P. ततो
8 I. O. ०द्धान्यमयं
9 A omits the b. p.
10 M. P. स्म निषेवितः
11 M. P. धर्मक्षये
12 I. O. सुपक्कर for स्वयमक्षार
13 A पर्व्वतं, I. O. सुपर्व्वतानां
14 A ०गृहस्थापनार्थं
15 I. O. ०शैला०
16 I. O. चायुक्रमपि
17 A दृतौकर्मार्थं तदागौमिव
18 Corrected from Apastamba. I. O. स्वस्त्यृ०, A omits it
19 I. O. कर्त्तव्यः
20 I. O. ०त्रय

मभीष्टवस्त्रस्थानत्रयं [1]काञ्चनत्रयञ्च, तीर्थादिषु परिशोधितायां[2] भूमौ कर्तव्यधान्याचलावस्थानोचितपरिमाणं चतुरस्रं कद्वारमण्डपघटनार्थं स्तम्भवंश-[3]चालादिक-[4]मेककुण्डघटनार्थमिष्टका-चूर्णञ्च, होमार्थमष्टौ ताम्रपात्राणि चत्वार्यासनानि स्रुक्चतुष्टयं स्रुवचतुष्टयं [5]विष्टरचतुष्टयं [6]प्रचुर-कुशानिध्म[7]-तिल-[8]यवघृतसमिदग्नि-ज्वालनार्थे-[9]न्धनानि [10]च, गुर्वृत्विग्वरणार्थञ्चाभीष्टवस्त्रादि-स्थानपञ्चकं, गुर्वृत्विजां मधुपर्कसामग्रीपञ्चकञ्च, मेरुघटनार्थं परिभाषोक्तपरिमाणेन धान्यद्रोण-सहस्रं द्रोणशतपञ्चकं द्रोणशतत्रयं वा, मेरुशिखरारोपणार्थं[11] पञ्चशाखं बहुविधविहगवस्त्र-भूषणान्वितमभीष्टकाञ्चनघटितं वृक्षपञ्चकं, मेरोरूर्द्धं चतुर्दिगन्तरा[12]-रोपणार्थमभीष्टसंख्य-[13]मुक्ता-हीरक-गोमेद-पुष्पराग-मरकत-[14]नीलवैदूर्यपद्मरागरत्नानि, मेरोरष्ट-[15]दिगवस्थापनार्थमष्टौ चन्दन-खण्डान् [16]प्रवालमुक्तामालाः शुक्तिखण्डांश्च[17],मेरुशिखरमध्यारोपणार्थमभीष्टसुवर्ण-[18]पत्रोत्-खाटिता ब्रह्मविष्णुमहेश्वरादित्यप्रतिमाः, तदधःस्थापनार्थमभीष्टकाञ्चनघटितानृषीन् पक्षि-संघांश्च[19], मेरोरूर्द्धं स्थापनार्थमभीष्टरजतघटितांश्चतुरो गिरिशृङ्गाकारान्, मेरुनितम्बवेष्टनार्थ-मभीष्टरजतघटिताः [20]यन्त्रिकाः, [21]मेरुनिम्नभागोपान्तवेष्टनार्थं [22]प्रचुरेक्षुतरून्, मेरुपार्श्वेषु प्र-[23]स्रवणार्थमभीष्टसंख्यघृतकुम्भान्, मेरुचतुर्दिशि मेघमालानिर्माणार्थमभीष्टसंख्यानि शुक्लपीत-[24][रक्तनानावर्ण]-वस्त्राणि, मेरोरूर्द्धमष्टदिगारोपणार्थमभीष्टरजतघटितानष्टौ लोक-पालान्, मेरुपार्श्वारोपणार्थं फलानि प्रचुरतमो[25]-त्कृष्टमाल्यविलेपनसामग्रीः, मेरोरुपरि बन्धनार्थं पञ्चवर्णं सितं [26]वा वितानं तदलङ्करणार्थमम्लानमालार्जनसामग्रीं, मन्दरगन्ध-

---

1 A omits it
2 I. O. परिशोधितानां
3 I. O. ०वाला०
4 A घटनादिचक्र for एककुण्ड
5 A omits it
6 A प्रचुरतर for प्रचुर
7 A omits च
8 A जव for यव
9 I. O. व for न्ध
10 A omits it
11 A ०शिखररोपणार्थं, I. O. ०शिखर-मध्यारोपणार्थं
12 I. O. न्ता for न्तरा
13 A ०युक्त०
14 I. O. नीच०
15 A ०दिकस्थापनाय०
16 I. O. प्रवालमुक्तावाला:
17 I. O. य for श्च
18 I. O. पात्रो०
19 I. O. ०घाश्च
20 A पत्रिका
21 A मेरोरुपरिभागे वेष्टनार्थं
22 A पुचरेक्षुवनानि:
23 Both I. O. and A त्र for स्र
24 I. O. नानावर्णरत्नानि for the b. p.
25 A ०तरो०
26 A वारितानं

मादन-विपुल-[1]सुपार्श्वाख्य-पर्वतचतुष्टयघटनार्थं प्रत्येकं मेरु-[2]चतुर्थभागपरिमाणान् यवान् गोधूमान् तिलान् माषान्, विष्कम्भगिरिचतुष्टयोर्द्ध्वस्थापनार्थं यथेच्छसुवर्ण-[3]पत्रोत्खाटितान् स्वरूपकदम्बजम्बुवटपिप्पलतरून् कामदेव-[4]सुरेश्वरहंसधेन्वाकारांश्च, सरश्चतुष्टयार्थमभीष्टरजतनिर्मितांश्चतुरः कुण्डाकारान्, तत्पूरणार्थं क्षीरार्जनसामग्रीं घृतदधिमधूनि, वनचतुष्टयघटनार्थमभीष्टसंख्यरजतनिर्मि[5]तोज्ज्वलवर्णप्रचुरतरून्, गिरिचतुष्टयालङ्करणार्थमभीष्टसंख्यप्रचुरवस्त्राणि, देवतासहिताचलपूजनार्थं[6] गन्धपुष्पादिसामग्रीं, [7]दक्षिणार्थमुक्तान्यतमसंख्या धेनूः, एककपिलादानपक्षे [8]ऋत्विग्दक्षिणार्थमभीष्टकाञ्चनं, ब्राह्मणतर्पणार्थं यथेष्टसंख्यतण्डुलकपर्दकानुतपाद्योक्तसमयाना-[9]मन्यतमस्य पूर्वतरदिने [10]कृतनित्यकृत्यो [11]घटिकाधिकप्रहरलग्ने हविष्यं भुक्त्वाऽऽचम्य शुचौ देशे[12] उपविश्य पादौ प्रक्षाल्याऽऽचम्य प्राङ्मुख उदङ्मुखो वा कृताञ्जलिः ॐ सूर्यः सोमो यमः कालो महाभूतानि [13]पञ्च मत्स्यपुराणोक्तधान्याचलदानकर्म [14][कर्तुमुपवासो मया कर्तव्य इति निवेदनं कृत्वा गृहीतोदपूर्णताम्रपात्र उदङ्मुखः सङ्कल्पं कुर्यात् । तद्यथा—ॐ अद्य मत्स्यपुराणोक्तधान्याचलदानकर्म] कर्तुं श्वोऽहमुपवासं करिष्ये । एवं सर्वेष्वेव वक्ष्यमाणाचलेषु धान्याचलपदस्थाने [15]च तत्तदचलनाम-[16]निवेशेन-निवेदनसङ्कल्पौ करणीयौ । [17][एतावतैव तेषां] [18]वक्ष्यमाणाचलानां वाक्यानि [19]निष्पद्यन्ते । [20][अतस्तानि न पश्चाल्लिखितव्यानि] । ततो परदिने कृतनित्यो गृहीतोदपूर्णताम्रपात्र उदङ्मुखः सङ्कल्पं कुर्यात् । तद्यथा[21] [ ॐ अद्य] मत्स्यपुराणोक्तधान्याचलदानकर्माहं[22]

---

1 A omits सु
2 A चतुष्टय for चतुर्थ
3 I. O. ०पूर्वोद्घाटितान्
4 A कुवेर for सुरेश्वर
5 A ०ताज्ज्वलवर्णप्रचुरतन् ; I. O. ०तार्थं जलवल्लप्रचुरतरून्
6 A ०पूरणार्थं
7 I. O. दक्षिणाथयुक्तान्यतमसंख्या ; A दक्षिणार्थं मुक्तानामेवतम
8 I. O. विधिर्दक्षिणार्थं०
9 I. O. ०मन्यतमपूर्वदिने
10 A कृतनित्यो
11 A घाटिताधिक०
12 I. O. दिशि
13 I. O. reads it before महाभूतानि
14 A omits the bracketed portion
15 A omits it
16 A omits it
17 I. O. reads the b. p. as एतावदेतेषां
18 I. O. वक्षमाणाचलानां ; A वक्ष्यमानां
19 A सम्पद्यन्ते
20 A पूर्वलिखितानि and I. O. अतष्टव्यव्यवलिखितानि for the b. p.
21 I. O. omits अद्य and A omits the entire b. p.
22 I. O. omits हं

करिष्ये। ततो [1]यजमानः यथाविधि सगणाधिपमातृपूजां वृद्धिश्राद्धञ्च कृत्वा ब्राह्मणत्रयं[2] वस्त्रकाञ्चनादिभिरभ्यर्च्य धान्याचलदानकर्मणि पुण्याहं भवन्तो ब्रुवन्त्विति वदेत्। पुण्याहमिति प्रत्येकं तैस्त्रिरुक्ते स्वस्ति भवन्तो ब्रुवन्त्विति वदेत्। स्वस्तीति प्रत्येकं तैस्त्रिरुक्ते ऋद्धिं भवन्तो ब्रुवन्त्विति वदेत्। ते च ऋद्ध्यतामिति प्रत्येकं त्रिब्रूयुः। ततः [3]कृतनित्यान् गुर्वृत्विजोऽभीष्टवस्त्रादिदानपूर्वकं [4]वरयेत्। [5]तत्र गुरुवरणवाक्यम्। ॐ अद्यामुकसगोत्रममुकवेदामुकशाखाध्यायिनममुकदेवशर्मा-[6][णमस्मिन् धान्याचलदानकर्मणि] गुरुकर्म कर्तुं त्वामहं वृणे। वृतोऽस्मीति गुरुर्वदेत्। यजमानस्तु यथोक्तं कर्म कुर्विति वदेत्। [7][करवाणीति गुरुर्वदेत्।] तत-[8][स्तथैव ऋत्विजो व]-रयेत्। [9][तद्यथा]—ॐ अद्यामुकामुकसगोत्रानमुकामुकवेदामुकामुकशाखाध्यायिनोऽमुकामुकदेवशर्मणोऽस्मिन् धान्याचलदानकर्मणि ऋत्विक्कर्म कर्तुं भवतोऽहं वृणे। वृतोऽस्मीति प्रत्येकं ब्राह्मणा वदेयुः। यथाविहितं कर्म कुरुतेति यजमानो वदेत्। करवाणीति प्रत्येकं ब्राह्मणा वदेयुः। अत्र सङ्कल्प-पुण्याहादि[10]-वाचन-वरणवाक्यानि धान्याचलपदस्थाने तत्तदचलनाम[11]-प्रक्षेपेण सर्वाचलान्वयानि[12] भवन्ति। ततो यथाशाखं वृतेभ्यो[13] मधुपर्कं दद्यात्। ततः पूर्वशोधितायां भूमौ यथोक्तमुदङ्मुखं [14]प्राङ्मुखं वा मण्डपं कारयित्वा तत्पूर्वभागे यथोक्तविस्तारोच्छ्रायं चतुरङ्गुलं पूर्वोत्तरकोणावनत-[15]सर्वसमं कमेखलायुत-वितस्तिदीर्घ-सप्ताङ्गुलप्रस्तार[16]-कूर्मपृष्ठोन्नत-मध्याङ्गुलोच्छ्रित-प्रान्तगजौष्ठसदृशदीर्घप्रमाणोर्द्ध्वस्थयोनियुतं[17] कुण्डं कारयित्वा पूर्वार्जितहोमोपकरणानि कुण्डपार्श्वे स्थापयेत्। ततो मण्डपमध्ये गोमयोपलिप्तायां भूमौ कुशानास्तीर्य तन्मध्ये उक्तपरिमाणानामन्यतमपरिमाणं धान्यराशिं कृत्वा तदूर्द्ध्वमध्यभागे सौवर्णं वृक्षत्रयमारोप्य [18]तत्पूर्वपश्चा-[19]द्भागयोर्वृक्षद्वयमारोपयेत्। मेरोः पूर्वभागेऽभीष्टसंख्ये[20]मुक्ताहीरके[21]

1 Both I. O. and A omit it
2 I. O. omits त्रयं
3 A कृतनित्या
4 I. O. कारयेत्
5 A अत्र
6 I. O. omits the bracketed portion
7 I. O. करवाणीति गुरुः and A omits the entire portion
8 I. O. स्तथैवर्त्विजो वा for the b. p.
9 A omits the b. p.
10 I. O. नि for दि
11 A ०दान० ; I. O. ०मात०
12 I. O. ०वयाख्यानि
13 I. O. वृतेभ्यो ; A omits it
14 A omits it
15 A omits सर्व
16 A ०प्रस्तारान्
17 I. O. ०स्तमोन्नित
18 I. O. कृत for तत्
19 I. O भा for द्भा
20 I. O. ०संख्य
21 I. O. ०हीरक

तथा दक्षिणतो[1] गोमेदपुष्परागौ तथा पश्चिमतो मरकतनीले[2] तथोत्तरतो वैदूर्यपद्मरागा-
नारोप्य[3] सर्वतश्चन्दनखण्डान् [4][प्रवालमुक्तामालाः शुक्तिखण्डांश्चारोपयेत् । मेरोरूर्द्ध-
भागे ब्रह्मविष्णुशिवादित्यप्रतिमाः स्थापयित्वा तदधःस्थाने ऋषीन्] पक्षिसंघांश्चारोपयेत् ।
[5]मेरोरूर्द्ध्वचतुर्दिशि राजतश‍ृङ्गचतुष्टयमारोप्य राजतयन्त्रिकाश्च[6] मेरोरधोभागात् किञ्चिदूर्द्ध्व
मध्य[7]-भागवेष्टनेनारोप्य मेरुपार्श्वेष्विक्षु[8]-वृक्षसमूहावृताश्रितमध्य[9]-भागान् कृत्वा [10]तदुपान्तेषु
लम्बमानां घृतधारां दत्त्वा [11]पूर्वदिक्क्रमेणोक्तवस्त्रै[12]-र्मेघावलीं[13] [14]रचयेत् । मेरोरूर्द्ध्वञ्च स्वस्व-
दिक्क्रमेण लोकपालानष्टावारोप्य[15] सर्वतो नानाविधानि सुगन्धिपुष्पविलेपनानि चारोपयेत् ।
ततो मेरोरूर्द्ध्वमण्डपभागे वितानक[16]-मम्लानमाल्यालङ्कृतं बध्नीयात् । एवं मेरुमारोप्य तत्पूर्वतो
मेरुद्रव्य-[17]चतुर्थभागेन [18][यवराशिं कृत्वा तत्र नानाविधानि फलानि दत्त्वा यवराशेरूर्द्ध्वमध्य-
भागे कदम्बवृक्षं पश्चिमाभिमुखीं कामप्रतिमाञ्चारोप्य प्रचुरपुष्पविलेपनानि दत्त्वा क्षीरपूर्णं राजतं
[19]कुण्डं वस्त्रञ्चारोपयेत् । मेरुदक्षिणतो मेरुद्रव्यचतुर्थभागेन ] गोधूमराशिं कृत्वा तदुपरि
जम्बुवृक्ष-[20]मुत्तराभिमुखीं [21]यक्षप्रतिमां घृतपूर्णराजतकुण्डं[22] वस्त्राणि राजतवनं प्रचुरं पुष्पं
विलेपनञ्चारोपयेत् । मेरोः पश्चिमतो मेरुद्रव्य-[23]चतुर्थभागेन तिलराशिं कृत्वा तदुपरि प्रचुरं
सुगन्धि पुष्पं पिप्पलतरुं पूर्वाभिमुखीं हंसप्रतिमां राजतं वनं वस्त्राणि दधिपूर्णं राजतकुम्भं
विलेपनञ्च प्रचुरं स्थापयेत् । मेरोरुत्तरतो मेरुद्रव्यचतुर्थांशेन माषराशिमुत्कृष्टवस्त्रान्वितं
[24][प्रचुरपुष्पान्वितं च] कृत्वा [25]माषराश्यूर्द्ध्वभागे वटवृक्षं दक्षिणाभिमुखीं धेनुप्रतिमां मधुपूर्णं

1 A ०भागे
2 A ०नील
3 I. O. ०रागामारोप्य ; A ०रागोरा-वोप्य
4 I. O. omits the bracketed portion
5 A मेरूर्द्ध०
6 A ०पत्रिकाश्च
7 A omits भाग
8 I. O. षु for ष्विक्षु
9 A ०श्रिम्ब० and I. O. ०नां स्व० for ०श्रितम्ब०
10 A तदुपरिपार्श्वेषु
11 A पूर्वादि for पूर्वदिक्
12 A ०मध्ये०
13 Both I. O. and A मेघावली
14 A चारोपयेत्
15 A मारोप्य for ०न...प्य
16 I. O. omits क
17 I. O. चतुष्टय for चतुर्थ०
18 I. O. omits the bracketed portion
19 I. O. कुम्भं
20 I. O. ०युत्तराविमुखं
21 A प्रतिमां
22 I. O. ०कुम्भं
23 I. O. ०चतुष्टय०
24 I. O. प्रचुरपुष्पान्वितं and A omits the entire b. p.
25 I. O. माषराश्योर्द्ध्वभागे ; A समपचुरपुष्पराश्यूर्द्ध्वभागे

राजतं कुम्भं[1] वनं विलेपनञ्च प्रचुरमारोपयेत्। ततो [2][यजमानस्तु 'त्वं सर्वदेवगणधामे'त्यादि-'दुःखसंसारसागरा'दित्यन्तमन्त्रैर्मण्डमावाह्य गन्धपुष्पादिना संपूज्य 'यस्मा'दित्यादि 'श्रीरक्षया-ऽस्तु म' इत्यन्तमन्त्रैश्चतुर्भिश्चतुरो गिरीन् यथाक्रमं प्रत्येकमावाह्य सम्पूज्य एत एत मन्दार-पारिजातकल्पवृक्षहरिचन्दनसन्तान-कदम्बजम्बुपिप्पलवटा इत्यावाह्य ॐ मन्दारमारोपयामि [3][ॐ पारिजातमारोपयामि ॐ कल्पवृक्षमारोपयामि ॐ हरिचन्दनमारोपयामि ॐ सन्तान-मारोपयामि ॐ कदम्बमारोपयामि ॐ जम्बुमारोपयामि ॐ पिप्पलमारोपयामि ॐ वट-मारोपयामि ] इत्यावाह्यारोपयेत्। ततो गुरुर्मण्डपैक]-देश [4]उत्तरदिक्क्रमेण यवपुष्पसित[5]-तण्डुलानामन्यतमेन [6]पंक्तिक्रमेण [7][एत एत आदित्यादि-]नवग्रहा[8] इत्यावाह्य [9][ ॐ आदित्य-]मारोपयामि ॐ सोममारोपयामि [10][ॐ अङ्गारकमारोपयामि] ॐ बुधमारोपयामि ॐ बृहस्पतिमारोपयामि ॐ शुक्रमारोपयामि ॐ शनैश्चरमारोपयामि ॐ राहुमारोपयामि ॐ केतुमारोपयामि इत्यारोपयेत्। तत ॐ उक्तस्थानस्थिताः[11] [12][प्रतिमानुप्रतिमा एत] एत [13]इन्द्रादयोऽष्टौ लोकपाला इत्यावाह्य यथाक्रमम् ॐ इन्द्रमारोपयामि ॐ अग्निमारोपयामि ॐ यममारोपयामि ॐ [14]निर्ऋतिमारोपयामि ॐ वरुणमारोपयामि ॐ वायुमारोपयामि ॐ कुबेरमारोपयामि ॐ ईशानमारोपयामीत्यारोप्य[15], एत [16]एत ब्रह्मविष्णुत्रिपुरारि[17]-दिवा-करकामयज्ञपतिहंसधेनव[18] इत्यावाह्य, यथाक्रमं ॐ ब्रह्माणमारोपयामि ॐ विष्णुमारो-पयामि ॐ [19]त्रिपुरारिमारोपयामि ॐ दिवाकरमारोपयामि ॐ काममारोपयामि ॐ यज्ञ-पतिमारोपयामि ॐ हंसमारोपयामि ॐ [20]धेनुमारोपयामि इत्यारोपयेत्। ततश्च [21][मन्दा-राय पारिजाताय कल्पवृक्षाय हरिचन्दनाय सन्तानाय कदम्बाय [22]जम्बवे पिप्पलाय वटाय],

---

1 A कुम्भ
2 I. O. यजमानो मण्डपैक for the b. p.
3 A omits the b. p.
4 A उत्तरादिक्रमेण
5 I. O. ०सित०
6 I. O. च पुत्रिकापटपंक्ति कृत्वा तत
7 I. O. एत एत आदि and A तत तत यदित्यादि for the b. p.
8 A ०ग्रह
9 A omits the b. p.
10 A omits the b. p.
11 I. O. ०स्थित
12 A तत and I. O. प्रतिमानुप्रतिमसेत for the b. p.
13 A इन्द्रायष्टौ
14 A नैऋति०
15 A omits इत्यारोप्य
16 A एतद्ब्रह्म०
17 I. O. ०मुरारि०
18 A ०रमय
19 I. O. मुरारि०
20 A सुरभि०
21 I. O. omits the b. p.
22 A omits it

आदित्याय सोमाय [1]अङ्गारकाय बुधाय बृहस्पतये शुक्राय शनैश्चराय राहवे केतवे, इन्द्राय अग्नये यमाय निर्ऋतये वरुणाय वायवे [2]कुबेराय ईशानाय, ब्रह्मणे विष्णवे [3]त्रिपुरारये दिवाकराय [4]कामाय यज्ञपतये हंसाय [5]धेनवे इति प्रत्येकमुच्चार्य एतत् पाद्यं नम इति क्रमादेकैकशः पाद्यं सर्वेभ्यो दत्त्वा [6]तथैषोऽर्घ्यो नम इत्यर्घ्यं तथैवैतदाचमनीयं [7][नम इत्याचमनीयं] तथैवैतद्वस्त्रं नम इति वस्त्रं तथैवैष गन्धो नम इति गन्धं तथैवैतत् पुष्पं नम इति [8][पुष्पं तथै]-वैष धूपो नम इति धूपं तथैवैष दीपो नम इति दीपं तथैवैतन्नैवेद्यं [नम इति नैवेद्यं ][9]दद्यात्[10]। [11]एवं [12]पूजां समापयेत्। तत ऋत्विजः कुण्डे ऋग्वेदिना [13][स्वगृह्योक्तविधिनाग्न्युपसमाधाने कृते] तत्र पूजित-[14]देवताभ्यः स्वस्व-[15]मन्त्रेण [16][प्रत्येकं तिल]-यवघृतसमित्कुशैरेकैकामाहुतिं दद्युः। मन्त्राश्च आदित्यस्य ऋग्वेदयजुर्वेदयोः आ कृष्णेनेति, सामवेदे [17]बण्महाँ असीति, अथर्ववेदे [18][आदित्य नावमिति]। सोमस्य ऋग्वेदे आप्याय-[19]स्वेति, [20][यजुर्वेदे इमं देवा इति, सामवेदे आ प्यायस्वेति,] अथर्ववेदे यद्राजानमिति। अङ्गारकस्य ऋग्यजुःसामवेदेषु अग्निर्मूर्द्धेति, अथर्ववेदे त्वया [21]मन्य इति। बुधस्य ऋग्वेदे अग्ने विवस्वदुषस इति, [22][यजुर्वेदे उद्बुध्यस्वेति, सामवेदे अग्ने विवस्वदुषस इति, अथर्ववेदे दर्शोऽसीति]। बृहस्पतेः [23]ऋग्वेदे बृहस्पते परि दीयेति,[24] यजुर्वेदे बृहस्पते[25][अतियदर्य्य] इति, सामवेदे बृहस्पते परि[26]दीयेति, अथर्ववेदे [27]बृहस्पतिर्न इति। शुक्रस्य ऋग्वेदे शुक्रन्ते अन्यदिति, यजुर्वेदे अन्नात् परिश्रुत इति, सामवेदे [28][शुक्रन्ते अन्यदिति] अथर्ववेदे येनाव-

---

1 I. O. मङ्गलाय
2 Both I. O. and A सोमाय
3 A त्रिपुराय ; I. O. रुद्राय
4 I. O. सोमाय
5 A सुरभये
6 I. O. एषो०
7 I. O. omits the b. p.
8 A omits the b. p.
9 A omits the b. p.
10 I. O. omits it
11 I. O. इति
12 A पूजा
13 A reads the b. p. as आयुं त्वविधि मावाश्च तत्र
14 A ०देवेभ्यः
15 A ०मन्त्रैः
16 I. O. omits the b. p.
17 A च मही
18 A आदित्या नाम इति for the b. p.
19 A ०स्वी०
20 I. O. omits the b. p.
21 A मान्य ; I. O. मन्यी
22 A reads the b. p. as सामवेदे दानामीति
23 A omits it
24 I. O. दीवे इति
25 A च for the b. p.
26 I. O. दीपेति
27 A बृहस्पती च
28 A omits the b. p.

पदिति। शनैश्चरस्य ऋग्यजुःसामवेदेषु शन्नो देवीरिति, अथर्ववेदे [1]प्राणाय नम इति। [2][राहोः ऋग्वेदे [3]कया नश्चित्र इति, यजुर्वेदे काण्डात् काण्डादिति, सामवेदे कया नश्चित्र इति, अथर्ववेदे [4]राहू राजानमिति।] केतोः [5]वेदचतुष्टयेऽपि केतुं कृण्वन्निति। इन्द्रस्य ऋग्वेदयजुर्वेदयोः त्रात.रमिन्द्रमिति, सामवेदे इन्द्रायेन्दो [6]मरुत्वत इति, अथर्ववेदे [7][इन्द्रस्य बाहू] इति। अग्नेः ऋग्वेदे [8][अग्निं दूतं] वृणीमह इति, यजुर्वेदे त्वन्नो अग्ने इति, सामवेदे अग्निं [9]दूतं [10]वृणीमह इति, [11][अथर्ववेदे अग्नेर्मन्व] इति। यमस्य ऋग्वेदे असि यम इति, यजुर्वेदे सुगंनु[12]पन्थामिति, सामवेदे नाके सुपर्णमिति, अथर्ववेदे [13][यमो नो गातु]-मिति। [14][निर्ऋतेः ऋग्वेदे वेत्था हि निर्ऋतीनामिति, यजुर्वेदे असुन्वन्तमयजमान-मिति, सामवेदे वेत्था हि निर्ऋतीनामिति, अथर्ववेदे अपेत एत्विति।] वरुणस्य ऋग्वेदे वरुणं वो [15]रिशादसमिति, [16][यजुर्वेदे तत्त्वा यामीति,] सामवेदे घृतवती भुवनानामिति, अथर्ववेदे उदुत्तमं वरुणेति। वायोः ऋग्वेदे वात [17][आ वात्विति], यजुर्वेदे आ नो [18]नियुद्भिरिति, सामवेदे वात आ वात्विति, अथर्ववेदे वायोः सवितुरिति। सोमस्य ऋग्वेदे [19]कुविदङ्ग नमसा ये इति, यजुर्वेदे [20][वयं सोमेति], सामवेदे [21][सोमं राजानं] वरुणमिति, अथर्ववेदे [22]सोदक्रामत् सेति। ईशानस्य ऋग्वेदे ईशाना [23]वार्य्याणामिति, यजुर्वेदे तमीशान-मिति, सामवेदे आत्वा [24]सोमस्येति, अथर्ववेदे तस्मै [25][सर्वेभ्य ईशानस्येति]। ब्रह्मणो वेद-

1 I. O. ब्राह्मणाय
2 A omits the b. p.
3 I. O. कयाश्चित
4 I. O. राज्ञा
5 A reads this word after the next two words
6 A त्वा मरुत्व
7 A इन्द्राबाहत for the b. p.
8 A अग्निदूतं and I. O. अग्निंभूतं for the b. p.
9 I. O. भूतं
10 A वृणीम
11 A reads the b. p. as यजुर्वेदे अग्निर्मन
12 A ०न
13 A reads the b. p. as यमो गातम
14 A omits the b. p.
15 A निशादमिति
16 A omits the b. p.
17 I. O. वत्विति
18 A नियभिरिति ; I. O. नियुतिरिति
19 A कुविदङ्गनमसात् ये इति ; I. O. कुविदङ्गनमसायेति
20 A reads the b. p. as सामवेद इति
21 A reads the b. p. as सोम राजान
22 A सोदक्रमेतस्यति ; I. O. सोदक्रम इति
23 I. O. वार्य्याणामिति
24 A सुराबाह्म इति
25 I. O. reads the b. p. as सर्वेभ्यब्रह्मणश्चेति

चतुष्टयेऽपि ब्रह्म[1]जज्ञानमिति । विष्णोः ऋग्वेदे अतो देवा इति, यजुर्वेदसामवेदयोः[2] इदं विष्णुरिति, अथर्ववेदे [3]उरु विष्णु इति । शिवस्य ऋग्वेदे [4][इमा रुद्रायेति], यजुर्वेदे मा नस्तोक इति, सामवेदे आ वो राजानमिति, अथर्ववेदे भवो [5]दिवो भव इति । दिवाकरस्य वेदचतुष्टयेऽपि चित्रं देवानामिति । कामस्य ऋग्वेदे कामस्तदग्रे[6] समवर्त्ततेति, यजुर्वेदे कोदादिति, सामवेदे काम [7]वेद ते नाम इति, अथर्ववेदे कामस्तदग्र इति । यज्ञपतेः ऋग्वेदे कुविदङ्ग नमसा ये इति, यजुर्वेदे वयं सोमेति, सामवेदे [8]सोमं राजानं [9]वरुणमिति, अथर्ववेदे [10]सोदक्रामत् से इति । हंसस्य ऋग्वेदे हंसाः [11]सुपर्णा इति, यजुर्वेदे हंसः [12]शुचिषदिति, सामवेदे [13]प्र हंसास इति, अथर्ववेदे [14][परि धर्मेव सूर्यम्] इति । धेनोः ऋग्वेदे [15][आगावो अग्मन्निति], यजुर्वेदे [16][मावत परितावतामिति], सामवेदे [17][गवां व्रतं सामेति], अथर्ववेदे प्रजापतिश्च परमेष्ठी [18]च शृङ्गे इति । ततो[19] रात्रौ[20] सुखश्रव[21]-गीतवाद्यैर्जागरणं[22] कुर्यात् । एतच्च [23]मण्डपकरणादिरात्रिजागरणान्तं कर्म [24]सर्वशैलसाधारणम् । अपरशैलेषु [25]तु तत्तद्द्रव्येण शैलनिर्माणदेवतादिनिर्माणद्रव्यैः [26]क्वचित् क्वचिद्विशेषः । तच्च तत्रैव [27]वक्ष्यामः । ततः प्रभाते कृतनित्यः [28]कृतनित्येभ्यो गुर्वृत्विग्भ्यः [29]'अन्नं ब्रह्म'त्यादि-[30]['पाहि तस्मा]-न्नगोत्तमे'-त्यन्तमन्त्रा-[31][भ्यां मेरुमभि]-मन्त्र्य दद्यात् । तद् यथा—ॐ अद्यामुकसगोत्रेभ्योऽमुकामुकवेदा-

---

1 A यज्ञानमिति
2 A यजुर्वेदे सामवेदे च
3 I. O. तद्विष्णोरिति
4 A reads the b. p. as इमं रुद्रायेति
5 A द्विवो
6 I. O. ग्रे for ग्रे
7 A वेदं च
8 I. O. सोम ; A सोमो
9 A omits वरुणं
10 I. O. सोदक्रामयेति
11 A सोपरामिति
12 A शुचिसदिति
13 I. O. प्रहंसा
14 A परियामिति च मूर्य for the b. p.
15 I. O. चागाधी चग्म्रमिति for the b. p.
16 A गार उपाधार इति चितमिति for the b. p.
17 A गवाव्रतं साम: for the b. p.
18 I. O. omits it
19 I. O. adds much irrelevant matter, extending over a line here
20 I. O. adds च here
21 I. O. °श्रव°
22 A °जागरं
23 I. O. मधुपर्कामिरात्रि जागरान्त
24 A omits सर्व
25 A omits it
26 I. O. क्वचि क्वचिद्विशेष:
27 A वक्ष्यमाण:
28 I. O. कृतद्विजेभ्यो
29 A त्वं
30 I. O. and A पाद्यतोमा for the b. p.
31 I. O. यमिति

मुकामुकशाखाध्यायिभ्योऽमुकामुकदेवशर्मभ्यो युष्मभ्यं मत्स्यपुराणोक्तधान्याचलदानफलप्राप्ति-कामोऽहं मत्स्यपुराणोक्तभागव्यवस्थयै[1]-तं मन्दारपारिजातकल्पपादपहरिचन्दनसन्तानाख्यहैम-वृक्षपञ्चक-मुक्ताहीरकगोमेदपुष्परागमरकतनीलवैदूर्य्यपद्मरागश्रीखण्डप्रवालमुक्तामालान्वितं शुक्ति-शिलातलं [2]सौवर्णब्रह्मविष्णु-[3]त्रिपुरारिदिवाकरद्विजौघ-राजतश‍ृङ्गचतुष्टयान्वितं [4][राजतयन्त्रिका]-वेष्टित-[5]नितम्बमित्तुवंशावृतकन्दरं घृतोदकप्रस्रवणं विविधवस्त्ररचिताम्बुधरावली-राजतलोक-पालाष्टक[6]-नानाफलमाल्यविलेपनयुतमम्लानकुसुमान्वितवितानसहितं हैमकदम्बवृक्ष- कामदेव-कुसुम-[7]वस्त्रविलेपन-क्षीर-[8]पूर्णराजतकुण्डारुणोदसरो[9]-राजतचित्र[10]-रथवन-[11]युतपत्नमयमन्दर-सहितं हैमजम्बुवृक्ष-यक्षपति-घृतपूर्णराजतकुण्डमानससरो-वस्त्र-[12]राजतगन्धर्ववनपुष्पविलेपना-न्वितगोधूममयगन्धमादनसहितं हैमपिप्पलतरु-हंसराजतवैभ्राजवनवस्त्रदधिपूर्णराजतकुण्डसितो-दसरःपुष्पविलेपनान्वितं तिलमयविपुला[13]चलान्वितं शोभनवस्त्रपुष्पहैमवटवृक्षधेनु-[14]मधुपूर्ण-राजतकुण्ड-[15]भद्रसरो-[16]राजत-सावित्रवनविलेपनयुक्त-माषमयसुपार्श्वसहितं धान्याचलं ददानि। प्रतिग्रहीतारः स्वस्तीत्युक्त्वा सावित्रीं पठित्वा धान्याचलोऽयं विष्णुदैवत इत्युक्त्वा यथाशाखं कामस्तुतिं पठेयुः। तत ॐ [17]अद्य कृतैतद्दानप्रतिष्ठार्थं युष्मभ्यमहं दक्षिणामेतां गां ददानि। प्रतिग्रहीतारः स्वस्तीत्युक्त्वा स्वं स्वं भागं स्पृशेयुः। गुरवे [18]त्वेककपिलादाने वाक्यम्-[19]ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामेतां [20]कपिलां गां ददानि। तदा[21] ऋत्विग्भ्यो दक्षिणां[22] सुवर्णं दद्यात्। तद् यथा—ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं युष्मभ्यमहं [23]दक्षिणामिदं सुवर्णं ददानि। स्वस्त्यादि-[24]स्वीकारान्तं पूर्ववत्। ततो गुर्वृत्विग्भ्यो

1 Both I. O. and A यै
2 A म सौवर्ण
3 I. O. omits त्रि
4 I. O. राजकयन्त्रिका and A राजत-पत्रिका for the b. p.
5 A omits मित
6 I. O. ०दुरक
7 I. O. वस्त्रानुलेपन
8 A adds कर्पूर here
9 A ०सरोज०
10 A ०चैव०
11 A दूतयव for युतपत्र
12 A adds [illegible] here
13 I. O. omits चला
14 A मधु
15 A सरोज for भद्रसरो
16 A राज
17 A omits it
18 A एक०
19 I. O. omits it
20 I. O. omits it
21 I. O. तदाह
22 I. O. दक्षिणा
23 A omits it
24 I. O. omits it

[1]भोज्यानि दत्त्वा तदनुज्ञया [2]स्वयमक्षारलवणं भुञ्जीत। अचलञ्च[3] यथाभागं गुर्वृत्विजां गृहाणि[4] [5]प्रस्थापयेत्। उपवासा[6]-समर्थस्तु पूर्वदिने[7] नक्तं कृत्वा दद्यात्। तदा च पूर्वदिन[8]-प्रातर्नक्त[9]-सङ्कल्पं कुर्य्यात्। तद् यथा—मत्स्यपुराणोक्तधान्याचलदानकर्म कर्तुं यथाविधि [10]नक्तं भोजनमहं करिष्ये। एतदपि वाक्यं धान्याचलपदस्थाने तत्तदचलनामप्रक्षेपेण सर्वाचलसाधारणम्।

इति धान्याचलदानम्।

---

1 I. O. भोजनादि
2 I. O. स्वसमसारलवणं
3 I. O. अचलं
4 I. O. गृहान्; A गृहाण
5 A स्थापयेयु:
6 A स for सा
7 I. O. पूर्वमिने
8 A adds एव after this
9 I. O. ०र्नक्त
10 Both I. O. and A नक्त

## तथा लवणाचल-[1]दानम्। ( मत्स्यपुराणम्—८४ अः )

अथातः सम्प्रवक्ष्यामि लवणाचलमुत्तमम्।
यत्प्रदानान्नरो लोकमाप्नोति [2]किन्नरैर्युतम् ॥१॥
उत्तमः [3]षोडशद्रोणैः कर्तव्यो लवणाचलः।
मध्यमः स्यात्तदर्धेन चतुर्भिरधमः[4] स्मृतः ॥२॥
वित्तहीनो यथाशक्त्या द्रोणादूर्द्ध्वन्तु कारयेत्।
चतुर्थांशेन [5]विष्कम्भपर्वतान् कारयेत् पृथक् ॥३॥
विधानं पूर्ववत् कुर्य्याद्ब्रह्मादीनाञ्च सर्वदा।
तद्वद्धेमतनून्[6] सर्वान् लोकपालान्निवेशयेत् ॥४॥
सरांसि कामदेवादींस्तद्व-[7][चात्र निवेशयेत[8]]।

तद्वदिति यथा धान्याचले सरांसि कामदेवादयश्च कृतास्तथा-[9]त्रापि कर्तव्याः।

कुर्य्याज्जागरमत्रापि[10] दानमन्त्रान्निबोधत ॥५॥
सौभाग्यरससंभूतो [11]यतोऽयं लवणो रसः।
[तदात्मकत्वेन च मां [12]रक्ष पापान्नगोत्तम][13] ॥६॥
यस्मादन्नरसाः सर्वे [नोत्कटा लवणं][14] विना।
प्रियश्च शिवयोर्नित्यं तस्माच्छान्तिं प्रयच्छ मे ॥७॥

---

1 A महाद्दानम
2 A शिवसंयुतं, M. P. लोकानाप्नोति शिवसंयुतान्
3 Corrected from M. P. Both I. O. and A षोडशद्रोण:
4 Corrected from M. P. I. O. ०धरः, A ०चल:
5 A विष्कुम्भ०
6 I. O. ०ह्मेमतमूम, M. P. ०श्च स-मचान्
7 M. P. reads the b. p. as द्वापि कारयेत्
8 A निवद्दयेत्
9 A omits त्रा
10 M. P. ०जागरणं चापि
11 A घटे यतोऽयं
12 A पाहि
13 M. P. reads the b. p. as तद्दानकर्तृकत्वेन त्वं मां पाहि नगोत्तम
14 Corrected from M. P. A लोकेष लवणं and I. O. लोके चाचलं for the b. p.

विष्णुदेहसमुद्भूतं यस्मादारोग्यवर्धनम् ।
तस्मात् पर्वतरूपेण पाहि संसारसागरात् ॥८॥
अनेन विधिना यस्तु दद्याल्लवणपर्वतम् ।
उमालोके वसेत् कल्पं ततो याति परां गतिम् ॥९॥

### प्रयोगः

[1]अत्र षोडशभिरष्टाभिश्चतुर्भिर्वा लवणद्रोणै-[2]रशक्तौ त्वेक-[3]द्रोणादूर्ध्वं द्रोणचतुष्टयाभ्यन्तरं [4]शक्त्यनुरूपलवणेन [5]मेरुं तच्चतुर्थ-[6]चतुर्थभागेन चतुरो [7]विष्कम्भगिरीन् निर्माय, तेषु धान्याचलवत् सर्वमुपकरणं [8][मेरौ तु राजतलोकपालस्थाने] सौवर्णलोकपालानारोपयेत् । तत्र च दानदिनपूर्वतरदिने [9]निवेदनोपवाससङ्कल्प-[10]वाक्ययोरपरदिने [11][च दान] सङ्कल्प-पुण्याहादि-वाचन वरणवाक्येषु धान्याचलपदस्थाने लवणाचलपदनिवेशाद्वाक्यानि कृत्वा रात्रिजागरणान्तं[12] धान्याचलोक्तं कर्म विधेयम् । [13]ततः प्रातः कृतनित्येभ्यो गुर्वृत्विग्भ्यः सौभाग्यरस-सम्भूत इत्यादिमन्त्रैरामन्त्र्य लवणाचलं दद्यात् । तत्र च धान्याचल-[14]दानवाक्ये राजतलोकपालाष्टकपदस्थाने सौवर्णलोकपालाष्टक-[15]पदं यवमय-गोधूममय-तिलमय-[16]माषमयपदस्थानेषु लवणमयपदं धान्याचलपदस्थाने लवणाचलपदञ्च दत्त्वा दानवाक्यं कुर्यात् । [17]ततः स्वस्त्यादि[18]-ब्राह्मणगृह-[19]प्रस्थापनान्तं कर्म धान्याचलग्रन्थेनैव कार्यम् ।

इति लवणाचल-[20]दानम्[21] ।

1 I. O. अत्र
2 A ०स्तत्राप्यशक्तौ
3 A omits द्रोणादूर्ध्वं
4 I. O. शक्त्यानुरूप , A शक्त्यानुरूपे०
5 I. O. मेरुं
6 I. O. ०चतुर्भागेन
7 I. O. omits विष्कम्भ
8 A reads the b. p. as समारोपयेत् । ततः सम्यङ्निर्माय
9 A सोपवास for नि.. स
10 I. O. omits वाक्य
11 A omits the b. p.
12 I. O. ०जागरणं
13 A omits it.
14 A omits दान
15 I. O. omits it
16 A omits माषमय
17 A omits it
18 A स्वस्त्यादि स्वीकारान्तं and I. O. षष्ठ्यादि for स्वस्त्यादि
19 I. O. ०प्रस्थानदानान्तं ; A स्थापनार्थं
20 A ०महादानं
21 A adds सम्पूर्णम here

## [1]तथा गुडाचलदानम्। ( मत्स्यपुराणम्—८५ अः )

[2][अतः परं प्रवक्ष्यामि] गुडपर्वतमुत्तमम्।
यत्-[3]प्रदानान्नरः [4]स्वर्गमाप्नोति सुरपूजितः[5] ॥१॥
उत्तमो दशभिर्भारैर्मध्यमः पञ्चभिर्मतः।
[6][त्रिभिर्भारैः कनिष्ठः स्यात्तदर्धेनाल्पवित्तवान्] ॥२॥
[7]तद्वदामन्त्रणं पूजां हैमवृक्ष-[8]सुरार्चनम्।
विष्कम्भपर्वतांस्तद्वत् सरांसि वन-[9]देवताः ॥३॥
[10]होमं जागरणं [11]तद्वल्लोकपालाधिवासनम्।
धान्यपर्वतवत् कुर्य्यादिमं मन्त्रमुदीरयेत् ॥४॥
यथा देवेषु [12]विश्वात्मा प्रवरोऽयं जनार्दनः।
सामवेदस्तु वेदानां [13][महादेवस्तु योगिनाम्] ॥५॥
[14]प्रणवः [15]सर्वमन्त्राणां नारीणां पार्वती यथा।
तथा रसानां प्रवरः सदैवेक्षुरसो मतः ॥६॥
[16]मम तस्मात् परां लक्ष्मीं [ददस्व [17]गुडपर्वत][18]।
यस्मात् सौभाग्यदायिन्या[19] भ्राता त्वं गुडपर्वत।
निवास-[20]श्चापि पार्वत्यास्तस्मान्मां[21] पाहि सर्वदा ॥७॥

1 A ततो
2 A भगान: मंगाद्यामि for the b. p.
3 I. O. प्रदानं नर:
4 A स्वर्गं प्राप्नोति
5 M. P. ०पूजितम्
6 A reads the b. p. as त्रिभिरवीग—भक्तो तु सार्द्धभारेण भेदक
7 A तदामन्त्रं च
8 Corrected from M. P. I. O. ०सुराभिनाम्, A ०तराभिंताम्
9 A ०भिन्न च
10 M. P. होम, A रात्रि
11 A कृत्वा for तद्वत्
12 I. O. विश्वास:
13 A विश्वकर्मा च शिल्पिनां for the b. p.
14 I. O. प्रवर:, M. P. प्रवणः
15 M. P. सर्वमन्त्राणां
16 I. O. तम
17 Both I. O. and A गुडपर्व्वतः
18 M. P. reads the b. p. as गुडपर्वत देहि वै
19 I. O. ०न्यो
20 Corrected from M. P. Both I. O. and A ०श्चाव
21 M. P. ०च्छान्तिं प्रयच्छ मे

अनेन विधिना यस्तु दद्याद् गुडमयं गिरिम् ।
पूज्यमानः स गन्धर्वैर्गौरीलोके महीयते ।।८।।
[1]पुनः कल्पशतान्ते[2] तु सप्तद्वीपाधिपो भवेत् ।
आयुरारोग्यसम्पन्नः शत्रुभिश्चापराजितः ।।६।।

प्रयोगः

अत्र दशभिः पञ्चभि-[3]स्त्रिभिर्वा गुडभारैरशक्तौ तु सार्द्धगुडभारेण मेरुं तच्चतुर्थ-[4]चतुर्थ-भागेन चतुरो विष्कम्भगिरीन्नि-[5][र्माय तेषु] धान्याचलवत् सर्वमुपकरणमारोपयेत् । [6][तत्र च] दानदिनपूर्वतरदिने [7]निवेदनोपवाससङ्कल्पवाक्ययोरपरदिने [8][च दान]-सङ्कल्पपुण्याहादि-वाचनवरणवाक्येषु धान्याचल-[9]पदस्थाने गुडाचलपदनिवेशाद्वाक्यानि [10]कृत्वा रात्रि-[11]जागरणान्तं धान्याचलोक्तं कर्म विधेयम् । ततः प्रातः [12]कृतनित्यः कृतनित्येभ्यो गुर्वृत्विग्भ्यो [13]यथादेवेष्वित्यादि-[14]मन्त्रैरामन्त्र्य गुडाचलं दद्यात् । तत्र च धान्याचल-[15]दानवाक्ये यवमय-गोधूममय-तिलमय-[16]माषमयपदस्थानेषु गुडमयपदं धान्याचलपदस्थाने गुडाचलपदञ्च दत्त्वा दानवाक्यं कुर्य्यात् । ततः स्वस्त्यादिब्राह्मणगृह-[17]प्रस्थापनान्तं कर्म धान्याचलग्रन्थेनैव कार्य्यम् ।

इति गुडाचलदानम् ।

---

1 I. O. पुन: twice. M. P. ततः
2 I. O. omits न्ते तु
3 A omits स्त्रिभि
4 I. O. omits चतुर्थ
5 A मंयने for the b. p.
6 A तदह् for the b. p.
7 A सोपवास०
8 A omits the b. p.
9 I. O. omits पद
10 A omits it
11 I. O. ०जागरान्तं
12 A omits it
13 A यदा
14 A ०मन्त्रं चामन्त्र्य
15 A ०वाक्यं । किन्तु
16 A omits माषमय
17 A omits प्र

## [1]तथा सुवर्णाचलदानम्। ( मत्स्यपुराणम्—८६ अः )

अथ पापहरं वक्ष्ये सुवर्णाच-[2]लमुत्तमम्।
यस्य [3]प्रदानाद्भवनं [4]वैरिञ्चं याति मानवः ॥१॥
उत्तमः [5]पलसाहस्रो मध्यमः [6]पञ्चभिः शतैः।
तदर्धेनाधम[7]-स्तद्वदल्पवित्तोऽपि शक्तितः।
दद्यादेक[8]-पलादूर्ध्वं[9] यथाशक्त्या विमत्सरः ॥२॥
धान्यपर्वतवत् सर्वं विदध्यान्मुनिपुङ्गव[9]।
विष्कम्भ-[10]शैलांस्तद्वच्च ऋत्विग्भ्यः प्रतिपादयेत् ॥३॥
नमस्ते ब्रह्म-[11]बीजाय ब्रह्मगर्भाय वै[12] नमः।
यस्मादनन्त-[13]फलदस्तस्मात् पाहि [14]शिवाचल ॥४॥
यस्मादग्नेरपत्यं[15] त्वं [16]यस्मात् पुण्यं [17]जगत्पते।
हेमपर्वतरूपेण तस्मात् पाहि नगोत्तम ॥५॥
अनेन विधिना यस्तु दद्यात् कनकपर्वतम्।
स याति परमं[18] ब्रह्मलोकमानन्दकारकम्।
तत्र कल्पशतं [19][तिष्ठेत् ततो याति परां] गतिम् ॥६॥

1 A चथ
2 A omits ल
3 Corrected from M. P. Both I. O. and A प्रमादाद्भवनं
4 A वैष्णवं
5 A तत्र हासस्रो
6 I. O. पञ्चविंशतैः
7 Corrected from M. P. A चल and I. O. वर for धम
8 I. O. व for क
9 Corrected from M. P. Both I. O. and A ०पुङ्गवः
10 M.P. ०शैलांस्तत्र, A ०शैलसहितं
11 I. O. ०राजाय
12 M. P. ते
13 Corrected from M. P. I. O. ०फलदस्तस्मात्, A ०फलदं तस्मात्
14 A प्रजायते, M. P. शिलोच्चय
15 I. O. ०पत्य
16 Corrected from M. P. I. O. यस्माच्च त्वं, A यस्माद्ध
17 Corrected from M. P. Both I. O. and A जगत्पतेः
18 A लोकं again after this
19 A reads the b. p. as स्थित्वा प्रयाति परमां

## प्रयोगः

अत्र सहस्रेण पञ्चभिः शतैः सार्द्धशतद्वयेन वा सुवर्णपलानामशक्तो त्वेकपला-[1]द्धू सार्धपलशतद्वयाभ्यन्तरं शक्त्यनुरूपसुवर्णेन मेरुं तच्चतुर्थ-[2]चतुर्थभागेन चतुरो विष्कम्भ[3]-गिरीन् निर्माय तेषु धान्याचलवत् सर्वमुपकरणमारोपयेत्। तत्र च दानदिन[4]-पूर्वतरदिने [5]निवेदनोपवाससङ्कल्पवाक्ययोरपरदिने च दानसङ्कल्पपुण्याहादिवाचनवरणवाक्येषु धान्याचल-पदस्थाने सुवर्णाचलपदनिवेशाद्वाक्यानि कृत्वा रात्रिजागरान्तं धान्याचलोक्तं कर्म विधेयम्। ततः प्रातः [6]कृतनित्यः कृतनित्येभ्यो गुर्वृत्विग्भ्यो नमस्त इत्यादिमन्त्राभ्यामामन्त्र्य [7]सुवर्णा-चलं दद्यात्। तत्र च[8] धान्याचल-[9]दानवाक्ये यवमय-गोधूममय-तिलमय-माषमयपद-स्थानेषु[10] सुवर्णमयपदं धान्याचलपदस्थाने सुवर्णाचलपदञ्च दत्त्वा दानवाक्य[11] कुर्य्यात्। ततः स्वस्त्यादिब्राह्मणगृह-[12]प्रस्थापनान्तं कर्म धान्याचलग्रन्थेनैव कार्य्यम्।

इति सुवर्णाचलदानम्।

1 A ०र्धकेन
2 A omits चतुर्थ
3 I. O. omits म्भ
4 I. O. omits दिन
5 A सोपवास०
6 A omits it
7 I. O. चयलं
8 A omits it
9 I. O. ०दानवाक्यैः, A ०वाक्ये
10 I. O. omits षु
11 I. O. वाक्यानि
12 A omits प्र

## तथा तिलाचलदानम्। ( मत्स्यपुराणम्— ८७ अः )

[1][अथातः सम्प्रवक्ष्यामि] तिलशैलं विधानतः ।
यत्-[2]प्रदानान्नरो याति विष्णुलोकमनुत्तमम्[3] ॥१॥
उत्तमो दशभिर्द्रोणैर्मध्यमः पञ्चभिर्मतः[4] ।
त्रिभिः कनिष्ठो विप्रेन्द्र तिलशैलः प्रकीर्तितः ॥२॥
[5][पूर्ववच्चापरं सर्वं विष्कम्भपर्वतादिकम्] ।
दानमन्त्रं[6] प्रवक्ष्यामि यथावन्मुनिपुङ्गव[7] ॥३॥
यस्मान्मधुवधे[8] विष्णोर्देहस्वेदसमुद्भवाः ।
तिलाः कुशाश्च [9]समिधस्तस्माच्छन्नो भवन्त्विह ॥४॥
[10]हव्यकव्येषु यस्माच्च तिला एवाभिरक्षणम् ।
भवादुद्धर शैलेन्द्र तिलाचल नमोऽस्तु ते ॥५॥
इत्यामन्त्र्य च यो दद्यात्तिलाचलमनुत्तमम् ।
स वैष्णवं[11] पदं याति पुनरावृत्तिदुर्लभम् ॥६॥
[12]दीर्घायुष्यमवाप्नोति [13][पुनरेत्य च मानवः] ।
पितृभिर्देवगन्धर्वैः पूज्यमानो दिवं व्रजेत् ॥७॥

प्रयोगः

अत्र दशभिः पञ्चभिस्त्रिभिर्वा तिलद्रोणै[14]-र्मेरुं [15]तच्चतुर्थचतुर्थभागेन चतुरो विष्कम्भगिरीन् निर्माय[16] तेषु धान्याचलवत् सर्वमुपकरणमारोपयेत्। [17][तत्र च] दानदिनपूर्वेतर-

1 M. P. reads the b. p. as अतःपरं प्रवक्ष्यामि
2 A प्रसादान्नरो
3 M. P. सनातनम् for अनुत्तमम्
4 M. P. ०स्मृतः
5 M. P. reads the b. p. as पूर्ववच्चापरान् सर्वान् विष्कम्भानभितो गिरीन्
6 I. O. दानमन्त्र, M. P. दानमन्त्रान्
7 A ०सत्तम
8 Corrected from M. P. A ०वाध, I. O. ०रवे
9 M. P. माषाश्च तस्माच्छान्त्यै
10 M. P. हव्ये कव्ये च
11 A वैष्णव
12 A दीर्घायुष्यमवाप्नोति, I. O. दीर्घायुष्त्वमवाप्नोति, M. P. दीर्घायुष्यं समाप्नोति
13 M. P. पुत्रपौत्रैश्च मोदते for the b. p.
14 A ०द्रोणे
15 A omits तच्च, र्थ
16 I. O. omits य
17 I. O. तत्र for the b. p.

दिने निवेदनोपवाससङ्कल्पवाक्ययोरपरदिने च दानसङ्कल्पपुण्याहादिवाचनवरणवाक्येषु धान्याचलपदस्थाने तिलाचलपदनिवेशाद्वाक्यानि कृत्वा [1][रात्रिजागरणान्तं धान्याचलोक्तं] कर्म विधेयम्। ततः प्रातः कृतनित्यः कृतनित्येभ्यो गुर्वृत्विग्भ्यो [2][यस्मान्मधुवधे विष्णोरित्यादि] मन्त्राभ्यातामन्त्य [3]तिलाचलं दद्याम। [4]तत्र च धान्याचलदानवाक्ये यव-[5][मय-गोधूममय-माषमय]-पदस्थानेषु तिलमयपदं धान्याचलपदस्थाने तिलाचलपदञ्च[6] दत्वा [7]दानवाक्यं कुर्य्यात्। ततः स्वस्त्यादिब्राह्मणगृहप्रस्थापनान्तं कर्म धान्याचलप्रन्थेनैव कार्य्यम्।

इति तिलाचलदानम्।

1 I. O. रात्रिजागरान्त for the b p.
2 A यस्मादित्यादि and I.O. यस्मान्मधुवधेरित्यादि for the b. p.
3 A तिल
4 A चत्र for तत्र च
5 A माषगोधूममय for the b p.
6 A ०पदं
7 A वाक्य, I.O. वाक्यानि

## ततः कार्पासाचलदानम्। ( मत्स्यपुराणम्—८८ अः )

[अथातः सम्प्रवक्ष्यामि कार्पासाचलमुत्तमम्।
यत्प्रदानान्नरो नित्यमाप्नोति परमं पदम् ॥१॥ ][1]
कार्पास-[2]पर्वतं दद्याद्विंशद्भारै[3]-रथोत्तमः[4]।
दशभिर्मध्यमः प्रोक्तः कनिष्ठः पञ्चभिर्मतः।
भारेणाल्पधनो दद्याद्वित्तशाठ्यविवर्जितः ॥२॥
धान्यपर्वतवत् [5][सर्वं विदध्यान्] मुनिपुङ्गव[6]।
प्रभातायान्तु शर्वर्य्यां दद्यादिदमुदीरयन् ॥३॥
[7]त्वमेवावरणं यस्माल्लोकानामिह सर्वदा।
[8][कार्पासाचल नस्तस्माद्]-घौघध्वंसनो भव ॥४॥
इति [9]कार्पासशैलेन्द्रं यो [10]दद्याच्छर्वसन्निधौ।
रुद्रलोके वसेत् कल्पं ततो राजा भवेदिह ॥५॥

प्रयोगः

अत्र विंशत्या दशभिः पञ्चभिर्वा कार्पासभारैरशक्तौ त्वेकभारेण मेरुं तच्चतुर्थभागेन चतुरो विष्कम्भगिरीन् निर्माय तेषु धान्याचलवत् सर्वमुपकरणमारोपयेत्। तत्र च दानदिन-पूर्वतरदिने निवेदनोपवाससङ्कल्पवाक्ययोरपरदिने च सङ्कल्पपुण्याहादिवाचनवरणवाक्येषु धान्याचलपदस्थाने कार्पासाचलपदनिवेशाद्वाक्यानि कृत्वा रात्रिजागरणान्तं धान्याचलोक्तं कर्म विधेयम्। ततः कृतनित्येभ्यो गुर्वृत्विग्भ्य'स्त्वमेवावरण'मित्यादिमन्त्रेणाभिमन्त्र्य कार्पासा-चलं दद्यात्। तत्र च धान्याचलवाक्ये यवमय-गोधूममय-माषमयपदस्थानेषु कार्पासमयपदं धान्याचलपदस्थाने कार्पासाचलपदं दत्वा दानवाक्यं कुर्य्यात्। ततः स्वस्त्यादिब्राह्मणगृह-प्रस्थापनान्तं कर्म धान्याचलग्रन्थेनैव कार्य्यम्।

इति कार्पासाचलदानम्।

1 Supplied from M. P. I. O. and A omit the b. p
2 A and M. P. ०पर्वतस्तदद
3 Corrected from M. P. I. O. विंशतावे० ; A विंशत्यावे०
4 A and M. P. ०रिष्टोत्तम:
5 I. O. सर्वमापाद्य, M. P. सव-मासाद्य
6 I. O. and A मुनिपुङ्गव:
7 I. O. त्वमेवावरणं, A त्वमेव वारणं
8 A and M.P. कार्पासाद्रे नमस्तुभ्यम the for b. p.
9 I. O. द्दास्यामि for कार्पास
10 I. O. and A दद्यात् पर्वसन्निधौ

## अथ घृताचलदानम्। ( मत्स्यपुराणम्—८६ अः )

अथातः संप्रवक्ष्यामि घृताचलमनुत्तमम्।
[1]तेजोऽमृतमयं दिव्यं महापातकनाशनम् ॥१॥
विंशत्या घृतकुम्भानामुत्तमः [2]परिकीर्तितः।
दशभिर्मध्यमः प्रोक्तः पञ्चभिस्त्वधमः[3] स्मृतः ॥२॥
अल्पवित्तोऽपि कुर्वीत द्वाभ्यामिह विधानतः।
विष्कम्भपर्वतांस्तद्वत् चतुर्भागेण कल्पयेत ॥३॥

[4]कुम्भपरिमाणं परिभाषोक्तमनुसन्धेयम्।

[5]शालितण्डुलपात्राणि कुम्भोपरि निवेशयेत्।
कारयेत् संहतानुच्चान्[6] यथाशोभं विधानतः ॥४॥
[7]वेष्टयेच्छुक्लवासोभिरिक्षुदण्डफलादिकैः।
धान्यपर्वतवच्छेषं विधानमिह पठ्यते ॥५॥

फलादिकैरित्यादिशब्देन माल्यविलेपनयोर्ग्रहणं धान्याचले [8]तथोक्तेः।

अधिवासनपूर्वन्तु [9]तद्वद्धोमसुरार्चनम्।
प्रभातायान्तु शर्वर्यां गुरवे [10]विनिवेदयेत्।
विष्कम्भपर्वतांस्तद्वदृत्विग्भ्यः शान्तमानसः ॥६॥
संयोगाद् घृतमुत्पन्नं यस्मादमृततेजसोः।
तस्माद् घृतार्चिर्विश्वात्मा प्रीयतामत्र शङ्करः ॥७॥
यस्मात्तेजोमयं ब्रह्म घृते तच्च व्यवस्थितम्।
घृतपर्वतरूपेण [तस्मान्नः पाहि भूधर][11] ॥८॥

1 I. O. तेभो घृतमयं
2 I. O. and M. P. स्यादघृताचल:
3 Corrected from M. P. I. O. and A ०वर:
4 I. O. अम्बुपरिमाण
5 Corrected from M. P. I. O. शालिं तण्डुलपात्राणि, A शालितण्डुलपत्राणि
6 I. O. ०नुर्वीय
7 A वेष्टयेद्शुक्लवासोभि०
8 I. O. तयोक्त:
9 A तद्वच्चमसुराम्बितं
10 M. P. तन्निविदयेत्
11 A तस्मात्त्र परि भूधर: and M. P. तस्मात् त्वं पाहि नोऽनिशम् for the b. p.

अनेन विधिना दद्याद् घृताचलमनुत्तमम् ।
महापातकयुक्तोऽपि स लोकं याति शाङ्करम् ॥९॥
हंससारसयुक्तेन किङ्किणीजालमालिना ।
विमानेनाप्सरोभिश्च सिद्धविद्याधरैर्वृतः ।
विहरेत् पितृभिः सार्द्धं यावदा-[1]हूतसंप्लवम् ॥१०॥

प्रयोगः

अत्र विंशत्या दशभिः पञ्चभिर्वा शालितण्डुलपूर्णपात्रपिहितमुखैः शुक्लवस्त्रवेष्टितैर्घृतकुम्भैरशक्तौ तु द्वाभ्यां तथा तद्घृतकुम्भाभ्यां मेरुमिक्षुखण्डादिवेष्टितं चतुर्थभागघृतपूर्णतथाभूतघृतभाण्डैश्चतुरो विष्कम्भगिरीन् निर्माय तेषु धान्याचलवत सर्वमुपकरणमारोपयेत्। तत्र दानदिनपूर्वतरदिने निवेदनोपवाससङ्कल्पवाक्ययोरपरदिने च दानसङ्कल्प-पुण्याहादिवाचन-वरणवाक्येषु धान्याचलपदस्थाने घृताचलपदनिवेशाद्वाक्यानि कृत्वा रात्रिजागरणान्तं धान्याचलोक्तं कर्म विधेयम्। ततः प्रातः कृतनित्यः 'संयोगादघृतमुत्पन्न'मित्यादिमन्त्राभ्यामभिमन्त्र्य कृतनित्येभ्यो गुर्वृत्विग्भ्यो घृताचलं दद्यात्। तत्र धान्याचल-[2]दानवाक्ये यवमय-गोधूममय-तिलमय-माषमयपदस्थानेषु शालितण्डुलपूर्णपात्र-[3]पिहिताननशुक्लवस्त्रवेष्टितघृतभाण्डात्मकपदं धान्याचलपदस्थाने शालितण्डुलपूर्णपात्रपिहितमुखशुक्लवस्त्रवेष्टितघृतकुम्भात्मकघृताचल-[4]पदञ्च दत्त्वा दानवाक्यं कुर्य्यात्। स्वस्त्यादिब्राह्मणगृहप्रस्थापनान्तं कर्म धान्याचलग्रन्थेनैव कार्य्यम्।

इति घृताचलदानम्[5]।

---

1 M. P. ०भू०
2 A omits दान
3 A पिहित for पिहितानन
4 A ०पदं
5 A समाप्तं after this

[1][ अथ रत्नाचलदानम् । ] ( मत्स्यपुराणम्—९० अः )

अथातः संप्रवक्ष्यामि रत्नाचलमनुत्तमम् ।
मुक्ताफलसहस्रेण पर्वतः स्यादनुत्तमः ॥१॥
मध्यमः पञ्चशतिकस्त्रिशतेनाधमः स्मृतः ।
चतुर्थांशेन विष्कम्भपर्वताः स्युः समन्ततः ॥२॥
पूर्वेण [2]वज्रगोमेदैर्दक्षिणेने-[3]न्द्रनीलकैः ।
पुष्परागयुतः कार्यो विद्वद्भिर्गन्धमादनः ॥३॥
वैदूर्यविद्रुमैः पश्चात् संमिश्रो विपुलाचलः ।
पद्मरागैः ससौपर्णैरुत्तरेण तु विन्यसेत् ॥४॥

[पूर्वेण वज्रगोमेदैर्मन्दरः कर्तव्य इति सम्बन्धः । सौपर्णैर्मरकतैरत्र][4] सुपार्श्वमिति सम्बन्धः । [ धान्याचले तथा ][5] दर्शनात् ।

धान्यपर्वतवच्छेषमत्रापि परिकल्पयेत ।
तद्वदावाहनं कृत्वा वृक्षान् देवांश्च काञ्चनान् ॥५॥
पूजयेत् [6]पुष्पपानीयैः प्रभाते च विसर्जयेत् ।
पर्वतं गुरुऋत्विग्भ्य [7]इमौ मन्त्रावुदीरयेत् ॥६॥

अत्र देवान् पुष्पपानीयैः पूजयेत् । प्रभाते पर्वतं[8] गुरुऋत्विग्भ्यो विसर्जयेत् दद्यादिति सम्बन्धः ।

यथा देवगणाः सर्वे सर्वरत्नेष्ववस्थिताः[9] ।
त्वञ्च रत्नमयो नित्य-[मतः पाहि महाचल][10] ॥७॥

1 A omits the bracketed portion, I. O. तथा रत्नाचलदानं
2 A रजसोमेदै०
3 A ०एन्नीलकैः
4 I. O. omits the bracketed portion, A reads it as सौपर्णैर्मरकतैरत्र पूर्वेण वज्रगोमेदैर्मन्दरः । कर्तव्य इति सम्बन्धः ।
5 I. O. धान्याचलमिति for the bracketed portion
6 A पुष्पानीयैः, M. P. ०गन्धाद्यैः
7 A इति मन्त्रमु०, I. O. and M. P. इमान् मन्त्रानु०
8 A दत्वा after this
9 I. O. ०स्थितः
10 M. P. नमस्तेऽस्तु महाऽचल, and A ०महाचलः for the b. p.

यस्माद्रत्न-[प्रसादेन तुष्टिं][1] प्रकुरुते हरिः ।
[2][सदा रत्नप्रदानेन] तस्मान्नः पाहि [3]पर्वत ॥८॥
अनेन विधिना यस्तु [4]दद्याद्रत्नमयं गिरिम् ।
स याति [5][वैष्णवं लोकममरेश्वरवन्दितः] ॥९॥
यावत् कल्पशतं [6]साग्रमुषित्वेह नराधिप[7] ।
रूपारोग्यगुणोपेतः सप्तद्वीपाधिपो भवेत् ॥१०॥
ब्रह्महत्यादिकं किञ्चिद् [8]यदत्रामुत्र वा कृतम् ।
तत् सर्वं नाशमायाति [9]गिरिर्वज्रहतो यथा ॥११॥

प्रयोगः

अत्र [10]मुक्ताफलानां सहस्रेण शतपञ्चकेन शतत्रयेण वा [11]मेरुमुत्तममेरुपक्षे सपादशतसंख्य-[12]सपादशतसंख्यकेन मध्यममेरुपक्षे त्रिषष्टित्रिषष्टिसंख्यकेन कनिष्ठमेरुपक्षे चाष्टत्रिंशदष्टत्रिंशत्संख्यकेन यथोक्तक्रमहीरकादि-[13]रत्नचयद्वयेन विष्कम्भगिरीन् निर्माय तेषु धान्याचलवत् सर्वमुपकरणमारोपयेत् । तत्र च दानदिनपूर्वतरदिने निवेदनोपवाससङ्कल्प-[14]वाक्ययोरपरदिने च[15] दानसङ्कल्प-पुण्याहादिवाचन-[16]वरणवाक्येषु धान्याचलपदस्थाने रत्नाचलपदनिवेशाद्वाक्यानि कृत्वा रात्रि-[17]जागरणान्तं धान्याचलोक्तं कर्म विधेयम् । ततः प्रातः [18]कृतनित्यः कृतनित्येभ्यो गुर्वृत्विग्भ्यो 'यथा देवगणा' इत्यादि मन्त्राभ्यामभिमन्त्र्य रत्नाचलं दद्यात् । तत्र धान्याचलदानवाक्ये यवमयगोधूममय-[19]तिलमय-माषमयपदस्थानेषु यथाक्रमं वज्रगोमेदमयेन्द्रनीलपुष्परागमय-वैदूर्यविद्रुममय-पद्मराग-[20]मरकतमयपदानि धान्याचलपदस्थाने [21]रत्नाचलपदञ्च दत्त्वा दानवाक्यं कुर्यात् । स्वस्त्यादिब्राह्मणगृहप्रस्थापनान्तञ्च कर्म धान्याचलप्रन्थेनैव कर्तव्यम् ।

इति रत्नाचलदानम् ।

1 M. P. प्रदानेन तुष्टिं for the b. p.
2 I. O. सदानन्दप्रसादेन for the b. p.
3 A पर्वतः
4 A दद्याद् रत्नमयं
5 M. P. विष्णुसालोक्यममरेश्वरपूजितः for the b. p.
6 M. P. साग्रं वसेदिह, A साग्रमुषित्वाह
7 A नराधिपः
8 A यत्र द्वापरे
9 Corrected from M. P. I. O. गिरिर्वज्रहतो, A गिरीन्द्रजहतो
10 A मुक्ताफलसहस्रेण
11 A मेरुत्तरमेरुपक्षे
12 A omits it
13 I. O. रत्नद्वयद्वयेन, A रत्नेन
14 A omits वाक्य
15 A omits च
16 A omits वरण
17 I. O. ०जागरान्तं
18 A omits it
19 I. O. omits तिलमय
20 A मरकतपदानि
21 I. O. रत्नाचलपदं, A रत्नाचलपदञ्च

## अथ रौप्याचलदानम्। ( मत्स्यपुराणम्—६१ अः )

अतः परं प्रवक्ष्यामि रौप्याचलमनुत्तमम् ।
[1]यत्प्रदानान्नरो याति सोमलोकं द्विजोत्तम ॥१॥
दशभिः पलसाहस्रैरुत्तमो रजताचलः ।
पञ्चभिर्मध्यमः प्रोक्तस्तदर्धेनावरः[2] स्मृतः ॥२॥
[3]अशक्तो विंशतेरूर्द्धं [4]कारयेच्छक्तितः सदा[5] ।
[6]विष्कम्भपर्वतांस्तद्वत् तुरीयांशेन कल्पयेत् ॥३॥
पूर्ववद्राजतां-[7]स्तद्वन्मन्दारादीन् विधानतः ।
कलधौतमयांस्तद्वल्लोकेशानर्चयेद्बुधः ॥४॥

[8][कलधौतमयान् सुवर्णमयान् । ]

ब्रह्मविष्ण्वर्कवान् कार्यो नितम्बोऽत्र हिरण्मयः ।
[9]राजतं स्याद् यदन्येषां सर्वं तदिह काञ्चनम् ॥५॥

ब्रह्मविष्ण्वर्कवदित्य-[10][तिदेशमात्रार्थं तेन] त्रिपुरारि-[11]रप्यत्र हिरण्मयः कर्तव्यः ।

शेषञ्च पूर्ववत् कुर्याद्धोमजागरणादिकम् ।
दद्यात् ततः प्रभाते तु गुरवे रौप्यपर्वतम् ॥६॥
विष्कम्भशैला-[12]नृत्विग्भ्यः पूज्य वस्त्रविभूषणैः ।
इमं मन्त्रं पठन् दद्याद्दर्भपाणिर्विमत्सरः ॥७॥

पूज्य वस्त्रविभूषणैरिति पर्वतं विष्कम्भशैलांश्च वस्त्रसौवर्णपुष्पादिभिः सम्पूज्य दद्यादित्यर्थः ।

---

1 I. O. यत्प्रसादान्नरो
2 M. P. ०धमः
3 A अशक्तो
4 A कारयेद्राजतः
5 M. P. ०तस्तदा
6 I. O. विष्कम्भपर्वतस्तद्वत्
7 M. P. कुर्वन् for तद्वत्
8 A omits the bracketed portion
9 I. O. राजत
10 A ०वार्थोत्तेन for the b. p.
11 I. O. ०मप्यत्र, A ०वप्यत्र
12 I. O. ०ऋत्विग्भ्यः

*पितॄणां वल्लभो यस्मा-[1]द्धर्मेन्दोः शङ्करस्य च ।*
*पाहि राजत तस्मान्नः शोकसंसारसागरात् ॥८॥*
इत्थं [2]निवेद्य यो दद्या-[3]द्रजताचलमुत्तमम् ।
गवामयुतदानस्य फलं प्राप्नोति मानवः ॥९॥
सोमलोके स गन्धर्वैः किन्नराप्सरसां गणैः ।
पूज्यमानो वसेद्विद्वान् यावदाहूतसंप्लवम् ॥१०॥

प्रयोगः

अत्र [4]रजतपलानां दशभिः पञ्चभिर्वा सहस्रैः सार्द्धपलसहस्रद्वयेन वा अशक्तौ तु पलानां विंशतेरूर्द्धं शक्त्यनुरूपपरिमाणरजतेन [5][मेरुं तच्चतुर्थभागेन] चतुरो विष्कम्भगिरीन् निर्माय तेषु [6]धान्याचले यद्राजतमुपकरणं तत् सर्वं काञ्चनमयं मन्दारादिवृक्ष[7]-पञ्चकञ्च राजतमन्यच्च धान्याचलोक्तं[8] सर्वमुपकरणं तथैवारोपयेत् । तत्र च दानदिनपूर्वतरदिने निवेदनोपवाससङ्कल्पवाक्ययोरपरदिने च दानसङ्कल्प-पुण्याहादिवाचन-वरणवाक्येषु धान्याचलपदस्थाने रौप्याचलपदनिवेशाद्वाक्यानि कृत्वा [9]रात्रिजागरणान्तं धान्याचलोक्तं कर्म विधेयम् । ततः प्रातः कृतनित्यः कुशहस्तः शान्तचेताः 'पितॄणां वल्लभ' इत्यादिमन्त्रेणाभिमन्त्र्य कृतनित्येभ्यो गुरुर्त्विग्भ्यो यथेच्छवस्त्र-सौवर्णपुष्पादिभिरर्चितं रौप्याचलं दद्यात् । तत्र [10]च धान्याचलदान-[11]वाक्ये हैमवृक्षपञ्चकपदस्थाने राजतवृक्षपञ्चकपदं यत्र यत्र राजतपदं तत्र तत्र हैमपदं यवमय-गोधूममय-तिलमय-[12]माषमयपदस्थानेषु [13][रजतमयपदं धान्याचलपदस्थाने रौप्याचलपदञ्च] दत्त्वा दानवाक्यं कुर्यात् । ततः स्वस्त्यादिब्राह्मणगृहप्रस्थापनान्तं कर्म धान्याचलग्रन्थेनैव कर्तव्यम् ।

इति [14]रौप्याचलदानम् ।

1 T. O. ०द्धर्मो क्त:
2 Corrected from M. P. I. O. and A निवेद्य
3 I. O. ०द्राजता०
4 A रजतपलद्दशभि:
5 I. O. मेरुचतुर्थभागेन वा for the b. p.
6 A धान्याचलोक्तमुपकरणं
7 A omits वृक्ष
8 I. O. adds तत् after it
9 I. O. and A रात्रिजागरान्तं
10 I. O. omits it
11 A omits it
12 I. O. मायपद०
13 A reads the bracketed portion as राजतमयपदस्थाने रौप्याचपदं
14 A रौप्याचलदानमाहादानं

[1][अथ शर्कराचलदानम् । ] (मत्स्यपुराणम्—८२ अः १-१६, ३४-३५ )

अथातः संप्रवक्ष्यामि शर्करशैलमुत्तमम् ।
यस्य प्रदानाद्विष्णवर्करुद्रा-[2]स्तुष्यन्ति सर्वदा ॥१॥
अष्टाभिः शर्कराभारैरुत्तमः स्यान्महाचलः ।
चतुर्भिर्मध्यमः प्रोक्तो भाराभ्यामवरः[3] स्मृतः ॥२॥
भारेण [4]वार्द्धभारेण कुर्याद् यस्त्वल्पवित्तवान् ।
विष्कम्भपर्वतान् कुर्यात् तुरीयांशेन मानवः ॥३॥
धान्यपर्वतवत् सर्वमापाद्यामरसंयुतम्[5] ।
मेरोरुपरि तद्वच्च [6]स्थाप्यं [7]हेमतरुत्रयम् ॥४॥
मन्दारः पारिजातश्च [8]तृतीयः कल्पपादपः ।
[9]एतद्वृक्षत्रयं मूर्ध्नि [10]सर्वेष्वपि निवेशयेत् ॥५॥
हरिचन्दनसन्तानौ पूर्वपश्चिमभागयोः ।
[11]निवेश्यौ सर्वशैलेषु विशेषाच्छर्कराचले ॥६॥
[12]मन्दारे कामदेवस्तु [13]प्रत्यग्वक्त्रः सदा भवेत् ।
गन्धमादनशृङ्गे तु धनदः स्यादुदङ्मुखः ॥७॥
प्राङ्मुखो वेदमूर्त्तिस्तु[14] हंसः[15] स्याद् विपुलाचले ।
हैमी [16]सुपार्श्वे [17]सुरभिर्दक्षिणाभिमुखी भवेत् ॥८॥
धान्यपर्वतवत् सर्वमावाहनमखादिकम्[18] ।
कृत्वाथ गुरवे दद्यान्मध्यमं पर्वतोत्तमम ।

---

1 A omits the bracketed portion
2 I. O. ०स्तप्यन्ति
3 I. O. ०वामवर:, M.P. ०भागमधम:
4 Corrected from M. P. I. O. and A चार्द्धभारेण
5 I. O. ०माद्यामानसंयुतं, A ०संयुत:
6 A स्थाप्य
7 A हेमतरुद्वयं
8 I. O. तुरीय:
9 A एतद्वृक्षत्रयं
10 A सन्धिष्वपि
11 Corrected from M. P. A निवेश्यो I. O. निवेश्य
12 I. O. मन्दरे
13 Corrected from M P. I. O. प्रत्यमुख:, A प्रत्येक तु
14 I. O. वेदमूर्त्तिश्च
15 A हंस
16 I. O. सुपार्श्व
17 Corrected from M. P. I. O. and A सुरभी
18 Corrected from M. P. I. O. ०वाहनमयादिकं, A ०वाहनमुखादिकान्

*ऋत्विग्भ्यश्चतुरः [1]शैलानिमान् [2]मन्त्रानुदीरयन् ॥९॥*

*[3][सौभाग्यामृतसारोऽयं परमः शर्कराचलः । ]*

*तस्मादानन्दकारी [4]त्वं भव शैलेन्द्र सर्वदा ॥१०॥*

*अमृतं पिबतां ये तु निपेतुर्भुवि [5]शीकराः ।*

*देवानां [6]तत्समुत्थस्त्वं पाहि नः [7]शर्कराचल ॥११॥*

[8][मनोभवधनुर्मध्यादुद्भूता शर्करा यतः । ]

[9]तन्मयोऽसि महाशैल पाहि संसारसागरात् ॥१२॥

यो दद्याच्छर्कराशैलमनेन विधिना नरः ।

सर्वपापविनिर्मुक्तः स याति [परमां गतिम्][10] ॥१३॥

[11][चन्द्रादित्यप्रतीकाशमधिरुह्यानुजीविभिः ।

सहैव यानमातिष्ठेत् [12]तत्र विष्णुप्रचोदितः ॥१४॥ ]

ततः कल्पशतान्ते [13]तु सप्तद्वीपाधिपो भवेत् ।

आयुरारोग्यसम्पन्नो यावज्जन्मार्बुदत्रयम् ॥१५॥

भोजनं शक्तितः कुर्य्यात् सर्वशैलेष्वमत्सरः[14] ।

[15]सर्वत्राक्षारलवणमश्नीयात् तदनुज्ञया ।

कुर्य्यात् गुरुर्त्विजः कारयेदित्यर्थः ।

[16]पर्वतोपस्करान् सर्वान् [17]प्रापयेद्ब्राह्मणालयम् ॥१६॥

---

1 A शैलानदान

2 Corrected from M. P. I. O. and A मन्त्रानुदीरयेत्

3 I. O. reads the bracketed portion as तस्मादमृतसारोऽयं परम: शर्करायुत: and M. P. as ०पर्वत: शर्करायुत:

4 I. O. तु

5 A शीकर:

6 Corrected from M. P. I. O. तत्समुत्थोऽयं, A वजतो यस्मात्

7 A शर्कराचल:

8 Corrected from M. P. I. O. reads the bracketed portion as मनोभुवधनुर्मध्यात्वद्भता: शर्कराचल: and A omits it

9 A यत्तन्मयो

10 I. O. शिवमन्दिरं and M. P. परमं पदम् for the bracketed portion

11 I. O. omits the bracketed portion

12 Corrected from M. P. A स तु विष्णुप्रभोदिरं

13 A त

14 Corrected from M. P. I. O. and A ०षु मत्सर:

15 A सर्वत्राक्षार०

16 I. O. सर्वतो०

17 A प्रापयाब्राह्मणालयं

पश्येदपीमान-[1]धनोऽतिभक्त्या
स्पृशेन्मनुष्यैरिह[2] दीयमानान्[3] ।
शृणोति भक्त्याथ मतिं ददाति
विकल्मषः सोऽपि दिवं प्रयाति ॥१७॥
दुःस्वप्नः [4][प्रशममुपैति पठ्यमानैः]
शैलेन्द्रैर्भवभयभेदनैर्मनुष्यैः[5] ।
यः कुर्य्यात् किमु मुनिपुङ्गवेह सम्यक्
शान्तात्मा [6]सकलगिरीन्द्रसम्प्रदानम् ॥१८॥

प्रयोगः

अत्राष्टाभिश्चतुर्भिर्वा [7]शर्कराभारैः शर्कराभारद्वयेन वा अशक्तौ त्वेकभारेणार्द्धभारेण वा मेरुं तच्चतुर्थभागेन [8]चतुरो विष्कम्भगिरीन् निर्माय तेषु धान्याचलवत् सर्वमुपकरणमारोपयेत् । तत्र च दानदिनपूर्वतर-[9][दिने निवेदनोपवास]-सङ्कल्पवाक्ययोरपरदिने च[10] दानसङ्कल्प-पुण्याहादि-वाचन-वरणवाक्येषु धान्याचलपदस्थाने शर्कराचलपदनिवेशाद्वाक्यानि कृत्वा [11]रात्रिजागरणान्तं धान्याचलोक्तं कर्म विधेयम् । ततः [12]प्रातः कृतनित्यः सौभाग्यामृत-[13]सारोऽयमित्यादिमन्त्रै-रभिमन्त्र्य [14]कृतनित्येभ्यो गुरुर्ऋत्विग्भ्यः शर्कराचलं दद्यात् । तत्र च[15] धान्याचलदानवाक्ये यवमयगोधूममय-तिलमय-माषमयपदस्थाने शर्करामयपदं धान्याचलपदस्थाने [16]शर्कराचलपदञ्च दत्त्वा [17]दानवाक्यं कुर्य्यात् । ततः स्वस्त्यादिब्राह्मणगृहप्रस्थापनान्तं कर्म धान्याचल-[18]ग्रन्थेनैव करणीयम् ।

इति शर्कराचलदानम् ।

इति [19][महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेन]-देवविरचिते
श्रीदानसागरेऽचलदानावर्तः ।

---

1 A °श यो° for °धनो°
2 M. P. °रपि
3 A दीप्यमानं
4 A reads the bracketed portion as प्रशममुपैति पठ्यमानै
5 Corrected from M. P. I. O. °भेदनिर्म्मनुष्यः, A °भेदानीमनुष्यैः
6 A कमल for सकल
7 A omits this
8 A चतरे
9 A reads the bracketed portion as दिनोपवास
10 A omits it
11 I. O. and A रात्रिजागराणं
12 A omits it
13 A inserts शर्कराचल here
14 I. O. कृतनित्या
15 I. O. omits it
16 I. O. शर्कराचलं पदं, A पदञ्च
17 A वाक्यं
18 A °ग्रन्थेन कुर्य्यात्
19 A reads the bracketed portion as महाराजा मामन्ताधिपतिः निःशङ्क- भुवनख्यातिश्रीकाम

## अथ रुद्रदैवतस्वरूपधेनुसहितविष्णुदैवतधेनुदानावतः । (३)

मत्स्यपुराणे (८२।२—२०क) :—

गुडधेनुविधानस्य [1]यद्रूपमिह यत् फलम् ।
तदिदानीं प्रवक्ष्यामि सर्वपापप्रणाशनम् ॥१॥
कृष्णाजिनं चतुर्हस्तं प्राग्ग्रीवं[2] विन्यसेद् भुवि ।
गोमयेनोपलिप्तायां दर्भानास्तीर्य्य यत्नतः[3] ॥२॥
[4]लघ्वेणकाजिनं तद्वद्वत्सस्य परिकल्पयेत् ।
प्राङ्मुखीं कल्पयेद्धेनुमुदक्पादां [5]सवत्सकाम् ॥३॥
उत्तमा गुडधेनुः[6]स्यात् सदा भारचतुष्टयम् ।
वत्सं भारेण कुर्वीत भाराभ्यां[7] मध्यमा स्मृता ॥४॥
अर्द्धभारेण वत्सः स्यात् कनिष्ठा[8] भारकेण तु ।
चतुर्थांशेन वत्सः स्याद्गृहवित्तानुसारतः ॥५॥

भारपरिमाणञ्च [9]परिभाषोक्तमनुसन्धेयम् । चतुर्भिश्च भारैरुत्तमा धेनुः, भारद्वितयेन मध्यमा, एकेन भारेण कनीयसी [10]स्ववित्तानुसारेण यथायथं [11]दातव्या । सर्वत्र धेनु-चतुर्थांशेन वत्सपरिकल्पनं बोद्धव्यम् ।

धेनुवत्सौ घृतास्यौ तौ[12] [13]श्वेतसूक्ष्माम्बरावृतौ ।
[14]शुक्तिकर्णाविक्षुपादौ [15]शुचिमुक्ताफलेक्षणौ ॥६॥

---

1 A यद्गूढमिह
2 I. O. प्राग्ग्रीवां, M. P. प्रागग्रं
3 M. P. सर्वतः
4 A लघ्वेकाजिनं
5 Corrected from M. P. A सवत्सकां, I. O. सपात्रकां
6 A स्या
7 M. P. द्वाभ्यां वै, A उभाभ्यां
8 A कनिष्ठो
9 A पारिभाषिकमनु०
10 A सवित्तानुसारेण, I. O. स्ववित्ता-नुसारतो
11 A दातव्यं
12 M. P. घृतास्यौ च, A घृतकर्ये तौ
13 I. O. and M. P. सित for श्वेत
14 I. O. शुचि for शुक्ति
15 A शुचिमुक्ताफलेक्षणौ

सितसूत्र-[1]शिरालौ तौ सितकम्बलकम्बलौ ।
[2]ताम्रगण्डुकपृष्ठौ तौ सितचामररोमकौ[3] ॥७॥

सितसूत्र-[4]शिरालाविति यथा [5][ग्रीवा देहेऽवतिष्ठते], तथा श्वेतसूत्राणि दैर्घ्य-[प्रस्थाभ्यां देयानीत्यर्थः । ][6]

विद्रुमभ्रूयुगोपेतौ नवनीतस्तनान्वितौ[7] ।
[8][क्षौमपुच्छौ कांस्यदोहाविन्द्रनीलकतारकौ ॥८॥
सुवर्णशृङ्गाभरणौ राजतखुरसंयुतौ ।
नानाफलसमायुक्तौ [9]घ्राणगन्धकरण्डकौ । ]

सुवर्णशृङ्गाभरणौ सुवर्णशृङ्गौ[10] सुवर्णाभरणौ च यथाशक्ति हैमतिलकादिमण्डिता-वित्यर्थः । गन्धकरण्डः[11] अभ्रमः [12]कस्तूरीकोषः ।

इत्येवं [13]रचयित्वा तौ दीपधूपैरथार्चयेत् ॥९॥

[14][दीपधूपौ पूजोपचारोप-[15]करणौ । ]

या लक्ष्मीः सर्वभूतानां या च [16]देवेष्ववस्थिता ।
धेनुरूपेण सा देवी मम शान्तिं [17]प्रयच्छतु ॥१०॥
[18]देहस्था या च [19]रुद्राणी शङ्करस्य [20]तु या प्रिया ।
धेनुरूपेण सा देवी मम पापं [21]व्यपोहतु ॥११॥
विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभावसोः ।

---

1 Corrected from M. P. I. O. ०शिरालौ तौ, A ०ग्रीवायुभौ
2 A त्वव०
3 Corrected from M. P. I. O. ०रोमकौ, A ०कामकौ
4 A ०ग्रोतानिति
5 I. O. reads the bracketed portion as विवा देहेमतिष्ठन्ते
6 I. O. reads the bracketed portion as इष्टाषाभ्यां देयादित्यर्थः
7 M. P. ०स्तनावुभौ
8 A omits the bracketed portion
9 Corrected from M. P. I. O. प्राण for घ्राण
10 A क्षौमपुच्छौ
11 A ०करणक:
12 I. O. कस्तूरीकोष:
13 I. O. रचयित्वा
14 I. O. reads the bracketed portion as दीपधूपौ पूजोपचारस्योपलक्षकौ
15 A ०करणौ
16 A दद्रेऽवस्थिता
17 A प्रयच्छ मे
18 I. O. देहस्था
19 A रुद्राणां
20 I. O. तथा, M. P. सदा
21 A व्यपोहति

चन्द्रार्कशक्रशुक्राणां या धेनुः साऽस्तु मे [1]श्रिये ॥१२॥
चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च ।
लक्ष्मीर्या लोकपालानां सा [2]धेनुर्वरदाऽस्तु मे ॥१३॥
[3][स्वधा या पितृमुख्यानां स्वाहा यज्ञभुजाश्च या ।
सर्वपापहरा धेनु-[4][स्तस्माच्छान्तिं प्रयच्छ मे ॥१४॥
एवमामन्त्र्य तां धेनुं] ब्राह्मणाय निवेदयेत् ।]
विधानमेतद्धेनूनां सर्वासामिह पठ्यते ॥१५॥
[5]यास्तु पापविनाशिन्यः पठ्यन्ते दश धेनवः ।
तासां स्वरूपं वक्ष्यामि नामानि च नराधिप ॥१६॥
प्रथमा गुडधेनुः स्याद् घृतधेनुस्तथापरा ।
तिलधेनुस्तृतीया च चतुर्थी जल-[6]संज्ञिता ॥१७॥
क्षीरधेनुश्च विख्याता मधुधेनुस्तथापरा ।
सप्तमी शर्कराधेनु-[7]र्दधिधेनुस्तथाष्टमी ।
रसधेनुश्च नवमी दशमी स्यात् स्वरूपतः ॥१८॥
[8][कुम्भाः स्युर्द्रव[9]-धेनूनामितरासान्तु[10] राशयः ।

अत्र रसशब्देन लवणेक्षुरसयोर्ग्रहणम् ।

तथा च पद्मपुराणम् :—

प्रथमा गुडधेनुः स्याद् घृतधेनुस्तथापरा ।
तिलधेनुस्तृतीया च चतुर्थी जलकायिनी ॥१९॥
क्षीरधेनुश्च विख्याता मधुधेनुस्तथापरा ।

---

1 I. O. प्रिये, M. P. reads the entire line as चन्द्रार्कशक्रशक्तिर्या धेनुरूपाऽस्तु सा श्रिये
2 I. O. मे शान्तिं प्रयच्छतु
3 I. O. omits the bracketed portion
4 Supplied from M. P. A reads दशमी only for the bracketed portion
5 I. O. याष्, M. P. यास्ता:
6 I. O. ०संज्ञिका
7 I. O. ०रष्टमी लवणस्य तु
8 I. O. omits the bracketed portion
9 Corrected from M. P. A दधि for द्रव
10 Supplied from M. P. A omits न्तु

सप्तमी शर्कराधेनुरष्टमी लवणस्य च ।

रसधेनुश्च नवमी दशमी स्यात् स्वरूपतः ॥२०॥ ]

[1]मत्स्यपुराणे ( ८२।२० ख-२२, २३ ख, २४ ) :—

सुवर्णधेनुमप्यत्र केचिदिच्छन्ति मानवाः ॥२१॥

नवनीतेन [तैलेन तथैवान्ये][2] महर्षयः ।

एतदेव[3] विधानं स्यात् त एवोपस्कराः स्मृताः ॥२२॥

मन्त्रावाहनसंयुक्ताः सदा[4] पर्वणि पर्वणि ।

[5]यथाश्रद्धं प्रदातव्या भुक्तिमुक्तिफलप्रदा ।

[6]अमेययज्ञफलदाः सर्वपापहराः शुभाः ॥२३॥

अयने विषुवे पुण्ये व्यतीपाते तथा[7] पुनः ।

गुडधेन्वादयो देया [8]उपरागादिपर्वसु ॥२४॥

अत्रोक्तसमयानामन्यतमे यजमानो गोमयोपलिप्तभूमौ कुशानास्तीर्य्य तदुपरि चतुर्हस्तं प्राग्ग्रीवं कृष्णाजिनं प्रसार्य्य तत्पार्श्वे तथैव [9]स्वल्पमजिनमास्तीर्य्य [10]चतुर्हस्ताजिने [11]यथाशक्तयुक्तधेनु[12]-परिमाणानामन्यतमपरिमाणद्रव्यमयी-[13]मुक्तोपकरणयुतां प्राङ्मुखीमुदक्पादां धेनुं स्वल्पाजिनोपरि च धेनुचतुर्थां-[14][शद्रव्यमयमु]-क्तोपकरणयुतं वत्समुपकल्प्य सवत्सां धेनुं दीपधूपादिभिरभ्यर्च्य ओँ[15] या लक्ष्मीरित्यादिमन्त्रैरामन्त्र्यार्चिताय ब्राह्मणाय दद्यात् । तत्र गुडधेनुदान[16]-वाक्यम्—ओँ अद्यामुकसगोत्रायामुक-[17]वेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं मत्स्यपुराणोक्तगुडधेनुदानफलप्राप्तिकामोऽहमेतां लघ्वेणकाजिनस्थधेनुचतुर्थांशगुडमयघृतास्य-सितसूक्ष्माम्बराावृतशुक्तिकर्णेक्षुपादमुक्ताफलेक्षण-सित-[18][कम्बलगलकम्बल]-ताम्रगण्डकपृष्ठसित-

1 Supplied by conjecture

2 M. P. रवैश्च तथान्ये तु for the bracketed portion

3 M. P. एतदेवं

4 A दद्या

5 Corrected from M. P. A यथाश्राद्धं, I. O. यथाशब्दं

6 M. P. अशेष०, A अनेक०

7 M. P. and I. O. ऽयवा

8 M. P. ०स्त्रूपरागादि०, A उपवासादि०

9 I. O. अल्प०

10 A चतुर्हस्ताजिन

11 I. O. यथा बृहद्युक्त

12 A adds दान after this

13 I. O. and A ०युक्तो०

14 I. O. शो for the bracketed portion

15 A omits it

16 A omits दान

17 A वेद for वेदामुक

18 I. O. सूत्रसितगात्र for the bracketed portion

चामररोमक-[1]विद्रुमभ्रू युग-नवनीतस्तनचौमपुच्छकांस्योपदोहेन्द्रनीलतारक-सुवर्णशृङ्गाभरणराजत-खुर-नानाफलोपेतगन्धघ्राणवत्ससहितां कृष्णाजिनस्थभारचतुष्टयमितगुडमयीं घृतास्यां सित-सूक्ष्माम्बरावृतां शुक्तिकर्णामिक्षुपादां मुक्ताफलेक्षणां सितसूत्रशिरालां सितकम्बलगलकम्बलां ताम्रगण्डकपृष्ठां सितचामररोमिकां विद्रुमभ्रूयुगां नवनीतस्तनीं चौमपुच्छां कांस्योपदोहामिन्द्र-नीलतारकां सुवर्णशृङ्गाभरणां राजतखुरां नानाफलोपेतां गन्धघ्राणां गुडधेनुं ददानि। प्रति-ग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा [2]धेनुरियं विष्णुदैवतेत्युक्त्वा यथशाखं कामस्तुतिं पठेत्। [3][तत ॐ] अद्य कृतैतद्दानकर्मणः प्रतिष्ठार्थं तुभ्यमहं दक्षिणामेतत् काञ्चनं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा [धेनुं पुच्छे][4] गृह्णीयात्। मध्यमधेनुदाने भारद्वयपरिमितामुक-द्रव्यमयीं कनिष्ठधेनुदाने भारपरिमितामुकद्रव्यमयीमिति वाक्यमूहनीयम्। घृतजलक्षीरमधु-[5]दधीक्षुरस-नवनीत-तिलधेनुदानेषु गुडधेनुदानवाक्य एव धेनुचतुर्थांशगुडमयपदमपनीय कुम्भस्थधेनुचतुर्थांशामुकद्रव्यमयपदं वत्से[6] योजनीयम्। भारचतुष्टयपरिमितगुडमयीमिति-पदमपनीय कुम्भस्थेयत्परिमाणामुकद्रव्यमयीति पदं गुडधेनुपदञ्चापनीयामुकधेनुपदं धेनौ योज्यम्। एवं तिल-शर्करा[7]-लवण-सुवर्ण-धेनूनां दानवाक्ये धेनुचतुर्थांशामुकद्रव्यमयपदं[8] वत्से योज्यम्। इयत्परिमाणामुकद्रव्यमयीममुकधेनुमिति धेनौ विशेषः। स्वरूपधेनु-[9]दाने तु वस्त्रकांस्यपात्राभरणनानाफलव्यतिरिक्तानां घृतास्यत्वादीनां गुडधेन्ववयवत्वेनोपादानात्, स्वरूपधेनौ च तदनुपयोगात् स्वरूपधेनुदाने तेषां निवृत्तिः। तथा गुडधेनूक्तसमये[10] गोमयो-पलिप्तभूम्यास्तीर्णकुशोपरिस्थापितोक्तकृष्णाजिनद्वये धेनुवत्सौ प्राङ्मुखौ पृथक् पृथक् स्थापयित्वा सितसूक्ष्म-[11]वस्त्रावृतौ सौवर्णतिलकाद्यलङ्कृतौ कांस्यपात्रसहितौ च कृत्वा पार्श्वेषु यथालाभनानाफलानि दत्त्वाभ्यर्च्यार्चिताय ब्राह्मणाय ॐ[12] या लक्ष्मीरित्यादि पठित्वा ॐ अद्यादि तुभ्यमन्तमुक्त्वा[13] दद्यात्। मत्स्यपुराणोक्तस्वरूपधेनुदानफलप्राप्तिकामोऽहमेतां लघ्वेणकाजिनस्थसितसूक्ष्माम्बरावृतां सौवर्णाभरणां कांस्यदोहनां नानाफलोपेतां स्वरूपधेनुं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीपाठान्ते धेनुरियं रुद्रदैवतेति वदेत्। काम-

---

1 I. O. विद्रुमयुग, A युगल
2 I. O. धेनुरिदं
3 A omits the bracketed portion
4 A पुच्छं for the bracketed portion
5 A दृक्षु०
6 I. O. ०पदं वत्स, A ०पदवत्स
7 I. O. शर्कराचल
8 A ०पदवत्स
9 A ०स्थाने
10 A मय for समये
11 A ०वस्त्राभितौ
12 A omits it
13 A ०द्रत्युक्त्वा for ०मुक्त्वा

तुल्यादिस्त्रीकारान्तं पूर्ववत् । सुवर्णधेनु-[1]दाने तु वक्ष्यमाणाग्नेयपुराणोक्तसुवर्णधेनुपरिमाणमनुसन्धाय कर्तव्यम् ।

आग्नेयपुराणे राजोवाच ।

भगवन् श्रोतुमिच्छामि धेनुमाहात्म्यमुत्तमम् ।
यदक्षयफलं तासां [2][धेनूनां मुनिसत्तम ] ॥२५॥

वशिष्ठ उवाच ।

स व्याधो [3]दर्शनाद् यस्या राजाभूत् पुष्पवाहनः ।
तां प्रवक्ष्यामि राजेन्द्र सर्वपाप-[4]प्रणाशिनीम् ॥२६॥
गुडधेनुविधानञ्च [5][यद्रूपमिह यत् फलम् ] ।
कृष्णाजिनं चतुर्हस्तं प्रागग्रीवं विन्यसेद्भुवि ॥२७॥ (२१०।१३ख)
गोमयेनोपलिप्तायां दर्भानास्तीर्य्य सर्वतः ।
कृष्णं लध्वजिनं तद्वत् वत्सस्य परिकल्पयेत्[6] ॥२८॥ (२१०।१४)
प्राङ्मुखीं कल्पयेद्धेनुमुदङ्मुखं तु वत्सकम् ।
उत्तमा गुडधेनुः स्यात् सदा भारचतुष्टयम् ॥२६॥ (२१०।१५)
वत्सं भारेण कुर्वीत द्वाभ्यान्तु मध्यमा स्मृता ।
भारेण च कनिष्ठा च चतुर्थांशेन वत्सकः ॥३०॥ (२१०।१६)
धेनुवत्सौ [7]गुडस्योभौ सितवस्त्र-[8]समावृतौ ।
शुक्तिकर्णाविक्षुपादौ शुचिमुक्ताफलेक्षणौ ॥३१॥ (२१०।१८)
सितसूत्रशिरालौ तौ सितकम्बलकम्बलौ ।
ताम्रपात्रक[9]-पृष्ठौ तु सितचामररोमकौ ॥३२॥ (२१०।२०)
विद्रुमौष्ठ-[10]युगोपेतौ नवनीत-[11]स्तनान्वितौ ।
[12][क्षौमपुच्छौ कांस्यदोहाविन्द्रनीलकतारकौ ॥३३॥ (२१०।२१)

1 A °दानमस्तु
2 A reads the bracketed portion as धेनूना मुनिसत्तम:
3 I. O. दृष्नाद्
4 A °विनाशिनीं
5 A reads the bracketed portion as यदुक्तमिह फलम्
6 I. O परिकल्पनं
7 Corrected from A. P. I. O. तयान्यस्यौ, A तदा स्यात्
8 I. O. °भरावृतौ
9 I. O. °पत्रक°, A. P. गड्डुक°
10 A °युगान्वितौ A P. °श्रु युगान्वितौ
11 I. O. °स्तनान्वितौ
12 A omits the bracketed portion

नानाफलसमायुक्तौ घ्राणगन्धकरण्डकौ ।
इत्येवं रचयित्वा तु धूपदीपैस्तथार्चयेत् ॥३४॥

धूपदीपौ पूजाद्रव्यस्योपलक्षकौ ।]

या लक्ष्मीः सर्वभूतानां या च [1]देवेष्ववस्थिता ॥ (२१०।२३ख)
धेनुरूपेण सा देवी मम पापं व्यपोहतु ।
विष्णोर्वक्षसि या लक्ष्मीः स्वाहा या च विभावसोः ॥३५॥ (२१०।२५)
चन्द्रार्कयोश्च या लक्ष्मीर्धेनुरूपास्तु सा [2]श्रिये ।
चतुर्मुखस्य या लक्ष्मीर्या लक्ष्मीर्धनदस्य च ॥३६॥ (२१०।२६)
या लक्ष्मीर्लोकपालानां सा धेनुर्वरदाऽस्तु मे ।
स्वधा या पितृमुख्यानां स्वाहा यज्ञभुजामपि ॥३७॥ (२१०।२७)
सर्वपापहरा धेनुस्तस्माच्छ्रियं[3] प्रयच्छ मे ।
एवमामन्त्र्य तां धेनुं ब्राह्मणाय निवेदयेत् ॥३८॥ (२१०।२८)
[विधानमेतद्धेनूनां [4]सर्वासामिह पठ्यते][5] । (२१०।२९क)
यास्तु पापविनाशिन्यः पठ्यन्ते ताश्चतुर्दश ।
तासां स्वरूपं वक्ष्यामि नामानि च नराधिप ॥३९॥
प्रथमा गुडधेनुः स्याद् घृतधेनुस्तथापरा । (२१०।११क)
तिलधेनुस्तृतीया तु[6] चतुर्थी क्षीरमाभिका ॥४०॥
पञ्चमी मधुधेनुस्तु षष्ठी चैव तु शर्करा ।
सप्तमी लवणा धेनू रसधेनुस्तथाष्टमी ॥४१॥
प्रत्यक्षा[7] जलधेनुश्च नवमी दशमी तथा ।
[8][कुम्भाः स्युर्द्रवधेनूनामितरासान्तु] राशयः । (२१०।१३क)
नवमी तिलतैलेन गन्धैः प्रोक्तास्तथापराः ॥४२॥

---

1 A तीवसुवस्थिती
2 Corrected from A. P. I. O. श्रमे, A श्रिमि
3 I. O and A. P. ॰स्तस्मात्कान्तिं
4 I. O. स सर्व्वासामिह
5 A. P. reads the whole sentence as समानं सर्वधेनूनां विधानं चेतदेव हि
6 A ॰स्तृतीयास्तु, I. O. ॰स्तृतीया च
7 A प्रत्यक्ष
8 Corrected from A. P. A कुम्भास्तु रसधेनूनां द्रोणो नैव हि and I. O. कुम्भाः पूर...हि for the b. p.

सर्वाः समफलाः प्रोक्ता मध्यमोत्तमकन्यसाः[1] ।
स्वशक्तितो [2]नृपश्रेष्ठ दरिद्रस्य चतुर्गुणम् ॥४३॥

दरिद्रस्य चतुर्गुणमिति कनिष्ठधेनुदाने [3][दरिद्रस्य चतुर्गुण]-मुत्तमधेनु-[4]दानफलं भवतीत्यर्थः ।

सुवर्णधेनुश्चाप्यत्र [5]सुवर्णाश्च चतुर्दश ।
[6]कन्यसाश्चेश्वराणान्तु दरिद्राणां सदोत्तमाः ।।४४॥

ईश्वराणां सदोत्तमा दरिद्राणां [7]कन्यसा इति सम्बन्धः ।

अनिर्णिक्तसुवर्णस्य चतुर्भिः कन्यसा मता ।
एतदेव विधानं स्यात् सर्वेषान्तु यशस्करम् ॥४५॥
मन्त्रावाहन-[8]संयुक्ता सदा पर्वणि पर्वणि ।
[9]यथाश्रद्ध' प्रदातव्या भुक्तिमुक्तिफलप्रदाः ॥४६॥
गुडधेनुप्रसङ्गेन [सर्वास्त्वेवं मयोदिता][10] ।
अशेषयज्ञफलदाः सर्वपापहराः शुभाः ॥४७॥
अयने विषुवे पुण्ये व्यतीपाते तथा पुनः ।
गुडधेन्वादयो देया [11]उपरागादिपर्वसु ॥४८॥
कार्त्तिक्यान्तु तथा माघ्यां युगादिषु च पर्वसु ।
समुपोष्य नरो दद्यात् [सप्तम्यान्तु दिने रवेः ][12] ॥४९॥

सप्तम्यान्तु [13]दिने रवेरिति रविवारसहितायां सप्तम्यामित्यर्थः[14] ।

यथालाभं [15]यथाश्रद्धं दत्त्वा धेनुं यतव्रतः ।
दिनत्रयं तदाहारो याति विष्णोः परं पदम् ॥५०॥

---

1 A ०कन्यका:, I. O. ०कन्यसो:
2 A नरश्रेष्ठ
3 I. O. तद्गुण for the b. p.
4 A omits दान
5 I. O. and A सुवर्णाश्चतुर्दश
6 A कन्यसा०, I. O. कन्यसा मेघुरा-णान्तु
7 A कन्यसा
8 A ०संयुक्तं
9 I. O. and A यथाश्राद्ध'
10 I. O. reads the bracketed portion as सर्वासु च मयोदिता:
11 A उपरागादिपर्वासु, I. O. उप-वासादिपर्वसु
12 I. O. reads the bracketed portion as तत् सप्तम्यां नरेश्वरः
13 A omits it
14 I. O. सप्तम्यादित्यर्थः
15 A यथाश्राद्ध'

[1]तदाहार इति [2]धेनुद्रव्याहारः स्वरूपधेनोरभि-[3]मतगोरसाहार इत्यर्थः ।

इह लोके च सौभाग्यमायुरारोग्यमेव च ।
वैष्णवं लोकमाप्नोति मरणे स्मरणं हरेः ॥५१॥
दशार्बुदसहस्राणि दश चाष्टौ च धर्मवित् ।
न [4]शोकदुःखमाप्नोति दौर्गत्यं जायते न च ॥५२॥
इति पठति य इत्थं यः शृणोतीह [5]सम्यङ्
मधु-[6]मुरनरकारेरर्चनं वापि[7] पश्येत् ।
[8]मतिमपि च जनानां यो ददातीन्द्रलोके
[9]शतमपि विबुधौघैः पूज्यते कल्पमेकम् ॥५३॥

अत्रोक्तसमयानामन्यतमे गोमयोपलिप्तभूभागे कुशानास्तीर्य्य[10][तेषामुपरि[11] यथोक्तं कृष्णाजिनमास्थाप्य] तत्पार्श्वे तथैव [12]स्वल्पं कृष्णाजिनं प्रसार्य्य [13]चतुर्हस्ताजिने [14]यथाशक्त्युक्तपरिमाणाना-[15]मन्यतमपरिमाणद्रव्यमयीमुक्तोपकरणयुतां प्राङ्मुखीं धेनुमुपकल्प्य स्वल्पाजिनधेनुचतुर्थांशद्रव्यमयमुक्तोपकरणयुतमुदङ्मुखं वत्सं चोपकल्प्य सवत्सां धेनुमुक्तोपचारैः सम्पूज्यार्चिताय ब्राह्मणाय ॐ[16] या लक्ष्मीरित्यादि मन्त्रान् पठित्वा ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । आग्नेयपुराणोक्तगुडधेनुदानफलप्राप्तिकामोऽहमेतां [17]लघ्वेणकाजिनस्थधेनुचतुर्थांशगुडमयसितवस्त्र-[18]वरावृत-शुक्तिकर्णेक्षुपाद-मुक्ताफलेक्षण-सितसूत्र-[19]ग्रीव-सितकम्बलगलकम्बल-ताम्रपात्रकपृष्ठ--सितचामररोमक--विद्रुमौष्ठयुग--नवनीतस्तन--क्षौमपुच्छ -[20]कांस्योपदोहेन्द्रनील--तारक-नानाफलसमायुक्त-गन्धघ्राणवत्ससहितां [21]कृष्णाजिनस्थभारचतुष्टयपरिमितगुडमयीं सितवस्त्रवरावृतां शुक्तिकर्णामिक्षुपादां मुक्ताफलेक्षणां सितसूत्र-[22]शिरालां सितकम्बल-[23]गल-

---

1 I. O. तथाहार
2 A धेनुद्याहारः
3 I. O. ॰मतः पारसाहार
4 I. O. शोक॰
5 A सम्यक
6 A ॰पुर॰
7 I. O. वाहि
8 I. O. द्युतिमपि
9 A सतमपि, I. O. मतमपि
10 A omits the bracketed portion
11 I. O. तस्मे परि
12 A स्वर्ण
13 A चतुर्हस्ताजिन
14 I. O. यथाशक्त्या उक्त॰
15 A omits मन्यत
16 A omits it
17 A लघ्वेका॰
18 A ॰वराचिर्चत
19 I. O. ॰सिराल
20 A कांस्यदोह-इन्द्रनीलतारका
21 I. O. कृत्वा जिनस्थ॰
22 A omits शिराला
23 A omits गलकम्बलां

कम्बलां ताम्रपात्रकपृष्ठां सितचामररोमिकां विद्रुमौष्ठयुगां नवनीतस्तनीं क्षौमपुच्छां कांस्योपदोहामिन्द्रनीलतारकां नानाफलसमायुक्तां गन्धघ्राणां गुडधेनुं ददानि। [1]स्वस्त्यादिस्वीकारान्तं पूर्ववत्। [2]मध्यमधेनुदाने भारद्वयपरिमितामुकद्रव्यमयीं कनिष्ठधेनुदाने भारपरिमितामुकद्रव्यमयीमिति [3][भारचतुष्टयपरिमितामुकद्रव्यमयीमित्यस्य स्थाने वाक्ये विशेषः। घृतक्षीरमधुरसजलनवनीततैलधेनूनां दाने गुडधेनुदानवाक्य एव] भारचतुष्टयपरिमितगुडमयीमिति पदमपनीय [4]कुम्भस्थेयत्परिमाणामुकद्रव्यमयीमिति पदं [5]धेनौ योजनीयम्[6]। शर्करातिललवणधेनूनां दाने भारचतुष्टयपरिमितामुकद्रव्यमयीममुकधेनुमिति च पदं धेनावूहनीयम्। [7][चतुर्थांशगुडमयीपदमपनीय चतुर्थांशपरिमितामुकद्रव्यमयीपदञ्च वत्से योजनीयम्।] घृततिलधेनुदाने तु दानवाक्ये कामनायामियद्भारपरिमितघृतपदमियद्भारपरिमिततिलपदञ्च यथाक्रमन्निवेशनीयम्। सुवर्णधेनुदाने चतुर्दशसुवर्णान् यथाक्रममास्तीर्य्य कृष्णाजिने धेनुं तत्पार्श्वे च धेनुसुवर्णचतुर्थांशसुवर्णं स्वल्पकृष्णाजिने वत्सार्थं स्थापयित्वा यथोक्तोपकरणां सवत्सां धेनुं कृत्वा दद्यात्। दानवाक्ये आग्नेयपुराणोक्तसुवर्णधेनुदानफलप्राप्तिकामोऽहमेतां धेनुचतुर्थांशसुवर्णमयवत्ससहितां [8]चतुर्दशसुवर्णमयीं [9]धेनुमिति विशेषः। चतुःसुवर्णधेनुदान एतां चतुःसुवर्णमयीमिति विशेषः। स्वरूपधेनुदाने तु यथोक्तकृष्णाजिनद्वये प्राङ्मुखीं धेनुमुदङ्मुखञ्च वत्सं यथायथं स्थापयित्वा यथाशक्तियत्कृष्टवस्त्रेण सितेनाच्छाद्य कांस्यपात्रद्वयं दत्त्वा नानाफलानि च पार्श्वे दत्त्वाभ्यर्च्यार्चिताय ब्राह्मणाय या लक्ष्मीरित्यादि पठित्वा सवत्सां धेनुं ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। आग्नेयपुराणोक्तप्रत्यक्षधेनुदानफलप्राप्तिकामोऽहमेतां [10]लघ्वेणकाजिनस्थसितवस्त्रवरावृतकांस्यदोहन-नानाफलसहित-[11]वत्ससहितां कृष्णाजिनस्थां सितवस्त्रवरावृतां कांस्योपदोहनां नानाफलोपेतां धेनुं ददानि। प्रतिग्रहीता [12]स्वस्तीत्युक्त्वा सावित्रीपाठान्ते गौरियं रुद्रदैवतेति वदेत्। कामस्तुत्यादि पूर्ववत्। यदा च रविवारयुक्तसप्तम्यामाग्नेयपुराणोक्तगुडधेन्वादयो दीयन्ते, तदा दानदिनपूर्वतरदिने यजमानः कृतनित्यो घटिकाधिकप्रहर-[13]त्रये हविष्यं भुक्त्वाऽऽचम्य शुचौ देश उपविश्य [14]पादौ प्रक्षाल्याऽऽचम्य प्राङ्मुख उदङ्मुखो

---

1 I. O. अद्यादि०
2 A मध्यधेनुदाने
3 A omits the b. p.
4 I. O. कुम्भस्थयत्०
5 A वत्से
6 I. O. omits it
7 A omits the b. p.
8 I. O. omits चतुर्दश
9 I. O. सुवर्णधेनुमिति
10 A लघुकृष्णाजिन and omits स्थ
11 A omits it
12 I. O. स्वस्ति
13 A ०द्वय
14 A omits it

वा कृताञ्जलिः 'ॐ सूर्य्यः सोमो यमः कालः महाभूतानि पञ्च च। आग्नेयपुराणोक्त-[1]सवत्सामुकधेनुदानकर्म मया कर्तव्य'-मिति निवेद्य [2]गृहीतोदकपूर्णपात्र उदङ्मुखः सङ्कल्पं कुर्य्यात्। 'ॐ श्व [3]उपोष्यापरदिने आग्नेयपुराणोक्त-[4]सवत्सामुकधेनुदान-[5]कर्माहं करिष्ये'। ततो [6][नियमेन सुप्त्वा] परदिने [7]उपोष्यापरदिने स्नात्वा धेनुं दद्यात्। तत्र च दानवाक्ये आग्नेयपुराणोक्तसवत्सामुकधेनुदानफलप्राप्तिकामोऽहमेताममुक-[8]धेनुमिति विशेषः। सर्वदानेष्वेवैतेषु दानदिनादारभ्य दिनत्रयं यावत् धेनुद्रव्यमात्राहारस्तिष्ठेत्। स्वल्पधेनुदाने [9]त्वभिमतगोरसाहारः।

1 A सवत्सां and I. O. सोपवासामुक for सवत्सामुक
2 A गृहीतोपूर्णपात्र
3 A उपोष्य परदिने
4 I. O. and A सोपवासामुक०
5 A ०महं
6 I. O. मिवसुप्त्वा स for the bracketed portion
7 A उपोष्य परदिने
8 A ०धेनुं ददामि
9 A त्वभिमुतगोरसाहारः, I. O. ०दानेरभिमततगोरसाहारः

## तथा तिलधेनुदानम् ।

तिलधेनुं प्रवक्ष्यामि सर्वदुःखविनाशिनीम् ।
यां दत्त्वा न पुनर्भूयो भवे संप्रतिपद्यते ॥१॥
यां दत्त्वा ब्रह्महा गोघ्नः पितृहा गुरुघातकः[1] ।
आगारदाही गरदः सर्वपापरतोऽपि वा ॥२॥
महापातकयुक्तोऽसौ युक्तो यश्चोपपातकैः ।
पापशुद्धिव्रतं कृत्वा तिलधेनुं प्रयच्छति ॥३॥

पापशुद्धिव्रतं कृत्वेति यथेच्छप्राजापत्यादीनामन्य-[2]तमकृच्छ्रं कृत्वेत्यर्थः ।

अनुलिप्ते [3]महीपृष्ठे वस्त्राजिन-[4]समावृते ।
धेनुं तिलमयीं कृत्वा सर्वरत्नैरलङ्कृताम् ॥४॥
[5]स्वर्णशृङ्गीं सुवर्णेन पलरौप्येण वा खुराम् ।
गन्धघ्राणवतीं राजन् मिष्टान्न-[6]रसनां तथा ॥५॥

सुवर्णेन पलरौप्येण वा [7][खुरामिति सुवर्णेन कृतखुरां] [8]रौप्यपलनिर्मितखुरां वा ।

गुडास्यां कम्बलसूत्रामिक्षुपादाक्षिमौक्तिकाम् ।
पञ्चाशत्पलश्रवणां [9]द्वात्रिंशद्दन्तमूलकाम् ॥६॥

पञ्चाशत्पलानि यज्ञीयतरु-[10][सम्बन्धीनि प्राणानि] । [11][दन्तार्थं मूलका द्वात्रिंशत् प्राणाः] ।

स्रग्दामपुच्छां कुर्वीत नवनीतस्तनान्विताम् ।
फलैर्मनोरमैर्भक्ष्यैर्मणि[12]-विद्रुमभूषिताम् ॥७॥

---

1 A गुरुघातका:
2 A ०तमं
3 I. O. महीपृष्ठ:
4 A समावृत
5 A स्वर्णशृङ्गां
6 I. O. ०रसना
7 A खुरां for the bracketed portion
8 I. O. रूप्यपल०, A रूप्यफल०
9 A त्रिंशद् तु मूलकां
10 I. O. reads the bracketed portion as सम्बन्धानि पलानि
11 I. O. reads the bracketed portion as दन्तान् मूलकगुरुकान्वित् त्रिंशद्प्राणा: and A as दन्ता मूलकार्थं द्वात्रिंशद्प्राणा
12 A भक्ष्यैर्मणि०, I. O. दुग्धैर्मणि०

तिलद्रोणेन कुर्वीत [1]आढकेन तु[2] वत्सकम् ।
सितवस्त्र-[3]युगच्छन्नां चारुवस्त्रोपशोभिताम् ।
कांस्योपदोहनां [4]दद्यान्मन्त्रेणानेन बुद्धिमान् ॥८॥
तिलाश्च पितृदैवत्या निर्मिता-[5]श्चेह गोसवे ।
[6]ब्राह्मणांस्तन्मयीं धेनुं [7]केशवः प्रीयतामिति ॥९॥
एवं दत्त्वा महीपाल [8]पूर्वप्रोक्तान्महाभयात् ।
आत्मानं पुत्रपौत्रांश्च सर्वांस्तांस्तारयेत् खलु ॥१०॥
यश्च गृह्णाति राजेन्द्र दरिद्रो यज्ञकारणात् ।
पितॄन् सन्तारयेत् सर्वान् ददतश्चानुमोदकान् ॥११॥
[9]दीयमानान्तु पश्यन्ति दातुमिच्छन्ति ये नराः ।
सर्वपापविनिर्मुक्ता-[10][स्ते यान्ति परमां गतिम्] ॥१२॥

दानदिनात् [11][पूर्वतरदिने यथोक्त]-प्राजापत्यादीनामन्यतमं कृच्छ्रं[12] कृत्वा दानदिने गोमयोपलिप्तभूमौ वस्त्रमास्तीर्य्य तदुपरि कृष्णाजिनं प्रसार्य्य परिभाषोक्तद्रोणपरिमितांस्तिलान् कृत्वा परिभाषोक्त-[13]सर्वरत्नालङ्कृतां [14]स्वर्णशृङ्गाद्युपकरणसहितां तिलधेनुमुपकल्प्य तत्पार्श्वे तादृक्-[15]क्रमार्पितस्वल्पकृष्णाजिनधेनुचतुर्थांशतिलमयमुक्तोपकरणसहितं वत्समुप-[16]कल्प्यार्च्चितमर्च्चिताय ब्राह्मणाय ॐ तिलाश्चेति मन्त्रं पठित्वा ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । आग्नेयपुराणोक्ततिलद्रोणमयतिलधेनुदानफलप्राप्तिकामोऽहमेतां वस्त्राजिनस्थ-सर्वरत्नालङ्कृत-[17][सुवर्णशृङ्गसुवर्णखुर]-गन्धघ्राण-मिष्टान्नरसन-गुडास्य-सूत्रकम्बलेक्षुपाद-मौक्तिकाक्षि-पञ्चाशत्पलश्रवण-द्वात्रिंशन्मूलकदन्तस्रग्दामपुच्छनवनीतस्तनफलभद्दयान्वित-मणिविद्रुम-शोभित-सितवस्त्रयुग-

1 A माढकेन
2 I. O. च
3 A ०कुम०
4 I. O. दद्यान्मन्त्रे च
5 A ०श्चेतु गोरसा
6 A ब्राह्मणां तन्मयीं, I. O. ब्राह्मणा-स्तन्मयां
7 A केशव प्रियतामिति
8 A पूर्वप्रेतां महाभयायात्
9 A दीयमानन्तु, I. O. दीयमाना तु
10 I. O. reads the bracketed portion as स्तेऽपि यान्ति परां गतिं
11 A पूर्व यथेक्त
12 A omits this
13 A सर्व्वालङ्कृतां
14 A स्वर्णभृङ्गीम् उपकरण०
15 A क्रमार्पितासम्यक्
16 A ०कल्पितमर्च्चिताय
17 A reads the bracketed portion as सुवर्णसुखुर

च्छन्नचारुवस्त्रोपशोभितकांस्योपदोहन-धेनु-[1]चतुर्थांशतिलमयवत्ससहितां तिलधेनुं ददानि। ॐ केशवः प्रीयताम्। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। [2]रूप्यखुरधेनुदानवाक्ये तु वत्सविशेषण-सुवर्ण-[3]खुरपदस्थाने रूप्यखुरपदनिवेशः[1]। धेनुविशेषण-सुवर्णखुरामितिपदस्थाने रूप्यखुरामितिपदनिवेशनं विशेषः।

[5][इति तिलधेनुः]

1 A ०चतुर्थीं तिलमय०
2 A रूप्यखुरां ; I. O. रूप्यदूर०
3 A खुरापाद्रवस्थाने
4 A निवेश
5 A omits the bracketed portion

## तथा घृतधेनुदानम् ।

घृतधेनुं प्रवक्ष्यामि तन्मे निगदतः शृणु ।
[1]तिलाभावे नृपश्रेष्ठ समुपोष्य यतव्रतः ॥ १॥
[2][वासुदेवं जगन्नाथं] घृतक्षीरादिना शुभम् ।
सम्पूज्य विधिवद्भक्त्या तथा कृत्वा [3]घृताचिषम् ॥२॥
गव्यस्य सर्पिषः [4][कुम्भं पुष्पमाल्यविभूषितम्] ।
[5]कांस्यापिधानं कुर्वीत सितवस्त्रयुगेन वा[6] ॥३॥
[7]सुवर्णेन च शृङ्गे द्वे मौक्तिकाक्षी [8]सुविद्रुमैः ।
[9]ओष्ठाविक्षुमयान् पादान् कलधौत-[10]पलेन वा ॥४॥

[11]सुवर्णेन च [12][शृङ्गे द्वे] शृङ्गे चागुरुकाष्ठजे[13] इति च श्रुतेः सुवर्णपलावृतागुरु-[14]काष्ठशृङ्गी, मौक्तिकाक्षी सौवर्णे वाक्षिणी इति च श्रुतेः [15]मुक्तागर्भसुवर्णयुक्ताक्षी धेनुः कार्य्या । [16]सुविद्रुमैरोष्ठाविति सम्बन्धः । कलधौतपलेन वेति रौप्यपलकृतखुरा ।

सौवर्णे वाक्षिणी कुर्य्याच्छृङ्गे [17]चागुरु-[18]काष्ठजे ।
[19]सप्तधान्यमये पार्श्वे शशिघ्राणां फलस्तनीम् ॥५॥

सप्तधान्यानि परिभाषोक्तानि । शशिघ्राणां [20]गन्धमयघ्राणाम् ।

1 A तिलद्रोणं
2 I. O. reads the b. p. as वासुदेव जगन्नाथ
3 I. O. कृताञ्चिता
4 A reads the b. p. as कुम्भः पुष्पमाल्यविभूषितः
5 A कांस्यापिधानं, I. O. कांस्योपधानं
6 I. O. च
7 A सौवर्णेन
8 I. O. सुविद्रुमैः
9 A ओष्ठाविक्षुमयान, I. O. ओष्ठाविक्षुमयान्
10 A ०पदेन वा, I. O. ०पलेन च
11 A सौवर्णेन
12 A omits the bracketed portion
13 I. O. reads ०गुरुकाष्ठिजे, and omits च after इति, A ०गुरुकाम्बोज
14 A ०काम्बोजशृङ्गी, I. O. ०काष्ठशृङ्ग
15 A मुक्तागजस्थचन्द्रसताक्षी
16 A सविद्रुमैरोष्ठमिति, I. O. सविद्रुमैरोष्ठाविति
17 I. O. चागुरु०
18 A ०काम्बोज
19 I. O. सप्तैतान्यमये
20 I. O. कर्म्मरसमघ्राणां

तद्वच्छर्करया जिह्वां गुडक्षीरमयं मुखम् ।
कम्बलं क्षौमलाङ्गूलं रोमाणि सितसर्षपैः ॥६॥

कम्बलं क्षौमलाङ्गूलमिति क्षुमाभववस्त्रं गलकम्बलं लाङ्गूलञ्चेति सम्बन्धः ।

ताम्रपात्रमयं पृष्ठं दद्याद्धेनुं नराधिप ।
[1][तद्वद्वत्सञ्च विप्राय प्रीणयेच्च घृतार्चिषम्] ॥७॥
[2]एतां ममोपकाराय गृह्णीष्व त्वं द्विजोत्तम ।
प्रीयतां मम देवेशो घृतार्चिः पुरुषोत्तमः ॥८॥
या देव्योऽमृतवाहिन्यो घृतक्षीरवहाः शुभाः ।
गवां लोकनिवासिन्य-[3]स्ता मां रक्षन्तु दुष्कृतात् ॥९॥
[4]इत्युदाहृत्य विप्राय दद्याद्धेनुं नराधिप ।
[5]दत्त्वैकरात्रं विप्राय घृताहारः फलं शृणु ॥१०॥
घृतक्षीरवहा नद्यो यत्र पायसकर्दमाः ।
त्रिषु लोकेषु पुण्येषु पुण्यक्षेत्रेषु जायते ॥११॥
पितुरूर्द्ध्वं [6][च ये] सप्त पितरस्तस्य येऽप्यधः ।
तांस्तेषु नृप लोकेषु स [7]नयेयुक्रमङ्गलः ॥१२॥
सकामानामियं [8]व्युष्टिः कथिता नृपसत्तम ।
निष्कामोऽपि [9][परं याति] विष्णुलोकमनामयम् ॥१३॥

अभीष्टपुण्य-[10]दिनात् पूर्वतरदिने कृतनित्यः पूर्ववद्धविष्यभोजनादिकं कृत्वा सूर्य्यादिदेवताभ्यः सोपवासाग्नेयपुराणोक्तवासुदेवघृतक्षीराभिषेकपूजाहोमपूर्वकदानोत्तरघृताहारसहितं घृतधेनुदान-कर्म निवेद्य सङ्कल्पं कुर्य्यात् । ॐ श्व [11]उपोष्यापरदिने वासुदेवघृत-[12]क्षीराभिषेकपूजाहोम-पूर्वकदानोत्तरैकदिनघृताहारत्वसहितमाग्नेयपुराणोक्तघृतधेनुदानकर्माहं करिष्ये । ततो नियमेन

1 A reads the bracketed portion as तद्वद्वत्सञ्च विप्राय प्रणयेच घृतार्चिषं and I. O. as तावद्वत्सञ्च वैप्रायां घ्रापयेत् घृतार्चिषं
2 I. O. and A यथा
3 I. O. ०ताश्च
4 I. O. इत्युक्त्वा च
5 I. O. दत्त्वैकरात्रिं
6 I. O. reads the bracketed portion as नमे
7 A नयेत्सुतमङ्गलः
8 A वृष्टिः
9 I. O. reads the bracketed portion as वरं याचि
10 I. O. ०विदिनात्
11 A उपोष्य परदिने
12 A क्षीरस्नपन०

सुप्त्वाऽपरदिने कृतनित्य उपोष्यापरदिने प्रातः स्नात्वा वासुदेवप्रतिमां घृतक्षीराभ्यां [1]स्नापयित्वा यथाशक्ति घृतार्चिषे नम इति [2]सम्पूज्याग्निमुपसमाधाय ॐ घृतार्चिषे स्वाहेत्याज्यं हुत्वा शूद्रो ब्राह्मणद्वारा होमं कारयित्वा [3]गोमयोपलिप्तभूभागे घृतकुम्भं पुष्पमालालङ्कृतं [4]स्थापयित्वा घृतधेनुमुक्तोप-[5]करणयुतामुपकल्प्य [6]तच्चतुर्थांशेन घृतेन उक्तोपकरणसहितं धेनुपार्श्वे [7][वत्स-मुपकल्प्य सवत्सां] [8]धेनुमर्चिताय ब्राह्मणाय ॐ एतां[9] ममोपकारायेति श्लोकद्वयं पठित्वा ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। आग्नेयपुराणोक्तकुम्भपरिमितधेनुदानफलप्राप्तिकामोऽहमेतां धेनुचतुर्थांशकुम्भस्थघृतमय[10]-पुष्पमाल्यभूषित--[11]कांस्यापिधान-सितवस्त्रयुगाच्छादितसुवर्णावृता-गुरुकाष्ठश्रृङ्गमौक्तिकसहितसौवर्णाक्षि---[12]युगविद्रुमौष्ठ -[13]युगेक्षुरौप्यपलकृतपादसप्तधान्यपार्श्वक-[14]गन्धघ्राण-फलस्तनशर्कराजिह्व-गुडक्षीरमुखक्षौमगलकम्बललाङ्गूलसितसर्षपरोमक-ताम्र-[15]पात्र-क[16]पृष्ठवत्ससहितां घृतकुम्भमयीं पुष्पमाल्यविभूषितां [17]कांस्योपदोहां सितवस्त्रयुगच्छन्नां सुवर्णावृतागुरुकाष्ठश्रृङ्गीं मौक्तिक [18]सहितसुवर्णाक्षियुगां विद्रुमौष्ठीमिक्षुरौप्य-[19]पलपादां सप्तधान्यपार्श्वां [20]गन्धघ्राणां फलस्तनीं शर्कराजिह्वां गुडक्षीरमुखीं क्षौमगलकम्बललाङ्गूलां सितसर्षपरोमकां ताम्रपात्रपृष्ठां घृतधेनुं ददानि। घृतार्चिः प्रीयताम्। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। ततो यजमानो [21]घृतमात्रेण पारणं कृत्वा तमहोरात्रं नियतः [22]क्षपेत्।

महाभारते (अनु—५७।३०=वन—१८६।१३):—

सुदक्षिणां काञ्चनचारुश्रृङ्गीं कांस्योपदोहां द्रविणोत्तरीयाम्।
धेनुं तिलानां [23]ददतां द्विजाय लोका वसूनां सुलभा भवन्ति ॥१४॥

द्रविणोत्तरीयामिति यथाशक्ति-[24]सुवर्णाञ्चलवस्त्रावृतामित्यर्थः। अत्र परिमाणविशेषा-

---

1 A स्नपयित्वा
2 I. O. सम्पूज्याग्निं॰
3 A गोमयलिप्त॰, I. O. गोमयोपलिप्त॰
4 A स्नपयित्वा
5 A ॰करणामुपकल्प्य
6 I. O. तच्चतुर्थभागेन
7 A reads the bracketed portion as सुपकल्प्य
8 I. O. धेनुसहितामर्चिताय
9 I. O. and A यथा
10 A omits मय
11 A कांस्याभिधान I. O. कांस्योपधान
12 A omits युग
13 A reads द्रुमौष्ठ and omits युगेक्षु
14 A कर्पूर॰
15 I. O. पात्र॰
16 A वासमन्विता
17 I. O. कांस्योपधानां
18 A सहितां
19 A omits पल
20 A घ्राणां, I. O. कर्पूरघ्राणां
21 I. O. घृतेन पारणां
22 I. O. क्षिपेत्
23 I. O. ददतो
24 A सुवर्णाञ्चवस्त्रावृतामित्यर्थः, I. O. सुवर्णकर्माञ्चलवस्त्राच्छन्नामित्यर्थः

श्रुतेरपेक्षायां मत्स्यपुराणोक्ततिलधेनुपरिमाणग्रहो बोद्धव्यः । [1]मत्स्यपुराणीयतिलधेनूक्त-परिमाणानामन्यतमपरिमाणतिलराशिमयीं तिलधेनुमुक्तोपकरणयुतामर्चितामर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । महाभारतोक्ततिलधेनुदान-[2]फलप्राप्तिकामोऽहमेतां [3]तिलराशिमयीं [4]काञ्चनशृङ्गीं कांस्योपदोहां द्रविणोत्तरीयां तिलधेनुं ददानि । स्वस्त्यादि-स्वीकारान्तं पूर्ववत् । सुदक्षिणामिति श्रवणाच्चात्र यथाशक्ति [5]बहुदक्षिणादानम् ।

[6][ इति घृतधेनुः । ]

1 A reads यथाशक्ति before this
2 A omits फल
3 A omits it
4 I. O. सुवर्णशृङ्गीं
5 A बहु for बहु
6 I. O. reads the bracketed portion after विष्णुधर्म below and A omits it

# विष्णुधर्मोक्तधेनुदानानि।

## अथ जलधेनुदानम्।

विष्णुधर्मे :—

जलधेनुं प्रवक्ष्यामि प्रीयते दत्तया [1]यया।
देवदेवो हृषीकेशः [2]सर्वेशः सर्वभावनः ॥१॥
जलकुम्भं नरव्याघ्र सुवर्णरजतान्वितम्।
[3][रत्नगर्भं सतोयन्तु ग्राम्यधान्य]-समन्वितम् ॥२॥
सितवस्त्रयुगच्छन्नं दूर्वापल्लवशोभितम्।
कुष्ठमांसीमुरोशीर-[4]बालकामलकैर्युतम् ॥३॥
प्रियङ्गुपत्रसहितं सितयज्ञोपवीतिनम्।
सच्छत्रोपानहञ्चैव दर्भविष्टरसंस्थितम् ॥४॥
चतुर्भिः [5]संवृतं भूयस्तिल-[6]पात्रैश्चतुर्दिशम्।
[7]पिहितं दधिपात्रेण घृतक्षौद्रवता [8]मुखे ॥५॥
उपोषितः समभ्यर्च्य वासुदेवं जनेश्वरम्।
पुष्पधूपोप-[9]चारैस्तु यथाविभवमादृतः[10] ॥६॥
सङ्कल्प्य जलधेनुञ्च कुम्भं तमभिपूज्य च।
पूजयेत् वत्सकं तद्वत् कृतं [11]घृतमयं बुधः ॥७॥

जलधेनुं सङ्कल्प्य [12]सम्यङ् निर्माय इत्यर्थः।

एवं [13][पूज्य च] गोविन्दं जलधेनुं [14]सवत्सकाम्।
[15][सितवस्त्रधरः शान्तो वीतरागो विमत्सरः] ॥८॥

---

1 I. O. मया
2 I. O. सर्व्वश:
3 I. O. reads the bracketed portion as रत्नगर्भमशेषेस्तु ग्राम्यधान्यै:
4 A ०कनकामलकोयुतां
5 I. O. संस्थिता भूप तिल०
6 A पत्रै०
7 I. O. स्थगितं
8 A मुखं
9 I. O. ०हारैस्तु
10 A ०वृत:
11 I. O. कृतमयं
12 A सम्यक निर्मय
13 I. O. सम्पूज्य for the b. p.
14 A सवतसिकां, I. O. सवत्सकं
15 A omits the b. p.

दद्याद्विप्राय राजेन्द्र प्रीत्यर्थं जलशायिनः ।
जलशायी जगद्योनिः प्रीयतां मम केशवः ॥६॥
इति चोच्चार्य्य भूनाथ विप्राय प्रतिपाद्य ताम् ।
[1][अपक्वान्नाशिना स्थेय]-महोरात्रमतःपरम् ॥१०॥
अनेन विधिना दत्त्वा जलधेनुं नराधिप ।
सर्वान् कामानवाप्नोति ये [2]दिव्या ये च [3]मानुषाः ॥११॥
शरीरारोग्यमाबाधाप्रशमः सर्वकामिकः ।
नृणां भवति दत्तायां [4]जलधेन्वां न संशयः ॥१२॥
आह्लादहेतुजननं [दानानां नास्ति][5] तादृशम् ।
[6]जलधेनुर्यथा नृणां जन्मान्येकोन-[7]विंशतिम् ॥१३॥
न [8][च दाहो न चैवार्त्ति]-र्न मोहो विप्रजायते ।
अपि जन्मसहस्रेषु जलधेनुप्रदायिनाम् ॥१४॥
एकजन्मकृतं वाञ्छा त्रिजन्मोत्थं समाहृता ।
सप्तजन्मकृतं पापं हन्ति दत्ताम्बुगौर्नृणाम् ॥१५॥

वाञ्छा जलधेनुदानेच्छामात्रम् एकजन्मकृतं पापं हन्ति समाहृता [9]सम्भृतीकृता जन्मत्रयकृतं पापं हन्ति इति [10]स्तुतिः । [11]दानदिनपूर्वेतरदिने पूर्ववद्[12] हविष्यभोजनादिकं[13] कृत्वा [14]सूर्य्यादिदेवताभ्य उपवासपूर्वकं विष्णुधर्मोक्तवासुदेवपूजापूर्वक-[15]जलधेनुदानकर्म मया कर्तव्यमिति निवेद्य सङ्कल्पं [16]कुर्य्यात् । ॐ श्व [17]उपोष्यापरदिने वासुदेवपूजापूर्वकदानोत्तरापक्वान्नाशनसहितजलधेनुदानकर्माहं करिष्ये । ततो नियमेन सुप्त्वा परदिने उपोष्यापरदिने प्रातः स्नात्वा श्वेतवस्त्रः प्रशान्तचित्तो [18]यथोक्तोपचारैर्वासुदेवम्'ॐ जलशायिने केशवाय नमः'

---

1 A अगम्राश्निस्तेय for the b. p.
2 I. O. देव्या
3 A मानवा:
4 A जलधेनुस्संशय:
5 I. O. reads the bracketed portion as नास्ति विप्रेन्द्र
6 A जलधेनुं यथा
7 I. O. ०सप्तति
8 I. O. reads the bracketed portion as दाहो न क्लमो नार्त्ति
9 I. O. सं only
10 I. O. श्रुते:
11 I. O. दानदिनपूर्वेद्युः; A दानपूर्व-तरदिने
12 A omits it
13 I. O. हविष्याहारादि
14 A सूर्यादिदेवता
15 A omits जलधेनुदान
16 A कुर्यु:
17 A उपोष्य परदिने
18 A omits यथोक्त

इति सम्पूज्य यथोक्तरूपां जलधेनु[1] जलचतुर्थभागघृतमयवत्ससहितामुपकल्प्यार्चिताम[2]-र्चिताय ब्राह्मणाय ॐ जलशायीत्यादि मन्त्रं पठित्वा ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णु-धर्मोक्तजलधेनुदानफलप्राप्तिकामोऽहमेतां सुवर्णरजतान्वित-रत्नगर्भ-ग्राम्यधान्यसहित-सितवस्त्र-युगच्छन्न--दूर्वापल्लवशोभित-कुष्ठमांसीमुरोशीरबालकामलकप्रियङ्गु--[3]पत्रसहित--[4]सितयज्ञोपवीति--सच्छत्रोपानत्क[5]-दर्भविष्टरस्थ-तिल-[6]पूर्णपात्रचतुष्टय-[7]युत--[8]घृतमधुसहितदधि-[9]पात्रपिहितानन--धेनुचतुर्थांश-[10]घृतमयवत्ससहित-सुवर्णरजतान्वित-[11]रत्नगर्भ-ग्राम्यधान्यसहित-[12]सितवस्त्रयुग--च्छन्न--दूर्वापल्लवशोभित-कुष्ठमांसी-[13]मुरोशीरबालकामलकप्रियङ्गुसहित-सितयज्ञोपवीति--सच्छत्रो-पानत्क[14]--दर्भविष्टरस्थ--तिलपूर्णपात्रचतुष्टययुत[15]-घृतमधु--[16]युक्तदधिपात्रपिहिताननजलकुम्भ-मयीं जलधेनुं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। ततो यजमानोऽपक्वान्नेन कृतपारणो नियतस्तमहोरात्रं नयेत्।

[17][इति जलधेनुः।]

---

1 A omits it
2 A omits र्चिताम
3 I. O. पद्म for पत्र
4 A श्रितयज्ञोपवीत॰ I. O. यज्ञोपवीत॰
5 A ॰सच्छत्रोपानतयुक्त
6 A पूत्र for पूर्णपात्र
7 A यद्युत्
8 I. O. मधुसहित before this
9 A पात्रपिहितासन; I. O. पात्रा-पिहित
10 A पिहित for घृत
11 I. O. वत्स for रत्न
12 A omits सित
13 A omits मुरोशीर
14 I. O. ॰सच्छत्रोपानक
15 A omits युत
16 A दधियुक्त॰
17 A omits the bracketed portion

## अथ तिलधेनुदानम् ।

तथा :—

तिलधेनुं प्रवक्ष्यामि केशवप्रीणनं [1]परम् ।
[2][दत्ता या स्याद् यथा चास्या नरेन्द्र] विधिरुत्तमः ॥१॥
यां दत्वा [3]ब्रह्महा गोघ्नः पितृघ्नो गुरुतल्पगः ।
[4]आगारदाही गरदः सर्वपापयुतोऽपि च[5] ॥२॥
महापातकयुक्तो वा [6]युक्तो वाप्युपपातकैः ।
[7]स मुच्यतेऽखिलैः पापैर्विष्णुलोकञ्च गच्छति ॥३॥
[8]अनुलिप्ते महीपृष्ठे वस्त्राजिनसमावृते ।
धेनुं तिलमयीं कृत्वा सर्वरत्नैः समन्विताम् ॥४॥

अजिनं कृष्णमृगाजिनम् ।

स्वर्णशृङ्गीं रूप्यखुरां गन्धघ्राणवतीं शुभाम् ।
मिष्टान्नजिह्वां कुर्वीत [9]गुडास्यां सूत्रकम्बलाम् ॥५॥

सूत्रकम्बलामिति सूत्रमय-[10]गलकम्बलाम् ।

इक्षुपादां ताम्रपृष्ठां कुर्यान्मुक्ताफलेक्षणाम् ।
प्रशस्तपत्रश्रवणां [11][फलदन्तां[12] मनोहराम् ] ॥६॥

[13][प्रशस्तपत्रं यज्ञीयतरुपत्रम् । ]

स्रग्दामपुच्छां[14] कुर्वीत नवनीतस्तनान्विताम् ।
फलैर्मनोहरैर्भक्ष्यैर्मणिमुक्ताफलान्विताम् ॥७॥

---

1 I. O. परं, A तथा
2 A reads the bracketed portion as यत्त, यास्यायथा वा स्यान्नरेन्द्र
3 A ब्राह्मणा
4 I. O. भगारदाही
5 I. O. वा
6 I. O. युतो
7 A समुत्खपाताखिलै:
8 A स्वर्ण०, I. O. मय०
9 A गुडस्यां
10 A ०गलकम्बला, I. O. ०गुडकम्बलां
11 I. O. reads the bracketed portion as फलदन्तवतीं शुभां
12 A फलदां
13 A omits the bracketed portion
14 I. O. ०पुच्छां

तिलद्रोणेन कुर्वीत आढकेन तु वत्सकम् ।
[1][वरवस्त्रयुगच्छन्नां चारुच्छत्र]-समन्विताम् ॥८॥
ईदृक्संस्थानसम्पन्नां कृत्वा श्रद्धासमन्वितः ।
कांस्योपदोहनां दद्यात् केशवः प्रीयतामिति ॥९॥
सम्यगुच्चार्य्य विधिना दत्त्वैतेन नराधिप ।
सर्वपापविनिर्मुक्तः पितरं स पितामहम् ॥१०॥
[2]प्रपितामहं तथा पूर्वपुरुषाणां चतुष्टयम् ।
आत्मानं [3]तनयं पौत्रं प्रपौत्रं तदधस्त्रयम् ।
तारयेदवनीपाल तिलधेनुप्रदो नरः ॥११॥
यश्च गृह्णाति विधिवत् तस्यापि त्रिविधं फलम् ।
चतुर्दश [4]तथा ये च ददतश्चानुमोदकाः ॥१२॥
दीयमानां प्रपश्यन्ति तिलधेनुञ्च ये नराः ।
[5]तेऽप्यघौघविनिर्मुक्ताः प्रयान्ति परमां गतिम् ॥१३॥
प्रशान्ताय सुशीलाय तथाऽमत्सरिणे बुधः ।
तिलधेनुं नरो दद्यात् वेदस्नाताय धर्मिणे ॥१४॥

[6]वेदस्नाताय कृतसमस्तशाखाध्ययनाय धर्मिणे स्वधर्मानुष्ठायिने ।

त्रिरात्रं यस्तिलाहारस्तिलधेनुं प्रयच्छति ।
[7]दत्त्वैकरात्रञ्च नरस्तिलानत्ति नरेश्वर ॥१५॥
[8]दानाद्विशुद्धपापस्य तस्य पुण्यवतो नृप ।
[9]चान्द्रायणादप्यधिकं शस्तं तत्तिलभक्षणम् ॥१६॥

[10]अत्र पूर्वोत्तरदानयोर्वासुदेवपूजाश्रुतेरत्रा-[11][पि केशव]-प्रीतिश्रुतेश्च केशवपूजा कर्तव्या । दानदिनपूर्वचतुर्थदिने प्रातः स्नात्वा [12]गृहीतोदकपूर्णताम्रपात्र उदङ्मुखः सङ्कल्पं कुर्य्यात् । ॐ

1 A reads the bracketed portion as सुवर्णयुगमच्छला' चारुपुच्छ
2 I. O प्रपितामहे
3 A तरयम्
4 A यथा
5 I. O. तेप्यशेषाघनिर्मुक्ताः
6 A वेदस्नामाय
7 I. O. दत्तैकरात्रिञ्च
8 I. O. दानाद्विशुद्धपापस्य
9 I. O. द्वन्द्राय पाद्दधिकं
10 I. O. दान
11 I. O. reads the bracketed portion as पिके एव
12 I. O. and A गृहीतोदपूर्ण०

अद्यादि [1]त्रिरात्रतिलाहाररूप-[2]प्राच्याङ्गदानदिनतिलाहाररूपोदीच्याङ्ग[3]-सहितं विष्णुधर्मोक्त-तिलधेनुदानकर्माहं[4] करिष्ये। ततस्तद्दिनमारभ्य त्रिरात्रं तिलाहारो भूत्वा चतुर्थदिने प्रातः स्नात्वा ॐ केशवाय नम इति यथाशक्त्युपप-[5]चारैर्वासुदेवं [6]सम्पूज्योक्तरूपां तिलधेनुमर्चिताय उक्तरूपाय ब्राह्मणाय ॐ केशवः प्रीयतामित्युच्चार्य्य ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोक्ततिलधेनुदानफलप्राप्तिकामोऽहमेतामास्तीर्णवस्त्राजिनस्थतिलाढकमय--सर्वरत्नालङ्कृत-सुवर्णशृङ्ग-रूप्यखुर-गन्धघ्राण-मिष्टान्नजिह्व-गुडास्य--सूत्रमयगलकम्बलेक्षुपाद--ताम्रपृष्ठ-मुक्ताफले-क्षण--प्रशस्तपत्रश्रवण-[7]फलदन्त--स्रग्दामपुच्छ--नवनीतस्तन-[8]फलमूलरत्नमुक्तान्वितवत्ससहिता-मास्तीर्ण[9]-वस्त्राजिनस्थतिलद्रोणमयीं सर्वरत्नालङ्कृतां [10]सुवर्णशृङ्गीं रूप्यखुरां [11]गन्धघ्राणां मिष्टान्न-जिह्वां गुडास्यां सूत्र-[12]गलकम्बलामिक्षुपादां ताम्रपृष्ठां मुक्ताफलेक्षणां प्रशस्तपत्रश्रवणां [13]फल-दन्तां स्रग्दामपुच्छां नवनीतस्तनीं वस्त्रयुगच्छन्नां फलमूलरत्नमुक्ता-[14]फलच्छत्रकांस्योपदोहनान्वितां धेनुं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। ततो यजमानस्तिलमात्राहार-[15]स्तद्दिनं नयेत्

---

1 A omits त्रिरात्र
2 I. O. प्राच्यङ्ग॰
3 A ॰द्दियाङ्ग and I. O. ॰द्दियाङ्ग
4 A ॰दानमहं
5 I. O. ॰वासमरै॰ for ॰चारै॰
6 I. O. पूर्वोक्तरूपां
7 I. O. फलदन्त॰
8 I. O. रत्नमुक्ताफलान्वित॰
9 I. O. and A ॰मास्तीर्य
10 A omits it
11 I. O. omits it
12 A omits गल
13 A omits it
14 I. O. ॰फलान्वितां for ॰फलच्छत्र
15 A ॰स्तं दिनं

# अथ घृतधेनुदानम् ।

तथा :—

तिलाभावे तथा दद्याद् घृतधेनुं [1]यतव्रतः ।
येन भूप विधानेन तदिहैकमनाः शृणु ॥१॥
वासुदेवं जगन्नाथं घृतक्षीराभि-[2]षेचितम् ।
सम्पूज्य पूर्ववत् [3]पुष्पगन्धधूपादिभिर्नरः ॥२॥

पूर्ववदिति भक्त्याद्यतिशयेनेत्यर्थः ।

अहोरात्रोषितो [नाम्ना अभिस्तूय][4] घृतार्चिषम् ।

अहोरात्रोषितः सन् घृतार्चिर्नाम्ना ॐ घृतार्चिषे नम इत्येवं गन्धपुष्पादिभिर्वासुदेवप्रतिमां घृतक्षीरस्नपन-[5]पूर्वकमभ्यर्च्य [ येन केनचिद् वैष्णवेन स्तवेन][6] स्तुत्वेत्यर्थः ।

[7]गव्यस्य सर्पिषः कुम्भं पुष्पमालाविभूषितम् ॥३॥
कांस्योपदोहसंयुक्तं सितवस्त्रयुगेन च ।
[8][हिरण्यगर्भसहितं मणिविद्रुममौक्तिकैः ॥४॥
इक्षुयष्टिमयान् पादान् खुरान् रूप्यमयांस्तथा ।
सौवर्णे चाक्षिणी कुर्याच्छृङ्गे चागुरुकाष्ठजे ॥५॥
सप्तधान्यमये पार्श्वे पत्रोर्णं वापि कम्बलम् । ]
कुर्यात्तुरुष्ककर्पूरैर्घ्राणं [फलमयांस्तनान् ][9] ॥६॥

पत्रोर्णं [10]धौतकौशेयवस्त्रं कम्बलं [11]गलकम्बलं तुरुष्कः [12]सिह्लकः ॥

---

1 A प्रयतः
2 A °षेचन°
3 A पुष्प' गन्धपुष्पादिभिन्नर:
4 I. O. reads the bracketed portion as रात्रावभिस्तूय
5 A omits it
6 I. O. येनकेनविद्वैष्णवेन स्तुवेन for the bracketed portion
7 I. O. समस्तस्य
8 A omits the bracketed portion
9 I. O. फलमयीँस्तनान् and A फलमयान् स्तनान for the bracketed portion
10 A धौतकौषेयवस्त्र', I. O. धौतकौशकारकर्पट:
11 I. O. गजकम्बल
12 A सिन्दुक'

तद्वच्छर्करया जिह्वां गुडक्षीरमयं [1]मुखम् ।
क्षौमसूत्रेण लाङ्गूलं रोमाणि सितसर्षपैः ।
ताम्रपात्रमयं पृष्ठं कुर्य्यात् श्रद्धासमन्वितः ॥७॥
ईदृक्स्वरूपां सङ्कल्प्य घृतधेनुं नराधिप ।
तद्वत्कल्पनया धेन्वा घृतवत्सं प्रकल्पयेत् ॥८॥

सङ्कल्प्येति सम्यक् कल्पयित्वा [2]सम्भृतीकृत्येत्यर्थः ।

[3]तं विप्रन्तु [4]समानाय्य मनसैव [5]घृतार्चिषम् ।
कल्पयित्वा [6]ततस्तस्मै प्रयतः प्रतिपादयेत् ॥९॥
एतां ममोपकाराय गृह्णीष्व त्वं द्विजोत्तम ।
प्रीयतां मम देवेशो घृतार्चिः पुरुषोत्तमः ॥१०॥
इत्युदाहृत्य विप्राय देयाद्धेनुं नराधिप ।
घृतवस्त्रसुवर्णानां सम्यक् कल्पनया कृतम् ॥११॥

घृतं सम्यङ्निरूपितं [7]घृतवत्सधेन्वादि दोषरहितं [8][वस्त्रमुत्कृष्टं केशरादिरहितं] सुवर्णं सर्वोत्कृष्टं [9]न्यायार्जितमुपादाय निर्मितमित्यर्थः ।

दत्त्वैकरात्रं स्थित्वा च घृताहारो नराधिप ।
मुच्यते सर्वपापेभ्यस्तदा दानफलं शृणु ॥१२॥
घृतक्षीरवहा नद्यो यत्र पायसकर्दमाः ।
[10][तेषु लोकेषु लोकेश [11]पुण्यक्षेत्रेषु जायते] ॥१३॥
[12]पितुरूर्द्ध्वं नयेत् सप्त[चावरानपि सप्त च][13] ।
तांस्तेषु नृप लोकेषु स नयत्यन्तकल्मषः ॥१४॥
सकामानामियं व्युष्टिः कथिता नृपसत्तम ।
[14]विष्णोर्लोकं नरा यान्ति [15]निष्कामघृतधेनुदाः ॥१५॥

1 A शुभं
2 A सम्भृतिकल्पयेथ:
3 I. O. तन्तु विप्रं
4 A समामाद्य
5 I. O. घृतार्चिषः, A घृतार्चितं
6 A ततस्तस्यै
7 I. O. घृतवत्समाभिरन्नादिदोषरहितं
8 I. O. शुद्धं for the bracketed portion.
9 I. O. न्यायार्जितमुपायविनिर्मिता-मित्यर्थः
10 I. O. reads the bracketed portion as तेषु लोकेष्वनन्तपुण्यो म पुण्येषु प्रजायते
11 A म पुण्येषुप्रजायते
12 I. O. त्रिपुरूर्द्ध्वं
13 I. O. reads the bracketed portion as चावरानपि सप्तम
14 I. O. विष्णुलोकं
15 I. O. निष्कामा०

दानदिनपूर्वतरदिने [1]पूर्ववद्धविष्यभोजनादि कृत्वा सूर्य्यादिदेवताभ्यः सोपवासविष्णुधर्मोक्त-वासुदेवघृतक्षीरस्नपनपूजापूर्वक[2][घृतधेनुदानकर्म मया कर्तव्यमिति निवेद्य सङ्कल्पं कुर्य्यात्। ॐ श्व उपोष्यापरदिने विष्णुधर्मोक्तघृतार्चिर्घृतक्षीर-स्नपन-पूजापूर्वकं] दानान्तरैकरात्रघृताहारत्वसहितं घृतधेनुदानकर्माहं करिष्ये। ततो नियमेन सुप्त्वाऽपरदिने उपोष्यापरदिने स्नात्वा वासुदेवं घृतक्षीराभ्यां स्नपयित्वा ॐ घृतार्चिषे नम इति यथाविधि सम्पूज्य वैष्णवस्तवेन [3]स्तुत्वा यथोक्तरूपां घृतधेनुं [4]तच्चतुर्थभागकल्पित-[5]तद्रूपवत्ससहिता-[6]मर्चितामर्चिताय विद्यातपःशालिने घृतार्चिरयमिति ध्यातरूपाय ब्राह्मणाय ॐ एतां ममोपकाराय इत्यादिमन्त्रं पठित्वा ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोक्तघृतधेनुदानफलप्राप्तिकामोऽहमेतां धेनुचतुर्थभागघृतकल्पित--पुष्पमाला--[7]विभूषित--कांस्योपदोह--सितवस्त्रयुगाच्छादित--हिरण्य--गर्भमणिविद्रुममौक्तिकसहितेक्षुयष्टिमयपाद-[8]रौप्यखुर-सौवर्णाक्षियुगागुरुकाष्ठमयश्रृङ्ग--सप्तधान्य-पार्श्वद्वय-पत्त्रोर्णगलकम्बल-तुरुष्ककर्पूरघ्राण-फलस्तन-शर्कराजिह्व--गुडक्षीरमुख--क्षौमसूत्रलाङ्गूल-सिततसर्षपरोमक-ताम्रपृष्ठ-वत्ससहितां गव्यघृतकुम्भमयीं पुष्पमाला-[9]विभूषितां कांस्योपदोहां सितवस्त्र-[10]युगाच्छादितां हिरण्यगर्भां मणिविद्रुममुक्तासहितामिक्षुयष्टि-[11]पादां रौप्यखुरां सौवर्णाक्षियुगामगुरुकाष्ठश्रृङ्गीं सप्त-[12]धान्योभयपार्श्वां पत्त्रोर्णगलकम्बलां तुरुष्ककर्पूरघ्राणां फलस्तनीं शर्कराजिह्वां गुडक्षीरमुखीं क्षौमसूत्रलाङ्गूलां सिततसर्षप-[13]रोमकां ताम्रपात्रपृष्ठां घृतधेनुं ददानि। स्वस्त्यादिस्वोकारान्तं पूर्ववत्। ततो यजमानो घृतमात्राहारस्तद्दिनं नियतोऽतिवाहयेत्[14]।

---

1 I. O. पूर्ववत् हविष्याहारादि
2 A omits the bracketed portion
3 I. O. कृत्वा
4 A चतुर्थभाग०
5 A तद्भव०
6 A omits मर्चिता
7 I. O. ०भूषित०
8 A omits रौप्य
9 I. O. ०भूषितां
10 A युगच्छादितां, I. O. युगाच्छादितां
11 I. O. ०पदां, A ०पादां
12 A ०धान्योपभोगपार्श्वां
13 I. O. and A ०रोमिकां
14 A नियतो वाहयेत्, I. O. नियमतोऽतिवाहयेत्

## विष्णुधर्मोत्तरोक्तधेनुदानानि ।

### अथ घृतधेनुदानम् ।

विष्णुधर्मोत्तरे (३।३०७।१-१५) :—

घृतधेनुप्रदानञ्च निबोधत द्विजोत्तमाः ।
गव्यस्य सर्पिषः कुम्भं पूर्णन्तु परिकल्पयेत् ॥१॥
[1]कलसञ्च तथा पूर्णं तस्या वत्सं प्रकल्पयेत् ।
[2]कांस्योपदोहसंछन्नौ सितवस्त्र-[3]युतौ तथा ॥२॥
[4]हिरण्यगर्भौ कर्तव्यावनुलिप्तौ च बाह्यतः ।
इक्षुयष्टिमयान् पादान् [5]खुरान् रूप्यमयांस्तथा ॥३॥
[अनुलिप्तौ [6][च गन्धेन] यथेच्छ-[7]चन्दनादिना ।][8]
सौवर्णे चाक्षिणी कार्ये शृङ्गे चागुरुकाष्ठजे ॥४॥
सप्तधान्यैश्च कर्तव्ये तस्याः पार्श्वे पृथक् कृतैः ।
तस्याः पटञ्च कर्तव्यं कम्बलञ्च द्विजोत्तमाः ॥५॥
कुर्यात् तुरुष्ककर्पूरैं-[9]र्घ्राणं फलमयांस्तनान् ।
तद्वच्छर्करया जिह्वां गुडक्षीरमयं मुखम् ॥६॥
क्षौमसूत्रेण लाङ्गूलं रोमाणि सितसर्षपैः ।
ताम्रपात्रमयं पृष्ठं कुर्याच्छ्रद्धा-[10]समन्वितः ॥७॥
[11]एतद्विरचनं कृत्वा घृतक्षीराभि-[12]षेचनैः ।
[13]हरिं [14]घृतार्चिषेत्येवं नाम्ना संपूजयेद्विभुम् ॥८॥

1 A फलकञ्च
2 I. O. कांस्यपिधानसंछन्नौ
3 I. O. ०युतौ
4 A हिरण्यगर्भौ, I. O. हिरण्यनाभौ
5 I. O. खुरा
6 I. O. omits the bracketed portion
7 A ञ्च for च
8 V. D. omits the b. p.
9 I. O. ०र्घ्राणौ
10 I. O. ०समन्वितं
11 A एतद्वेच
12 A ०सेच
13 I. O. हरिं, A हरिः
14 I. O. घृतार्चिषेत्येवं

[1][ततस्तु गन्ध]-वस्त्रान्नधूपपुष्पादिभिर्नरः ।
घृतेन [2][दीपनं दद्यात्] तथैव च घृतार्चिषः ।
होमं विप्रा-[3]स्तथा दद्याद् [4]धेनुं विप्राय भक्तितः ॥९॥
घृतार्चिःप्रीतये विप्रं कल्पयित्वा [5]घृतार्चिषम् ।
[6]एकरात्रञ्च तां दत्त्वा घृताहारो भवेन्नरः ॥१०॥
विमुक्तः सर्वपापेभ्यो लोकानाप्नोति [7]शाश्वतान् ।
अनेन विधिना दत्त्वा सोपवासो नरः शुचिः ॥११॥
[8]सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ।
विमानेनार्कवर्णेन गवां लोके महीयते ॥१२॥
घृतक्षीरवहा नद्यो यत्र पायस-[9]कर्दमाः ।
यत्र [10]कामफला वृक्षा यत्र सिद्धिश्च [11]मानसी ॥१३॥
गन्धर्वाप्सरसां यत्र सततं [12]गीतमुत्तमम् ।
[13]तत्रास्ते सुचिरं लोके यावदिन्द्राश्चतुर्दश ॥१४॥
मानुष्यमासाद्य भवत्यरोगः [14]शीलेन रूपेण दमेन युक्तः ।
मनोऽभिरामः [15]प्रमदाप्रियश्च धनान्वितः सर्वसुखोपपन्नः ॥१५॥

यथेष्ट-[16][दानदिन]-पूर्वतरदिने [17]पूर्ववत् कृतहविष्यभोजनादिः सूर्य्यादिदेवताभ्य उपवासपूर्वकं विष्णुधर्मोत्तरोक्तवासुदेवघृत-[18]क्षीरस्नपनसहितपूजाहोमपूर्वकं घृतधेनुदानं मया कर्तव्यमिति निवेद्य सङ्कल्पं कुर्य्यात्। ॐ [19]अद्य उपोष्यापरदिने [20]विष्णुधर्मोत्तरोक्तवासुदेवघृतक्षीरस्नपनसहितपूजाहोमपूर्वकदानान्तरैकरात्र-घृताहारत्वसहितं घृतधेनुदानकर्माहं करिष्ये। ततो नियमेन सुप्त्वा

1 A reads the bracketed portion as ततः सुगन्धि
2 I. O. and V. D. read the bracketed portion as दीपं दद्याच्च
3 I. O. ०स्तदा
4 I. O. धेनु
5 I. O. घृतार्चिता
6 A एकरात्रिञ्च
7 A शाश्वता
8 A सर्वकामः समृद्धः स्याद्
9 A ०कर्द्दमः
10 A कामफेला
11 I. O. मानसा
12 A गीतमुत्तमं, I. O. जातमुत्तमं
13 Corrected from V. D. I. O, तत्रास्ति, A तत्स्ति
14 I. O. शारीर
15 I. O. प्रमदाधिपश्च
16 A दिने for the bracketed portion
17 A पूर्वकृतहविष्यभोजनादि
18 A omits क्षीर
19 A उपोष्य only for अ उपोष्या
20 I. O. विष्णुधर्म्मोक्त०

परदिने [1][उपोष्यापरदिने धेन्वर्थं घृतकुम्भं] तत्पार्श्वे[2] धेनुचतुर्थांशघृतकलसञ्च वत्सार्थं [3]स्थापयित्वा धेनुवत्सौ यथोक्तोपकरणसहितौ कृत्वा [4]वासुदेवं घृतक्षीराभ्यां स्नपयित्वा ॐ घृतार्चिषे नम इति यथाशक्त्युपचारैः संपूज्य घृतदीपं दत्त्वा ॐ घृतार्चिषे [5]स्वाहा इत्याज्यं हुत्वा, शूद्रो ब्राह्मणद्वारा होमं कारयित्वा, घृतधेनुमभ्यर्च्य ब्राह्मणाय ध्यातवासुदेवरूपायार्चिताय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोत्तरोक्तघृतधेनुदानफलप्राप्तिकामोऽहमेतां धेनुचतुर्थांशकलसघृतमयकांस्योपदोहसंछन्न-सितवस्त्रयुत-हिरण्यगर्भेक्षु-[6]यष्टिपाद-रौप्यखुर-[7]सौवर्णाक्षियुगागुरुकाष्ठश्रृङ्ग--[8]सप्तधान्यपार्श्व-पट्टवस्त्रकम्बल-[9][तुरुष्ककर्पूरघ्राण-फलस्तन-शर्करा-जिह्व-गुडक्षीरमुख-क्षौमसूत्रलाङ्गूल-सितसर्षपरोमक-ताम्रपृष्ठवत्ससहितघृतपूर्णकुम्भमयीं कांस्योपदोहसंछन्नां सितवस्त्रयुतां] हिरण्यगर्भामिक्षुयष्टिपादां रूप्यखुरां सौवर्णाक्षियुगामगुरुकाष्ठश्रृङ्गीं सप्तधान्यपार्श्वां [10]पट्टवस्त्रकम्बलां तुरुष्ककर्पूरघ्राणां फलस्तनीं शर्कराजिह्वां गुडक्षीरमुखीं क्षौम-[11]सूत्रलाङ्गूलां सितसर्षपरोमकां ताम्रपात्रपृष्ठां घृतधेनुं ददानि। घृतार्चिः प्रीयताम्। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। [12]ततस्तद्दिनं यजमानो घृतमात्राहारो नियतस्तिष्ठेत्।

---

1 A reads the bracketed portion as उपोषा घृविधेन्वर्थं घृतकुम्भं and I. O. as उपोष्यापरदिने घृतकुम्भपूर्णं

2 I. O. तत्पार्श्वेन

3 A स्थापयित्वा

4 I. O. वासुदेवप्रतिमां

5 A नमः before स्वाहा

6 I. O. मध्य for यष्टि

7 I. O. सुवर्णाक्षि०

8 I. O. सप्तधान्य०

9 A omits the b. p. here and reads it between ॐ and उपोष्या in the previous page

10 I. O. पृष्ठ for पट्ट

11 I. O. वस्त्र for सूत्र

12 A ततस्तदि, I. O. ततस्तद्दिन

## अथ जलधेनुदानम् ।

तथा (३।३०६।१-१५) :—

जलधेनुं प्रवक्ष्यामि [1]प्रीतये जलशायिनः ।
जलकुम्भं [2]द्विजश्रेष्ठाः [3]सुवर्णरजतान्वितम् ॥१॥
कल्पयेद्रत्नगर्भन्तु [4]स्थापयेत्तं यवोपरि ।
[5]सर्वधान्यैस्तथा ग्राम्यैः [6]समन्तात् परिवारयेत् ॥२॥

ग्राम्यसर्वधान्यानि परिभाषोक्तानि ।

सितवस्त्रयुगच्छन्नं दूर्वापल्लवशोभितम् ।
कुष्ठमांसी-मुरोशीर-[7]बालकामलकैर्युतम् ॥३॥
प्रियङ्गुपत्रसहितं सितयज्ञोपवीतिनम् ।
सच्छत्रोपानहञ्चैव[8] [9]सोष्णीषञ्च प्रकल्पयेत् ।४॥
तिलपात्रैर्युतं कृत्वा सहिरण्यैश्चतुर्दिशम् ।
[10]दध्योदनयुतेनाथ [पात्रेण स्थगितं मुखे][11] ॥५॥
[12]कल्पयेदेवमेवन्तु [वारिधानीन्तु वत्सकम्][13] ।
उपोषितः समभ्यर्च्य देवेशं जलशायिनम् ॥६॥
पुष्पधूपोपहारैश्च यथाविभवमा-[14]दृतः ।
[15]आहताम्बरवीताय दद्याद्विप्राय भक्तिमान् ॥७॥

---

1 A प्रीयये
2 I. O. जलश्रेष्ठाः
3 A सुवर्णरजतान्विता
4 A स्थापयेत्
5 I. O. पूर्व्वधान्यैस्तथा यास्यैः
6 I. O. ०सर्व्वतः परिचारयेत्
7 I. O. ०बलिकामलकैर्युतः, V. D. ०बालु०
8 A ०ञ्चेव
9 I. O. and V. D. सोष्णीषं परिकल्पयेत्
10 I. O. दधीदन०
11 A पात्रेणः स्थितं मुखं for the bracketed portion
12 I. O. कल्पयेदेवमेवञ्च
13 Corrected from V. D. A वारिधानीन्तु वत्सिकां and I. O. वारिधानी तु वत्समकं for the bracketed portion
14 V. D. ०त्रितः, A ०हृतः
15 A आहतम्बरवीताय, I. O. अहताम्बरवीताय

जलशायी जगद्योनिः प्रीयतां मम केशवः ।
इति चोच्चार्य्य [1]तं दद्यात् [प्रीणयेच्च द्विजोऽपि तम् ][2] ॥८॥
अहोरात्रोषितो दद्याद् यथाविधि मयेरितम् ।
[3]अपक्वान्नाशिना स्थेयमहोरात्रमतः परम् ॥९॥
अनेन विधिना [4]दत्त्वा जलधेनुं द्विजोत्तमाः ।
सर्वाह्लादानवाप्नोति कामानाप्नोति शाश्वतान् ॥१०॥
मोक्षमाप्नोति सर्वेभ्यः पापेभ्यः स तथा नरः ।
सौभाग्यं महदाप्नोति रूपञ्च परमन्तथा ॥११॥
पुरुषः स तथा याति यस्य यस्य च दर्शनम् ।
करोति [5]परमाह्लादं तस्य तस्य द्विजोत्तमाः ॥१२॥
नित्याभितृप्तो भवति तथैव च [6]निरामयः ।
सर्वबाधाप्रशमनं प्राप्नोति गतकल्मषः ॥१३॥
[7]वारुणं लोकमाप्नोति सकृद्दत्त्वा द्विजोत्तमाः ।
दत्त्वा तामसकृद् विप्रा लोकमाप्नोति वैष्णवम् ॥१४॥
आह्लादहेतोः परमं पवित्रं दानं मयेदं कथितं [8]द्विजेन्द्राः ।
धन्यं यशस्यं [9]दुरितापहारि [10]कामप्रदं [लोकहितं प्रशस्तम्][11] ॥१५॥

दानदिनपूर्वतरदिने [12]पूर्ववद्वविष्यभोजनादिकं कृत्वा सूर्य्यादिदेवताभ्यः सोपवासविष्णुधर्मोत्तरोक्त-जलशायिकेशवपूजापूर्वक-[जलधेनुदानकर्म मया कर्तव्यमिति[13] निवेद्य सङ्कल्पं कुर्य्यात् । ॐ श्व [14]उपोष्यापरदिने विष्णुधर्मोत्तरोक्त-केशवपूजापूर्वक'][15] दानान्तरैक-[16]रात्रापक्वान्नाहारत्वसहितं जलधेनुदानकर्माहं करिष्ये । ततो नियमेन सुप्त्वा अपरदिने उपोष्यापरदिने

1 I. O. तद्दद्यात्
2 I. O. reads the bracketed portion as प्रणमेच्च द्विजाय तां
3 I. O. अपक्वान्नाशिना
4 A दद्यात्
5 I. O. परमात्मनं
6 A निवारयः
7 A कारुणं
8 A द्विजोत्तमाः
9 Corrected from V. D. I. O. दुरितापकारि, A दूरितापहारि
10 I. O. कादर्थप्रदं
11 A reads the bracketed portion as लोकहितप्रकारं
12 I. O. पूर्ववत् हविष्याहारादि
13 A कर्त्तव्यं
14 A उपोषा परदिने
15 A omits the b. p.
16 A ०रात्रौपक्वान्न०

जलकुम्भमयीमुक्तोपकरणसहितां जलधेनुं तत्पार्श्वे तच्चतुर्थांशजलभृद्वारिधानीमयमुक्तोपकरणसहितं [1]वत्सञ्च स्थापयित्वा वासुदेवं यथाशक्त्युपचारैः ॐ जलशायिने नम इति सम्पूज्य [2]ब्राह्मणायार्च्चिताय [3]नवाम्बराव्रताया-[4]र्च्चितां ताम् ॐ [5]जलशायीत्यादिकमन्त्रं पठित्वा ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोत्तरोक्त-जलधेनुदान-फलप्राप्तिकामोऽहमेतां[6] धेनुचतुर्थांशजलभृद्--वारिधानीमय-सुवर्ण-[7]रजतान्वित-[8]रत्नगर्भ--[9]यवस्थ-[10]ग्राम्यसर्वधान्यपरिवारित-सितवस्त्रयुगच्छन्न---दूर्वापल्लवशोभित- कुष्ठमांसीमुरोशीर-[11]बालकामलकप्रियङ्गुपत्रसहित-सित[12]-यज्ञोपवीति-सच्छत्रोपानत्क-[13]सोष्णीष--सहिरण्यतिलपात्र-[14][चतुष्टययुत--दध्योदनपात्र-स्थगितमुख]-वत्ससहितां जलकुम्भमयीं सुवर्णरजतान्वितां रत्नगर्भां [15]यवस्थां[16][ग्राम्यसर्वधान्य-परिवारितां सितवस्त्रयुगच्छन्नां दूर्वापल्लवशोभितां कुष्ठमांसीमुरोशीर]-[17]बालकामलक-प्रियङ्गु-पत्रसहितां सितयज्ञोपवीतिनीं सच्छत्रोपानत्कां सोष्णीषां सहिरण्यतिलपात्रचतुष्टय-[18]-युतां दध्योदनयुतपात्र-[19]स्थगितमुखीं जलधेनुं ददानि। प्रतिग्रहीता जलशायी केशवः प्रीयतामिति वदेत्। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। ततो यजमानोऽ[20]पक्वान्नाशी तद्दिनं नियतो नयेत्।

---

1 I. O. रत्नञ्च
2 A ब्राह्मणयोरर्च्चिताय, I. O. ब्राह्मणाया-र्च्चिताय
3 I. O. वराम्बरा०
4 A ०र्च्चिताय and omits ताम्
5 जलशायिनेत्यादिकमन्त्रं
6 I. O. काम एतां
7 I. O. रचितान्वित
8 A पद्म before रत्न
9 I. O. ०मधस्थ, A ०यमस्थ
10 A ग्रामसर्व्वधान्य०, I. O. ग्राम्यधान्य०,
11 A ०बालक, I. O. ०वणिकामलक
12 A reads सहितं and omits सित
13 A सोष्णीषसहित, I. O. रोष्णीष
14 I. O. स्थगितमुख for the bracketed portion
15 A यमस्थां
16 A reads the bracketed portion once again after सच्छत्रोपानत्कां, a line below.
17 I. O. वणिकामलक०
18 A omits चतुष्टय
19 I. O. स्थगित०, A स्थगित०
20 A ०पक्वाशी

## अथ तिलधेनुदानम् ।

तथा (३।३०८।१-१५) :—

तिलधेनुं प्रवक्ष्यामि सर्वपापभयापहाम् ।
[1]धेन्वाकारान्तु तां कुर्य्यादाविके[2] कम्बले बुधः ॥१॥
[3]तिलैः षोडशभिः प्रस्थैश्चतुर्भिर्वत्समेव च ।
[4]तिलप्रसारणं कुर्य्याद् धेन्वा[5] धेनुप्रमाणतः ॥२॥
ततस्तु [6]रचयेद्धेनुं [7]तिलैर्वच्याम्यहं द्विजाः ।
हेमशृङ्गीं रूप्यखुरां गन्धघ्राणवतीं शुभाम् ॥३॥
मिष्टान्नजिह्वां कुर्वीत गुडास्यां सूत्रकम्बलाम् ।
इक्षुपादां ताम्रपृष्ठां कुर्य्यान्मुक्ताफलेक्षणाम् ॥४॥
प्रशस्त-[8]पत्रश्रवणां फलदन्तवतीं शुभाम् ।
स्रग्दामपुच्छां कुर्वीत नवनीतस्तनान्विताम् ॥५॥

[9][प्रशस्तपत्रं यज्ञीयतरुपत्रम्] ।

फलैर्मनोहरैर्भक्ष्यै[10]-र्मणिमुक्ताफलान्विताम् ।
शुभ्रवस्त्रयुगच्छन्नां चारु-[11]च्छत्रसमन्विताम् ॥६॥
कांस्योप-[12]दोहनां कृत्वा वासुदेवन्तु[13] पूजयेत् ।
गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ॥७॥
जुहुयाच्च तिलानेव नाम्ना तस्यैव[14] मानवः ।
तमेव प्रीणयेद्दद्याद्धेनुं तामा[15]-हिताग्नये ॥८॥

1 Corrected from V. D. I. O. धेन्वाकारा तु, A धेन्वाकारन्तु
2 A कुर्य्यादाविवे
3 I. O. तिलै षोड़शभिः, A ति- षोड़शभिः.
4 Corrected from V. D. A तिलप्रेमारणं, I. O. तिलपदानवत्
5 A omits it
6 A वरयेद्धेनुं
7 A पवै०
8 A ०पात्र०
9 A reads the bracketed portion as प्रशस्तपत्रं यज्ञीयेतरंपात्रं
10 A ०भंक्षै०, I. O. ०र्भक्षै०
11 A चन्द्र for च्छत्र
12 Corrected from V. D. A ०दोहनां, I. O. ०दोहनं
13 I. O. वासुदेवञ्च
14 A तस्मैव
15 I. O. तामा

त्रिरात्रं यस्तिलाहारस्तिलधेनुं प्रयच्छति ।
दत्त्वैक-[1]रात्रं च पुनस्तिलानत्ति द्विजोत्तमाः ॥९॥
चान्द्रायणाद्यप्यधिकं[2] शस्तं तत्तिलभक्षणम् ।
सर्वपातकनिर्मुक्तः पितरं स पितामहम् ॥१०॥
तस्यापि पितरश्चैव तारयेद्दुष्कृतान्नरः[3] ।
आत्मानं पुत्रपौत्रांश्च प्रपौत्रमपि तारयेत् ॥११॥
[4][सुहृदं वाप्यथोद्दिश्य] तिलधेनुप्रदो नरः ।
तारयेद्दुष्कृतात्तश्च[5] यमुद्दिश्य प्रयच्छति ॥१२॥
यश्च गृह्णाति विविधद्दीयमानाश्च[6] पश्यति ।
सोऽपि पापविनिर्मुक्तः स्वर्गलोके महीयते ॥१३॥
महापातकसंयुक्तो युक्तो [7]यश्चोपपातकैः ।
तिलधेनुप्रदानेन सोऽपि पावनमाप्नुयात् ॥१४॥
स लोकमासाद्य नरो वसूनां तत्रापि भुक्त्वा [8]त्रिदशेन्द्रभोगान् ।
[9]मानुष्यमासाद्य भवत्यरोगो धनान्वितो रूपसुखोपपन्नः ॥१५॥

दानदिनपूर्वचतुर्थदिने प्रातः गृहीतोदकपूर्णताम्रपात्र उदङ्मुखः सङ्कल्पं कुर्य्यात्[10] 'ॐ अद्यादि त्रिरात्रतिलाहाररूपप्राच्याङ्गदानदिन[11]-तिलाहाररूपोदीच्याङ्गसहितं [12]विष्णुधर्मोत्तरोक्ततिलधेनुदानकर्माहं करिष्ये'। ततस्तद्दिनादारभ्य तिलमात्राहारो [13][दिनत्रयं भूत्वा] [14]चतुर्थदिने कम्बलमा-[स्तीर्य्य तत्र षोडशसंख्य][15]-प्रस्थपरिमिततिलैर्धेन्वाकारं[16] [17]विरचय्य [18][तत्पार्श्वे तच्चतुर्थांश]-तिलैर्वत्साकारमारचय्य धेनु-[19]मुक्तोपकरणान्वितां[20] कृत्वा वत्सश्चैवं-

1 I. O. ०वास्य
2 I. O. and V. D. ०भ्याधिकं
3 A ०दु:कृतं नर:
4 Corrected from V. D. I. O. सुहृदञ्चाप्यथोद्दिश्य for the b. p.
5 I. O. ०र्थश्च
6 I. O. ०ह्रीयमानाश्च
7 A य: सोपपातकै:
8 A विविधेन्द्रभोगान्
9 I. O. मनुष्य०
10 A कुर्य्य:
11 I. O. omits दिन
12 I. O. and A विष्णुधर्मोक्त०
13 I. O. भुक्ता for the bracketed portion
14 I. O. चतुर्थद्दिने
15 I. O. reads the bracketed portion as षाक्ततत्समेतमम
16 A ०तिलधेन्वाकारं
17 A विधार्य
18 A च तत्पार्श्वे चतुर्थांश for the b. p.
19 I. O. and A ०युक्तो०
20 I. O. ०र्पितां

[1]विधोपकरणयुतं . विधाय वासुदेवप्रतिमां [2]यथाशक्त्युपचारैः पूजयित्वा ॐ वासुदेवाय स्वाहेति तिलान् हुत्वा[3] शूद्रो ब्राह्मणद्वारा होमं कारयित्वा, आहिताग्नये [4]ब्राह्मणायार्चितायार्चिताम् ॐ[5] वासुदेवः प्रीयतामित्युक्त्वा ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [6]विष्णुधर्मोत्तरोक्ततिलधेनुदानफलप्राप्तिकामोऽहं--[7]मेतामाविककम्बलस्थधेनुचतुर्थांशतिल[8]--मयहेमशृङ्ग--रूप्यखुर-गन्धघ्राण-मिष्टान्नजिह्व-गुडास्य-सूत्रगल[9]-कम्बलेक्षु-[10]यष्टिपाद-ताम्रपृष्ठ--मुक्ताफलेक्षण-[11][पत्रश्रवण-फलदन्त-स्रग्दामपुच्छ]-नवनीतस्तन-फल-[12]भक्ष्यसमन्वित-[13]मणिमुक्तालङ्कृत-वस्त्रयुगच्छन्न -छत्रान्वित-कांस्योपदोह[14]-वत्स-[15]सहितामाविककम्बलस्थ--षोडशसंख्यप्रस्थपरिमित-तिलमयीं हेमशृङ्गीं रूप्यखुरां गन्धघ्राणां मिष्टान्नजिह्वां गुडास्यां सूत्रगलकम्बलामिक्षुपादां ताम्रपृष्ठां मुक्ताफलेक्षणां [16]पत्रश्रवणां फलदन्तां स्रग्दामपुच्छां नवनीतस्तनीं [17]फलभक्ष्यसमन्वितां [18]मणिमुक्तालङ्कृतां वस्त्रयुगाच्छादितां छत्रसहितां [19]कांस्योपदोहां तिलधेनुं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। [20][ततस्तद्दिनं यजमानस्तिलमात्राहारो नियतो नयेत्]।

इति [21]महाराजाधिराज-[22]निःशङ्कशङ्कर-श्रीमद्बल्लालसेन-[23]देवविरचिते दानसागरे धेनुदानावर्तः।

---

1 A ०विविधो०
2 I. O. यथाशास्त्रोपचारैः
3 A कृत्वा
4 I. O. ब्राह्मणायार्चितायार्चितां, A ब्राह्मणायार्चितां
5 I. O. स्वं
6 I. O. विष्णुधर्मोक्त०
7 I. O. ०मेतामाविक०, A ०मेतां माविं०
8 A ०तिति०
9 I. O. ०गल०
10 A omits यष्टि
11 I. O. reads the bracketed portion as गन्धश्रवणफलदन्तस्रग्दामपुच्छ
12 I.O. ०भक्ष्यसमन्वित, A ०भक्ष्यान्वित
13 I. O. omits मणि
14 I. O. कांस्योपदोहसहित
15 I. O. ०सहितां आवि०, A ०मेत आवि०
16 I. O. पत्रस्रग्श्रवणां
17 A फलभक्ष्यसहितां
18 I. O. मणिमुक्तान्वितां, A omits it
19 I. O. कांस्योपदोहनां
20 A reads the bracketed portion as ततस्तद्दिनं यजमानस्तिलाहारो नियतो नयेत् and I. O. as ततस्तद्दिने यजमानस्तिलमात्राहारो नियतस्तिष्ठेत्
21 I. O. समस्तप्रक्रियाविराजमानमहाराज०
22 A निःशङ्क०
23 I. O. omits देव

# अथ रुद्रदैवतगवीदानावर्तः । (४-७)

तत्र [1]गोदानस्तुतिः विष्णुधर्मोत्तरे (३।२६१।१ख-३) :—

यथा देवा यथा वेदा [2]ब्राह्मणाश्च यथा द्विजाः ।
तथा [3]गावो विनिर्दिष्टाः सर्वलोकसुखावहाः ॥१॥
[4][एकं गोब्राह्मणं ज्ञेयन्तयो]-र्यज्ञः प्रतिष्ठितः ।
विप्रेषु मन्त्रास्तिष्ठन्ति गोषु संतिष्ठते हविः ॥२॥
गवां [5]दानं द्विजश्रेष्ठा दुष्कृतान्यपकर्षति ॥३॥

तथा (३।३०६।१-२क, ३क) :—

[6]गावः पवित्रा मङ्गल्या गोषु लोकाः प्रतिष्ठिताः ।
तास्वायत्तानि यज्ञानि देवतातिथिपूजनम् ॥४॥
बालपुष्टिश्च [7]भवति तथा [8]श्राद्धक्रिया द्विजाः ।
तस्मात् सर्वप्रदानानां गवां दानमनुत्तमम् ॥५॥

तथा (३।३०६।२३-२६) :—

[9][शतं वर्षसहस्राणि] तपस्तप्तं सुदुश्चरम् ।
गोभिः पूर्वं-[10]विसृष्टाभिर्गच्छेम[11] श्रेष्ठतामिति ॥६॥
लोकेऽस्मिन् दक्षिणानाञ्च सर्वासां वयमुत्तराः ।
भवेम न च लिप्येम [12]दोषेणेति परन्तपाः ॥७॥
[13] शकृत्तासां पवित्रार्थं [14]कुर्वीरन् देवमानुषाः ।
तथा सर्वाणि भूतानि स्थावराणि चराणि च ॥८॥

1 A गोपाख्यस्तुतिः
2 I. O. ब्राह्मणाश्च
3 I. O पारी
4 I. O. reads the bracketed portion as एकं गोब्राह्मणं यश्नितपो and A as एकांशो ब्राह्मणश्च मस्तपो
5 I. O. दान
6 I. O. गावः पवित्र, A गाव पवित्रा
7 I. O. पुष्टिश्च
8 A श्राद्धा०
9 A reads the bracketed portion as शतमूर्यसहस्राणां
10 I. O. ०निसृष्टाभि०
11 A ०र्गच्छम
12 A दोषं गते
13 I. O. सहता च
14 A कुर्वीमन्देवमानुषाः

प्रदातारश्च [1]गोलोकान् गच्छेयुरिति [2]मानवाः ।
[3]एतद्वरं ददौ तासां सर्वमेव [4]पितामहः ॥९॥

तथा (३।३०६।४४-५२क) :—

अपामधस्ताल्लोको वै तस्योपरि महीधराः ।
[5]नागानामुपरिष्टाद्भूः पृथिव्युपरि मानवाः ॥१०॥
मनुष्यलोकादूर्द्ध्वन्तु खगानां [6]गतिरुच्यते ।
आकाशस्योपरि रविर्द्वारं [7]स्वर्गस्य तत् [8]स्मृतम् ॥११॥
देवलोकः परस्तस्माद्ब्रह्मलोकस्ततः परः ।
[9][तत्रोपरि गवां लोको विष्णुलोकस्ततः परः ॥१२॥ ]
लोकस्त्वधो दुष्कृतीनां [10]नराणां पृथिवी मता ।
[खमस्थिराणां विषयः स्वर्गः सुकृतकर्मणाम् ॥१३॥ ][11]
ब्राह्मे तपसि युक्तानां ब्रह्मलोकः सनातनः ।
गवामेव हि गोलोको [12]दानारोहा हि सा गतिः ॥१४॥
एकान्तिनो [विष्णुभक्ता विष्णुलोकं व्रजन्ति ते ][13] ।
[14]गोप्रदानरता यान्ति गोलोकं सर्वकामदम् ॥१५॥
तत्र कामफला वृक्षाः नद्यः पायसकर्दमाः ।
सुवर्णसिकताश्चान्या विमलाम्बुयुताः[15] शुभाः ॥१६॥
[16]यथाकामेप्सितास्तत्र भवन्ति [17]शुभकर्मणाम् ।
[18]देशाः मनोहराः शुभ्राः देवारामविभूषणाः ॥१७॥

1 A गोलोके
2 I. O. मानदाः
3 A एतद्दत्तं
4 A पितामहाः
5 I. O. नागानामुपविष्टाद्भूः
6 I. O. पति॰
7 A सूर्यस्य
8 A व्रतं
9 I. O. omits the bracketed portion
10 I. O. and V. D. कर्मिणां
11 V. D. omits the b. p.
12 I. O. and V. D. दुरारोहा
13 A reads the bracketed portion as विष्णुलोकं व्रजन्ति पुरुषो विभोः
14 I. O. and A गोप्रदानवता
15 Corrected from V. D. I. O. ॰ययुताः
16 A यथाकामेप्सितास्तत्र, I. O. यथाकामेप्सिता तत्र
17 A शुभधर्मणां
18 I. O. देशा, A देशाः

दिव्येन गीतनृत्येन वादित्रेण मनोहराः ।
तत्रेप्सितानां कामाना-[1]माप्तिर्भवति नित्यदा ॥१८॥

## अथ परिभाषा ।

महाभारते :—

[2][न वधार्थं] प्रदातव्या [3][न कीनाशे न नास्तिके] ।
[4]न गोजीविने[5] दातव्या तथा गौर्भरतर्षभ ॥१॥

कीनाशे [कृषिवले ।

ददत् स तादृशानां वै नरो गां पापकर्मणाम् ।
अक्षयं नरकं यातीत्येवमाहुर्महर्षयः ॥२॥

विष्णुधर्मोत्तरे (३।३०६।७) :—

नैका बहूनां दातव्या न द्वयोर्द्विजपुङ्गवाः । ][6]
सा तु [7]विक्रयमापन्ना दातुर्नरकदायिनी ॥३॥

तथा (३।३०६।२२) :—

एकाञ्च दशगुर्दद्याद्दश दद्याच्च [8]गोशती ।
शतं सहस्रगुर्दद्यात् [9]सर्वे तुल्यफला हि ते ॥४॥

## [10]अथादेया [11][गौः ।

यो दद्यादुपयुक्तार्थं जीर्णां धेनुञ्च निष्फलाम् ।
तमः स प्रविशेद्दाता द्विजा क्लेशेन योजयेत् ॥१॥
कल्माषं ब्राह्मणे दत्त्वा दाता यात्यन्तिमां गतिम् ।
जीर्णनिर्मोकनिर्मुक्तः पन्नगेन्द्रः क्षितौ यथा ॥२॥

---

1 Corrected from V. D. I. O. ०प्ति०, A ०मार्ति०
2 A निर्व्वाधार्थं
3 A reads the bracketed portion as कीतये नास्तिकेन च
4 A omits it
5 I.O. गोजीविन दातव्या, A गोजीविनी प्रदातव्या
6 A omits the bracketed portion
7 I. O. नि:क्रय०
8 I. O. गोमत
9 A सर्व्व
10 A यथादेया
11 I. O. omits the bracketed portion

महाभारते (=वि. ध. ३।३०६।३ख-५क) :—]

हीनाङ्गी [1]व्योरपा वृद्धा दुःखदोहा निरिन्द्रिया ।
व्याधिता विषमा [2]व्याला तथैव प्रपलायिनी ॥३॥
मूल्यैस्तथाप्यसंशुद्धैः क्रीता च द्विजपुङ्गवाः ।
न दातव्या [3]द्विजा [4]धेनूर्दत्त्वा नरकमाप्नुयात् ॥४॥

[5]आदित्यपुराणे :—

[6]उन्मत्तामङ्गहीनाञ्च [7]मृतवत्सां महाशनाम् ।
[8]केशचेलपुरोषास्थि -[9]क्रव्यादां [10]सन्धिनीं खलाम् ॥५॥
[11]पुटधेनुं [12]यमजसूं नित्यं [13]युगलितस्तनोम् ।
न दद्याद्ब्राह्मणेभ्यस्तु सदोष[14]-वृषभं [15]तथा ॥६॥

महाशनामति[16]-प्रचुरभक्षणशीलां [17][सन्धिनीम् ऋतुमतीं] [18]पुटधेनुं [19]दुर्निवारां [यमजसूं वत्सद्वयप्रसवशीलां][20] [21]युगलितस्तनीं संलग्नवृन्तद्वयाम्[22] ।

---

1 A व्यौग्द्रा
2 A व्याल
3 A द्वता
4 I. O. धेनुर्दत्त्वा, A धनुं दत्त्वा
5 A omits it
6 I. O. उन्मत्तामङ्गहीना च, A उत्तमामङ्गहीनाञ्च
7 I. O. मृतवत्सां
8 I. O. केशवेन पुरीयान्ति
9 A द्रव्यामां
10 I. O. सन्निनी
11 I. O. पटाधेनुं
12 A यमजसुं
13 A सम्यक्षितस्तनीं
14 A सद्दोषं
15 A यथा
16 I. O. ०मिति०
17 A reads the bracketed portion as सन्धिनीं खलां । तुमतीं, I. O. as सन्निनीमृतुमती
18 I. O. पटाधेनुं
19 I. O. दुर्निवारं ; A दुर्निवारां
20 A omits the bracketed portion
21 A सम्यक्षितस्तनीं
22 I. O. संलग्नवृन्तद्वयं

## तत्रादावलङ्कृतगवीदानावर्तः । (४)

[1]सम्वर्तः :—

यो ददाति शफै रूप्यैर्हेमश्रृङ्गीमरोगिणीम् ।
सवत्सां वस्त्रसंयुक्तां [सुशीलां गां][2] पयस्विनीम् ॥१॥

शफैः खुरैः । वस्त्रसंयुक्तां वस्त्राच्छादिताम् ।

यावन्ति तस्या रोमाणि सवत्साया [दिवं गतः][3] ।
तावतो वत्सरानास्ते स गत्वा ब्रह्मणोऽन्तिके[4] ॥२॥

[5]अत्र यजमानो [6]गामुक्तलक्षणामुक्तोपकरणयुतां [7]सवत्सामभ्यर्च्यार्चिताय ब्राह्मणाय दद्यात् । अद्यामुक-[8][सगोत्रायामुक]-वेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं [9]सम्वर्त्तोक्त-गोदानफलप्राप्तिकामोऽहमेतां [10]रूप्यशफां हेमश्रृङ्गीं [11][सवत्सां गां ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा गौरियं रुद्रदेवतेत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं ] दक्षिणामेतत्काञ्चनं ददानि । [12]प्रतिग्रहीता स्वस्तीत्युक्त्वा गां [13]पुच्छे गृह्णीयात् । [14][अत्र दक्षिणाबाहुल्यात् [15]फलबाहुल्यमुन्नेयम्] ।

याज्ञवल्क्यः (१।२०४-५) :—

[16]हेमश्रृङ्गैः [17]शफैरौप्यैः सुशीला [18]वस्त्रसंयुता ।
[19][सकांस्यपात्रा दातव्या] [20]क्षीरिणी गौः सदक्षिणा ॥३॥

---

1 A omits it
2 I. O. reads the bracketed portion as सुशीलाञ्च
3 A reads the bracketed portion as शरीरतः
4 A ब्राह्मणोन्तिके
5 I. O. अग
6 I. O. गायुक्तलक्षणायुक्तोपकरणयुतां
7 A सवत्सा अर्चिताय
8 I. O. reads the bracketed portion as गोत्रामुक
9 A सम्वर्त्तोक्त
10 I. O. रूप्यखुरां
11 A omits the bracketed portion
12 I. O. गृहीत्वा
13 I. O. पृच्छे
14 A omits the bracketed portion
15 I. O. फलबाहुल्यादुन्नेया
16 A हेमश्रृङ्गी:, Yāj. हेमशृङ्गी
17 A सद्रैरौप्यै:
18 A वत्ससंयुतां
19 A omits the bracketed portion
20 I. O. and A क्षिरिणी

दातास्याः स्वर्गमाप्नोति [वत्सरान् रोमसम्मितान् ][1]।
कपिला चेत्तारयति [2]भूयश्चासप्तमं कुलम् ॥४॥

गां बहुक्षीरामुक्तोपकरणयुता-[3]मभ्यर्चितामर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [4][धेनुरोम-समानसंख्यकाल]-स्वर्गप्राप्तिकामोऽहमेतां हेमश्रृङ्गीं रौप्यशफां [5]वस्त्रसंयुतां [6]सकांस्यपात्रां गां ददानि। [7][स्वस्त्यादिस्वीकारान्तं पूर्ववत्।] कपिलादाने तु याज्ञवल्क्योक्त-[8]कपिलागवीदानफलप्राप्तिकामोऽहमेतां कपिलां गामिति वाक्ये विशेषः। उभयतोमुखी-[9]दानवाक्ये याज्ञवल्क्योक्तोभयतोमुखीदानफलप्राप्तिकामोऽहमेतामुभयतोमुखीं गामिति विशेषः।

तथा याज्ञवल्क्यः (१।२०६-७) :—

सवत्सा-[10]रोमतुल्यानि युगान्युभयतो-[11]मुखीम्।
दातास्याः स्वर्गमाप्नोति पूर्वेण विधिना [12]ददत् ॥५॥

पूर्वेणेति पूर्वोक्तगोदानविधिनेत्यर्थः।

यावद्वत्सस्य पादौ द्वौ [13]मुखं योन्यां प्रदृश्यते।
तावद् गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥६॥

बृहस्पतिः—

हेमश्रृङ्गीं रौप्यखुरां वस्त्र-[14]कांस्याज्यसंयुताम्।
सवत्सां कपिलां दत्त्वा कुलान् सप्त समुद्धरेत् ॥७॥

कपिलामुक्तोपकरण-[15]युतामर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। बृहस्पत्युक्तगोदानफलप्राप्तिकामोऽहमेतां हेमश्रृङ्गीं रौप्यखुरां वस्त्रकांस्याज्यसंयुतां[16] सवत्सां कपिलां [17]गां ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

1 I. O. reads the bracketed portion as वत्सरा रोमसम्मितान्, A as वत्सर only
2 I. O. भूय श्चासप्तम, A भूयश्चासप्तमं
3 I. O. ०मभ्यर्चितार्चिताय, A ०मर्चिताय only
4 A धेनुनामसमानसंख्याभोग्य for the bracketed portion
5 I. O. वस्त्रयुतां, A वत्ससंयुक्तां
6 I. O. कांस्यपात्रां
7 A omits the bracketed portion
8 I. O. कपिल०
9 I. O. ०दाने तु वाक्ये
10 A ०नामतुल्यानि
11 A ०मुखी
12 I. O. ददन्, A दद्यात्
13 A मुखा
14 A ०कांश्यादसंयुतां
15 A ०युक्तामर्चिताय, I. O. ०युतामभ्यर्चिताय
16 I. O. ०कांस्याज्यसहितां, A ०कांश्यहिरण्यसंयुतां
17 A omits it

यमः—

रुक्मशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलभूषिताम् ।

कांस्योपदोहनां[1] धेनुं [2]वस्त्रच्छन्नामलङ्कृताम् ॥८॥

[3]अलङ्कृतां हेमतिलकादिभिः ।

[4]दत्त्वा द्विजेन्द्राय नरः स्वर्गलोके महीयते ।

यावन्ति धेनुरोमाणि तावन्त्यब्दान्यसंशयः[5] ॥९॥

दशधेनुप्रदानेन तुल्यैका कपिला मता ॥१०॥

[6]धेनुमुक्तोपकरण-[7]युतामभ्यर्च्यार्चिताय विद्यातपोवृत्तसम्पन्नाय[8] ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । धेनुरोम-[9]समानसंख्या-[10]ब्दसोत्कर्षस्वर्गप्राप्तिकामोऽहमेतां [11]रुक्मशृङ्गीं रौप्यखुरां मुक्ताभूषितलाङ्गूलां [12]कांस्योपदोहनां वस्त्रच्छन्नामलङ्कृतां [13]धेनुं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । कपिलादाने तु यमोक्तकपिलाधेनुदानफलप्राप्तिकामोऽहमेतां [14]कपिलां धेनुमिति वाक्ये विशेषः ।

महाभारते (अनु—७६।१४) :—

अपां फेनसवर्णान्तु सवत्सां कांस्यदोहनाम् ।

प्रदाय [15]वस्त्रसंवीतां वारुणं लोकमश्नुते ॥११॥

अपां फेनसवर्णां समुद्रफेनवर्णां[16] [सवर्णवत्सां गा][17]-मुक्तरूपामुक्तोपकरण-[18][युतामभ्यर्च्यार्चिताय] ब्राह्मणाय [19][ॐ अद्यादि] तुभ्यमन्तमुक्त्वा दद्यात् । वारुणलोकप्राप्तिकामोऽहमेतां [20]सवर्णवत्सां कांस्योपदोहनां [21]वस्त्राच्छादितां जलफेनसवर्णां गां ददानि । स्वस्त्यादि-

---

1 A कांस्योपदोहनं
2 A सवत्सामलङ्कृतां
3 A omits it
4 I. O. दद्याद्द्विजेन्द्राय
5 I. O. ०न्यसंशयं, A ०न्त्विसंशय:
6 I. O. धेनुं गामुक्तोपकरण०
7 A ०युक्तामभ्यर्चिताय
8 I. O. ०वृत्तसंपूर्णाय ; A व्रतपूर्णाय
9 A omits समान
10 I. O. ०ब्दोत्कर्ष०
11 A रूप्यशृङ्गीं
12 A कांस्योपदोहां
13 I. O. धेनुं गां
14 I. O. कपिलां
15 A वस्त्रसंवीतं
16 I. O. ०वर्णां
17 A सुवर्णवत्सां for the bracketed portion
18 A युतां तुभ्यमभ्यर्चिताय for the b. p.
19 A omits the bracketed portion
20 I. O. सुवर्णवत्सां
21 A समुद्रफेनवर्णां before this

स्वीकारान्तं पूर्ववत् । जलफेनसवर्णादित्रयोदशधेनुदानानां महाभारतोक्तानां समान-[वर्ण-वत्स][1]-प्रकरणत्वात् यत्रापि समानपदं नास्ति तत्रापि धेनुवत्सयोः समानवर्णत्वं[2] बोद्धव्यम् । तथाहि योजना सवत्सामपां फेन-[3]सवर्णां वत्ससहितैरपां फेन-[4]सवर्णै रित्यर्थः । एव-मन्यत्राप्युन्नेयम् ।

तथा (अनु—७६।२०) :—

पाण्डुकम्बल-[वर्णाभां सवत्सां कांस्यदोहनाम्][5] ।
[6][वस्त्रसंवीतगां दत्त्वा ] साध्यानां लोकमश्नुते ॥१२॥

पाण्डुकम्बल-[7]वर्णां श्वेतलोहितवर्णां समानवर्णवत्सां गामुक्त-[8][रूपामुक्तो]-पकरणयुताम-भ्यर्च्यार्चिताय ब्राह्मणाय ॐ[9] अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । साध्यलोकप्राप्तिकामोऽह-मेतां पाण्डुकम्बल-[10]वर्णाभां सवर्णवत्सां कांस्योपदोहनां [11]वस्त्रसंवीतां गां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (अनु—७६।१५) :—

वातधेनुसवर्णान्तु सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंवीतां वायुलोके महीयते ॥१३॥

वातधेनुसवर्णां मलिनपिङ्गलां [12]सवर्णवत्सां गामुक्तरूपामुक्तोपकरणामभ्यर्च्यार्चिताय[13] ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । सोत्कर्ष-वायुलोक-प्राप्तिकामोऽहमेतां [14]सवर्ण-वत्सां [15]कांस्योपदोहनां वस्त्राच्छादितां वातधेनुसवर्णां[16] गां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

---

1 I. O. वस्त्र for the bracketed portion
2 A ॰पदत्वं
3 A ॰सवर्णां, I. O. ॰सवत्सां
4 I. O. and A ॰सवर्णैरर्थः
5 I. O. reads the bracketed portion as वस्त्राभां वत्सां कांस्यो-पदोहनां
6 I. O. प्रदाय वस्त्रसम्वीतां for the bracketed portion
7 I. O. ॰वर्णां
8 A reads the bracketed portion as रूपां वस्त्रयुक्तो
9 A omits it
10 I.O. ॰वस्त्राभां
11 A omits वस्त्र
12 A omits सवर्ण
13 I. O. ॰करणयुक्तामभ्यर्च्यार्चिताय
14 A सवत्सां, I. O. सुवर्णवत्सां
15 A कांस्योपदोहां
16 A धेनुं सवर्णां

तथा ( अनु—७६।१६ ) :—

हिरण्यवर्णां [1]पिङ्गाक्षीं सवत्सां [2]कांस्यदोहनाम् ।
प्रदाय वस्त्रसम्वीतां कौबेरं लोकमश्नुते ॥१४॥

समानवर्ण-[3]पिङ्गलाक्षवत्ससहितां गामुक्तरूपामुक्तोपकरणयुतामभ्यर्च्यार्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । कौबेरलोकप्राप्तिकामोऽहमेतां [4]हिरण्यवर्णां पिङ्गाक्षीं [5]सवर्णपिङ्गाक्षवत्ससहितां कांस्योपदोहनां वस्त्रसम्वीतां गां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

पलालधूम्र[6]-वर्णान्तु सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसम्वीतां पितृलोके महीयते ॥१५॥ (अनु—७६।१७)

पलाल-[7]धूम्रवर्णां मलिन-[8]पाण्डुरां [9]सवर्णवत्सां गामुक्तप्रकारामुक्तोपकरणयुताम-भ्यर्च्यार्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । सोत्कर्षपितृलोकप्राप्तिकामोऽहमेतां पलालधूम्र[10]-वर्णां सवर्णवत्सां[11] कांस्योपदोहनां वस्त्रसम्वीतां गां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

[12]वयोपपन्नां [13]नीलाङ्गीं सर्वरत्नसमन्विताम् ।
गन्धर्वाप्सरसां[14] लोकान् दत्त्वा प्राप्नोति मानवः ॥१६॥ (अनु—७६।२२)

[15]वयोपपन्नां तरुणीं [16]सवर्णवत्सामित्यध्याहार्य्यं प्रकरणात् । सर्वरत्नानि परिभाषोक्तानि ग्राह्याणि । [17]सवर्णवत्सां गामुक्तरूपामुक्तोपकरणयुतामभ्यर्च्यार्चिताय[18] ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [19]गन्धर्वाप्सरो-लोकप्राप्तिकामोऽहमेतां [20]सवर्णवत्सां [नीलाङ्गीं सर्वरत्नान्वितां][21] गां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

---

1 I. O. पिङ्गलाक्षीं
2 I. O. कांस्योपदोहनां ; A कांस्योप-दोहनां
3 A पिङ्गाक्षीं for पिङ्गलाक्ष
4 I. O. हिरण्यवस्त्रां
5 A सवर्णं पिङ्गाक्षवत्सां
6 I. O. ०धूम०
7 I. O. ०धूम०
8 I. O. and A ०पाण्डरां
9 I. O. सवर्णवस्त्रां
10 I. O. ०धूम०
11 I. O. सवर्णवस्त्रां, A सवत्सां
12 A पयोपपन्नां
13 I. O. नीलाङ्गी
14 I. O. गन्धर्व्वाप्सरसान
15 A पयोपपन्नां
16 A' सुवर्णवत्सामित्याध्याहार्य्यं
17 A सुवर्णवत्सां
18 A ०युतामच्चितार्चिताय
19 A गन्धर्व्वाप्सरस०
20 A सुवर्णवत्सां
21 A नीलां for the bracketed portion

तथा (अनु—७६।८) :—

समानवत्सां कपिलां धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसम्वीतां [ब्रह्मलोके महीयते ][1] ॥१७॥

[2]सुव्रतां सुखदोह्यां कपिलामुक्तरूपामर्चयित्वार्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्त-मुक्त्वा दद्यात् । सोत्कर्षब्रह्मलोकप्राप्तिकामोऽहमेतां [3]सवर्णवत्सां वस्त्रसम्वीतां कपिलां [4]धेनुं गां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

[5]तथा (अनु—७६।११) :—

समानवत्सां [6]श्वेतान्न धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसम्वीतामिन्द्रलोके महीयते ॥१८॥

गामुक्तरूपामर्चयित्वार्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । सोत्कर्षेन्द्र-लोकप्राप्तिकामोऽहमेतां सवर्णवत्सां वस्त्रसम्वीतां [7]श्वेतां धेनुं गां ददानि । स्वस्त्यादि-स्वीकारान्तं पूर्ववत् ।

तथा (अनु—७६।१२) :—

[8][समानवत्सां कृष्णान्तु] धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसम्वीतामग्निलोके महीयते ॥१९॥

धेनु-[मुक्तरूपा][9]-मर्चयित्वार्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । सोत्-कर्षाग्निलोकप्राप्तिकामोऽहमेतां [10]सवर्णवत्सां वस्त्रसम्वीतां कृष्णां धेनुं गां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (अनु—७६।६) :—

रोहिणीं तुल्यवत्सान्तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसम्वीतां सूर्य्यलोके महीयते ॥२०॥

रोहिणीं लोहितां धेनुमुक्तरूपामर्चयित्वार्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । सोत्कर्षसूर्य्यलोकप्राप्तिकामोऽहमेतां रोहिणीं [11]तुल्यवर्णवत्सां वस्त्रसंवीतां धेनुं गां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

---

1 A ब्रह्मलोकमवाप्नुयात् for the bracketed portion
2 A omits it
3 A सवत्सां
4 A धेनु, I. O. श्वेतधेनुं
5 I. O. omits it
6 I. O. श्वेताम्नु
7 I. O. omits it
8 I. O. reads the bracketed portion as समानवर्णां कृष्णाया
9 I. O. reads the bracketed portion as रूपमुक्ता
10 A सुवर्णवत्सां
11 A तुल्यवत्सां

[1][समानवत्सां धूम्रान्तु] धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसम्वीतां याम्यलोके महीयते ॥२१॥ (अनु—७६।१३)

धूम्रां कृष्णलोहितच्छविं धेनु-[2]मुक्तरूपामर्चयित्वार्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्य-मन्तमुक्त्वा दद्यात् । सोत्कर्षयाम्यलोकप्राप्तिकामोऽहमेतां सवर्णवत्सां [3]वस्त्रसंवीतां [4][धूम्रधेनुं गां] ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (अनु—७६।१६) :—

समानवत्सां गौरीन्तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां वसूनां लोकमश्नुते ॥२२॥

गौरी-[5]मतिपीतवर्णां गामुक्तरूपामर्चयित्वार्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । वसुलोकप्राप्तिकामोऽहमेतां सवर्णवत्सां वस्त्रसंवीतां गौरीं धेनुं [6]गां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा ( अनु—७६।१० ) :—

*समानवत्सां [7]शवलां धेनुं दत्त्वा पयस्विनीम् ।*
सुव्रतां वस्त्रसंवीतां सोमलोके महीयते ॥२३॥

[8]शवलां नानावर्णां गामुक्तरूपामर्चयित्वा-[9]र्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । सोत्कर्षसोमलोकप्राप्तिकामोऽहमेतां सवर्णवत्सां वस्त्रसंवीतां [10]शवलां धेनुं[11] गां ददानि । [12][स्वस्त्यादिस्वीकारान्तं पूर्ववत्] ।

तथा (अनु—७६।१८) :—

सवत्सां पीवरीं दत्त्वा [13]दृतिकण्ठामलङ्कृताम् ।
वैश्वदेवमसम्बाधं[14] स्थानं श्रेष्ठं प्रपद्यते ॥२४॥

1 A reads the bracketed portion as ब्राह्मणाय धूम्रवर्णां
2 A omits मुक्त
3 A वस्त्रमतां
4 I. O. धेनुगां, A धूम्रधेनुं
5 I. O. मभि for मति
6 A omits it
7 I. O. शवलां, A सवर्णां
8 A सवलां, I. O. शवलां
9 A omits ०र्चिताय
10 A सवलां, I. O. शवलां
11 A omits धेनुं
12 A omits the bracketed portion
13 I. O. दृति०
14 A ०पन्नाधं

अलङ्कृतां यथाशक्ति हैमतिलकादिभिः । पीवरीं स्थूलदेहां [1]दृतिकण्ठां चर्मपट्टिकावेष्टित-[2]कण्ठाम् । स्थूलवत्सां [3]गामुक्तरूपामर्चयित्वार्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । असम्बाध-श्रेष्ठवैश्वदेवस्थानप्राप्तिकामोऽहमेतां समानवत्सां [4]दृतिकण्ठामलङ्कृतां धेनुं [5]गां ददानि । स्वस्त्यादिस्त्रीकारान्तं पूर्ववत् ।

तथा :—

कपिलायाः प्रदानेन मुच्यते नात्र संशयः ।
तस्मादलङ्कृतां दद्यात् [6][कपिलां गां] द्विजातये ॥२५॥

अलङ्कृतां हैमतिलकादिभिः ।

श्रोत्रियाय दरिद्राय गृहस्थायाग्निहोत्रिणे ।
पुत्रदाराभि-[7]सक्ताय तथा ह्यनुपकारिणे ॥२६॥

गामुक्तरूपामर्चितां यथोक्तरूपाय ब्राह्मणायार्चिताय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । मुक्तिप्राप्तिकामोऽहमेतां कपिलामलङ्कृतां धेनुं गां ददानि । स्वस्त्यादिस्त्रीकारान्तं पूर्ववत् ।

तथा (अनु—५७।२८-२९) :—

प्रयच्छते यः कपिलां सचेलां कांस्योपदोहां कनकाग्रशृङ्गीम् ।
तैस्तैर्गुणैः कामदुघा हि भूत्वा नरं प्रदातारमुपैति सा गौः ॥२७॥
यावन्ति रोमाणि भवन्ति धेन्वास्तावत् फलं प्राप्य स गोप्रदाता ।
पुत्रांश्च पौत्रांश्च [8]कुलञ्च सर्वमासप्तमन्तारयते परत्र ॥२८॥

कपिलां [9]सवत्सामुक्तरूपामभ्यर्च्यार्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । महाभारतोक्त-[10]कनकशृङ्ग-कपिलादानफलप्राप्तिकामोऽहमेतां [11]सचेलां कांस्योपदोहां कनकाग्र-शृङ्गीं [12][सवत्सां कपिलां] धेनुं गां ददानि । स्वस्त्यादिस्त्रीकारान्तं पूर्ववत् ।

---

1 I.O. दृति०
2 A ०कण्ठां
3 A omits गा
4 I. O. दृति०
5 A omits गां
6 I. O. reads the bracketed portion as कपिलाम्बु
7 A ०सक्ताय, I. O. ०भूताय
8 I. O. कुलंहि
9 A omits स
10 A कनकशृङ्गी
11 A omits it
12 A सवत्सां for the bracketed portion

तथा (cf.अनु—५७।२८) :—

प्रयच्छते यः कपिलां [1]सचेलां कांस्योपदोहां [2]द्रविणोत्तरीयैः ।
तैस्तैर्गुणैः कामदुघा हि भूत्वा नरं[3] प्रदातारमुपैति सा गौः ॥२६॥

[4]द्रविणोत्तरीयैरिति द्रविणैर्यथाशक्ति सुवर्णेन वस्त्रतयेण च सहिताम् ।

यावन्ति रोमाणि भवन्ति धेन्वास्तावत् फलं प्राप्य स गोप्रदाता ।
पुत्रांश्च पौत्रांश्च कुलञ्च सर्वमासप्तमन्तारयते परत्र ॥३०॥
(अनु—५७।२६, cf. वन—१८६।१२)

कपिलां धेनुमुक्तरूपामभ्यर्च्यार्चिताय ब्राह्मणाय [5][ अद्यादि] तुभ्यमन्तमुक्त्वा दद्यात् । महाभारतोक्त-सोत्तरीयकपिलादानफलप्राप्तिकामोऽहमेतां सचेलां कांस्योपदोहां [6]समानवत्सां [7]द्रविणोत्तरोगैर्युक्तां कपिलां धेनुं गां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

आग्नेयपुराणे :—

अर्चयित्वा पुरा [8][गां वै] [9]गोरसैस्तत्तगेऽहनि ।
[10]वत्सैः [11]पीतां ततो दद्यात्तर्पितां [12]नृपसत्तम ॥१॥

[13]तत्तगेऽहनि दानदिनपूर्वतरदिने । [14]वत्सैरिति जात्याख्यायामेकस्मिन् बहुवचनम् ।

कृतोपवासः संप्राश्य पञ्चगव्यं नरेश्वर ।
घृतक्षीराभिषेकञ्च कृत्वा विष्णोः समाहितः ॥२॥
समभ्यर्च्य च गोविन्दं पुष्पादिभिररिन्दम ।
उदङ्मुखीमर्चयित्वा तथा पृथ्वीं पयस्विनीम् ॥३॥

पृथ्वीं पृथुदेहाम् ।

वस्त्राभरणसंवीतां सितयज्ञोपवीतिनीम् ।
[15]स्वर्णशृङ्गीं रूप्यखुरां हिरण्योपरि संस्थिताम् ।

---

1 I. O. omits it
2 I. O. द्रविणोत्तरीयैः
3 A नरः
4 I. O. द्रविणैरुत्तरीयैरिति
5 A' दद्यादि for the bracketed portion
6 I. O. omits it
7 I. O. द्रविणोत्तरीययुक्तां
8 A' गां and I. O. गाञ्च for the b. p.
9 I. O. गोवत्ससत्तगेऽहनि, A गोरसैस्तत्तयेऽहनि
10 I. O. वत्सः
11 I. O. पीतान्तमी
12 A' नृपसत्तमः, I. O. प्रभुसत्तम
13 I. O. ततयेऽहनि, A ततयेऽहनि
14 I. O. वत्सैरिति
15 I. O. सुवर्णशृङ्गीं

[1]वस्त्राभरणसंवीतामिति वस्त्रेणाभरणेन च[2] यथाशक्ति तिलकादिना अलङ्कृताम् ।

[3]सुवर्णं वाचयित्वाग्रे [4]ब्राह्मणायोपपादयेत् ॥४॥

[5]इमां त्वं [6]प्रतिगृह्णीष्व [7]गोविन्दो [8]गोप्रियङ्करः ।

[9]पापानामपनोदाय [10]गोविन्दः प्रीयतामिति ॥५॥

इमां [11]त्वमित्यादि मन्त्रमग्रे वाचयित्वा पठित्वा [12]गां प्रतिपादयेत् । [13]सुवर्णं दक्षिणारूपमित्यर्थः ।

[14]सम्यगुच्चार्य तं विप्रं गोविन्दं नृप कल्पयेत् ।

या धेनुः [15]कश्यपस्यासीदत्रेर्वा गौतमस्य च ॥६॥

सा [16]निकामफला देवी इह लोके परत्र च ।

अनुव्रजेच्च गच्छन्तं [17]पादान्यष्टौ नराधिप ॥७॥

या धेनुः कश्यपस्यासीदित्यादि[18] मन्त्रं सम्यगुच्चार्य ब्राह्मणं गोविन्दरूपं ध्यात्वा तं गच्छन्तमष्टौ [19]पादान्यनुव्रजेदिति[20] सम्बन्धः ।

अनेन विधिना धेनुं यो विप्राय प्रयच्छति ।

गोविन्दप्रीणनाद्राजन् विष्णुलोकं स गच्छति ॥८॥

सप्तावरान् सप्तपूर्वानात्मानं चैव मानवः ।

संसारसागरात् सद्यो [21][मोचयत्येव निश्चयम्] ॥९॥

[22]अश्वमेधसहस्रस्य [23]गोसवस्य च मानवः ।

फलं प्राप्नोति राजेन्द्र विधानेन न संशयः ॥१०॥

---

1 A °ाभरण°
2 A omits it
3 A सुवर्ण
4 A ब्राह्मणाय उपपादयेत्, I. O. ब्राह्मणोपपादयेत्
5 A उमां
6 I. O. प्रतिगृह्णीषु, A प्रतिगृह्णीय
7 A गोविन्दा
8 I. O. गोविप्रयङ्करः, A गाः प्रियङ्कर
9 I. O. मम मायापनोदाय, A पापापपापनोदाय
10 A गोविन्दाः
11 I. O. भूमिमित्यादि°
12 A मां
13 A सुवर्ण
14 A सम्यगचिंताय
15 I. O. कस्यपस्यासीदत्रेर्व्वा, A कस्यपस्यासीदात्रुर्व्वा
16 A निगमफला
17 I. O. पदान्यष्टौ
18 A °दिना
19 I. O. पदा°
20 I. O. व्रजेदित्यय:
21 I. O. मोचयत्यवमीपने for the b. p.
22 I. O. पदे पदे तं यज्ञस्य
23 A गोरसस्य

सर्वकाम-[1]प्रदास्ताश्च सर्वकालश्च[2] पार्थिव[3] ।
धेनवः पापनोदाश्च यावदिन्द्राश्चतुर्दश ॥११॥
सर्वेषामेव [4]पापानां कृतानामविजानता[5] ।
प्रायश्चित्तमिदं प्रोक्तमनुतापोपबृंहितम् ॥१२॥
इक्ष्वाकुणैषा राजेन्द्र पुरा दत्ता महात्मना ।
[6]प्रज्ञावता [शुभा लोकाः][7] प्राप्ता [8]राजन्महीतले ॥१३॥
[9][तथैवान्यैर्महीपालैर्नृप वैण्यादिभिस्तथा ।
लोकाः कामदुहः प्राप्ता दत्त्वैतद्विधिना नृप] ॥१४॥

अत्र दानात् पूर्वतरदिने प्रातः कृतनित्यो गां स्थूलदेहां [10]बहुदुग्धां [11]क्षीरघृतादिभिरभ्यर्च्य [12]घटिकाधिकप्रहरत्रये [13][हविष्यं भुक्त्वाचम्य] शुचौ देशे उपविश्य पादौ [14]प्रक्षाल्याचम्य प्राङ्मुख उदङ्मुखो वा कृताञ्जलिः 'ॐ सूर्यः सोमो यमः कालः पञ्चभूतानि आग्नेयपुराणोक्त सोपवास-गोदानकर्म [मया कर्तव्य'मित्युक्त्वा][15] उदङ्मुखो गृहीतोदपूर्णताम्रपात्रः सङ्कल्पं कुर्यात् । 'ॐ श्वः पञ्चगव्यप्राशनपूर्वकमुपोष्यापरदिने आग्नेयपुराणोक्त-वासुदेव-घृतक्षीरस्नपन-पूजापूर्वकगोदानकर्माहं करिष्ये' । ततो नियमेन सुप्त्वा परदिने [16]कृतनित्यः पञ्चगव्यं [17]प्राश्योपोष्यापरदिने कृतनित्यो वासुदेवप्रतिमां घृतक्षीराभ्यां स्नपयित्वा बहुपूजोपचारैर्यथाशक्ति संपूज्य गां वत्सपीतस्तन्यां [18]घासादिना सन्तर्प्य सुवर्णशृङ्गीं रूप्यखुरां सौवर्णपलचतुष्टयार्पित-[19][खुरचतुष्टयां कृत्वा] वस्त्रेणाच्छाद्य यथाशक्ति हेमतिलकादिनालङ्कृत्य सितयज्ञोपवीतं परिधाप्य उदङ्मुखीं कृत्वाऽभ्यर्च्यार्चिताय ब्राह्मणाय ॐ इमां त्वमित्यादिमन्त्रं पठित्वा अद्यादि तुभ्य-

1 I. O. प्रदाता च
2 A सर्व्वकामश्च
3 I. O. पार्थिवः
4 A सोपानां
5 A ०जानतां
6 I. O. यशी यशी
7 A सुभा लोका for the b. p.
8 A राजा महीयते
9 A omits the bracketed portion
10 A बहुदुग्ध, I. O. बहुदुग्धां
11 A क्षीरघृतादिभिरभ्यर्च्चा, I. O. क्षीरादिभिरभ्यर्च्चा
12 I. O. घटिकादिक and A घटिकाय for घटिकाधिक
13 I. O. हविष्य दृत्वाचम्य for the bracketed portion
14 I. O. प्रक्षाल्य
15 A omits the bracketed portion
16 A कृतनित्यकृत्यः
17 A प्राश्यापरदिने
18 A घासादीनां
19 A मुखं चतुष्टया for the b. p.

मन्तमुक्त्वा दद्यात् । आग्नेयपुराणोक्त-[1]गोविन्दस्नपनपूजापूर्वकगोदानफलप्राप्तिकामोऽहमेतां वस्त्राभरणसंवीतां सितयज्ञोपवीतिनीं सुवर्णशृङ्गीं [2]रूप्यखुरां हिरण्योपरि [3]संस्थितां धेनुं गां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । ततो यजमानः ॐ या धेनुरित्यादिमन्त्रं पठित्वा गोविन्दोऽयं मयि [4][प्रीतो यातीति [5]ध्यायन् तं ] ब्राह्मणमष्टौ पदान्यनुव्रजेत् ।

तथा :—

समानवत्सां कपिलां सचेलां कांस्योपदोहां कनकाग्रशृङ्गीम् ।
तैस्तैर्गुणैः कामदुघा हि भूत्वा नरं प्रदातारमुपैति सा गौः ॥१५॥

समानवत्सां [6]कपिलवत्सां सचेलां [7]वस्त्राच्छादितां गा-[8]मुक्तरूपामुक्तोपकरणयुतामभ्यर्च्यार्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । आग्नेयपुराणोक्त-[9]कपिलगवीदानफलप्राप्तिकामोऽहमेतां [10]समानवत्सां कपिलां [11]सचेलां कांस्योपदोहां कनकाग्रशृङ्गीं [12]गां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । उभयतोमुखीदाने तु दानवाक्ये आग्नेयपुराणोक्तोभयतोमुखीदानफलप्राप्तिकामोऽहमेतां सचेलां कांस्योपदोहां कनकाग्रशृङ्गीमुभयतो-[13][मुखीं गामिति] विशेषः ।

तथा [14]आग्नेयपुराणम् :—

यावद्वत्सस्य पादौ द्वौ शिरश्चापि [15]प्रदृश्यते ।
तस्मिन् काले प्रदातव्या विधिना द्विजसत्तम ॥१६॥

विधिना [16]कपिलादानोक्तविधिनेत्यर्थः ।

अन्तरीक्षस्थितो वत्सो यावद्योन्यां प्रदृश्यते ।
तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥१७॥
यावन्ति [17]तस्या रोमाणि वत्सस्य च नराधिप ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥१८॥

---

1 I. O. omits गोविन्द
2 I. O. रौप्यखुरां
3 I. O. संस्थां
4 A प्रीति for the bracketed portion
5 A ध्यायन । ॐ, I. O. ध्मापनयान्तं
6 A कपिलां वत्सां
7 A वस्त्राशोदितां
8 A omits ०मुक्तरूपा०
9 A कपिलां
10 A omits it
11 A omits it
12 A omits it
13 A मुखीमिति for the b. p.
14 I. O. चाग्नेयपुराणं
15 I. O. न दृश्यते
16 A omits कपिला
17 I. O. तस्य

मत्स्यपुराणे (२०५।२-६) :—

[1]रुक्मशृङ्गीं रूप्यखुरां मुक्तालाङ्गूलभूषिताम् ।
कांस्योपदोहनां राजन् [2]सवत्सां [3]द्विजपुङ्गवम् ।
[4]प्रसूयमानां गां दत्त्वा [5]महत् पुण्यफलं लभेत् ॥१६॥
यावद्वत्सो योनि-[6][गतो यावद्]-गर्भं न मुञ्चति ।
[7][तावद्गौः[8] पृथिवी ज्ञेया सशैलवनकानना ॥२०॥ ]
प्रसूयमानां यो दद्याद्धेनुं द्रविणसंयुताम् ।
ससमुद्रगुहा तेन सशैलवनकानना ।
चतुरन्ता भवेद्दत्ता पृथिवी नात्र संशयः ॥२१॥
यावन्ति [9]धेनो रोमाणि वत्सस्य च नराधिप ।
तावत्-[10]संख्यानब्दगणान् देवलोके महीयते ॥२२॥
[11]पितॄन् पितामहांश्चैव तथैव प्रपितामहान् ।
उद्धरिष्यत्यसन्देहो[12] नरकाद्भूरिदक्षिणः ॥२३॥
घृतक्षीरवहाः कुल्या दधिपायसकर्दमाः ।
[13]यत्र तत्र गतिस्तस्य [14]भवेच्चेप्सितकामदा ।
गोलोकः सुलभस्तस्यब्रह्मलोकश्च [15]पार्थिव ॥२४॥
स्त्रियश्च तं चन्द्रसमान-[16]वक्त्राः प्रतप्तजाम्बुनदतुल्यरूपाः[17] ।
महानितम्बास्तनु[18]-वृत्तमध्याः [19]सेवन्त्यजस्रं [20]नलिनाभनेत्राः ॥२५॥

1 I. O. and A रूप्य०, M. P. स्वर्ण०
2 I. O. सवत्सा
3 I. O. and M. P. द्विजपुङ्गवे
4 A प्रसूयमाना
5 A स तत्
6 I. O. गतस्तावद् for the bracketed portion
7 I. O. omits the bracketed portion
8 M. P. ०वै
9 A and M. P. धेनुरोमाणि
10 A संख्यां तयगणान्, I. O. संख्यान्युपगमाद्, M. P. संख्यं युगगणं
11 A पितृ
12 M. P. ०सन्देहान्
13 I. O. सक
14 A भवेदद्दिप्सित०, M. P. द्रुमाश्चेप्सित०
15 A पार्थिवः
16 I. O. ०वर्णाः
17 I. O. ०तुल्यरूपाः
18 I. O. मध्य० for तनु०
19 M. P. भजन्त्य०
20 I. O. शशिनाभनेत्राः

अत्र द्रविणसंयुतामिति श्रवणात् सुवर्णश्रृङ्गाद्यतिरिक्त-[1][सुवर्णदानं भूरिदक्षिण इति श्रवणाच्च यथाशक्ति विस्तरा दक्षिणा देया। तदत्र यदा गौः प्रसूयमाना दृश्यवत्सावयवा भवति, तदा तां पूर्वोक्तपञ्चवत्ससहितां सुवर्णश्रृङ्गायुक्ता]-लङ्कारसहिता-[2]मर्चितामर्चिताय विद्या-तपोवृत्त-[3]सम्पन्नाय ब्राह्मणाय[4] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। मत्स्यपुराणोक्त-प्रसूयमान-गवीदानफलप्राप्तिकामोऽहमेतां रुक्मश्रृङ्गीं रौप्यखुरां मुक्ताभूषितलाङ्गूलां कांस्योपदोहनां द्रविण-संयुतां सवत्सां प्रसूयमानां गां ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

स्कन्दपुराणे :—

यो नरो गां प्रयत्नेन सवत्सां कांस्यदोहनाम्।
हेमश्रृङ्गीं रौप्यखुरां दुकूलक्षौमवाससाम् ॥१॥

दुकूलं [5]पट्टवस्त्रं क्षौमं क्षुमाभवं वस्त्रम्।

शय्यास्तरण-[6]सम्पन्नां [7]बहुपुष्पफलैर्युताम्।
ब्राह्मणांस्तर्पयित्वाग्रे गन्धमाल्यैरलङ्कृतान्[8] ॥२॥
दानकाले ततस्तस्याः [9]सुरा गात्रेषु संस्थिताः।
[10][ब्रह्मा तस्याः स्थितो मूर्ध्नि शक्रो यानं समाश्रितः।
चन्द्रादित्यौ ततो नेत्रे घ्राणे वायुः प्रतिष्ठितः ॥३॥
मुखं तस्याः श्रितो[11] वह्निर्जिह्वां सोमः स्वयं प्रभुः।
कर्णयोस्तु दिशः सर्वाः शिरो रुद्राः समाश्रिताः ॥४॥]
पादयोर्लोकपालाः स्युः [12]सर्वास्थीनि च पर्वताः।
[13][समुद्राः सप्त जठरे ग्रीवायां तपनाः श्रिताः।
साक्षां गङ्गा सरिच्छ्रेष्ठा पार्श्वौ तु वसवः शुभाः ॥५॥

---

1 A omits the bracketed portion
2 A omits ०मर्चिता०
3 A ०समनुयाय
4 A ब्राह्मणाय before विद्यातपोवृत्त०
5 I. O. ऊर्णावस्त्रं
6 I. O. ०सम्पन्नं
7 I. O. बहुपुष्पफलैर्वृतां ; A रत्न-पुष्पसमन्वितां
8 A ०कृतां
9 I. O. सुरा गात्राणि ; A सर्वेगात्रेषु
10 A omits the bracketed portion
11 I. O. स्मृतो
12 A सर्वास्थीनि
13 A omits the bracketed portion

प्रजापतिरुपस्थश्च मूत्रं तीर्थानि सर्वशः ।
पुरीषन्तु [1]विभुस्तस्या नासा×××संस्थिताः ॥६॥ ]
साध्या [2]विश्वेऽथ लोकाश्च [3]पुच्छमाश्रित्य [4]संस्थिताः ।
मन्त्रा यज्ञाश्च दानानि नियमा ऋषिभिः सह ॥७॥
नक्षत्राणि [5]ग्रहाश्चैव तारारूपाणि यानि च ।
गायत्री चैव [6]त्रिष्टुभ् [7]जगती [8]पंक्तिरेव च ॥८॥
[9]अनुष्टुभ् ऋग्यजुश्चैव सामान्यथर्वणस्तथा ।
लोकस्य[10] मातरश्चैव मेघावर्षमथापि [11]वा ॥९॥
धर्मो नारायणश्चैव भूतानि सरितस्तथा ।
[12]रोमाणि तस्याः संश्रित्य [13]तस्या [14]देवा व्यवस्थिताः ॥१०॥
यक्षाश्च राक्षसाश्चैव तथा चाप्सरसः शुभाः ।
गन्धर्वाश्च महात्मानो ये चान्येऽप्येवमादयः ॥११॥
तस्या [15]विषाणयोर्मध्ये सर्व एव समाश्रिताः ।
फलानि यज्ञदानानां गतयश्च पृथग्विधाः ॥१२॥
[16]वत्सं समाश्रिताः सर्वे सर्वदेवमयं शुभम् ।
[17]देवैरध्यासितां तान्तु सर्वलोकनमस्कृताम् ॥१३॥

ध्यात्वेति शेषः ।

विप्रेभ्यो [18]मन्त्रमुच्चार्य्य प्रदद्यात् सुसमाहितः ।
कुशान् सुवर्ण-[19]बीजांश्च तिलान् [20]सिद्धार्थकांस्तथा ।
प्रदद्यात्तां ततोऽद्भिश्च मन्त्रेणानेन सुव्रत ॥१४॥

---

1 I. O. विभूतस्या
2 I. O. विश्वे च
3 A पुच्छाश्रित्य
4 A संश्रिताः
5 A ग्रहश्चैव ; I. O. महांश्चैव
6 I. O. त्रिष्टुभ, A त्रृष्टुप
7 I. O. जगतीं
8 A पङ्क्तिरेव
9 A अनुष्टुप ; I. O. अयष्टुद
10 A लोकपा
11 I. O. च
12 I. O. रूपाणि
13 I. O. तस्य
14 A देवा
15 A विषाणयोर्मतम
16 A वत्सां
17 I. O. देवैरध्यासितातास्ताम ; A देवत्युध्यासितातातामु
18 I. O. मन्त्रवरसे
19 A -बीजानि
20 I. O. सिद्धार्थकास्तथा

प्रदद्यात्तां तत इति ततो ब्राह्मणत्रयहस्ते कुशसुवर्णादिके दत्ते [1]गामन्यस्मै ब्राह्मणाय दद्यादित्यर्थः ।

सर्वदेवमयीं [2]दोग्ध्रीं सर्वलोकमयीं तथा ।
सर्व-[3]लोकनिमित्ताय [4]सर्वलोकाभयाय च ।
प्रयच्छामि महाभागामक्षयाय शुभाय गाम् ॥१५॥
एवं दत्त्वा स तां गान्तु यत्र यत्राभिजायते ।
तत्र तत्र गता सा तु [5]तन्तु तारयते भयात् ॥१६॥
तथा [6]कामदुघा चैव सर्वलोक-[7]प्रदा तथा ।
सर्वदानफला चैव [8]सर्वयज्ञफला तथा ॥१७॥
सर्वलोकांस्तथा गत्वा रमते च [9]यथामरः ।
इह जातश्च[10][तामेव कामगां स प्रपद्यते] ॥१८॥
[11][स तदा मानुषे लोके गोसहस्री महायशाः] ।
[12][धनवान् रूपवांश्चैव बहुपुत्रश्च] जायते ॥१९॥

गां सवत्सामुक्तोपकरणयुतां कृत्वा ब्राह्मणत्रयं गन्धमाल्याभ्यामलङ्कृत्य वस्त्रादिना सन्तर्प्य [13][प्रत्येकं तेषां हस्ते] सुवर्णं कुशान् तिलान् [14]श्वेतसर्षपान् यथालाभं धान्यादि [15]शस्यञ्चामन्त्रकमेव दत्त्वा गाञ्च यथोक्तसर्वदेवमयीं[16] ध्यात्वाभ्यर्च्य ॐ सर्वदेवमयीमित्यादि [17]पठित्वा अर्चितायापरब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [18]स्कन्दपुराणोक्तालङ्कृतगवोदानफलप्राप्तिकामोऽहमेतां सवत्सां कांस्यदोहनां हेमशृङ्गीं रूप्यखुरां दुकूल-[19]क्षौम-

1 A गामदक्षस्म
2 A दोग्धीं
3 I. O. ०लोकानिमित्ताय
4 I. O. सर्व्वलोकभयाय, A सर्व्वलोकभवाय
5 A जन्तु
6 I. O. कामदुहा
7 I. O. ०पदा
8 A सर्व्वज्ञानफला
9 A यथारमः
10 I. O. तामेकामपां संप्रतिपद्यते for the bracketed portion
11 I. O. भक्त्या मानुषो जातो गोसहस्री महायशः for the bracketed portion
12 A रूतवस्त्रपरश्चैव रत्नप्रदश्च for the bracketed portion.
13 A प्रत्येकहस्तेषां for the bracketed portion
14 A सर्षपान्
15 I. O. मन्त्रया for मन्त्रकया
16 I. O. ०देवतामयीं
17 A पाद्यार्घ्यार्च्चिताया०
18 I. O. स्कन्दपुराणोक्ताभयमन्त्रालङ्कृत०
19 I. O. omits क्षौम

वस्त्राच्छादितां शय्यास्तरणं [1]बहुपुष्पफलयुतां गां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । उभयतोमुखीदानवाक्ये तु जातिस्मरत्वप्राप्तिकामोऽहमेतामुभयतोमुखीमिति [2]निवेशो विशेषः । सवत्सामिति[3] चोभयतोमुखीदानवाक्येऽपि[4] न खण्डनीयम् ।

तथाहि स्कन्दपुराणम् :—

प्रसूयमानां यो गान्तु दद्यादुभयतोमुखीम् ।
यथोक्तेन विधानेन स जातिस्मरतां लभेत् ॥२०॥

यथोक्तेनेति पूर्वधेन्वा[5] विधानेन इत्यर्थः ।

[6]वराहपुराणे (२०५।२४-२५) चित्रगुप्त-[7]वाक्ये :—

तरुणी क्षीरसम्पन्ना गौः सुवर्णमयी[8] शुभा ।
सवत्सा [9]क्षौमवासाश्च [10][स्वर्गं याति महामनाः] ॥२१॥

सुवर्णमयी [11]बहुसुवर्णालङ्कृता यथाशक्ति [12]बहुसुवर्णघटिततिलकाद्यलङ्कृतेति यावत् । शुभा [13]सल्लक्षणोपेता क्षौमवासाः क्षुमाभववस्त्राच्छादिता ।

अस्य लेखं मया दृष्टं तिस्रः कोट्यस्त्रिविष्टपे ।
[[14]अग्रीणां [15]प्रचुरतश्चैव समृद्धे][16]जायते कुले ॥२२॥

गामुक्तरूपां सवत्सामुक्तोपकरणयुतामभ्यर्च्यार्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्त-मुक्त्वा दद्यात् । वराहपुराणोक्तालङ्कृतगवीदानफलप्राप्तिकामोऽहमेतां [17]सुवर्णमयीं सवत्सां क्षौमवाससां गां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

[18]आदिपुराणे :—

गां दद्याद्वेद-[19]पूर्णाय विप्राय गृहमेधिने ।
सुवर्णालङ्कृतशृङ्गीं वस्त्रघण्टासमन्विताम् ।
[20]प्रत्यग्रां त्रिःसमृद्धान्तु ललाटतटदर्पणाम् ॥२३॥

1 A ०रक्त०
2 A निवेशास्ति
3 A सवत्सा
4 A तु
5 I. O. ०धेनु
6 I. O. omits it
7 I. O. ०पुत्रावाक्ये
8 Varāha P. सुवर्णयुता
9 Varāha P. क्षेमवासाश्च
10 I. O. याति तेन महात्मना for the bracketed portion
11 A रत्न for बहु, I. O. omits it
12 A रत्नसुवर्णघटितनिलकाद्यलङ्कृत इति
13 A लक्षणोपेता
14 A करीषां
15 A पृष्ठतश्चैव
16 Varāha P. स्वर्गात् परिच्युतश्चापि ऋषीणां for the b. p.
17 A omits it
18 I. O. आदित्यपुराणे
19 A ०पुत्राय
20 A प्रत्यग्रां

[1]प्रत्यग्रां [2]नवतरुणीं त्रिःसमृद्धामिति मत्स्यपुराणोक्त-[3]सल्लक्षण-[4]बहुत्रयग्रहणम् ।

[5][तथा मत्स्यपुराणम् (२०७।१०-१२) :—]

[6][उरः पृष्ठं] [7]शिरःकुक्षी[8] श्रोणी च वसुधाधिप ।
[9]षडुन्नतानि धेनूनां पूजयन्ति विचक्षणाः ॥२४॥
[10][कर्णौ नेत्रे ललाटश्च] पञ्च[11]भास्करनन्दन ।
समायतानि[12]शस्यन्ते [13][पुच्छं सास्ना च सक्थिनी ॥२५॥ ]
चत्वारश्च[स्तना राजन् ज्ञेया स्त्वष्टौ][14] मनीषिभिः ।
शिरोग्रीवाऽऽयताश्चैते[15] भूमिपाल दश स्मृता ॥२६॥

[16][श्रवणपुच्छादीनि च पञ्चदश] सङ्कीर्त्य समायतानीति योज्यम् । समानि चायतानि च [17]समायतानि यथासंख्यं सम्बन्धः । तदेवं [18][समता सावयवा] पञ्च समा दश चायता इति [19]बहुत्रयम् ।

[20][रजतच्छन्नचरणां मुक्तालाङ्गूलभूषिताम् । ]
कांस्योपदोहां [21]तृप्ताश्च [22]लवणान्नतृणोदकैः ॥२७॥

---

1 A प्रत्यगां
2 A नरभर्वौ
3 A मलक्षण
4 A चक्रत्रयग्रहणं , I. O. बहुत्रय-लक्षणं
5 A omits the bracketed portion
6 I. O. तलः पृष्ठः for the bracketed portion
7 A शिर
8 I. O. कुक्षं, A कक्षी
9 A षड तवानि
10 I. O. reads the bracketed portion as कर्णौनिवोललाटश्च and A as कर्णौ नेत्रे ललाटे च
11 Corrected from M. P. I. O. भास्करनन्दन and A स्य सुवमानमा
12 Corrected from M. P. I. O चास्यन्ते ; A शस्यन्ति
13 Corrected from M. P. I. O. पुच्छसास्ना च सन्धिनी ; A पुच्छसास्ना-वसक्थिनौ
14 Corrected from M. P. I. O. तुरास्ताअम्नेवमष्टौ , A स्तना राजान-वमष्टौ
15 Corrected from M. P. I. O. and A °पुमहत्स्वैते
16 I. O. omits the bracketed portion
17 A omits it
18 A समता मवयवा: and I. O. षडमता मवयवा:
19 A चत्रयद्वय
20 A रजताच्छन्नमुक्ताफलालाङ्गूलभूषितां for the bracketed portion
21 A तृप्ताश्च ; I. O. दृप्ताश्च
22 A लवणान्नतृणोदकैः ; I. O. लवणा-न्नजलोदरैः

गवां पुच्छं गृहीत्वा [1][तु ससुवर्णेन पाणिना] ।
[2][गृहस्थो वेदविद्विप्रो वाचयेत्तु] प्रतिग्रहम् ॥२८॥
भोग्यसौख्यप्रदा श्वेता धूम्राभा पापनाशिनी ।
कृष्णा [3]स्वर्गप्रदा ज्ञेया गौरी च कुलवर्द्धिनी ॥२९॥

धूम्राभा कृष्णलोहितच्छविः । गौरी अतिपीता ।

रक्ता रूपप्रदा ज्ञेया पीता दारिद्र्यघातिनी[4] ।
पुत्रप्रदा कृष्णसारा नीला धर्मविवर्द्धिनी ॥३०॥

कृष्णसारा कृष्णसार-[5]मृगवर्णा नीला श्यामवर्णा ।

कपिला सर्वपापघ्नी नानावर्णा च मोक्षदा ।
पीतोदकां जग्धतृणां दुग्धदोहां न दापयेत् ॥३१॥

पीतोदकां [6]जग्धतृणामिति [7]यजमानप्रमुक्तिमन्तरेण स्वयंपीतोदका[8] [9][जग्धतृणा च प्रतिषिद्धा] । यजमानप्रमुक्तान्तु[10] तृणाद्यैस्तर्पणीयैस्तृप्तां [11]लवणान्नतृणादकैर्दद्यादिति श्रुतेः । एवञ्च दानदिने स्वातन्त्र्येण [12]तृणाद्युपभोक्ता दानपूर्वकाले वारणीयः । गामुक्तलक्षणां [13]स्वप्रमुक्तां लवणान्नतृणोदकैस्तर्पयित्वा उक्तालङ्कारैरलङ्कृत्यार्चयित्वा ब्राह्मणं वेदविदं गृहस्थमभ्यर्च्य तत्करे सुवर्णं दत्त्वा तस्मै ॐ अद्यादि तुभ्यमहमुक्ता दद्यात् । भोग्यसौख्यप्राप्तिकामोऽहमेतां सुवर्णशृङ्गीं वस्त्राच्छादितां घण्टाविभूषितां ललाटतटदर्पणां रजतच्छन्नचरणां [14]मुक्ताभूषितलाङ्गूलां कांस्योपदोहनां श्वेतां गां ददानि । स्वस्त्यादिखोकारान्तं पूर्ववत् । धूम्रकृष्णगौररक्त-[15]पीतकृष्णसारनीलकपिलशबल[16]-गवोदानवाक्येषु यथावर्णं भोग्यसौख्य-

1 A सवर्णवत्सानिना for the bracketed portion

2 A गृहस्थो वेदविद्विप्रा वाचयेति for the bracketed portion

3 A पुत्रप्रदा

4 A ॰घातिनी

5 A omits मृग

6 I. O. जग्धतृणामिति

7 I. O. यज्ञपात्र for यजमान

8 A ॰पीतोदका ; I. O. ॰द्रौपोदका

9 I. O. जग्धतृणामिति च प्रतिषिद्धा for the b. p.

10 A ॰प्रमुक्तान्तु ; I. O. प्रमुक्ता च

11 I. O. लवणामिदृणोदकै॰

12 A तृणाद्युपयोगी ; I. O. तृणाद्युपभोक्ता

13 I. O. उपकरणयुक्ता

14 I. O. मुक्ताविभूषित॰

15 A omits पीत and I. O. reads it before रक्त

16 A सवत्स ; I. O. शरत्स

प्राप्तिकामोऽह-[मेतां श्वेतां गामिति पदस्थाने][1] यथायथममुककामोऽहमिति अमुकवर्णा-मिति च पदं निवेशनीयम्।

नन्दिपुराणे :—

यो गां सुपरिपूर्णाङ्गीं [2]हेमशृङ्गीमकोपनाम्।
सुशीलां राजतैः पादैश्चित्रवस्त्रसुसंहिताम् ॥१॥

सुपरि-[3]पूर्णाङ्गीमव्यङ्गीमकोपनामहिंसका[4] [सुशीलामपलायिनीम् ][5]।

[6]सलौहपात्रां [7]कुतपे निविष्टचरणान्तथा।
सदक्षिणां प्रदद्याद् गां सोऽक्षयं स्वर्गमाप्नुयात् ॥२॥

कुतपे नेपालकम्बले।

यावन्ति गवीरोमाणि [8]सप्रसूति-कुलस्थितौ।
तावन्त्यब्दानि वसति स्वर्गे दाता न संशयः ॥३॥
[9]एतच्छतगुणं पुण्यं कपिलादानतः स्मृतम् ॥४॥

गामुक्तरूपामुक्तोपकरणयुतामभ्यर्च्यार्चिताय ब्राह्मणाय ॐ अद्यादितुभ्यमन्तमुक्त्वा दद्यात्। नन्दिपुराणोक्त-[10] गवीदानफल[11]-प्राप्तिकामोऽहमेतां हेमशृङ्गीं राजतपादां [12]चित्रवस्त्रसुसंहितां सलौहपात्रां कुतपनिविष्टचरणां गां ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। कपिलादाने तु नन्दिपुराणोक्त-कपिलागवीदानफलप्राप्तिकामोऽहमेतां [13][हेमशृङ्गीं राजतपादां कपिलामिति] पूर्वोक्तदानवाक्ये [14][विशेषः। उभयतोमुखीदाने तु दानवाक्ये] नन्दिपुराणोक्तोभयतोमुखी-दानफलप्राप्तिकामोऽहमेतामुभयतोमुखीं गामिति निवेशो विशेषः।

तथाहि नन्दिपुराणे :—

1 I. O. धेनुं गां इति पदभावे for the bracketed portion
2 A हेमशृङ्ग०; I. O. हेमशृङ्गी०
3 A ०पूर्णशृङ्गी० for ०पूर्णाङ्गी०
4 I. O. ०हिंसिका
5 A omits the bracketed portion, I.O. reads it as सुशीला-मपलायिनीं
6 I. O. सलौहपात्रं
7 A कुतपनिविष्टचरणान्तथा; I. O. कुतपे निविष्टचरणां तथा
8 A सप्रस्थिति०
9 I. O. एतद्व्रतगुणं
10 I. O. कपिलाप्रसूयमान and A कपिला before this
11 A omits फल
12 A चित्रवस्त्रां महितां
13 I. O. इति only for the bracketed portion
14 I. O. omits the bracketed portion

यश्चोभयमुखीं दद्याद्विप्राय[1] वेदवादिने ।
देवाय [2]चाप्यभीष्टाय स कुलान्येकविंशतिम् ॥५॥
[3]समुद्धृत्य नरस्तिष्ठेन्नरकाद्ब्रह्मणोऽन्तिके[4] ।
युगानि रोमतुल्यानि यदि [5]श्रद्धापरो नरः ॥६॥

यश्चेति चकारो धेनुदानधर्मसमुच्चयार्थः ।

[6]आदिपुराणे :—

कपिलां ये प्रयच्छन्ति चेलच्छन्नां स्वलङ्कृताम् ।
[7]स्वर्णशृङ्गीं रूप्यखुरां मुक्तालाङ्गूलभूषिताम् ।

[8]स्वलङ्कृतां यथाशक्तिसुरूप[9]-हेमतिलकाद्यलङ्कृताम् ।

[10][श्वेतवस्त्रपरिच्छन्नां घण्टास्वनरवैर्युताम् ॥७॥

अत्र चेलच्छन्नां] श्वेतवस्त्रपरिच्छन्नामिति च पदद्वयदर्शनात् प्रथममभिमत[11]-वर्णवस्त्रेणाच्छाद्य पुनः श्वेतवस्त्रेणाच्छादनं कर्तव्यम् ।

घण्टास्वनरवैर्युतामिति[12] घण्टां दत्त्वा किङ्किनीमालापि [13]देयेति ।

सहस्रं[14] यो [15]गवां दद्यात् [16]कपिलां वापि सुव्रताम् ।
[17]सममेव पुरा प्राह ब्रह्मा [18]वेदविदां वरः ॥८॥

[19]सुव्रतां सुखदोह्याम् ।

देवलोके वसेन्नित्यं कपिलां ददते हि यः ।
दीर्घायुश्चैव जायेत [20]भोगवांश्च [21]प्रियान्नरः ॥९॥

---

1 I. O. ०द्विप्राय
2 I. O. चाद्यभीष्टाय
3 A समभ्यात्य
4 I. O. ०नरका ब्रह्मणोन्तिके
5 A श्रद्धपरो
6 I. O. आदित्यपुराणे
7 I. O. सुवर्णशृङ्गीं : A सुवर्णशृङ्गी
8 A अलङ्कृतां
9 A omits सुरूप
10 I. O. omits the bracketed portion
11 A ०मभियत
12 I. O. omits इति
13 I. O. मेयति
14 I. O. सहस्र
15 A गवाम्
16 I. O. कपिला वापि
17 I. O. सह तत्र
18 A ब्रह्मविदां
19 A सुव्रता ; I. O. सुव्रतं
20 A भोगांश्च
21 I. O. प्रियाव्रतः

ऐश्वर्यबलसम्पन्नो धनधान्यसमृद्धिमान् ।
यो ददाति द्विजश्रेष्ठ कपिलां नात्र संशयः ॥१०॥
यावन्ति [1]रोमकूपानि कपिलाङ्गे [2]भवन्ति वै ।
तावत्कोटिसहस्राणि वर्षाणां दिवि मोदते ॥११॥

[3]सुखदोह्यां कपिलां गां वस्त्रेणाच्छाद्योक्तालङ्कारैरलङ्कृत्यापरेण[4] श्वेतवस्त्रेणाच्छाद्याभ्यर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [5]आदिपुराणोक्तालङ्कृतकपिल[6]गवोदानफलप्राप्तिकामोऽहमेतां चेलच्छन्नां [7]स्वलङ्कृतां सुवर्णशृङ्गीं रूप्यखुरां मुक्ताभूषितलाङ्गूलां श्वेतवस्त्रपरिच्छन्नां घण्टास्वनरवयुतां कपिलां [8]गां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथाः—

[9]श्वेतां गां [10]ददते यस्तु दिव्यरत्नैरलङ्कृताम् ।
घण्टामालाकुलां गन्धपुष्पैश्चैवाभ्यलङ्कृताम्[11] ॥१२॥

दिव्यरत्नैरुत्कृष्टमुक्तादिभिः । घण्टामालाकुलां किङ्किणीमालालङ्कृतग्रीवाम् ।

मुखे [12]धूपः प्रदातव्यो घृतेनास्यञ्च पूरयेत् ।
सुवर्णशृङ्गाभरणा तथा रूप्यखुरा शुभा ।

[13][शुभा शुभलक्षणा । ]

पटच्छन्ना[14] शुभा चैव दातव्या ध्यानयोगिने ॥१३॥

शुभा सुरूपा ।

यस्तु दद्याच्च गां श्वेतां तस्य पुण्यफलं शृणु ।
जन्मप्रभृति यत् पापं [15][मातृकं पैतृकं च] यत् ॥१४॥
रजोवृत्तस्य[16] दुष्टस्य तत्क्षणादेव नश्यति ।
गां ददानीह इत्येव[17] वाचा पूयेत सर्वशः ॥१५॥

1 I. O. रोमकूपाणि
2 I. O ०भवेच्चिवै
3 A सुखदोह्यां, I. O. सुख दोह्यां
4 I. O. ०कृत्यपरेण
5 I. O. आदिवपुराणोक्तालङ्कृत, A आदिपुराणोक्त only
6 A कपिला
7 I. O. omits it
8 A omits it
9 A श्वेता
10 I. O. ददतो
11 A ०श्चैवाभ्यलङ्कृतां, I. O. ०श्चाभ्यलङ्कृतां
12 I. O. मम
13 A omits the bracketed portion
14 I. O. पटच्छन्ना
15 I. O. मातृप्रभृतिकञ्च for the bracketed portion
16 I. O. ०वृत्तस्य
17 A इत्येवं

पिता पितामहश्चैव तथैव प्रपितामहः ।
नरकस्था विमुच्यन्ते सोमलोकं[1] व्रजन्ति ते ॥१६॥
पुत्रपौत्रैः [2][परिवृता गन्धर्वैश्चाप्सरोगणैः ] ।
हृष्टपुष्टाः[3] प्रमुदिता [4]यानैश्चैव सुशोभनैः ॥ ७॥
[5]मुक्तावैदूर्यसम्पन्नै र्हंसयुक्तैर्मनोहरैः[6] ।
सदा हृष्टा[व्रजन्त्येव श्वेतां][7] गां ददते तु ये ॥१८॥

[8]गामुक्तलक्षणामुक्तालङ्कारैरलङ्कृतां[9] घृतपूर्णमुखीं [10][मुखेऽध्यार्पितधूपां] कृत्वाभ्यर्च्याध्यात्मविदे[11] अर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [12]आदिपुराणोक्तश्वेतगवीदानफलप्राप्तिकामोऽहमेतां दिव्यरत्नालङ्कृतां [13][घण्टामालाकुलां गन्धपुष्पालङ्कृतां] [14]घृतपूर्णास्यां [15]सुवर्णशृङ्गाभरणां रूप्यखुरां पटच्छन्नां श्वेतां गां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । अत्र च ददानीति पदं सर्वदानेष्वेव [16]ददानीत्यन्तदानवाक्यं स्मारयति ।

तथा :—

कृष्णां गां [17][ददते यस्तु पटच्छन्नां स्वलङ्कृताम् ।
विधिवच्च द्विजातिभ्यो यमलोकं] न पश्यति ॥१६॥

द्विजातिभ्य इति जात्याख्यायामेकस्मिन् [18]बहुवचनमेकस्या बहुभ्यो दानप्रतिषेधात् । [19]स्वलङ्कृतां [20]हेमतिलकाद्यलङ्कृताम् ।

---

1 A ०लोक
2 I. O. परिवृतो गन्धर्वैः सह मोदते for the bracketed portion
3 A ०तुष्टाः
4 I. O. पानैश्चैव
5 I. O. स्वर्गा for मुक्ता
6 I. O. ०रमैः
7 A व्रजन्ते वै तां for the b. p.
8 I. O. युक्तलक्षणायुक्ता०
9 I. O. ०लङ्कारैरलङ्कृतं, A ०लङ्कारैर्वालङ्कृत्य
10 A मुखआर्पितां and I. O. मुखेऽर्पितां for the bracketed portion
11 I. O. omits अध्यात्मविदे
12 I. O. आदित्य for आदि
13 I. O. omits the bracketed portion
14 I. O. घृतपूरितास्यां
15 A युक्तसुवर्णशृङ्गाभरणां, I. O. सुवर्णशृङ्गीं तरुणीं
16 A ददानीत्युत्तर० for ददानीत्यन्त०
17 I. O. reads the bracketed portion as ददाति स्वीकारान्तं स्वस्त्यादि पूर्ववत् । विधिवद्द्विजातिभ्यो यमलोकं
18 I. O. अन्यतरस्यामिति before this
19 A अलङ्कृतां
20 I. O. हैम०

[1]सर्वपापविशुद्धात्मा पितृलोकञ्च गच्छति ।
[2]तस्मात् सर्वप्रयत्नेन कृष्णां गां ददते [3][सदा ॥२०॥
आयुरारोग्यमैश्वर्यं [4]भुक्ता कामांश्च मानसान् ।
भोगवान् स भवेद् यस्तु कृष्णां गां ददते] तु यः ॥२१॥

[5]कृष्णवर्णां गामुक्तो-[6]पकरणयुतामभ्यर्चार्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्ता दद्यात् । [7]आदिपुराणोक्तकृष्णगवीदानफलप्राप्तिकामोऽहमेतां [8]पटच्छन्नां स्वलङ्कृतां कृष्णां गां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा :—

गौरीश्चैव [9]प्रयच्छेत यस्तु गां वै नरः शुचिः ।
अहोरात्रोषितश्चैव कृतशौचो नरः सदा ॥२२॥

गौरीमतिपीताम्[10] ।

[11]स्वर्णशृङ्गीं रूप्यखुरां मुक्तालाङ्गूलभूषिताम् ।
[12]घण्टामालाकुलाञ्चैव गन्धपुष्पैरलङ्कृताम् ॥२३॥
[13]कुतपन्यस्तपादाञ्च मुखे धूपञ्च दापयेत् ।
[14]भक्ष्यभोज्यान्नपानेन ब्राह्मणान् भोजयेच्छुभान् ॥२४॥

कुतपो नेपालकम्बलः । [15]भक्ष्यं पिष्टकं भोज्यान्नमोदनं पानं पानकम् ।

गां [16]ददानीह [17]इत्येव वाचा [18]पूयेत सर्वशः ।
मातृकं पितृकं चैव यच्चान्यद् दुष्कृतं भवेत् ॥२५॥

गां ददानीति [19][पदप्रयोगेण दाने]समस्तविधि-[20]पालनमिति [21][पूयेतेति पदस्यार्थः] ।

---

1 I. O. सर्वं
2 I. O. तस्मै
3 I. O. omits the bracketed portion
4 A दत्वा
5 I. O. अश्ववर्णां
6 A ०क्षौमचार० for ०पकरण०
7 I. O. आदित्य०
8 A पटाच्छन्नां, I. O. नेपपटच्छन्नां
9 A पटोच्छन्नां
10 I. O. ०पीता
11 I. O. सुवर्णशृङ्गीं
12 I. O. यथा for घण्टा
13 I. O. कुतपस्तस्यप्राप्ति, A कुत पञ्चाक्षरे प्राप्तो
14 A भक्ष्य०, I. O. भक्ष०
15 A भक्ष्य, I. O. भक्ष
16 A ददानीत
17 A इत्येवं
18 A पूयेच, I. O. पूजयेत
19 A reads the bracketed portion as दानेन only
20 A पारण and I. O. भावन for पालन
21 I. O. reads the bracketed portion as पूयेति पदस्यार्थः

पापञ्च तस्य तत् सर्वं दहत्यग्निरिवेन्धनम् ।
अन्नैर्दिव्यैर्मनोज्ञैश्च स्वर्णालङ्कारभूषिताः ।
[1]अग्निलोकं व्रजन्ति ते नराः [2]सुकृतकर्मणा ॥२६॥
पुत्रपौत्रैः परिवृता [3]अलङ्कृतजनैर्वृताः ।
वर्षकोटिसहस्रन्तु पुमान् [4][स दिवि]मोदते ॥२७॥
अथ [5]मानुष्यमायाति कदाचित् कालपर्ययात्[6] ।
[7]ज्ञानैश्वर्यसुसंयुक्तो धनधान्यैः समावृतः ॥२८॥
[8]अथ कोटिसहस्रेण गृहे च परिवारितः ।
दासीदासैरल-[9][ङ्कृतैः स्तूयते सर्वजन्तुभिः] ॥२९॥
अरोगश्चैव जायेत [10]तेजस्वी च भवेन्नरः ।
मेधारूपगुणैर्युक्तः स्वाध्यायार्जितपौरुषः ॥३०॥

अत्र दानदिनपूर्वतरदिने पूर्ववद्धविष्यभोजनादिकं[11] कृत्वा सूर्यादिदेवताभ्य [12]आदिपुराणोक्तसोपवासगौरगवीदानं कर्म मया कर्तव्यमिति निवेद्य [13]'ॐ' श्व उपोष्यापरदिन [14]आदिपुराणोक्तगोरगवीदानकर्माहं करिष्ये' इति सङ्कल्पयेत । ततो नियमेन सुप्त्वाऽपरदिने [15]कृतनित्य उपोष्यापरदिने प्रातः स्नात्वा शुचिर्गामतिपीतवर्णां[16] मुक्तालङ्कार-[17]युतामास्तीर्ण-[18][नेपालकम्बलोपरि स्थापितां] धूपितमुखीं कृत्वा ब्राह्मणत्रयं शुभाचारं यथाशक्ति-[19]पिष्टकान्नपानकैः सन्तर्प्य अपरं ब्राह्मणमभ्यर्च्य तस्मै [20][अर्चिताय ब्राह्मणाय] गामर्चिताम् [21]ॐ अद्यादि

1 A ०व्रजन्ते ते, I. O. पितृलोकञ्च गच्छन्ति ते
2 A प्रकृत०
3 I. O. ज्ञयाभूमा for अलङ्कृत
4 I. O. परिवि for the bracketed portion
5 A मानुष्यमायान्ति, I. O. सान्निध्यमायाति
6 A ०पर्य्यायात्
7 I. O. ज्ञानैश्वर्य्याश्वसंयुक्तो
8 I. O. अयं
9 I. O. reads the bracketed portion as ङ्कारैस्तूयसं सर्व्वसन्ततिः
10 A जस्वी
11 I. O. ०भोजनादि
12 I. O. आदित्य०
13 A omits it
14 I. O. आदित्य०
15 I. O. कृतनित्योपोष्या०, A नित्यं उपोष्या०
16 A ०मितिपीतवर्णां, I. O. ०मभिपीतवस्त्रा
17 A omits युता
18 I. O. reads the bracketed portion as नेपीलकम्बलोपविष्टान्विता
19 A मिष्टान्नपानकैः, I. O. पिष्टकान्नपानैः
20 I. O. omits the bracketed portion. A reads it after गामर्चितां
21 A omits it

तुभ्यमन्तमुक्त्वा दद्यात्। [1]आदिपुराणोक्तगौरगवीदानफलप्राप्तिकामोऽहमेतां सुवर्णशृङ्गीं रूप्यखुरां [2]मुक्ताभूषितलाङ्गूलां घण्टामालाकुलां गन्धपुष्पालङ्कृतां [3]कुतपस्थां गौरीं गां ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा :—

नीलवर्णां च गां दद्याच्छीलदोग्ध्रीं गुणान्विताम्।
[4]स्वर्णशृङ्गीं रूप्यखुरां मुक्तालाङ्गूलभूषिताम् ॥३१॥

शीलदोग्ध्रीं सुखसन्दोह्यां गुणान्विताम् [5]अव्यङ्गीम्।

पटच्छन्नां शुभां सौम्यां घण्टा-[6]दामैरलङ्कृताम्।
पञ्च-[7]रङ्गेण सूत्रेण [8]गलवेष्टनशोभिताम् ॥३२॥

घण्टा-[9]दामैरलङ्कृतामिति [10]पञ्चरङ्गसूत्रादिनिर्मितघण्टानिबन्धनालङ्कृतग्रीवां शुभां[11] शुभलक्षणयुतां [12]सौम्यामकोपनाम्।

रुद्रस्य प्रमुखे देया विष्णोश्च ब्रह्मणश्च वै।
गां ददानीह इत्येव वाचा पूयेत सर्वशः ॥३३॥
पिता पितामहश्चैव तथैव प्रपितामहः।
नरकस्था विमुच्यन्ते नीलां गां ददते तु यः ॥३४॥
दधिक्षीरवहा नद्यो वर्तन्ते [13]सर्वतः सदा।
[14]घृतशैलाः प्रपद्यन्ते [15]नवनीतस्य पर्वताः ॥३५॥
हस्त्यश्वरथयानेन[16] [17]गन्धर्वैरप्सरोगणैः।
स्तूयमानो व्रजेच्चैव [18][गवां लोकनिवासिनः] ॥३६॥
वर्षकोटिसहस्राणि लोके [19]तिष्ठति वारुणे।
अथ मानुष्यमायाति [20]कदाचित् कालपर्यये ॥३७॥

1 I. O. आदित्य॰
2 A मुक्ताभूषितां लाङ्गूलां I. O. मुक्तालाङ्गूलभूषितां
3 I. O. omits it
4 I. O सुवर्णशृङ्गीं
5 I. O. अभ्यङ्गत्वाकारसौम्यर्थयुक्ता
6 I. O. ॰दामे॰
7 A ॰रङ्गक
8 I. O. मेखवेष्टनशोभिता
9 I. O. ॰दामे॰
10 A पञ्च and I. O. पट्ट for पञ्चरङ्ग
11 I. O. शुभा
12 I. O. सौम्य॰ for सौम्या॰
13 I. O. सर्वशः
14 I. O. घृतशैला:
15 I. O. नवनीतस्य
16 A ॰यामेन, I. O. ॰द्यामिन
17 I. O. गन्धर्वाप्सरसोगणैः
18 I. O. गोलोकस्य निवासिनः for the bracketed portion
19 I. O. तिष्ठन्ति
20 A कदाचिल्लोकपर्यये

गोभिः समृद्धे च कुले जायते नात्र संशयः ।
कृषि-[1]भागी बहुधनो [2]दुर्भिक्षञ्च न पश्यति ॥३८॥
पुत्रपौत्रैः परिवृतः [3]श्रीमान् [4]सर्वजनाकुलः ।
दासी-[5]दासैश्च संयुक्तो जायते तत्र मानवः ॥३९॥

गां नील-[6]वर्णामुक्तलक्षणामुक्तोपकरणयुतां कृत्वाऽभ्यर्च्य महेश्वरविष्णु-[7]ब्रह्मप्रतिमात्रयाग्रतो [8]ब्राह्मणायार्चिताय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [9]आदिपुराणोक्तनीलगवोदानफलप्राप्तिकामोऽहमेतां सुवर्णश्रृङ्गीं [10]रूप्यखुरां मुक्ताभूषितलाङ्गूलां पट्टच्छन्नां घण्टादामालङ्कृतां पञ्चरङ्गसूत्रवेष्टितग्रीवां नीलवर्णां[11] गां ददानि । स्वस्त्यादिस्त्रोकारान्तं पूर्ववत् ।

[12][विष्णुधर्मे :—

प्रयच्छते यः कपिलां सचेलां कांस्योपदोहां कनकाग्रश्रृङ्गीम् ।
यान् यान् हि कामानभिवाञ्छतेऽसौ तांस्तानवाप्नोत्यमलान् हि लोकान् ॥१॥

कपिलां गामुक्तोपकरणां कृत्वाऽभ्यर्च्यार्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोक्तकनकाग्रश्रृङ्ग-कपिलगवोदानफलप्राप्तिकामोऽहमेतां सचेलां कांस्योपदोहां कनकाग्रश्रृङ्गीं कपिलां गां ददानि । स्वस्त्यादिस्त्रोकारान्तं पूर्ववत् । ]

तथा :—

कृतोपवासः [13]संप्राश्य [14]पञ्चगव्यं नरेश्वर ।
घृतक्षीराभिषेकञ्च कृत्वा विष्णोः समाहितः ॥२॥
समभ्यर्च्य च गोविन्दं पुष्पादिभिररिन्दम ।
उदङ्मुखीमर्चयित्वा तथा [15]गृष्टिं पयस्विनीम् ॥३॥

1 A भावी
2 I. O. प्रतीक्षञ्च
3 I. O. श्रीमान्
4 A सर्वजनाकुला:
5 I. O. दासञ्च
6 I. O. °वर्णामुक्ता° for °वर्णामुक्त°
7 I. O. ब्रह्मा
8 A ब्राह्मणाय only
9 I. O. आदित्य°
10 I. O. रौप्यखुरां
11 I. O. नीलवर्णां
12 I. O. omits the bracketed portion
13 I. O. संप्राप्य
14 I. O. पञ्चगव्ये
15 A भृष्टिं, I. O. दृष्टिं

सपुत्रां वस्त्रसम्वीतां सितयज्ञोपवीतिनीम्[1] ।
स्वर्णशृङ्गीं शुभाकारां हिरण्योपरि संस्थिताम् ॥४॥
[2]सुवर्णं [3]वाचयित्वाग्रे ब्राह्मणायोपपादयेत् ।
इमां त्वं [4]प्रतिगृह्णीष्व गोविन्दः प्रीयतामिति ॥५॥

इमां त्वमित्यादिमन्त्रमग्रे वाचयित्वा पठित्वा गां प्रतिपादयेत् । सुवर्णञ्च दक्षिणारूपमिति सम्बन्धः ।

सम्यगुच्चार्य तं [5][विप्रं गोविन्दमुपकल्पयेत् ] ।
अनुव्रजेच्च गच्छन्तं पदान्यष्टौ नराधिप ॥६॥
अनेन विधिना धेनुं यो विप्राय प्रयच्छति ।
गोविन्दप्रीणनाद्राजन् विष्णुलोकं स गच्छति ॥७॥
सप्तावरांस्तथा[6]पूर्वान् सप्तात्मानञ्च मानवः ।
सप्तजन्मकृतात् पापान्मोचयत्यवनीपते ॥८॥
पदे पदे तु यज्ञस्य गोसवस्य च मानवः ।
फलं प्राप्नोति राजेन्द्र [7][दत्त्वा चैवं जगां] हरिः ॥९॥
सर्वकामप्रदा [8]सा स्यात् सर्वकालेषु [9]पार्थिव ।
[10]भवत्यघौघापहरा यावदिन्द्राश्चतुर्दश ॥१०॥
सर्वेषामेव पापानां कृतानामविजानता[11] ।
प्रायश्चित्तमिदं प्रोक्त-[12]मनुतापोपबृंहितम् ॥११॥

दानदिनात् पूर्वतरदिने पूर्ववद्धविष्य-[13]भोजनादिकं कृत्वा सूर्यादिदेवताभ्यो विष्णुधर्मोक्त[14]-सोपवास[15]-गोविन्द-घृतक्षीर[16]-स्नपनसहितपूजापूर्वक-गोदानकर्म मया कर्तव्यमिति निवेद्य सङ्कल्पं कुर्यात् । 'ॐ श्वः पञ्चगव्यप्राशनपूर्वकमुपोष्यापरदिने गोविन्दघृतक्षीरस्नपन-[17]पूजा-पूर्वकगोदानकर्माहं करिष्ये' । ततो नियमेन सुप्त्वाऽपरदिने पञ्चगव्यं प्राश्य उपोष्यापरदिने

1 A ०वितर्कं
2 A हिरण्मयां, I. O. हिरण्यं
3 A वाचयित्वा, I. O. याचयित्वाग्र
4 A प्रतिगृह्णीय, I. O. प्रतिगृह्णीष्
5 I. O. reads the bracketed portion as विप्रगोविन्द नृपकल्पयेत्
6 I. O. सर्व्वान्
7 A दत्त्वायैवं जगौ for the bracketed portion
8 I. O. साक्षात्
9 I. O. पार्थिव:
10 I. O. भवत्यघौघापहरा
11 I. O. ०जानता, A ०जानता
12 I. O. ०ममतापोपबृंहितं, A ०मनुतापोपबृंहितं
13 I. O. ०भोजनादि
14 I. O. ०धर्मोक्तं
15 I. O. सोपवासं
16 A ०क्षीरै:
17 A omits पूजा

[1]प्रातर्वासुदेवं घृतक्षीराभ्यां स्नपयित्वा [2]गोविन्दं नाम्ना संपूज्य धेनुमुदङ्मुखीं सौवर्णपत्र-चतुष्टयार्पितखुरचतुष्टयां[3] कृत्वा सुवर्ण-[4]शृङ्गादिभिरलङ्कृत्याभ्यर्च्य ब्राह्मणाय [5]ध्यातगोविन्द-रूपायार्चिताय इमां त्वमित्यादि पठित्वा [6]ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णु-धर्मोक्तकपिलगवीदानफलप्राप्तिकामोऽहमेतां सपुत्रां [7]वस्त्राच्छन्नां सितयज्ञोपवीतिनीं [8]स्वर्ण-शृङ्गीं हिरण्योपरि संस्थितां गां ददानि। [9]स्वस्त्यादिस्वीकारान्तं पूर्ववत्। [10]ततो यजमानो गोविन्दोऽयं मम प्रीतो यातीति ध्यायन् यान्तं ब्राह्मणमष्टौ पदान्यनुव्रजेत्।

[11]तथा कपिलादानानुवृत्तौ :—

दत्त्वा [12]सुधेनुं नृप सोपधानां कल्याणवत्सां सुपयस्विनीञ्च।
यावन्ति रोमाणि भवन्ति तस्यास्तावन्ति वर्षाणि स [13]दोग्धि कामान् ॥१२॥

[14]सुधेनुं [15]सुशीलां सोपधानामास्तरणवस्त्रगण्डूकसहितां कल्याणवत्सां [16]जीवद्वत्सां गां कपिलामुक्तोपकरणयुतां कृत्वाऽभ्यर्च्यार्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [17][विष्णुधर्मोक्तसोपधानकपिलगवीदानफलप्राप्तिकामोऽहमेतां सोपधानां सवत्सां कपिलां गां ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। ]

विष्णुधर्मोत्तरे ( ३।३०६।५२ख-५६क ) :—

हेमशृङ्गीं [18]रूप्यखुरां मुक्तालाङ्गूलभूषिताम्।
[19]अहताम्बरसम्वीतां तथा कांस्योपदोहनाम् ॥१॥
त्रिरात्रं स्थण्डिले सुप्त्वा त्रिरात्रं गोरसाशनः।
[20]तृप्तान्तु तर्पिते दत्त्वा वाससा संवृते द्विजे ॥२॥

अत्र त्रिरात्रं [21][स्थण्डिलशयनेन हविष्यभोजनमस्य व्रतरूपत्वादुन्नेयम् ]। तर्पिते वस्त्र-[22]स्वर्णादिभिः परितोषिते।

1 I. O. वासुदेवं only
2 A गोविन्द
3 I. O. ०चतुष्टया
4 A ०शृङ्गाभिरलङ्कृत्यभ्यर्च्या
5 I. O. ख्यात for ध्यात
6 A omits it
7 I. O. वस्त्रच्छन्नां
8 I. O. omits it
9 A adds ॐ before this
10 A omits it
11 A omits it
12 A स्वधेनुं
13 I. O. दोग्धि
14 A स्वधेनुं
15 A स्वशीलतां
16 I. O. जीवत्वत्सां, A जीववत्सां
17 A omits the bracketed portion
18 I. O. रौप्यखुरां
19 A आहताम्बरसम्वतां
20 I. O. तृप्तान्तु
21 I. O. स्थण्डिलं शयनं हविष्यभोजनमन्यत्र तद्व्रतत्वादुन्नेयं for the b. p.
22 I. O. ०सुवर्णादि

सदक्षिणां [1]महाभागाम्त्रिरात्रं गोरसैस्ततः ।
प्राण-[2]सन्धारणं कृत्वा गवां लोके महीयते ॥३॥
यावन्ति [3]धेनुरोमाणि तावद्वर्षाणि मानवः ।
[4]दत्त्वैवं कपिलां विप्राः प्राप्नोत्यभ्यधिकं फलम् ॥४॥

दानदिनात् [5]पूर्वं सप्तमदिने प्रातः स्नात्वा उदङ्मुखो गृहीतोदपूर्णताम्र[6]-पात्रः सङ्कल्पं कुर्यात् । 'ॐ[7] त्रिरात्रस्थण्डिलशयन-[8]रूपप्राच्याङ्ग-सहितं त्रिरात्रगोरसाहार-[9]रूपोदीच्याङ्ग-सहितञ्च विष्णु-[10]धर्मोत्तरोक्तकपिल-[11]गवीदानकर्माहं करिष्ये' । तदवधि त्रिरात्रं [12][हविष्य-भोजनादिकं भुक्त्वा] भूमौ स्वपेत् । त्रिरात्रञ्च गोरसमात्राहारो भूत्वा दानदिने प्रातः स्नात्वा गां [13]घासान्नादिभिस्तर्पयित्वा उक्तोपकरणयुतां कृत्वाऽभ्यर्च्य ब्राह्मणायार्चिताय प्रथमं सुवर्णादिपरितोषिताय [14][वाससाऽऽच्छादिताय ॐ]अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णु-धर्मोत्तरोक्तस्थण्डिलशयन-[15][सहितकपिल]-गवीदान-[16]फलप्राप्तिकामोऽहमेतां हेमशृङ्गीं रूप्य-खुरां मुक्ताभूषितलाङ्गूलाम् [17]अहताम्बरसंवीतां कांस्योपदोहनां गां ददानि । स्वस्त्यादि-स्वीकारान्तं पूर्ववत् ।

[18]तद्दिनात् प्रभृति त्रिरात्रं गोरसाहारो भवेत् । कपिलगवीदानवाक्ये [19]तु [20]अकपिलस्थाने कपिलपद-[21]निवेशो विशेषः ।

इति महाराजाधिराजनिःशङ्क-[22]शङ्करश्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे अलङ्कृतगवीदानावर्तः ।

1 Corrected from V. D. I. O. ०त्रिरात्रं
2 I. O. ०सम्बाधनं
3 I. O. धेनो
4 I. O. नत्वेवं
5 A पूर्व्वमष्टमदिने
6 A omits ताम्र
7 A omits it
8 A omits it, I. O. त्रिरात्रगो-रसाहार before it
9 A ०रूपदयाङ्गसहित
10 A ०धर्मोक्त०
11 A omits गवी
12 I. O. हविष्यभुग्
13 A मात्राहा०
14 A omits the bracketed portion
15 I. O. सहितां कपि for the bracketed portion
16 A omits फल
17 A आहता०
18 A नद्दिना
19 A omits it
20 I. O. अकारस्थाने
21 I. O. ०निवेश
22 A शङ्कर

## अथालङ्कृतबहुगवीदानावर्तः । (५)

महाभारते ( अनु—५७।२७ ) :—

सुवर्ण-[1]शृङ्गैस्तु विराजितानां गवां सहस्रस्य नरः[2] प्रदाता ।
प्राप्नोति [3]पुण्यं दिवि देवलोकमित्येवमाहु[4]-र्दिवि देवसंघाः ॥१॥

अत्र यजमानो यथालाभं सहस्रं [5]गा उपादाय सुवर्णशृङ्गैरलङ्कृत्यार्चयित्वा[6] अर्चिताय ब्राह्मणाय दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे [7]तुभ्यं महाभारतोक्तालङ्कृतगोसहस्रदानफलप्राप्तिकामोऽहमेताः सुवर्णशृङ्गविराजिताः सहस्रं गा[8] ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा [9]गाव एता रुद्रदेवता इत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । ततः ॐ अद्य [10]कृतैतद्दानप्रतिष्ठार्थं [11]तुभ्यमहं दक्षिणामेतत् काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा गां पुच्छे गृह्णीयात् । बहुभ्यो[12] [दाने सम्प्रदाने] बहुवचनमूहनीयम् ।

आग्नेयपुराणे गोदानानुवृत्तौ :—

चतुःपूर्वान् परांश्चैव समुद्धृत्य पितामहान् ।
स गच्छति दिवं राजन् शतं दत्त्वा यथाविधि ॥२।

यथाविधीत्याग्नेय-[13]पुराणानन्तरोक्तगोसहस्रदानधर्मग्रहणम् ।

तथाग्नेय-[14]पुराणे :—

गोसहस्रन्तु यो दद्यात् सर्वरत्नैरलङ्कृतम् ॥३॥ इति ।

शतं गाः परिभाषोक्तरत्नैः प्रत्येकमलङ्कृत्यार्चयित्वा अर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । आग्नेयपुराणोक्तगोशतदानफलप्राप्तिकामोऽहमेताः [15]सर्वालङ्कृताः

---

1 I. O. ०शृङ्गस्तु
2 I. O. नर
3 A पुण्यां
4 A ०मत्ते० for ०माहु०
5 A गां
6 I. O. omits अर्चयित्वा
7 I. O. तुभ्यमहं
8 Both I. O. and A गां
9 A गा
10 A कृतैतत् तद्दान०
11 A omits it
12 A दानसम्प्रदानक for the bracketed portion
13 A ०पुराणोक्त०
14 A ०पुराणं
15 I. O. omits it

शतं [1]गाः ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। अत्र स्वेच्छया बहुभ्योऽपि दानम्। तथा च सम्प्रदाने बहुवचनमूहनीयम्।

[2]विष्णुधर्मोत्तरे :—

[3]गोसहस्रञ्च यो दद्यात् सर्वरत्नैरलङ्कृतम्।
[4]परामृद्धिं श्रियं प्राप्य स्वर्गलोके महीयते ॥४॥

सर्वरत्नानि परिभाषोक्तानि।

दश चोभयतः प्रेत्य मातामहपितामहौ।
गच्छेत् सुकृतिनां लोकान् गावो दत्वा यथाविधि ॥५॥

गोसहस्रं यथोक्तमर्चयित्वा अर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [5]विष्णुधर्मोत्तरोक्तगोसहस्रदानफलप्राप्तिकामोऽहमेताः सर्वरत्नालङ्कृताः सहस्रं गाः ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। स्वेच्छया बहुभ्यो दाने तु सम्प्रदाने[6] बहुवचनमूहनीयम्।

इति महाराजाधिराजनिःशङ्क-[7]शङ्कर-श्रीमद्बल्लालसेन-[8]देवविरचिते श्रीदानसागरे-ऽलङ्कृत[9]-बहुगवीदानावर्तः।

---

1 I. O. गा, A गां
2 I. O. विष्णुधर्म
3 I. O. गोसहस्रन्तु
4 A परां ऋद्धिं
5 I. O. विष्णुधर्मोत्त०
6 I. O. च after this
7 A मङ्कर
8 A omits देव
9 A ०मलङ्कृत०

## [1]अथानलङ्कृतगवीदानावर्तः । (६)

जावालः—

होमार्थमग्निहोत्रस्य यो गां [2]दद्यादयाचिताम् ।

[3]त्रिविष्टपपूर्णा पृथिवी तेन दत्ता न संशयः ॥१॥

अत्र यजमानो गामुत्कृष्टामभ्यर्च्याग्निहोत्रिणे अयाचमाना[4]-[य ब्राह्मणाया]-र्चिताय दद्यात् । [5]ॐ अद्यामुकगोत्रायामुक-[6]वेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं जावालोक्त-गोदानफलप्राप्तिकामोऽहमेतामग्निहोत्रहोमार्थं गां ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा गौरियं रुद्रदेवतेत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । [7]तत ॐ अद्य कृतैतद्दान-प्रतिष्ठार्थं तुभ्यमहमेतत् काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा गां पुच्छे गृह्णीयात् ।

याज्ञवल्क्यः ( १।२०८ ) :—

यथा कथञ्चिद्दत्त्वा गां धेनुं वाऽधेनुमेव वा ।

अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते ॥२॥

अधेनुं [8]दुग्धशून्याम् । अतएव वत्सतरीदानमपि श्रूयते ।

तथा च विष्णुधर्मोत्तरे ( ३।३०६।१०क ) :—

दत्त्वा वत्सतरीं विप्राः स्वर्गलोके महीयते ।

वत्सतरी-सहितां[9] यथासम्भवधेनुमधेनुं वा [10]यथोक्तरूपां गामर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [11][सोत्कर्षस्वर्गप्राप्तिकामोऽहमेतां गां ददानि । स्वस्त्यादि-स्वीकारान्तं पूर्ववत् ।

मनुः ( ४।२३१घ ) :—

गोदो ब्रध्नस्य विष्टपम् ॥३॥

प्राप्नोतीत्यनुषज्यते । ब्रध्नस्य विष्टपं सूर्यलोकम् ।

---

1 A अथायाचितकृत०

2 A दद्याद्याचित, I. O. दद्याचिता

3 A त्रिवृत्तपूर्णा

4 A omits the bracketed portion

5 A omits it

6 A omits वेदामुक

7 A omits it

8 I. O. दुग्धशून्यं, A गन्धशून्यां

9 A and I. O. omit सहितां

10 A यथारूपां

11 I. O. omits the bracketed portion

गामर्चिताय ब्राह्मणाय [1]ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। ] [2]अभ्रविष्टपप्राप्तिकामोऽहमेतां गां ददानि। स्वस्त्यादस्वीकारान्तं पूर्ववत्।

आग्नेयपुराणे :—

[3]धेनुं दत्त्वा [4]सुव्रतां [5]सुप्रधानां [6]कल्याणवत्सां सुपयस्विनीञ्च।
यावन्ति रोमाणि भवन्ति तस्या वर्षाणि तावन्नृप नाकवासः ॥४॥

[7]सुव्रतां सुखदोह्यां सुप्रधानां [8]यूथप्रधानभूतां कल्याणवत्सां शुभलक्षणवत्साम् उत्कृष्टरूपां धेनुमर्चिताम्[9] अर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। धेनुरोमसमानसंख्यकालं यावत् स्वर्गवासप्राप्तिकामोऽहमेतां कल्याणवत्सां धेनुं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

शिवपुराणे :—

कपिला-[10]प्रदानं यो दद्याद्ब्राह्मणेषु[11] विशेषतः।
यावन्ति रोमकूपानि तस्य गात्रेषु वै द्विज ॥५॥
तावद्वर्षसहस्राणि स्वर्गलोके महीयते।
यदि कालत्रयं प्राप्य जायते विपुले कुले ॥६॥

ब्राह्मणेष्विति जात्याख्यायां बहुवचनम् एकस्या बहुभ्यो दाननिषेधात्। कपिला-[12]मर्चितामर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। शिवपुराणोक्तकपिलादानफलप्राप्तिकामोऽहमेतां कपिलां गां ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

स्कन्दपुराणे :—

यस्तु गां [13]संप्रयच्छेत ब्राह्मणेभ्यो यथातथा।
तमग्यसौ [14]महाघोरात्त्रायते नरकादपि ॥७॥

ब्राह्मणेभ्य इति बहुवचनं [15]जात्यपेक्षया। अर्चिताय ब्राह्मणाय गामर्चिताम् ॐ

---

1 A omits it
2 A ०पिष्टकामो०
3 I. O. धेनु
4 A सुव्रता
5 A सुप्रधानं
6 A कल्यानवतसा
7 I. O. अव्रतो
8 I. O. सुख for दुग्ध
9 I. O. omits अर्चिताम
10 A ०प्रदानां
11 I. O. ब्राह्मणे तु, A ब्राह्मणाय
12 A omits अर्चिताम
13 A संप्रयच्छेच
14 I. O. महाघोरात्रायते
15 I. O. जात्यापेक्षं

अयादि तुभ्यमन्तमुक्ता दद्यात्। [1]स्कन्दपुराणोक्तालङ्कृतगवीदानफलप्राप्तिकामोऽहमेतां गां ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

वराहपुराणे (२०७।२५) यमपुरानुवृत्तौ :—

तिलान् गाश्च हिरण्यञ्च [2]पृथिवीञ्चापि शाश्वतीम्।

ब्राह्मणेभ्यः प्रयच्छन्ति न गच्छन्ति न संशयः ॥८॥

न गच्छन्ति यमपुरमित्यर्थः। गा-[3]मर्चितामर्चिताय ब्राह्मणाय ॐ अयादि तुभ्यमन्तमुक्ता दद्यात्। यमपुरगमनाभावप्राप्तिकामोऽहमेतां गां ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

[4]आदित्यपुराणे :—

अथ वत्सस्य चरणौ [5]दृश्येते संमुखौ यदा।

[6]गर्भान्निष्क्रममाणस्य [7][सवत्सा गौर्वसुन्धरा]।

सा चोभयमुखी देया मनोरथशतप्रदा[8] ॥९॥

[9]मनोरथशतप्रदा यथेष्टफलदेत्यर्थः। यदा प्रसूयमाना गौः [10]संमुखदृश्यमानगर्भनिष्क्रान्तचरणद्वयवत्सा [11]भवति, [तदा तामर्चिता][12]-मर्चिताय ब्राह्मणाय ॐ अयादि तुभ्यमन्तमुक्ता दद्यात्। अमुक-[13]प्राप्तिकामोऽहमेतामुभयतोमुखीं[14] गां ददानि। स्वस्त्यादि-[15]स्वीकारान्तं पूर्ववत्।

[16][ये तु गां वै प्रयच्छन्ति शुभामुभयतोमुखीम्।

लवणञ्च यथाशक्त्या भक्त्या ये वै ददन्ति च।

तेषां पुण्यकृतां लोकं गवां लोकं व्रजन्ति ते ॥१०॥

शुभां शोभनाकाराम्। प्रसूयमानां गामर्चिताम् ॐ अयादि तुभ्यमन्तमुक्ता दद्यात्।

---

1 A स्कन्दपुराणोक्तमलंकृत०, I. O. स्कन्दपुराणोक्तमोलकृत०
2 A पृथिवी चापि
3 A omits मर्चिताम्
4 A omits it
5 I. O. दृश्यते
6 I. O. गर्भान्निः क्रममाणस्य
7 I. O. reads the bracketed portion as ता वत्सा गौर्वसुन्धरा
8 A ०शतप्रदा
9 A omits it
10 I. O. सम्मुख०
11 I. O. भवन्ति
12 A दाता for the bracketed portion
13 A omits प्राप्ति
14 A ०मुखी
15 A ०स्वीकारान्तं
16 I. O. omits the bracketed portion

पुण्यकृल्लोकगोलोकप्राप्तिकामोऽहमेतामुभयतोमुखीं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। ]

[1][नरसिंहपुराणे :—

कपिलागोप्रदानेन परार्थे चावनीपते।
[2]वृषभस्य प्रदानेन स्वर्गं मन्मथमाप्नुयात ॥११॥

परार्थे [3]मातृपित्रादिबन्धुवर्गार्थे कपिलामर्चितामर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्त-मुक्त्वा दद्यात्। ] नरसिंहपुराणोक्तपरार्थकपिलादानफलप्राप्तिकामोऽहमेताममुकार्थे[4] कपिलां गां ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा :—

कपिलां लक्षणोपेतां सवत्सां गां पयस्विनीम्।
ब्राह्मणाय दरिद्राय श्रोत्रियायाहिताग्नये।
यो दद्याद्विदुषे विद्वांस्तत्फलं [5]नान्तमुच्यते ॥१२॥

[6][तत्फलम् नान्तम्] [7]अनन्तं फलम् [8]मुक्तिः। लक्षणोपेतां सल्लक्षणयुक्तां [9]श्रोत्रियाय विद्याजन्मतपःसम्पन्नायाहिताग्नये[10] अग्निहोत्रिणे दरिद्राय अर्चिताय ब्राह्मणाय [11]उक्तरूपां कपिलामर्चिताम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। अनन्तफलप्राप्तिकामोऽहमेतां लक्षणो-पेतां सवत्सां गां [12]कपिलां ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

विष्णुधर्मे :—

सुवर्णदानं गोदानं पृथिवीदान-[13]मेव च।
एतत् प्रयच्छमानो हि सर्वपापैः प्रमुच्यते ॥१३॥

गामर्चितामर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात। सर्वपापक्षयकामोऽ-हमेतां गां ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत।

---

1 A omits the bracketed portion
2 I. O. गोवृषभस्य
3 I. O. माता
4 A ०तां स्वकार्थं
5 A नानुमुच्यते, I. O. नाष्टमुच्यते
6 Both A and I. O. omit the bracketed portion
7 A अनन्त
8 A omits it
9 Both I. O. and A omit it
10 Both I. O. and A omit आहिताग्नये
11 I. O. उक्तरूपाय
12 A omits it
13 A मुच्यते for मेव च

तथा यममार्गानुवृत्तौ :—

क्षीरप्रपाभिर्दिव्याभिर्मधु[1]-सर्पिर्भिरेव च ।

गोप्रदाता लभेत्तृप्तिं [2]यस्मिन्देशे सुदुर्लभाम् ॥१४॥

गामर्चिता[3]-मर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [4]विष्णुधर्मोक्त-क्षीरप्रपादि-[5][साध्यतृप्तिफलकगोदानफलप्राप्ति]-कामोऽहमेतां गां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

विष्णुधर्मोत्तरे गोदानानुवृत्तौ ( ३।३०६।१० ख ) :—

गुर्विणीञ्च तथा दत्त्वा वसूनां [6]लोकमश्नुते ॥१५॥

गुर्विणीं गामर्चिता[7]-मर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । वसु-लोकप्राप्तिकामोऽहमेतां गुर्विणीं गां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा गोदानानुवृत्तौ ( ३।३०६।१७ ख ) :—

शुक्लबिन्दुचितां कृष्णां गन्धर्वैः सह मोदते ॥१६॥

दत्त्वेति शेषः । शुक्लबिन्दुचिचितां कृष्णवर्णां गा-[8]मर्चितामर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । सोत्कर्षगन्धर्वलोकप्राप्तिकामोऽहमेतां शुक्लबिन्दुचितां कृष्णां गां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

इति महाराजाधिराज-निःशङ्क-[9]शङ्कर-श्रीमद्बल्लालसेन-[10]देवविरचिते श्रीदानसागरे [11]अनलङ्कृतगवीदानावर्त्तः ।

1 I. O. र्म्मच्छ for मधु
2 A तस्मिन्देशे
3 A omits मर्चिता
4 A विष्णुधर्मोत्तरोक्त०
5 A reads the bracketed portion as साध्यगोदानतृप्ति
6 I. O. मोक्ष०
7 A omits मर्चिता
8 A omits मर्चिता
9 A सङ्कर
10 A omits देव
11 Both A and I. O. अलङ्कृत०

## [1]अथानलङ्कृतबहुगवीदानावर्तः । (७)

विष्णुः—

दशधेनुप्रदो गोलोकम् ॥१॥

प्राप्नोतीति शेषः ।

अत्र यजमानो [2]दशधेनूरर्चिताः अर्चिताय ब्राह्मणाय दद्यात् । ॐ अद्यामुकगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं गोलोकप्राप्तिकामोऽह-[3]मेताः दशधेनूर्गा ददानि । [4][प्रतिग्रहीता स्वस्तीत्युक्त्वा] सावित्रीं पठित्वा धेनव एता रुद्र-[5]दैवता इत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । तत ॐ कृतैतद्दानप्रतिष्ठार्थं [6]तुभ्यमहं दक्षिणामेतत् काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा [7][यथेच्छं गाः] पुच्छे गृह्णीयात् ।

गोदानानुवृत्तौ विष्णुः—

[8][शतप्रदश्च ब्रह्मलोकम्] ॥२॥

प्राप्नोतीति शेषः ।

शतं गा[9] अर्चिता अर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । ब्रह्मलोकप्राप्तिकामोऽहमेताः शतं गा ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । अथ स्वेच्छया बहुभ्यो [10]वा दानम् । तथा च दानवाक्ये सम्प्रदाने बहुवचनमूहनीयम् ।

महाभारते ( अनु—६६।१६) :—

भिक्षवे [11]बहुपुत्राय श्रोत्रियायाहिताग्नये ।
दत्त्वा दशशतं गा वै [12][लोकान् प्राप्नोति उत्तमान्] ॥३॥

1 I. O. अथालङ्कृत०, A अलङ्कृत०
2 A दशधेनुरर्चिताः । अर्चिताय, I. O. दशधेनुरर्चिताय
3 A ०मेता दशधेनु ददानि, I. O. ०मेता दशधेनुं गां ददानि
4 I. O. इतिगृहीतप्रकारेण for the bracketed portion
5 A ०दैवता
6 I. O. omits it
7 A यथेच्छगाः for the bracketed portion
8 I. O. शतपदश्च ब्रह्मलोक for the bracketed portion
9 A गामर्चिता
10 A omits it
11 I. O. बहुपुत्राय
12 A लोकल्लोकान् प्राप्नोत्युत्तमं for the bracketed portion

भिक्षवे दरिद्राय सहस्रं [1][ गा अर्चिता अर्चिताय ] [2][ उत्कृष्टाय ब्राह्मणाय ] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [3]उत्तमलोकप्राप्तिकामोऽहमेताः सहस्रं गा ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा ( अनु—६६।४५ ) :—

गवां सहस्रदः प्रेत्य नरकं [4][न प्रपद्यते]।

सर्वत्र विजयञ्चापि लभते मनुजाधिप ॥४॥

सहस्रं गा [5]अर्चिता अर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात। नरकाप्राप्ति-सर्वत्रविजय-[6]प्राप्ति-कामोऽहमेताः[7] सहस्रं गा ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (अनु—६६।५४क) :—

दशगोसहस्रदो हि शक्रेण सह मोदते ॥५॥

[8]गवां दशसहस्राण्य-[9]र्चितान्यर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सोतकर्षशक्रलोकप्राप्तिकामोऽह[10]-मेता अयुतं गा ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। अत्र स्वेच्छया बहुभ्यो दाने संप्रदाने च बहुवचनमूहनीयम्।

तथा गोदानानुवृत्तौ (अनु—६६।५४ख) :—

अक्षयान् लभते [11]लोकान् नरः [12]शतसहस्रदः ॥६॥

लक्षं [13][गा अर्चिता अर्चिताय] ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। अक्षय-[14]लोकप्राप्तिकामोऽहमेताः[15] लक्षं गा[16] ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। अत्र [17][बहुसंप्रदानकदाने बहुवचनमूह्यम् ]।

---

1 I. O. गा अर्चितार्चिताय and A गां अर्चिताय for the b. p.
2 I. O. ब्राह्मणायोत्कृष्टाय for the b. p.
3 A अनुत्तम०
4 I. O. नवपद्यते for the b. p.
5 I. O. गा अर्चितार्चिताय, A गामर्चिताय
6 I. O. ०त्वाभ्यप्राप्ति०
7 A ०मेतां
8 I. O. परं
9 A omits ०र्चितान्य०
10 A ०मेतां
11 I. O. कामान्
12 I. O. and A शतसहस्रदः
13 A गामर्चिता अर्चिताय, I. O. गा अर्चितार्चिताय for the bracketed portion
14 I. O. फल for लोक
15 Both I. O. and A ०मेतां
16 I O. गां
17 I. O. स्वेच्छया बहुभ्यो दाने संप्रदाने बहुवचनमूहनीयं for the bracketed portion

शिवपुराणे :—

[1]गोसहस्रप्रदातारो भूमिदातार एव च ।
ये सुवर्ण[2] प्रदातारस्तथा [3]सर्वप्रियंवदाः ॥७॥
[4][ते तत्र गत्वा हृष्टाश्च] निवसन्ति यथासुखम् ।
[5][कल्पायुतसहस्राणां सहस्राणि चतुर्दश] ॥८॥
[6][विचरित्वा पुरवरं] पुनः प्राप्य महीतलम् ।
जायन्ते श्रेष्ठवर्णेषु सुखैश्च [7]परमैर्युताः ॥९॥

गाः [8]सहस्रमर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । शिवपुराणोक्तगोसहस्रदानफलप्राप्तिकामोऽहमेताः सहस्रं गा ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । स्वेच्छया बहुभ्यो दाने [9]संप्रदाने बहुवचनमूहनीयम् ।

इति महाराजाधिराज-निःशङ्क-[10]शङ्कर-श्रीमद्बल्लालसेनदेव[11]-विरचिते
श्रीदानसागरे-[12]ऽनलङ्कृतबहुगवीदानावर्तः ।

1 I. O. गोसहस्रं
2 A ०प्रदातारस्तथा
3 A सर्वप्रियम्वद:
4 A येताद्दापरहृष्टाय for the bracketed portion
5 A कल्पायुतसहस्राणि भुवनानि चतुर्दश: for the bracketed portion
6 A विचरित्वा प्रोषकरं, I. O. विचरित्वा सुरवरं
7 I. O. परमै: स्मृत:
8 I. O. सहस्रमर्चितामर्चिताय, A सहस्रमर्चिताय
9 A संप्रदान
10 A सङ्कर
11 A omits देव
12 I. O. ऽस्वकृत०

## अथ विष्णुदैवतवृषभ-[1][दानावर्तः । (८-९)

### तत्रा]-लङ्कृतवृषदानावर्तः । (८)

[2]सम्वर्तः—

यो ददाति [3]वलीवर्दमुक्तेन विधिना शुभम् ।
[4]अव्यङ्गं गोप्रदानाद्धि भुंक्ते दशगुणं फलम् ॥१॥

शुभं शुभ[5]-लक्षणोपेतं [6][शुभलक्षणाश्च गोसहस्रमहादाने लिखितमनुसन्धेयम् । अव्यङ्ग-मत्यव्यङ्गस्यावश्योपादानार्थम् । ] [7][अत्रोक्तेन विधिनेति ] सम्वर्तोक्तारोग-[8]गवीदानानन्तर-स्योक्तत्वात्[9] तदलङ्कारपरिग्रहो बोद्धव्यः ।

तथा च सम्वर्तः—

यो ददाति शर्फै[10]रौप्यैर्हेमश्रृङ्गीमरोगिणीम् ।
सवत्सां [11]वस्त्रसंयुक्तां सुशीलां गां पयस्विनीम् ॥२॥
यावन्ति तस्या रोमाणि सवत्सायाा दिवं गतः ।
[12][तावतो वत्सरानास्ते स नरो] ब्रह्मणोऽन्तिके ॥३॥

अत्र यजमानो वृषमुक्तरूपमुक्तोपकरणयुतमर्चितमर्चिताय ब्राह्मणाय दद्यात् । ॐ अद्यामुकगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्य सम्वर्तोक्त-वलीवर्द-दानफल-प्राप्तिकामोऽहमेतं सुवर्णश्रृङ्गं [13]रूप्यखुरं वस्त्राच्छादितं वलीवर्दं ददानि । [14][प्रतिग्रहीता स्वस्तीयुक्त्वा सावित्रीं पठित्वा वृषोऽयं विष्णुदैवत इत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामेतत् काञ्चनं ददानि ।] प्रतिग्रहीता स्वस्ती-त्युक्त्वा वृषं पुच्छे गृह्णीयात् ।

1 A वृषदानानुवृत्तौ एता for the bracketed portion
2 A omits it
3 I. O. वलीवर्दयुक्तेन, A वलिर्व्वद-युक्तेन
4 I. O. अव्यक्तं, A अव्यङ्ग
5 I. O. ०लक्षणादिंपेतं
6 I. O. omits the bracketed portion
7 A अत्रोक्तविधानेति for the b. p.
8 I. O. ०रोगिगवा०
9 I. O. दानानन्तरमन्यो क्त्वा, A दानान्तरस्योक्तत्वात्
10 I. O रूप्यै०
11 A वत्स for वस्त्र
12 A तावन्त वत्सरानेव वत्सरो and I. O. तावती वत्सरादास्ते स नरो for the bracketed portion
13 I. O. रौप्यखुरं
14 A omits the bracketed portion

यमः—

दान्तं धुरन्धरं दत्त्वा दशधेनुप्रदो भवेत् ॥४॥

दान्तं विनीतम् ।

अत्र यमोक्तालङ्कृतधेनु-[1] [दानानन्तरमस्य श्रुते]-स्तथाविध-[2]दशधेनुदानफलकत्वाच्च तदीयालङ्कारपरिग्रहः ।

[3][तथा च यमः]—

रुक्मशृङ्गीं रूप्यखुरां मुक्तालाङ्गूलभूषिताम् ।
कांस्योप-[4]दोहनां धेनुं वस्त्रच्छन्नामलङ्कृताम् ॥५॥
[5]दत्त्वा द्विजेन्द्राय नरः स्वर्गलोके महीयते ।
यावन्ति धेनुरोमाणि तावन्त्यब्दान्य-[6] संशयः ॥६॥

वृषमुक्तरूपमुक्तोपकरण-[7]युतमर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमहमुक्त्वा दद्यात् । यमोक्तवृषदानफलप्राप्तिकामोऽहमेतं रुक्मशृङ्गं रूप्यखुरं मुक्ताभूषितलाङ्गूलं वस्त्रच्छन्नमलङ्कृतं वृषं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

महाभारते ( अनु—७६।२३ ) :—

[8]दृतिकण्ठमनड्वाहं [9]सर्वरत्नैरलङ्कृतम् ।
दत्त्वा [10]प्रजापतेर्लोकं विशोकः प्रतिपद्यते ॥७॥

[11]दृतिकण्ठं चर्मपट्टिकावेष्टितग्रीवं सर्वरत्नैः परिभाषोक्तैः । वृषं यथोक्त-[12]मर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमहमुक्त्वा दद्यात् । विशोकत्वपूर्वक-प्रजापतिलोकप्राप्तिकामोऽहमेतं [13]दृतिकण्ठं सर्वरत्नालङ्कृतमनड्वाहं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

1 I. O. दानानन्तरं तुभ्यं श्रुति for the bracketed portion
2 A omits दश
3 I. O. omits the bracketed portion
4 A ०द्दोहां
5 I. O. दद्याद्
6 A ०म्र०
7 I. O. ०युक्तमर्चितमर्चिताय, A ०मर्चिताय
8 I. O. इति for दृति
9 I. O. सर्वरत्नमलङ्कृत
10 I. O. प्रजापतेर्लोकान्, A प्रजापतोलोकं
11 I. O. इतिकण्ठं
12 A omits मर्चित
13 I. O. इतिकण्ठं

तथा (अनु—७८।१४-१५ ) :—

[1]युवानमिन्द्रियोपेतं शतेन सह [2]यूथपम् ।
[3]गवेन्द्रं [4]ब्राह्मणेन्द्राय भूरिशृङ्गमलङ्कृतम् ॥८॥

इन्द्रियोपेतं [5]प्रजननसमर्थं [6][गवेन्द्रं गोप्रधानं] भूरिशृङ्गं सुवर्णशृङ्गम् अलङ्कृतं हेमतिलकादिभिः ।

ऋषभं ये प्रयच्छन्ति श्रोत्रियाय परन्तप ।
[7]ऐश्वर्यं तेऽधिगच्छन्ति जायमानाः पुनः पुनः ॥९॥

वृषमुक्तरूपमुक्तोपकरणयुतं धेनुशतसहितमर्चितं तपोवृत्त[8]-विद्याशालिने वेदविदे ब्राह्मणायार्चिताय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । महाभारतोक्तगोशत-[9]सहितगवेन्द्रदानफलप्राप्तिकामोऽहमेतं गोशतसहितं भूरिशृङ्गमलङ्कृतं गवेन्द्रं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (अनु—७६।२१) :—

वैराटपृष्ठ-[10]मुक्ताणं सर्वरत्नैरलङ्कृतम् ।
प्रदाय मरुतां [11]लोकानजरान् प्रतिपद्यते ॥१०॥

वैराटं [12]विराटदेशोद्भवं ताम्रं [13][काम्रेचर इति] प्रसिद्धं [14][सर्वरत्नैः परिभाषोक्तैः ।] [15][विराटताम्रपृष्ठमुक्ताणं]-मुक्तोपकरणमभ्यर्च्यार्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । अजरमरुल्लोकप्राप्तिकामोऽहमेतं वैराटपृष्ठं सर्वरत्नाल-[16]ङ्कृतमुक्ताणं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

1 A प्रधान॰ for युवान॰
2 I. O. यूथयम्
3 I. O. पत्रिन्द्रं
4 A ब्राह्मणेन्द्राय
5 A प्रसवसमर्थं, I. O. धूमं रसमर्थं
6 I. O. पत्रिन्द्रं गोपधानं for the bracketed portion
7 A ऐश्वर्यमेव गच्छन्ति
8 A ॰व्रत, I. O. ॰वित्त
9 A omits सहित
10 I. O. and A ॰मुष्काणां and ॰मुष्काण respectively
11 I. O. लोकानुत्तमान्
12 A विराटदेशोत्तरं
13 A काम्रं कुत्र for the bracketed portion
14 A सर्वरत्नैरलङ्कृतं for the bracketed portion
15 I. O. इव for the bracketed portion
16 I. O. ॰कृतं मुष्काणं

[1]आग्नेयपुराणे :—

[2]प्रत्यक्षं वृषदानस्य फलं शृणु महामते ।
[3][पवित्रं पावनञ्चैव सर्वदानोत्तमं तथा ॥११॥]
[यादृशश्च[4] वृषो देयो यजमानेन वा यथा । ][5]
[[6]समन्वितो धेनुशतैरुक्षा[7] देयो][8] धुरन्धरः ।
वोढा चैवातिपुष्टाङ्गो द्युतिमान् [9]नृपसत्तम ॥१२॥

धुरन्धरः [10]भारवहनक्षमः वोढा [11]दृढपृष्ठः अतिपुष्टाङ्गः स्थूलावयवः द्युतिमान् दर्शनीयाकृतिः ।

[12]युवा भद्रः सुशीलश्च सर्वदोषविवर्जितः ।
[13]दाता [14]तरति [15][संसारसागरञ्चापि तैः सह ॥१३॥
भुनक्ति विविधान् भोगानिह बन्धुजनैः सह ।
रोगशोकविनिर्मुक्तः सर्वदोषविवर्जितः ॥१४॥ ]

[16][युवा तरुणः भद्रः शुभलक्षणोपेतः सुशीलोऽहिंस्रः सर्वदोषविवर्जितः अव्यङ्गः । ]

अलङ्कृतं[17] परैर्वस्त्रैः [18][स्वर्णशृङ्गं तथैव च ।
चतुर्भिश्चैव राजेन्द्र खुरै रौप्यैः]-रलङ्कृतम् ।

परैर्वस्त्रैर्यथाशक्त्युत्कृष्टवस्त्रैरल-[19]ङ्कृतमित्यत्र कृत्वेत्यध्याहार्यम् ।

1 A आग्नेयपुराणोक्त
2 I. O. प्रत्येक
3 A omits the bracketed portion
4 A यादृशस्य
5 I. O. omits the bracketed portion
6 A समाचितो
7 A रक्ष for रुक्षा
8 I. O. दत्वा शुभमोमवाम् द्विचैव for the bracketed portion
9 I. O. नृपसत्तम:
10 I. O. वह० for भार०
11 A दृढ: पृष्ठ: ; I. O. पृष्ठेन
12 A सुरा
13 I. O. ततो
14 Both I. O. and A भवति
15 I. O. संसारे माव कार्या विचारणा for the bracketed portion
16 A omits the bracketed portion
17 I. O. अलङ्कृत
18 I. O. पुच्छेऽपि समुपस्थिते । सुवर्णं शृङ्गं राजेन्द्र खुरं रौप्य for the bracketed portion
19 I. O. ०ङ्कृतादिवत

[1]सुपुच्छं पट्टवस्त्रेण ब्राह्मणायोपपादयेत् ।
मन्त्रेणानेन राजेन्द्र[2] [शृणुष्व तद्वदामि]ते ॥१६॥
[3]धर्मस्त्वं वृषरूपेण [लोके [4]चरसि नित्यशः ।
तेन धर्मेण विप्राय त्वां ददानि सुलक्षण ॥१७॥ ][5]
प्रीयतां धर्मराजो मे [6]प्रणिपत्य विसर्जयेत् ।
सप्तजन्मकृतं पापं वाङ्मनःकायकर्मभिः ॥१८॥
तत्सर्वं विलयं [7]याति वृषदानान्न[8] संशयः ।
[9]यानं वृषभसंयुक्तं दीप्यमानं [10]सुतेजसा ॥१९॥
गन्धर्वाप्सरसाकीर्णं गीतनृत्यसमाकुलम्[11] ।
आरुह्य कामगं दिव्यं [12]स्वर्लोकमधिगच्छति ॥२०॥
यावन्ति तस्य रोमाणि वृषभस्य[13] महीपते ।
स्वर्गमाप्नोति तावन्ति अत्रायातो नृपो भवेत् ।
[14]सर्वयाजी महातेजा [15]वीतशोको निरामयः ॥२१॥

यथोक्त-[16]वृषमुक्तोपकरणयुतं कृत्वाऽभ्यर्च्यार्चिताय ब्राह्मणाय ॐ धर्मस्त्वमित्यादि प्रीयतां धर्मराजो मे इत्यन्तं मन्त्रं पठित्वा [17]ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । आग्नेयपुराणोक्तालङ्कृतवृषदानफलप्राप्तिकामोऽहमेतं वस्त्रालङ्कृतं सुवर्णशृङ्गं राजतखुरालङ्कृतं पट्टवस्त्रविभूषितपुच्छं वृषं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

[18]विष्णुधर्मः—

युवानं बलिनं श्यामं शतेन सह [19]यूथपम् ।
गवेन्द्रं ब्राह्मणेन्द्राय भूरिशृङ्गमलङ्कृतम् ॥२२॥

1 A पुच्छस्य
2 A शृणुस्व वद्दामि and I. O. तं शृणुष्व वदामि for the bracketed portion
3 A ॐ धर्मेण
4 A चरति
5 I. O. अगदानन्दकारकः । अष्टमूर्त्तेरधिष्ठानमतः पाहि मां कृपया भुवि for the bracketed portion
6 A तावुप्रभुक्तम
7 A यान्ति
8 A ०नु
9 A याम, I. O. पानं
10 I. O स्वतेजसा
11 A ०समावृतं
12 I. O. स्वर्लोका०
13 A गोवृषस्य
14 A सोमयाजी
15 I. O. वीतशोक
16 I. O. वृषभो for वृष
17 A omits it
18 A विष्णुधर्मोत्तरे
19 I. O. यूथयम्

वृषभं [1]ये प्रयच्छन्ति [2]ब्राह्मणायाहिताग्नये ।
[3][ऐश्वर्यं चाभिगच्छन्ति] जायमानाः पुनः पुनः ॥२३॥

युवानं तरुणं [4]बलिनं [5]हलादिवहनक्षमं [6][ श्यामं नीलवर्णं ] शतेन सह [7][ गोशतेन सह ] यूथपं [8][यूथप्रधानं गवेन्द्रं गोपतिं ] भूरिशृङ्गं सुवर्णशृङ्गम् अलङ्कृतं यथाशक्ति हैमतिलकादिना [9]यथोक्तं वृषमुक्तोपकरणयुत-[10]मर्चितमर्चिताय ब्राह्मणाय विद्यातपोवृत्तशालिने अग्निहोत्रिणे ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोक्तश्यामं-[11]वृषदानफलप्राप्तिकामोऽहमेतं गोशतसहितं भूरिशृङ्गमलङ्कृतं वृषं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

विष्णुधर्मोत्तरे (३।३०६।३२) :—

सहस्रेण [12]गवां सार्द्धं ये प्रयच्छन्ति यूथपम् ।
अलङ्कृतं यथाशक्त्या गोलोकं यान्ति ते नराः ॥२४॥

[13]यथोक्तं वृषं सुवर्णशृङ्गादिभिरल-[14]ङ्कृतयार्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा [15]दद्यात् । गोलोकप्राप्तिकामोऽहमेतं गोसहस्रसहितमलङ्कृतं वृषं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेन-[16]देवविरचिते
[17]श्रीदानसागरे अलङ्कृतवृषदानावर्तः ।

1 A च
2 I. O. श्रोत्रियायाहिताग्नये, A ब्राह्मणाय हिताग्नये
3 I. O. ऐश्वर्यं तैभिजायन्ते and A ऐश्वर्यं चातिगच्छन्ति for the bracketed portion
4 I. O. omits it
5 A हलादिवहनक्षमं, I. O. हलादिवहनसमय
6 I. O. reads the bracketed portion after यूथप्रधानं, a little below
7 A omits the bracketed portion
8 A omits the bracketed portion
9 I. O. यथोक्त॰
10 A omits मर्चित
11 I. O. ॰वृषभ॰
12 A गवा
13 A यथोक्त॰
14 A ॰ङ्कृतं अर्चितं अर्चिताय
15 A omits it
16 A omits देव
17 I. O. दानसागरे

[1] [अथानलङ्कृतवृषदानावर्तः । (१)

मनुः (४।२३१ग) :— ]

[2] अनडुहः श्रियं पुष्टाम् ॥१॥

आप्नोतीति[3] सम्बन्धः । अत्र यजमानोऽर्च्चिताय ब्राह्मणायार्च्चितं वृषं दद्यात् । [4] ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं पुष्टश्रीप्राप्तिकामोऽहमेतमनड्वाहं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा अनड्वानयं विष्णुदैवत [5] इत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा [6] वृषं पुच्छे गृह्णीयात् ।

महाभारते :—

स्वर्गो वै मूर्तिमानेष[7] वृषभं यो गवां पतिम् ।
विप्रे [8] गुणयुते दद्यात् स वै स्वर्गे महीयते ॥२॥

गवां [9] पतिं [10] गोव्रजेषु [11] स्वच्छन्दचारिणं यथोक्तवृष-[12] मर्च्चितमर्च्चिताय विद्यातपःशालिने ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । सोत्कर्षस्वर्गप्राप्तिकामोऽहमेतं वृषभं ददानि । स्वस्त्यादिस्तीकारान्तं पूर्ववत् ।

[13] तथा (अनु—७३।४५) :—

अनड्वाहं[14] ब्राह्मणाय प्रदाय [15] [धुर्य्यं युवानं ] बलिनं [16] विनीतम् ।
हलस्य वोढार-[17] मनन्तवीर्य्यं प्राप्नोति [18] लोकान् दशधेनुदस्य ॥३॥

[19] [धुर्य्यं शकटवहनक्षम]-मनन्तवीर्य्यं [20] रेतस्विनं विनीतमहिंस्रं यथोक्त-[21] वृषभमर्च्चिताय

---

1 A omits the bracketed portion
2 I. O. अनडुहः
3 A आप्नोतीह
4 A omits it
5 I. O. •मित्युक्त्वा
6 I. O. वृषपुच्छे, A वृषपुच्छं
7 A मूर्त्तिमानिव
8 A गुणवते
9 A व्रतं
10 I. O. गोव्रजे
11 I. O. स्वच्छन्दचारिणां
12 A omits मर्च्चित
13 A omits it
14 A अनडुवाहं
15 A धूर्य्यगवाम् for the bracketed portion
16 A मधनीतं
17 Both I. O. and A •मनन्तवीर्य
18 A वोक्ता
19 A धूर्य कटवहनक्षमं for the bracketed portion
20 I. O. and A वेतस्विनं and वैतस्विनं respectively.
21 I. O. वृष for वृषभ

ब्राह्मणाय ॐ यथादि तुभ्यमन्तमुक्त्वा दद्यात्। दशधेनु-[1]दलोकप्राप्तिकामोऽहमेत[2]-मनड्वाहं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

[3][तथा (वन—१२६।८क) :—

दत्त्वानड्वाहं] सूर्यलोकं व्रजन्ति ॥४॥

वृष-[4]मर्चितमर्चिताय ब्राह्मणाय ॐ यथादि तुभ्यमन्तमुक्त्वा दद्यात्। सूर्यलोकप्राप्तिकामोऽह-[5]मेतमनड्वाहं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा :—

अनड्वाहञ्च यो दद्याद्धल [6][वन्तं धुरन्धरम्]।

स निस्तरति दुर्गाणि स्वर्गलोकञ्च गच्छति ॥५॥

धुरन्धरं हलादिवहनक्षमं [7]यथोक्तं वृषमर्चितमर्चिताय ब्राह्मणाय ॐ यथादि तुभ्यमन्तमुक्त्वा दद्यात्। दुर्गनिस्तार-[8]पूर्वक-स्वर्गप्राप्तिकामोऽह-[9]मेतमनड्वाहं ददानि। स्वस्त्यादि स्वीकारान्तं पूर्ववत्।

वराहपुराणे (२०७।५१ख) :—

[10]धुर्य्यप्रदानेन [11]तथा गवाञ्च [12]लोकानवाप्नोति [13]तथा वसूनाम् ॥६॥

हलादिवहनक्षमं वृषमर्चितमर्चिताय [14]ब्राह्मणाय ॐ यथादि तुभ्यमन्तमुक्त्वा दद्यात्। गोलोकवसुलोकप्राप्तिकामोऽहमेतं वृषं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

[15][तथा (२०७।५२ख):—

[16]राज्यन्तथा गोवृषभप्रदाने स्वर्गं] शुभं शाश्वतमाप्नुवन्ति[17] ॥७॥

[18]गोवृषभं गवां पतिम्। [19]यथोक्तं वृषमर्चितमर्चिताय ब्राह्मणाय ॐ यथादि तुभ्य-

1 I. O. लोक and A फल for द्लोक
2 I. O. ०मेन० for ०मेत०
3 A दत्वानुड्वाहं for the bracketed portion
4 A omits मर्चित
5 A omits मेत
6 A वन्त धुरन्धर for the bracketed portion
7 A यथोक्त
8 A omits पूर्वक
9 A omits मेत
10 Varāha P. धूप०
11 A omits तथा
12 A लोकाम् सम्यगप्राप्ती
13 Varāha P. मरी
14 A omits it
15 A दद्यात्तथा गोवृषभं स्वर्ग for the bracketed portion
16 I. O. राज्यन्तथा
17 Varāha P. reads the entire line as गजं तथा गोवृषभप्रदाने: स्वर्गं सुखं शाश्वतमाप्नुवन्ति
18 A गोवृषं
19 A यथोक्त

मन्तमुक्त्वा दद्यात्। शाश्वतोत्कृष्ट-स्वर्ग-[1]राज्यप्राप्तिकामोऽहमेतं [2]वृषभं ददानि। स्वस्त्यादि-स्वीकारान्तं पूर्ववत्।

ब्रह्मपुराणे :—

गोदानानि पवित्राणि विष्णुमुद्दिश्य साधुषु।
ये [3]प्रयच्छन्ति [4]धर्मज्ञ कृशेषु [5]कृषिवृत्तिषु ॥८॥

[6]कृशेषु [7]सुदीनेषु।

[8]ते यान्ति दीप्तवर्णाभै[9]-र्विमानैर्मणिचित्रितैः।
धर्मराजपुरं [10]श्रीमत्सेव्यमानाऽप्सरोगणैः[11] ॥९॥

अत्र गोदानानीति बहुवचनश्रुतेः साधुष्विति बहुवचनं बहुप्रयोगापेक्षम्। कृषिवृत्तिष्विति श्रुतेर्गोदानानीति गोपदं [12]वृषपरम्। [13]यथेष्टसंख्यान् [14]वृषान् हलवहनक्षमानर्चितानर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [15]ब्रह्मपुराणोक्त-कृषिवृत्ति-द्विजसंप्रदानक-गोदान[16]-फलप्राप्तिकामोऽहमेतान् वृषान् ददानि। [17]विष्णुः प्रीयताम्। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

आग्नेयपुराणे :—

[18]पुष्ये वा जन्मनक्षत्रे अयने विषुवेषु च।
ग्रहणे [19][च व्यतीपाते] संक्रान्तौ च दिनक्षये ॥१०॥
यानमश्वमनड्वाहं हेमरूप्यमणींस्तिलान्।
ये प्रयच्छन्ति पापेषु [20]निरताः सर्वदा मुने।
न तेषां भैरवः पन्था दस्त्वैषां दानमित्युत[21] ॥११॥

पापेषु निरताः सर्वदेति [22]श्रवणादतिप्रचुरपापक्षयार्थमिदं देयम्। उक्तसमयानामन्यतमे

1 A लोक
2 A वृषं
3 A प्रयच्छन्ति
4 I. O. धर्म्मज्ञाः
5 A कृषिवृत्तिषु
6 A कृशेषु
7 A सुदिनेषु, I. O. दीनेषु
8 A omits it
9 A दीप्तवर्णै॰
10 A श्रीमान॰
11 A ॰गणाः
12 A वृषपदं
13 A यथेष्टसंख्या
14 A omits it
15 I. O. ब्राह्मपुराणोक्त
16 A गोलोक
17 A विष्णु
18 I. O. पुण्ये
19 A व्यतीपाते च for the bracketed portion
20 A निरता, I. O. निरतः
21 A दानमित्युत:
22 I. O. श्रवणादति॰

वृषमर्चित[1]-मर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। आग्नेयपुराणोक्ता-[2]नलङ्कृतवृषदानफलप्राप्तिकामोऽहमेतमनड्वाहं[3] ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

[4]आदिपुराणे :—

[5]प्रदेयो लक्षणाढ्यो[6] वा दशधेनुसमो वृषः।

स्वर्गे [7]युगसहस्राणि गवां [8]लोम्ना समानि तु।

लक्षणाढ्यो[9] गोसहस्रोक्तलक्षण-[10]सम्पन्नः। वाशब्दः पूर्वोक्त-[11]दानापेक्षया।

वसन्ति गोप्रदातारो [12]भुञ्जते सुखमक्षयम्॥१२॥

[13]सुलक्षणं वृषमर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [14]आदिपुराणोक्त-वृषदान-फलप्राप्तिकामोऽहमेतं वृषं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

[15]आदिपुराणे :—

यो ददाति [16]अनड्वाहं सुशीलं [17]साधुवाहिनम्।

उभयोः पार्श्वयोर्दत्वा छत्रोपानह-[18]कम्बलम्॥१३॥

[19]सुशीलमहिंस्रं साधुवाहिनं [20][हलादिवाहनेषु साधुम्]।

शीलवेदाङ्ग-[21]सम्पन्ने इष्टे शिष्टे [22]द्विजे नरः।

पुष्ये वा जन्मनक्षत्रे [23]अयने विषुवेषु च॥१४॥

इष्टे [24]अभीष्टे शिष्टे [25]सदाचारे।

दत्वा तस्य अनड्वाहं तस्मिन् स्थाने महामुने।

[26]क्षुतपिपासार्दितस्यापि अग्रतः प्रतिपद्यते॥१५॥

1 A omits मर्चित
2 A omits न
3 A ०मेतानहं
4 I. O. आदित्यपुराणे
5 A प्रदेया
6 A लक्षणाढा, I. O. लक्षणाढ्यो
7 I. O. च मतसाहस्र
8 I. O. रोम्ना
9 I. O. लक्षणाढ्यो
10 Both I. O. and A संपूर्ण:
11 I. O. ०देयापेक्ष:
12 A भुञ्जन्ति
13 I. O. सलक्षण
14 I. O. आदित्यपुराणोक्त०
15 I. O. आदित्यपुराणे
16 A त्वनड्वाहं
17 A साधुवाहिनं
18 A कन्धलं
19 I. O. सुशीलं महिषं
20 I. O हलादिवाहने साधुं and A हलादिवाहनेष्वसाधु for the bracketed portion
21 A ०सम्पन्न
22 A पियो for द्विजे
23 I.O. इयने, A अपरं
24 A सुभीष्टे
25 A omits it
26 I. O. क्षुतपिपासापिंतस्यापि, A युपपासार्दितस्यापि

उक्तसमयानामन्यतमे यथोक्तरूपं वृषम् एकपार्श्वे [1]छत्रमुपानद्युगमपरत्र च[2] कम्बलं [3]दत्त्वाऽभ्यर्चितार्चिताय यथोक्तरूपाय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [4]आदिपुराणोक्त-वृषदान-फलप्राप्तिकामोऽहमेतं छत्रोपानत्[5]-कम्बलयुत[6]-मनड्वाहं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

नरसिंहपुराणे :—

कपिलागोप्रदानेन परार्थे चावनीपते[7]।
[8]गोवृषस्य प्रदानेन [9]स्वर्गं मन्मथमाप्नुयात् ॥१६॥

गोवृषस्य गवां पत्युः परार्थे मातापित्राद्यर्थे। वृषमर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। नरसिंहपुराणोक्तवृषदानफलप्राप्तिकामोऽहमेतममुकार्थे[10] वृषं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

विष्णुधर्मोत्तरे (३।३०६।३०-३१) :—

[11]वृषभं ये प्रयच्छन्ति शतेन सह यूथपम्।
सर्वपापविनिर्मुक्तास्ते प्रयान्त्यमरावतीम् ॥१७॥
कल्पावशेषं त्रिदिवे सुख-[12]मुष्य नरोत्तमाः।
[13]मानुष्ये धनसंयुक्ता भवन्ति सुखिनस्ततः ॥१८॥

यूथ-[14]प्रधानं वृषं गोशतसहित-[15]मर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोत्तरोक्त-गोशतसहित-वृषदानफलप्राप्तिकामोऽहमेतं गोशत-[16]युतं वृषं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

[17]तथा :—

उक्षाणं ये प्रयच्छन्ति दशधेनु-[18]युतं तथा।
सर्वपापविनिर्मुक्तास्ते व्रजन्त्यमरा-[19]वतीम ॥१९॥

1 A वज्रोपानद्वयपरत्र
2 I. O. omits it
3 A दत्वा अर्चिताय
4 I. O. आदित्यपुराणोक्त ०
5 A ०नद्०
6 A ०युक्त०
7 I. O. वावनीपते
8 A गोवृषभ
9 I. O. स्वर्गो
10 A अमुकनाम्नं for अमुकार्थे
11 A. D. उक्षां च
12 A ०मष्य
13 I. O. मानुष्ये
14 I. O. प्रधान
15 I. O. omits अर्चित
16 A ०युत
17 A omits it
18 I. O. ०युतस्तथा
19 A ०वतीम्

दशधेनुसहितं वृष-[1]मर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमहमन्तमुक्त्वा दद्यात्। विष्णुधर्मोत्तरोक्त-दशधेनुसहितवृषदान-[2]फलप्राप्तिकामोऽहमेतं दशधेनुसहित-[3]मुक्षाणं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३०६।३४) :—

गोयुगं ये प्रयच्छन्ति [4]सीरयूपयुतं [5]द्विजाः।
सर्वकाम-[6]समृद्धस्य प्राप्नुवन्ति नराः फलम् ॥२०॥

[7]द्विजा इति सम्बोधनं सीरः हलं यूप ईशादण्डः। हलवहनक्षमं वृषद्वयं सोपकरण-हलसहित-[8]मर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमहमन्तमुक्त्वा दद्यात्। [9]विष्णुधर्मोत्तरोक्त-वृषयुगदानफलप्राप्तिकामोऽहमेतत्[10] सीरयूपयुतं गोयुगं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे [11]अनलङ्कृतवृषदानावर्तः।

1 A omits मर्चित
2 A omits फल
3 I. O. °सुवर्णकं
4 I. O. शीर°
5 I. O. द्विज:
6 A समृद्धाय
7 I. O. द्विज
8 A omits मर्चित
9 I. O. विष्णुधर्मोत्त°
10 A °मेतं
11 A अनलङ्कृत°

# अथ गवाह्निकदानावर्तः । (१०)

यमः :—

गवां घासप्रदानेन सर्वपापैः प्रमुच्यते ॥१॥

अत्राभिमतदिने प्रातर्यजमानो [1]गृहीतोदकपूर्णताम्रपात्र उदङ्मुखोपविष्टो यथाशक्ति गोभ्यो [2][घासदानं सङ्कल्पयेत् । ॐ सर्वपापविमुक्तिकामो गोभ्यो ] घासं दास्ये । ततः-प्रभृति यथेच्छं [3][यथेष्टकालञ्च गोभ्यो घासं ] दद्यात् ।

आग्नेयपुराणे :—

घासमुष्टिं परगवे [4]अन्नं दद्याच्च यः सदा ।

अकृत्वा स्वयमाहारं स्वर्गलोकं स गच्छति ॥२॥

परगवे यथेच्छं बहुकालं [5]घासमुष्टिमन्नञ्च [दातुं [6]सङ्कल्पयेत । ॐ स्वर्गप्राप्तिकामोऽहमन्नं[7] परगवे घासमुष्टिञ्च][8] दास्ये । ततः स्वयमकृताहारो यथा-[9]सम्भवं घासमुष्टिमन्नञ्च [10]प्रत्यहं दद्यात् ।

नन्दिपुराणे :—

यो गवां रुद्रदत्तानां [11]कोऽपि दद्याद् गवाह्निकम् ।

स गच्छेद् रुद्रभवनं कुलद्वयसमन्वितः ॥३॥

रुद्रदत्तानां शिवभट्टारकाय[12] दत्तानां गवाह्निकं भक्ष्यघासादिरूपम् । [13][गवाह्निकं रुद्रगवीभ्यः पूर्ववत् सङ्कल्पयेत । ॐ नन्दिपुराणोक्त-रुद्रगवीगवाह्निकदानफलप्राप्तिकामोऽहं रुद्रगवीभ्यो गवाह्निकं दास्ये । ततो यथेच्छं यथेष्टकालञ्च दद्यात् ।

---

1 I. O. गृहीतोदपूर्णपात्र
2 I. O. omits the bracketed portion
3 A यथेच्छकालं घासञ्च गोभ्यो for the bracketed portion
4 A मात्रं
5 A घासमुष्टिं दानमन्न
6 A सर्वं before this
7 A मेध्यं for मन्नं
8 I. O. omits the bracketed portion
9 A ०सम्भारं
10 A omits it
11 I. O. कश्चिद्
12 A ०भट्टारकादय
13 A omits the bracketed portion

तथा :—

योऽन्यासामपि गवां दद्यात् कश्चिन्मर्त्यो [1]गवाह्निकम् ।
सोऽपि गच्छेन्नरः स्वर्गं युगं दिव्यं न संशयः ॥४॥

अन्यासामिति शिवभट्टारकाय दत्ताभ्यो[2]ऽन्यासां सामान्य-[3]गवामित्यर्थः । पूर्ववद् गोभ्यो [4]गवाह्निकदानं सङ्कल्पयेत् । ॐ [5]अद्य दिव्ययुगावच्छिन्नस्वर्गप्राप्तिकामोऽहं गोभ्यो [6]गवाह्निकं दास्ये । ततो यथेच्छं [7]यथेष्टकालञ्च दद्यात् ।

कालिकापुराणे :—

दद्याद् गवाह्निक-[8]ञ्चैव [9]तमुद्दिश्य [10]निवेदयेत् ।
अथापि किं [11]प्रलापेन यत्किञ्चित् सुकृतं भुवि ।
[12]सर्वन्तत् फलमाप्नोति शिवमुद्दिश्य लीलया ॥५॥

तमुद्दिश्य निवेदयेत् शिवप्रीतये दद्यादित्यर्थः । पूर्ववद् गोभ्यो यथाशक्ति गवाह्निकं [13]सङ्कल्प्य दद्यात् । [14]ॐ कालिकापुराणोक्त-गवाह्निकदानफलप्राप्तिकामोऽहं गोभ्यो गवाह्निकं दास्ये । ततः [शिवो मे ][15] प्रीयता-[16]मित्युक्त्वा गोभ्यो गवाह्निकं यथेच्छं [17]यथेष्टकालञ्च दद्यात् ।

विष्णुधर्मोत्तरे :—

सायंप्रातर्मनुष्याणामशनं देवनिर्मितम् । (३।३०६।५६ख)
तत्रैकमशनं [18]दत्त्वा गवां नित्यमतन्द्रितः[19] ॥६॥
द्वितीयं[20] स्वयमश्नाति तेन संवत्सरान्नरः ।
गवां लोकमवाप्नोति यावदिन्द्राश्चतुर्दश ॥७॥

1 I. O. पराह्निकं
2 I. O. दत्तान्यो॰
3 A ॰गवीदानमित्यर्थः
4 A वाह्निकदानं, I. O. पराह्निकं दानं
5 A omits it
6 I. O. पराह्निकं
7 Both I. O. and A यथेच्छ-कालञ्च
8 A ॰ञ्चैव
9 A तदुद्दिश्य
10 A निवेदयेत्
11 A प्रलपनं
12 I. O. सर्वंतत्, A कुर्वन्त
13 A सङ्कल्प्य
14 A omits it
15 A शिव for the bracketed portion
16 I. O. मिति ब्रूयात्
17 A यथे॰कामञ्च, I. O. यथेच्छ-कालञ्च
18 I. O. दद्याद्
19 I. O. ॰तन्द्रितः
20 I. O. द्वितीय

पूर्व्वव-[1]देकाशनदानं गवे सङ्कल्पयेत्। ॐ अद्यारभ्य संवत्सरं यावत् प्रत्यहं विष्णुधर्मोत्तरोक्त-[2]गवेकाशनदानफलप्राप्तिकामोऽहं गवे स्वकीयं प्रातरशनं दास्ये। ततः संवत्सरमेकं प्रत्यहं प्रथम-[3]भोजनार्थोपात्तमन्नं गवे दत्त्वा [4]स्वयमेकवारं भुञ्जीत।

तथा :—

अग्रभक्तं[5] नरो दत्त्वा नित्य-[मेव तथा][6] गवाम्।
[7]समाषट्केन लभते नागलोकं समायुतम्॥८॥

[8]समायुतं संवत्सराणामयुतम्। पूर्व्ववद्गवे अग्र-[9]भक्तदानं सङ्कल्पयेत्। ॐ अद्यारभ्य [10]समाषट्कं यावत् प्रत्यहं [11]समायुतनागलोकप्राप्तिकामोऽ[हं गवे अ][12]-ग्रभक्तं दास्ये। ततस्तदवधि संवत्सर-[13]षट्कपर्य्यन्तं प्रत्यहं स्वकीय-[14]भोजनार्थोपात्तान्नादग्रभागमाहृत्य गवे[15] दद्यात्।

तथा :—

[16]गवां लवणदानेन रूपवानभिजायते।
सौभाग्यं महदाप्नोति लावण्यञ्च [17]द्विजोत्तम॥६॥

पूर्ववद् गोभ्यो यथेच्छं लवणदानं [18]सङ्कल्पयेत्। [19]ॐ विष्णुधर्मोत्तरोक्त-गो-[20]लवणदानफलप्राप्तिकामोऽहं गोभ्यो लवणं [21]दास्ये। तदवधि यथेच्छं यथेष्टकालञ्च [22]लवणं दद्यात्।

तथा (३।२६१।६ख) गोभ्यो दानानुवृत्तौ :—

[23]तासां घासप्रदानेन [24]महापुण्यमवाप्नुयात्॥१०॥

1 I. O. ०देकादश्नदानं
2 I. O. गवेकादश्नदान०
3 A ०भोजनार्थदत्तमन्नं'
4 A यावत् and I. O. मास for स्वय
5 A यथाभुक्तं, I. O. अग्रभक्तं
6 A मेवतथा for the bracketed portion
7 I. O. समाषकेन, A समाषाङ्कं स
8 A omits it
9 I. O. ०भुक्त०
10 A समाषाङ्कं
11 A समायुतं
12 I. O. omits the bracketed portion
13 A omits षट्क
14 I. O. भोजनार्थोपात्तादन्नाग्रभागमाहृत्य, A भोजनार्थदत्तान्नादाकृष्य
15 A परगवे
16 I. O. गवो
17 I. O. द्विजोत्तमः
18 I. O. संकल्प्य
19 A omits it
20 A लोक for लवणदान
21 A दास्येति
22 A omits it
23 I. O. omits it
24 I. O. महत्पुण्य०

पूर्ववद् गोभ्यो [1]घासदानं सङ्कल्पयेत्। ॐ महापुण्य-[2]प्राप्तिकामोऽहं गोभ्यो घासं दास्ये। ततो घासं यथेच्छकालं दद्यात्।

तथा (३।२६१।११क) गवां दानानुवृत्तौ :—

औषधञ्च तथा दत्त्वा विरोगस्त्वभिजायते ॥११॥

व्याधितस्य [3]गो रोगोपशान्तये [4]यथेष्टमौषधदानं पूर्ववत् सङ्कल्पयेत्। ॐ विरोगत्व[5]-प्राप्तिकामोऽहं [6][ गोभ्य औषधं दास्ये ]। [7][ततो गवाह्निकदानाशक्तौ यथेच्छकालञ्च औषधं दद्यात्। ]

इति महाराजाधिराज-निःशङ्क-शङ्कर[8]-श्रीमद्बल्लालसेन-[9]देवविरचिते श्रीदानसागरे गवाह्निकदानावर्तः।

1 I. O. घासदान
2 A ०प्रीति०
3 A omits गो
4 I. O. यथेच्छ०
5 I. O. स्वभि, for त्व
6 I. O. गोभ्य ताम्रं only for the bracketed portion
7 A reads the bracketed portion as तथा गवां दानाशक्तिवशेच्छया कालञ्च औषधं दास्ये
8 A शङ्कर
9 A omits देव

# अथ विष्णुदैवतभूमिदानावर्तः । (११)

## तत्र भूमिदानप्रशंसा ।

[1]दानबृहस्पति :—

सुवर्णं रजतं वस्त्रं [2]मणिरत्नं वसूनि च ।
सर्वमेतन्म-[3]वेद्दत्तं वसुधां यः प्रयच्छति ॥१॥

तथा :—

यत् किञ्चित् कुरुते पापं पुरुषो लोभ-[4]मोहितः ।
तत्सर्वं भूमिदानेन क्षिप्रमेव प्रणश्यति ॥२॥
विप्राय दद्यात् सुगुणान्विताय तपोऽभिजुष्टाय जितेन्द्रियाय ।
यावन्मही तिष्ठति [5]सागरान्ता तावत्तपस्तस्य[6]भवत्यतुल्यम् ॥३॥

[7]तथा :—

[8][यथाप्सु पतितः] शक्र तैलबिन्दुर्विसर्पति ।
एवं भूमिकृतं दानं [9][मध्ये मध्ये] प्ररोहति ॥४॥
शङ्खं भद्रासनं छत्रं [10]वराश्वा वरवारणाः ।
भूमिदानस्य [11]पुष्पाणि फलं [12]स्वर्गः पुरन्दर ॥५॥
आदित्यो वरुणो विष्णु-[र्ब्रह्मा सोमो हुताशनः ।
शूलपाणिश्च भगवानभिनन्दति भूमिदम् ॥६॥
सौवर्णा यत्र प्रासादा वसोर्धाराश्च कामदाः ।
गन्धर्वाप्सरसो यत्र][13] तत्र [14]गच्छन्ति भूमिदाः ॥७॥
बहुभिर्वसुधा दत्ता राजभिः [15]सगरादिभिः ।

1 A omits it
2 I. O. मणिरत्नमभूमि
3 I. O. ०मं दत्तं
4 A ०मर्षितः
5 I. O. सागराक्ता
6 I. O. भवेदतुल्यं
7 I. O omits it
8 A यथापतितं for the b. p.
9 A मध्ये मध्ये for the bracketed portion
10 A वराश्ववरवारणा
11 A पुष्पाणि
12 I. O. स्वर्गाः, A स्वर्गं
13 A omits the bracketed portion
14 I. O. गच्छति
15 A सगराद्दिभिः

यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥८॥
षडशीतिसहस्राणि [1]योजनानि वसुन्धरा ।
दत्ता स्वल्पापि राजेन्द्र सर्वकामप्रदायिनी ॥९॥
भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति ।
उभौ तौ पुण्यकर्माणौ [2]नियतं स्वर्गगामिनौ ॥१०॥
सहस्रमेव धेनूनां शतं [3]चानडुहां समम् ।
[4]दशानडुत्-समं यानं दशयानसमो हयः ॥११॥
दशवाजिसमा कन्या भूमिदानन्तु [5]तत्समम् ।
[6][भूमिदानात् परं नास्ति विद्या]-दानं[7] ततोऽधिकम् ॥१२॥
सुवर्णदानं गोदानं भूमिदानञ्च वासव ।
एतत् [8]प्रयच्छमानो हि सर्वपापैः प्रमुच्यते ॥१३॥

सम्वर्त :—

सर्वेषामेव दानानामेकजन्मानुगं फलम् ।
[9]हाटकक्षितिगौरीणां [10]सप्तजन्मानुगं फलम् ॥१४॥
अग्नेर-[11][पत्यं प्रथितं] सुवर्णं [12]भूर्वैष्णवी सूर्यसुताश्च गावः ।
तेषामनन्तं [13]फलमश्नुवीत यः काञ्चनं गाञ्च महीञ्च दद्यात् ॥१५॥

बृहस्पति :—

आस्फोटयन्ति पितरः [14]प्रवदन्ति पितामहाः ।
भूमिदोऽस्मत्कुले जातः सोऽस्मान् [15]सन्तारयिष्यति ॥१६॥

महाभारते (cf. अनु—६२।२क—६२ख) :—

अति दानानि सर्वाणि पृथिवीदानमुच्यते ।
अचलाह्यक्षया भूमिर्दोग्धि[16] कामानन्नुत्तमान् ॥१७॥

---

1 I. O. योजनानां, A योजनानि
2 I. O. नियतो
3 I. O. वानुडुहा
4 I. O. दशनडुत्समं, A दशानाडुच समं
5 I. O. तत्कृत
6 A ततो only for the bracketed portion
7 I. O. ०दानं
8 I. O. प्रयच्छदानो
9 I. O. हाटकं
10 I. O. मधु for सप्त
11 A पत्यप्रथितं and I. O. पत्यं प्रथमं for the bracketed portion
12 A भूर्वैष्णवी सूर्यसुताश्च, I. O. दूरेषु गौतस्य सुतापि
13 I. O. कुल for फल
14 I. O. प्रवदन्ति
15 A सतारयिष्यति
16 A ०र्दोग्ध, I. O. ०र्दोग्धी

[1]दोग्धि वासांसि रत्नानि पशून् व्रीहियवांस्तथा ।
भूमिदः सर्वभूतेषु शाश्वतीरेधते समाः ॥१८॥
यावद्भूमि-[2][स्थितो वायुस्ता]-वद्भूमि-[3][द एधते] ।
[4]न भूमिदानादस्तीह परं किञ्चिद् युधिष्ठिर ॥१६॥
[5]अप्यल्पं प्रददुः सर्वे [6]पृथिव्या इति नः श्रुतम् ।
[7][भूमिमेव ददुः] सर्वे [8]ते भूमिं भुञ्जते [9]जनाः ॥२०॥
[10]स्वकर्मैवोपजीवन्ति नरा इह परत्र च ।
भूमि-[11]र्भूति-[12]र्महादेवी दातारं कुरुते प्रियम् ॥२१॥
य एतां [13]दक्षिणां दद्यादक्षय्यां[14] पृथिवी-[15]पते ।
पुन-[16]र्नरत्वं संप्राप्य भवेत स पृथिवीपतिः ॥२२॥
यथा दानं [17][तथा भोग इति] धर्मेषु निश्चयः ।
[18][संग्रामे वा तनुं जह्याद्]-द्याद्वा पृथिवीमिमाम् ॥२३॥
इत्येतत् [19]क्षत्रबन्धूनां वदन्ति परमाशिषम् ।
पुनाति [20][दत्ता पृथिवी] दातारमिति शुश्रुम ॥२४॥
अपि पापसमाचारं [21]ब्रह्मघ्नमपि [22]चानृतम् ।
[23]सैव पापं [24]प्लावयति [25][सैव पापात् प्रमोचति] ॥२५॥

1 I. O. दोग्धी
2 I. O. स्थिता वायु ता and A र्व्वासुविदृता for the bracketed portion
3 A वभूव तु for the bracketed portion
4 I. O. ता before this
5 I. O. अप्यन्नं, A अल्पाप्यं
6 A पृथिव्य, I. O. पृथिवी
7 A भूविवा प्रददु: for the bracketed portion
8 A omits it
9 I. O. रिह
10 I. O. स्वकर्मैवोपजीवन्ति, A सुकर्म -वोपजीवन्ति
11 A भूति for भूंति
12 I. O. महादेवी and A महादेवी for र्महादेवी
13 I. O. पक्षिणां
14 A ०क्षय्यं
15 I. O. ०पते:
16 I. O. ०र्नत्वं, A ०र्नवत्सु
17 I. O. तथाभोगमिति, A यथा-भोग इति
18 I. O. संग्रामे वा तनु जह्या न and A सप्राप्ति दातास्तेजस्मान्व for the b. p.
19 I. O. क्षत्र for क्षत्र
20 A दत्वा पृथिवीं for the bracketed portion
21 I. O. ब्रह्महामपि
22 A चानृता
23 A मैवपाप
24 I. O. प्रावयति, A पुरे याति
25 A मैव पापात् प्रमुच्यते for the bracketed portion

अपि पाप-[1][कृतां राज्ञां प्रतिगृह्णन्ति] साधवः ।
पृथिवीं [2]नान्यदिच्छन्ति पावनी जननीं[3] यथा ॥२६॥
[4]नामास्याः प्रियदत्तेति गुह्यं देव्याः [5]सनातनम् ।
दानं वाप्यथवाऽऽदानं नामास्याः प्रथमं [6]प्रियम् ॥२७॥
य एतां विदुषे [7]दद्याद्दत्तयां पृथिवीपतिः ।
पृथिव्या-[8]मेतदिष्टं स [9]राज्याद् राज्यमितो व्रजेत् ॥२८॥
[10]पुनरेव [11]जनिं प्राप्य [12]राजैव स्यान्न संशयः ।
[13]तस्मात् प्राप्यैव वसुधां दद्याद्विप्राय पार्थिवः ॥२९॥
भूमिन्तु दत्त्वा साधुभ्यो विन्दते भूमिमुत्तमाम् ।
[14][प्रेत्य चेह] च धर्मात्मा स प्राप्नोति महद्यशः ॥३०॥
यस्य विप्रास्तु [15]शंसन्ति [16]साधोर्भूमिं सदैव हि ।
न तस्य शत्रवो राजन् प्रशासति[17] वसुन्धराम् ॥३१॥
ये तु सङ्कीर्ण-[18]कर्माणो [राजानो रौद्रकर्मणः][19] ।
[20]तेभ्यः पवित्रमाख्येयं भूमिदानमनुत्तमम् ॥३२॥३२॥
अल्पान्तरमिदं शश्वत् [21][पुराणा मेनिरे जनाः] ।
यो [22]यजेताश्वमेधेन दद्याद्वा [23]साधवे महीम् ॥३३॥
सुवर्णं रजतं वस्त्रं मणिमुक्तावसूनि च ।
सर्वमेतन्महाराज[24] ददाति वसुधां ददत् ॥३४॥

1 A कृता राज्ञा प्रतिगृह्णाति for the bracketed portion
2 I. O. नान्यदिच्छन्ति
3 I. O. जननीं
4 A नमास्या
5 I. O. सनातनः
6 I. O. प्रियं
7 A दद्यादत्तयं
8 I. O. ०येन दिष्टं
9 A राज्याद्
10 I. O. पुनरावसौ
11 Both I. O. and A जनं
12 I. O. राजैव
13 A यस्मात्
14 I. O. दत्वा चेह for the bracketed portion
15 A संशन्ति
16 A साधोभूमिं, I. O. साधोर्भूमि
17 A प्रशासन्ति
18 I. O. ०कर्मांणो
19 A राजानो रौद्रकर्मिणः for the bracketed portion
20 A तेभ्यो
21 A पुराणं मेधा जनता: for the bracketed portion
22 A जायताश्वमेधेन
23 A साधाधवे
24 I. O. ०महाप्राज्ञ

[1]तपो यज्ञः श्रुतं शीलमलोभः सत्यसन्धता[2] ।
गुरुदैवतपूजा च नातिक्रामन्ति भूमिदम् ॥३५॥
[3]भर्त्तुर्निःश्रेयसे [4]युक्तास्त्यक्तात्मानो [5]रणे हताः ।
ब्रह्मलोकस्थिताः सिद्धा नातिक्रामन्ति भूमिदम् ॥३६॥
यथा जनित्री क्षीरेण [6]स्वपुत्रं भरते सदा ।
[7]अनुगृह्णाति दातारमेवं [8]सर्वरसैर्मही ॥३७॥
मृत्युर्वै किङ्करो [9]दण्डस्तमो वह्निः सुदारुणः ।
घोराश्च वारुणाः पाशा नोपसर्पन्ति भूमिदम् ॥३८॥
पितॄंश्च [10]पितृलोकस्थान् देवलोके च देवताः ।
[11]सन्तर्पयति [12]शान्तात्मा यो ददाति वसुन्धराम् ॥३९॥

तथा :—

[13]शतमप्सरसश्चैव दिव्यमाल्यविभूषिताः ।
उपतिष्ठन्ति देवेन्द्र ब्रह्मलोके धराप्रदम्[14] ॥४०॥
नास्ति भूमिसमं दानं नास्ति भूमिसमो गुरुः ।
नास्ति सत्यसमो धर्मो नास्ति दानसमो विधिः ॥४१॥

## अथ देयभूमि-[15][परिमाणे फलपरिमाण]-परिभाषा ।

नन्दिपुराणे :—

[16]येनैकः पुरुषो [17]जीवेद् भूमिवित्तेन संयुतः ।
दत्त्वा तु[18] तावतीं भूमिं दशकल्पं वसेद्दिवि ॥४२॥
अनेन क्रमयोगेण यो दद्याद् यावतीं महीम् ।
तावत्कालं वसेत् [19]स्वर्गे भूमिदानप्रमाणतः ॥४३॥

1 I. O. ततो
2 A ०सन्धता
3 A भर्त्तुर्निःश्रेयसे, I. O. भर्त्तुर्न्नेश्रेयसे
4 I. O. युक्तास्युक्तात्मानो, A युक्ता आत्मान चै
5 A रणो
6 I. O. and A सुपुत्रं
7 I. O. धत्र गृह्णाति
8 A सर्व्वरसा मही
9 A दण्डः भाषा
10 I. O. पितृलोकस्था
11 Both I. O. and A सन्तर्पयन्ति
12 A शान्तार्थं
13 A omits शतम
14 A वरप्रदा
15 A परिमाणफलं । परिमाणं for the bracketed portion
16 I. O. यवैकः, A पवित्रः
17 Both I. O. and A जीवे
18 I. O. भू
19 A सर्गं, I. O. स्वर्गं

क्रमयोगेणेति तरुणपुरुष-[1]जीवनोचित भूम्युत्पत्तिवृद्धौ कल्प-[2]दशकमेण फलवृद्धिः। अपकर्षे तु यथासम्भवं भूमिदानफलापकर्ष इत्यर्थः। परिभाषा चेयमश्रुत-[3]कालविशेषनियमाव-[4][च्छेद-स्वर्गरूपफला] अश्रुतपरिमाणावच्छेदे-[5][न भूमिदानं [6]सम्बध्यत] इति बोद्धव्यम्।

## अथ[7] दानायोग्यभूमिः।

महाभारते :—

न चोषरां[8] न [9]निर्दग्धां महीं दद्यात् कथञ्चन।

न श्मशान-[10][मयीं दद्यान्न] च पापनिषेविताम् ॥१॥

## अथ दानम्।

तत्र मनुः :—

[ भूमिदः सर्वमाप्नोति [11]राज्यपुत्रधनादिकम् ][12] ॥१॥

अत्र यजमानोऽर्चिताय ब्राह्मणायार्चितां भूमिं दद्यात्। ॐ अद्यामुकसगोत्रायामुक-वेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यममुककामोऽहमेतां प्रियदत्तां भूमिं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा भूमिर्वै[13]-विष्णुदैवतेत्युक्त्वा यथाशाखं कामस्तुतिं पठेत। ततः ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामेतत् काञ्चनं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा भूमिं [14]प्रदक्षिणीकुर्यात्। अत्र कामनोत्-[15]कर्षे यथेच्छपरिमाणा गुणवती भूमिर्देया। स्वर्गफलकामनायान्तु स्वर्गप्राप्तिकामोऽहमियत्-पुरुषपोषणयोग्यामित्युक्तवाक्येऽन्तर्भावनीयम्।

याज्ञवल्क्यः (१।२१०) :—

[16]भूमिपश्वन्नवस्त्राम्भस्तिलसर्पिः-[17]प्रतिश्रयान्।

[18][नैवेशिकं स्वर्णधुर्य्यं] दत्त्वा स्वर्गे महीयते ॥२॥

1 I. O. ०जीविनोचित०
2 I. O. ०दशक०
3 I. O. कालविशेष twice
4 I. O. च्छेदनस्वर्गरूपफले for the bracketed portion
5 I. O. तु भूमिदाने समुचत for the bracketed portion
6 A सम्बन्धत
7 I. O. omits this
8 A चसेवां
9 A निदग्धां
10 A परिभ्राञ्चन for the bracketed portion
11 I. O. omits it
12 Manu (4. 230) reads the b. p. as भूमिदो भूमिमाप्नोति दीर्घमायुर्हिरण्यदः
13 A omits वै
14 A दक्षिणां कुर्यात्
15 A ०कर्षे
16 I. O. भूमीपाश्वन्नवस्त्राम्भस्तिलसर्पिं
17 A प्रतिश्रयान
18 I. O. नैवेशिकस्वर्णधुर्यान् and A नैवेशिकः स्वर्णरूप्य for the bracketed portion

अर्चिताय ब्राह्मणाय यथेच्छसंख्य-[1]पुरुषपोषणयोग्यामर्चितां[2] भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [3]सोत्कर्षस्वर्गप्राप्तिकामोऽहमेतामियत[4]-पुरुषपोषणयोग्यां प्रियदत्तां भूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

वृद्धवशिष्ठः :—

यत् किञ्चित् कुरुते पापं जन्मप्रभृति मानवः।
अपि गोचर्ममात्रेण भूमिदानेन शुध्यति ॥३॥
गवां शतं वृषश्चैको यत्र तिष्ठेद-[5]यन्त्रितः।
तद्धि गोचर्ममात्रन्तु प्राहुर्वेदविदो जनाः ॥४॥

तथा :—

दशहस्तेन वंशेन दश वंशान् समन्ततः।
पञ्च [6]वाप्यधिकं दद्यादेतद् गोचर्म [7]उच्यते ॥५॥

पञ्च [8]वाप्यधिकमित्येकस्मिन् पार्श्वे [9]पञ्चवंशाधिकं वा। अर्चिताय ब्राह्मणाय अर्चिता-मुक्तपरिमाण-[10]त्रयस्यान्यतमपरिमाणामिच्छया भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। आजन्मकृतपापक्षयकामोऽहमेतां गोचर्मपरिमाणां प्रियदत्तां भूमिं ददानि। स्वस्त्यादि-स्वीकारान्तं पूर्ववत्।

यमः :—

तथा दत्वा [11]क्षितिं विप्रे ब्रह्मलोके महीयते।

[12][विप्रे जन्मसंस्कारविद्यासम्पन्ने]। अर्चितायोक्तरूपाय ब्राह्मणाय यथेच्छसंख्य-[13][पुरुष-[14]पोषणयोग्यामर्चितां भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सोत्कर्षब्रह्मलोक-प्राप्तिकामोऽहमियत्]-पुरुषपोषणयोग्यां प्रियदत्तां भूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

---

1 A सुवर्णपुरुषो for पुरुष
2 A भूमिमर्चितां for अर्चितां
3 A सोत्कर्षं before सोत्कर्ष
4 I. O. omits एताम् and A omits इयत्
5 I. O. ॰मन्त्रितः
6 I. O. वाप्यधिकं
7 I. O. मुच्यते
8 I. O. वाप्यधिक॰
9 A पञ्चाधिकं
10 A omits त्रय
11 A क्षिति
12 A जन्मसंस्कारसम्पन्नां for the bracketed portion
13 I. O. omits the bracketed portion
14 A omits पोषण

[1]तथा :—

नगरञ्च तथा [2]दत्त्वा [3][राजा भवति] भूतले ॥६॥

अर्चिताय [4]ब्राह्मणायार्चितं नगरम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [5][भूतलराजत्व]-प्राप्तिकामोऽह-[6]मेतन्नगरं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

बृहस्पतिः :—

[7]फालकृष्टां महीं दत्त्वा [सबीजां शस्यशालिनीम् ][8]।

[9][यावन्ति शस्यबीजानि तावत् ] स्वर्गे महीयते ॥७॥

[10][सबीजामुप्तबीजां शस्य]-शालिनीं निष्पन्नशस्य-[11][युक्ताम्। अर्चिताय ब्राह्मणाय फालकृष्टामेकदेशोप्तबीजामेकदेशनिष्पन्न[12]-शस्ययुक्तामर्चितां भूमिम् ॐ अद्यादि तुभ्यमन्त]-मुक्त्वा दद्यात्। बृहस्पत्युक्त-फालकृष्टमहीदानफलप्राप्तिकामोऽहमेतां [13]फालकृष्टामुप्तबीजां शस्यशालिनीं प्रियदत्तां महीं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा :—

अपि गोचर्ममात्रेण [14]शस्ययुक्तेन मानवः।

धौतपापो विशुद्धात्मा स्वर्गलोके महीयते ॥८॥

दशहस्तेन [15]दण्डेन त्रिंशद्दण्डा[16]निवर्तनम्।

तान्येव दश गोचर्म ब्राह्मणेभ्यो ददाति यः ॥९॥

स धौतपापत्वादिपूर्वोक्तफलेन सम्बध्यत इति बोद्धव्यम्। उभयतो हस्तशतत्रयात्मकस्य निवर्तनस्य तान्येव [17]दशेतिक्रमेण एकपार्श्वेन [18]हस्तशतत्रयमपरेण च [19]हस्तसहस्रत्रयात्मकञ्च

1 A omits it

2 A दवत्वा

3 I. O. राजते चैव for the bracketed portion

4 A ब्राह्मणाय तं, I. O. ब्राह्मणाया-र्चिताय

5 A भूतलराज, I. O. मोत्कर्ष-स्व-र्लोक for the b. p.

6 A ०मेतं नगरं

7 I. O. अलङ्कृतां

8 I. O. सबीजसस्यशालिनी for the bracketed portion

9 I. O. यावत् सूर्यकृता लोकास्तावत् for the bracketed portion

10 I. O. सबीजमुप्तबीजस्य for the bracketed portion

11 A omits the bracketed portion

12 I. O. नि for निष्पन्न

13 I. O. फालकृष्ट०

14 I. O. सम्यग्दत्तेन

15 A दत्तेन

16 A त्रिंशद्दण्ड

17 A दशतिक्रमेण

18 A हस्तत्रयेण

19 A हस्तसहस्रत्रयामेकञ्च

गोचर्मपरिमाणमुन्नेयम् । अर्च्चिताय ब्राह्मणाय यथोक्तपरिमाणामर्च्चितां भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । बृहस्पत्युक्त-गोचर्मपरिमाण-भूमिदानफलप्राप्तिकामोऽहं गोचर्म-परिमितां प्रियदत्तां भूमिं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

[1]तथा :—

यस्तु दद्यान्महीं राजन् [2]ब्राह्मणायाहिताग्नये ।
स याति परमं स्थानं [3]गृह्णानश्च न संशयः ॥१०॥

अर्च्चितायाग्निहोत्रिणे ब्राह्मणायार्च्चितां भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । परमस्थानप्राप्तिकामोऽहं [4]गोचर्मपरिमितां प्रियदत्तां भूमिं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा :—

इक्षुभिः [5]सन्ततां भूमिं यवगोधूमशालिनीम् ।
[6]यो ददाति सुरश्रेष्ठ पुनरावर्तते न[7] सः ॥११॥

अर्च्चिताय ब्राह्मणाय [8][इक्षुसन्ततामेकदेशोप्त]-यवगोधूमशस्यामर्च्चितां[9] भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [10][अपुनरावृत्तिप्राप्तिकामोऽहमिक्षुसन्ततां यवगोधूम-शालिनीं प्रियदत्तां ] भूमिं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । [11][अत्र फलबाहुल्याद्बहु-भूमिदानम् ।

तथा :—

श्रोत्रियाय कुलीनाय विनीताय तपस्विने ।
गृहस्थाय दरिद्राय सर्वभूतहिताय च ॥१२॥
ईदृशाय शुभा शुद्धा दत्ता स्वल्पापि वामन ।
कुलानां तारयेद्वीर सप्त सप्त च सप्त च ॥१३॥

---

1 A omits it
2 Both I. O. and A ब्राह्मणाय ह्निताग्नये
3 A गृह्णाणश्च
4 I. O. omits it
5 A सन्ततं
6 I. O. again यो ददाति सुरश्रेष्ठ यवगोधूमशालिनीं just before this
7 A नरः for न सः
8 I. O. इक्षु सन्ततात्मिका and A इक्षुसन्ततामेकादेशोप्त for the bracketed portion
9 A ०शस्यार्च्चितां
10 A. अमुककामोऽहमेतां for the bracketed portion
11 A omits the bracketed portion

शुभा शुभशस्योत्पत्तियोग्या शुद्धा [1]न्यायोपात्ता । श्रोत्रियाय जन्मसंस्कार-विद्यासम्पन्नाय, कुलीनाय सत्कुलजाय, विनीताय [2]नम्राय, तपस्विने तपोनिष्ठाय, गृहस्थाय कुटुम्बिने, सर्वभूतहिताय करुणामयाय, दरिद्राय ब्राह्मणायोक्तरूपामर्चितां भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । एकविंशतिसंख्यक[3]-कुलतारणप्राप्तिकामोऽहं प्रियदत्तां भूमिं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

महाभारते :—

वसुन्धराञ्च यो दद्याद्द्विजाय विदुषात्मने ।
दातारं ह्यनुगच्छन्ति सर्वे कामाभिवाञ्छिताः ॥१४॥

अर्चिताय विद्यावते ब्राह्मणायार्चितां भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । अमुककामोऽहमेतां प्रियदत्तां भूमिं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।] अस्य दानस्य सार्वकामिकत्वात्[4] कामनोत्कर्षाद्द्वयोत्कर्षः ।

[5]तथा (अनु—६२।१७) :—

भूमिं तु दत्त्वा साधुभ्यो विन्दते [6]भूमिमुत्तमाम् ।
प्रेत्य चेह च धर्मात्मा स प्राप्नोति महद् यशः ॥१५॥

साधुभ्यः सच्चरित्रेभ्यः । अर्चितेभ्यो [7][यथाशक्ति बहुभ्यो] ब्राह्मणेभ्यो[8]-ऽर्चितां भूमिं दद्यात् । [9]ॐ अद्यामुकामुकसगोत्रेभ्योऽमुकामुकवेदामुकामुकशाखाध्यायिभ्योऽमुकामुक-[10]देवशर्मभ्यो युष्मभ्यं महाभारतोक्त-साधुसंप्रदानक-भूमिदानफलप्राप्तिकामोऽहमेतामियत्पुरुषपोषणयोग्यां प्रियदत्तां भूमिं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (अनु—६२।६१) :—

महीं स्फीतां ददद् राजन् सर्वकामगुणान्विताम् ।
राजाधिराजो भवति तद्धि दानमनुत्तमम् ॥१६॥

स्फीतां निष्पन्न-[11]शस्यशालिनीम् । सर्वकामगुणान्वितां[12] यावद्भूमिगुणसहिताम् । अर्चिताय

1 I. O. न्यायोपात्त
2 I. O. अम्राय
3 I. O. संख्यम
4 A ०कामिकत्वात्
5 A omits it
6 A शान्ति for भूमि
7 A omits the bracketed portion
8 A बहुभ्यो after this
9 A omits it
10 A omits देव
11 I. O. omits शस्य
12 A ०ममन्विता

ब्राह्मणायार्चिता-[1]मुक्तरूपां भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। राजाधिराजत्व[2]-प्राप्तिकामोऽहमेतां प्रियदत्तां [3]महीं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (अनु—६२।६७) :—

पुण्यां मृदुरसां भूमिं [4]यो ददाति [5]पुरन्दर।
[6][न तस्य लोकाः] क्षीयन्ते भूमिदानगुणार्जिताः ॥१७॥

पुण्यां गङ्गातीरादिपुण्यदेश-[7]सम्भवां मृदुरसाम् [8]अनूषराम्। अर्चिताय ब्राह्मणाय यथोक्तरूपामर्चितां भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। अक्षयलोकप्राप्तिकामोऽहमेतां प्रियदत्तां भूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत।

तथा (अनु—६६।२७ख-२८ख) :—

शीतवातातपसहां गृहभूमिं सुसंस्कृताम्[9]।
प्रदाय [10]सुरलोकस्थः पुण्यान्ते न विचाल्यते[11]।
मुदितो वसति स्वर्गे शक्रेण सह पार्थिव ॥१८॥

गृहभूमिं गृहावच्छिन्नां भूमिम्। प्रथमं गृहं [12]सुसमृद्धं सुदृढं निर्माय [13][तन्मध्यभूमिं सूपलिप्तां] मनोरमाम् अर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [14][महाभारतोक्तगृहभूमिदानफलप्राप्तिकामोऽहमेतां प्रियदत्तां गृहभूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (Cf. अनु—६६।३१ख) :—

क्षेत्रभूमिं ददद्विप्रे पुत्रं श्रियमवाप्नुते ॥१९॥

क्षेत्रभूमिं धान्याद्युत्पत्तिभूमिम्। अर्चिताय ब्राह्मणायार्चितां क्षेत्रभूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्।] पुत्रसहितश्रीप्राप्तिकामोऽहमेतां प्रियदत्तां [15]क्षेत्रभूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्व्ववत।

---

1 I. O. यथोक्त for उक्त
2 A omits त्व
3 I. O. भूमिं
4 A या
5 A च पर्व्वणि
6 A तस्य लोका न for the bracketed portion
7 I. O. ०सम्बन्धिनीं
8 A मनुषरां, I. O. मनुषरां
9 A' सुसंस्कृतां
10 I. O. सुरलोकस्तु, A सुरलोकस्थ:
11 I. O. विचार्यते
12 I. O. सुगन्धि
13 I. O. reads the bracketed portion as तन्मध्यभूमिं उपलिप्तां and A as तन्मध्यभूमिमुपलिप्तां
14 A omits the bracketed portion
15 A गृहभूमिं, I. O. भूमिं

तथा (अनु—२३।१००) :—

निवेशनानां क्षेत्राणां वसतीनाञ्च[1] भारत ।

दातारः प्रार्थितानाञ्च[2] पुरुषाः स्वर्गगामिनः ॥२०॥

निवेशनानां वास्तुभुवां[3] क्षेत्राणां शस्योत्पत्तिभुवाम्[4] । देयबहुत्वं दातृबहुत्वापेक्षम् । अर्च्चिताय ब्राह्मणायार्च्चितां वास्तुभूमिम् ॐ अद्यादि तुभ्यमहं सम्प्रददे इत्युक्त्वा दद्यात् । स्वर्गप्राप्तिकामोऽहमेतां प्रियदत्तां निवेशनभूमिं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्व्ववत् । क्षेत्रदाने[5]त्वेतामियत्पुरुषपोषणयोग्यां प्रियदत्तां [6]क्षेत्रभूमिमिति [7]दानवाक्ये विशेषः ।

वराहपुराणे (२०७।२६) यम-[8]पुरकथनानुवृत्तौ :—

तिलान् गाश्च हिरण्यञ्च पृथिवीञ्चापि शाश्वतीम् ।

ब्राह्मणेभ्यः प्रयच्छन्ति [9][न गच्छन्ति] न संशयः ॥२१॥

[10]शाश्वतीमनिरोधभोगाम् । ब्राह्मणेभ्य इति[11] बहुवचनं दातृबहु[12]-त्वापेक्षया । अर्च्चिताय ब्राह्मणायार्च्चितां भूमिं ॐ अद्यादि तुभ्यमहं सम्प्रददे इत्युक्त्वा दद्यात । यमपुरा[13]-प्राप्तिकामोऽहमेतां प्रियदत्तां [14]पृथिवीं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्व्ववत ।

तथा (२०५।३०-३१ क) [15]चित्रगुप्तवाक्ये :—

क्षितिप्रदो द्विजातिभ्यो ह्ययं [16][याति[17] त्रि]-विष्टपम् ।

तत्रैव[18][तिष्ठते धीरो] ब्रह्मलोके [19]सहानुगः ।

विविधैः कामभोगैश्च[20] सेव्यमानो नरोत्तमः ॥२२॥

यथेच्छसंख्यान् [21]ब्राह्मणानभ्यर्च्य तेभ्यो यथेच्छं बहु[22]-परिमाणामर्च्चितां भूमिम् ॐ[23]

---

1 I. O. वसतानाञ्च
2 A प्रथितानाञ्च
3 A वास्तुहृवां
4 I. O. सत्स्यो० for शस्यो०
5 A क्षेत्रदान०
6 A omits क्षेत्र
7 A वाक्यविशेषः
8 I. O. पुरुष for पुर
9 A स्वर्गं यान्ति for the bracketed portion
10 I. O. शाश्वतीं निर्विरोधभोगां
11 A omits it
12 A omits बहु
13 Both I. O. and A यमपुर०
14 I. O. भूमिं
15 I. O. विष्णुगुप्तवाक्यं
16 I. O. यावन्नि for the bracketed portion
17 Varāha P. यातु
18 A तिष्ठतां वीर and Varāha P. तिष्ठताद्वीर for the bracketed portion
19 I. O. सहानुगः
20 I. O. and Varāha P. ०श्च
21 I. O. अभ्यर्च्य only
22 A omits बहु
23 A omits ॐ

अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विविधकामभोगान्वित-[1]सहानुगब्रह्मलोकवासप्राप्ति-कामोऽहमेतां प्रियदत्तां भूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्व्ववत्।

स्कन्दपुराणे :—

यस्तु क्षेत्रं प्रयच्छेत निष्पन्नफलवन्नरः।
स [2]तत्क्षेत्रं पुमान् [3]भुक्त्वा प्राजापत्यं समश्नुते ॥२३॥

अर्च्चिताय ब्राह्मणाय [4]पक्वशस्यशालिनीं क्षेत्रभूमिमर्च्चिताम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। स्कन्दपुराणोक्त-क्षेत्रभूमिदानफलप्राप्तिकामोऽहमेतामियत्पुरुषपोषणयोग्यां निष्पन्न-फलवतीं प्रियदत्तां क्षेत्रभूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्व्ववत्।

तथा :—

यस्तु भूमिं प्रयच्छेत ब्राह्मणाय महात्मने।
सर्वलोकेषु [5][स सुखी] विमानेन सुवर्च्चसा ॥२४॥

महात्मने अत्यन्तशान्तायेत्यर्थः।

[6]बहून्यब्दसहस्राणि चरते कामरूपवान्।
यदि मानुष्यमायाति नरः [7]कालविपर्ययात्।
तत्र कामदुघा तस्य मही भवति सर्वतः ॥२५॥

अर्च्चितायोक्तरूपाय [8]ब्राह्मणाय यथेच्छ-[9]परिमाणामर्च्चितां भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। स्कन्दपुराणोक्त-[10]महात्म-ब्राह्मणसम्प्रदानक—भूमिदानफलप्राप्ति-कामोऽहमेतामियत्पुरुषपोषणयोग्यां प्रियदत्तां भूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्व्ववत्।

शिवपुराणे महेश्वर-[11]पुरकथनानुवृत्तौ :—

गोसहस्रप्रदातारो भूमिदातार एव च।
ये च [12]स्वर्णप्रदातारस्तथा सर्वप्रियंवदाः ॥२६॥

---

1 A महानुग॰, I. O. महानुगानुव-चित्रकाम
2 A तु for तत्
3 A भूत्वा, I. O. भुक्त्वा
4 I. O. पक्वशस्यशालिनी, A बहुशस्य-शालिनीं
5 A स्व for the bracketed portion
6 A बहुब्द॰
7 I. O. काम॰
8 I. O. ब्रह्माय
9 I. O. ॰परिमाण॰
10 A omits महात्म
11 I. O. omits पुर
12 I. O. स्वर्गप्रदातारस्तथा, A सुवर्ण-दातारः तथा

ते तत्र गत्वा हृष्टाश्च निवसन्ति यथासुखम् ।
कल्पायुतसहस्राणां सहस्राणि चतुर्दश ॥२७॥
विचरित्वा पुरवरं पुनः प्राप्य महीतलम्[1] ।
जायन्ते श्रेष्ठवर्णेषु सुखैश्च परमैर्युताः ॥२८॥

अर्चिताय ब्राह्मणायार्चितां भूमिम् [2]ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । शिवपुराणोक्त-भूमिदानफलप्राप्तिकामोऽहमेतां प्रियदत्तां भूमिं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्व्ववत् । अत्र फलबाहुल्याद्भूमिरपि बहूत्पत्ति-[3]र्देया ।

[4]कूर्मपुराणे (२२६।१३) ) :—

इक्षुभिः सन्ततां भूमिं [5]यवगोधूमशालिनीम् ।
ददाति वेदविदुषे यः स भूयो न जायते ॥२६॥

अर्च्चिताय [6]वेदविदुषे ब्राह्मणायोक्तरूपामर्च्चितां भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । अपुनर्जन्मकामोऽह-[7]मेतामिक्षुसन्ततां [8]यवगोधूमशालिनीं प्रियदत्तां भूमिं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्व्ववत् ।

नरसिंहपुराणे :—

भूमिदानेन शुद्धेन लभते शान्तिकं [9]फलम् ॥३०॥

शुद्धेन [10]न्यायार्जितेन शान्तिकं दृष्ट-[11]दिव्यान्तरीक्षभौमोत्पातप्रशमनम् । अतो-[12]ऽदृष्टोत्पातदोषप्रशमनार्थमपि भूमिर्देया । अर्च्चिताय ब्राह्मणाय [13]यथेष्ट-[14]परिमाणामर्च्चितां भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [15]दृष्टार्थकोत्पातदोषप्रशमनकामोऽहमेतां प्रियदत्तां भूमिं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्व्ववत् ।

आदित्यपुराणे :—

यस्तु गोचर्ममात्रन्तु प्रयच्छति वसुन्धराम् ।
विमुक्तः सर्व्वपापेभ्यो विष्णुलोकं स गच्छति ॥३१॥

---

1 I. O. महीतले
2 A reads ददानि । and omits ॐ
3 A ०र्व्वया
4 A omits it
5 A यथा for यव
6 A वेदविदे ।
7 I. O. ०मेतामिक्षुसंयुतां, A ०मेदा-मिक्षुसन्ततायं
8 A यव for यव
9 A परं
10 A न्यायार्जितदानेन
11 I. O. ०दीव्या०, A ०दैवा०
12 Both I. O. and A omit the avagraha
13 I. O. यथेच्छ०
14 A ०परिमाणभूमिं
15 A दृष्टमहोत्पात०

गवां शतं वृषश्चैको यत्र तिष्ठत्ययन्त्रितः ।
[1][तां वै गोचर्ममात्रन्तु] मनुराह प्रजापतिः ॥३२॥

अर्चिताय ब्राह्मणाय यथोक्त-[लक्षणगोचर्म][2]-परिमितां भूमिम् ॐ अद्यादि तुभ्यमन्त मुक्त्वा दद्यात् । सर्वपाप-[3][विमुक्तिपूर्वक]-विष्णुलोकप्राप्तिकामोऽहमेतां [4]गोचर्मपरिमित प्रियदत्तां भूमिं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । अत्र फलबाहुल्याद[5]-त्यन्तोत्कृष्ट-भूमिदानम् ।

तथा :—

रत्नोपकीर्णां वसुधां यो ददाति द्विजातिषु ।
स [6][मुक्तः सर्वकलुषै] रुद्रलोके महीयते ॥३३॥

रत्नोपकीर्णां [7]विप्रकीर्णमुक्तादिरत्नाम् । अर्चितेभ्यो यथेच्छसंख्यब्राह्मणेभ्योऽर्चितां विप्रकीर्ण-[8]मुक्तादिरत्नां भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । सर्वपापक्षयपूर्वकसोत्कर्ष-रुद्रलोकप्राप्तिकामोऽहमेतां रत्नोपकीर्णां प्रियदत्तां भूमिं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा :—

[9][पक्वान् [10]ददति केदारान् [11]सफलांश्चैव पादपान् । ]
षष्टिकोटिसहस्राणि अर्बुदानाञ्च वै [12]त्रयम् ।
क्रीडन्ति [13]श्वेतभुवने एतदुक्तं [14]द्विजोत्तमाः ॥३४॥

[15][पक्वान् केदारान् पक्वशस्यशालीनि[16] क्षेत्राणि] अर्चिताय ब्राह्मणायो-[क्तरूपाः केदार-भूमीरर्चिताः][17] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । आदित्यपुराणोक्त-पक्वकेदारदान[18]-फल-प्राप्तिकामोऽह-[19][मेतान् पक्व]-केदारान् ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

---

1 A तत्रोषर्ममात्रं वै for the bracketed portion
2 A गोचर्मलक्षण for the bracketed portion
3 I. O. क्षयपूर्वकसोत्कर्ष for the bracketed portion
4 I. O. omits it
5 A omits द
6 A मुक्तसर्वपापाद्ध for the bracketed portion
7 A विकीर्ण०
8 A ०मुक्तादिरत्नां
9 A omits the bracketed portion
10 I. O. ददाति
11 I. O. सफलांश्चैव
12 I. O. द्वयं
13 I. O. श्वेतपुरे
14 I. O. द्विजोत्तम
15 A अत्रापि only for the bracketed portion
16 I. O. ०शालिनि for ०शालीनि
17 A क्तरूपान केदारभूमिमर्चितां for the bracketed portion
18 A दान twice
19 A मेतां पक्वद् for the bracketed portion

नन्दिपुराणे :—

दत्त्वा भूमिन्तु पुरुषः [1]साश्रयां शस्यदायिनीम् ।
[2]सुसेवां रम्यसंस्थानां [3]फलवृक्षमनोरमाम् ॥३५॥

साश्रयां विश्रामोचितस्थानसहितां सुसेवां सुगमां[4] [5]रम्यसंस्थानां ××फलवृक्षमनोरमां फलवदाम्रादिवृक्षशोभिताम् ।

[6]अनूषरामनाबाधां पात्रे बहुगुणान्विते ।
अप्येकपुरुषाधारां दत्त्वा भूमिं [7]महामुने ॥३६॥

अनाबाधामाक्षेपरहिताम् एकपुरुषाधारां [8]धृञ् धारणे इत्यस्य धातोरनेकार्थत्वात् धारणं पोषणम् अत [9]एकस्य पुरुषस्य [10]पोषिकामित्यर्थः ।

दशकल्पानि वसति स्वर्गे विगतपातकः ॥३७॥

अर्चिताय विद्यातपः [11]सदाचारादिबहुगुणशालिने ब्राह्मणाय यथोक्तरूपां यथेच्छपरिमाणामर्चितां[12] भूमिम् ॐ अद्यादि तुभ्यमहं सम्प्रददे इत्युक्त्वा दद्यात् । पापक्षयपूर्वककल्पदशकावच्छिन्न[13]-स्वर्गप्राप्तिकामोऽहमेतां फलवृक्षमनोरमां प्रियदत्तां भूमिं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा :—

इक्षुभिः सन्ततां भूमिं यवगोधूम-[14]शालिनीम् ।
गोष्ठवाहनसंपूर्णां [15]बहुवीर्य्यसमन्विताम् ॥३८॥

गोष्ठं गोप्रचारभूमिः । वाहनसंपूर्णां [16][ गो-[17]शकटाश्वयानानामन्यतमयथेच्छसंख्य-वाहनसहिताम् ।

निधिगर्भां दददुभूमिं सर्वरत्नपरिच्छदाम् । ]

---

1 I. O. साश्रया
2 A स्वसेवा
3 I. O. फलवृक्षमनोरमां, A वृक्षमनो-रमां
4 A सुगमां
5 I. O. वन्यसंस्थानां
6 A अनुपारा॰
7 I. O. महात्मन:
8 A धृतधारण
9 A एकपुरुषस्य
10 A पोषकमित्यर्थ:
11 I. O. ॰सदाचारादिबहुगुण॰
12 A ॰परिमाणार्चितां
13 A ॰कावावच्छिन्न॰
14 A ॰संरतां
15 I. O. बाहुवीर्यसमर्जितां
16 I. O. omits the bracketed portion
17 A शकटाश्वादीनामा॰

[1][सर्वरत्नपरिच्छन्नां विकीर्णप्रसिद्धरत्नाम्। ]

[2]लोके महीयते सद्यो यो ददाति वसुन्धराम् ॥३६॥

अर्चिताय ब्राह्मणायोक्तरूपामर्चितां भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। नन्दि-पुराणोक्त-निधिगर्भ-[3]भूमिदानफलप्राप्तिकामोऽहमेताम् इक्षुसन्ततां[4] [5]यवगोधूमशालिनीं गोष्ठवाहनसंयुतां [6]निधिगर्भां सर्वरत्नपरिच्छदां प्रियदत्तां भूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

विष्णुधर्मे :—

हलकृष्टां महीं दत्त्वा सोदकां सुफलान्विताम्।

सोदकश्चापि [7]शवलं प्राप्नोति परमं पदम् ॥४०॥

[8]सोदकां जलाशयसहितां [9]सुफलान्वितां शोभनफलवद्वृक्ष[10]-सहिताम्। अर्चिताय ब्राह्मणाय उक्तरूपामर्चितां भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। परमपदप्राप्तिकामोऽहमेतां सुफलान्वितां सोदकां प्रियदत्तां भूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा :—

[11]आदित्या इव दीप्यन्ते तेजसा दिवि मानवाः।

ये प्रयच्छन्ति वसुधां [12]ब्राह्मणायाहिताग्नये ॥४१॥

अर्चिताय ब्राह्मणायाग्निहोत्रिणे [13]यथेष्टसंख्यपुरुषपोषणयोग्यामर्चितां भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। आदित्यसमतेजस्वित्वसहितस्वर्गप्राप्तिकामोऽहमेतामियत्[14]-पुरुषपोषण-योग्यां प्रियदत्तां भूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा :—

इक्षुभिः [15]सन्ततां भूमिं यवगोधूम-[16]शाद्वलाम्।

ये प्रयच्छन्ति विप्रेभ्यो नोपसर्पन्ति ते यमम् ॥४२॥

1 A omits the bracketed portion
2 I. O. विधूमकलुषं सर्व्वं विरजाः सम्मतः सतां before this
3 I. O. भू for भूमि
4 I. O. ०सन्तताय
5 A भूमिं यवगोधूमसंकुलां
6 I. O. निधिगर्भं
7 I. O सरलं
8 I. O. सोदकं
9 I. O. सुफलां
10 A वृक्ष for वद्वृक्ष
11 A आदित्य
12 Both I. O. and A ब्राह्मणाय-हिताग्नये
13 I. O. यथेष्ट०
14 I. O. omits एताम्, A omits इयत्
15 A सम्सातं
16 A ०शाद्वलां

दातृबहुत्वापेक्षया सम्प्रदानबहुत्वम्। अर्चिताय ब्राह्मणायार्चितां यवगोधूम-[1]शाद्वलां भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। यमानुपसर्पणकामोऽहमेतामिक्षुसन्ततां यवगोधूमशाद्वला-[2]मियतीं प्रियदत्तां भूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा :—

सुवर्णदानं गोदानं [3]पृथिवीदानमेव च।
एतत् प्रयच्छमानो हि सर्वपापैः प्रमुच्यते ॥४३॥

अर्चिताय ब्राह्मणाय यथेच्छपरिमाणामर्चितां[4] भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सर्वपापक्षयकामोऽहमियतीं प्रियदत्तां पृथिवीं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

[5]विष्णुधर्मोत्तरे :—

गृहभूमिं नरो दत्त्वा वसूनां [6]लोकमश्नुते ॥१॥

अर्चिताय [7][ब्राह्मणायार्चितां गृहकरणयोग्यां] भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। वसुलोकप्राप्तिकामोऽह-[8]मेतां प्रियदत्तां गृहभूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३०५।६ख) :—

शाकभूमिं नरो दत्त्वा लोक-[9]माङ्गिरसं लभेत ॥२॥

अर्चिताय ब्राह्मणाय [10][शाकोत्पत्ति-[11]योग्यामर्चितां भूमिम्] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [12]आङ्गिरसलोकप्राप्तिकामोऽह-[13]मेतां प्रियदत्तां शाकभूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३०५।७क) :—

आरामभूमिं दत्त्वा तु मारुतं [14]लोकमश्नुते।

1 A °सहितां
2 I. O. °मेतां
3 A वसुधादानमेव
4 A रिमाणमर्चितां
5 A तथा before this
6 I. O. लोकमाप्नुयात्
7 A ब्राह्मणायार्चितां यवगोधूमसहितां for the bracketed portion
8 A omits एतां
9 A °माङ्गिरसं
10 A omits the bracketed portion
11 I. O. °मर्चितां
12 I. O. अङ्गिरस°
13 I. O. omits एतां
14 I. O. लोकमाप्नुयात्

आरामो ग्रामसमीपस्थ-[1] [महावीर्य्यतरुवनम् ]। अर्च्चिताय ब्राह्मणाय आरामारोपण-योग्यां ग्रामसमीपभूमिमर्च्चिताम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। मारुतलोकप्राप्ति-कामोऽहं प्रियदत्तामारामभूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३०५।७ख) :—

जलाशयार्थं यो दद्याद्वारुणं [2]लोकमश्नुते ॥३॥

[3][भूमिमिति विशेषः]। अर्च्चिताय ब्राह्मणाय जलाशयकरणयोग्यां भूमिमर्च्चिताम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। वारुणलोकप्राप्तिकामोऽहं जलाशयार्थं प्रियदत्तां भूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३०५।८) :—

दत्त्वा [4]च देववेश्मार्थं तस्य देवस्य सोऽश्नुते।
यस्तत्र विद्यते नित्यं लोकं द्विजवरा ध्रुवम् ॥४॥

भूमिमिति शेषः[5]। द्विजवरा इति सम्बोधनम्। यो देवस्तत्र कृते वेश्मनि स्थास्यति, तस्य देवस्य लोकं [6]नित्यम-[7][नवच्छिन्नकालं तद्वेश्मार्थं भूमेर्दाता प्राप्नोतीति सम्बन्धः। अर्च्चिताय देववेश्मकरणोद्यताय भूम्यर्थिने ब्राह्मणायार्च्चितां भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। अमुक ]-लोकप्राप्तिकामोऽहममुक[8]-देववेश्मार्थं प्रियदत्तां भूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

[9][तथा (३।३०५।९क) :—

उद्यानभूमिं दत्त्वा तु गन्धर्वैः सह मोदते ॥५॥

उद्यानं नानाजातीयतरुसमूहः। अर्च्चिताय ब्राह्मणायार्च्चिता-[10]मुद्यानारोपणोचितां भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सोत्कर्षगन्धर्वलोकप्राप्तिकामोऽहं प्रियदत्तामुद्यानभूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। ]

---

1 A महावीर्यतरुवनं and I. O. सजीवतरुवनं for the bracketed portion
2 I. O. and V. D. लोकमाप्नुयात्
3 A भूमिरिति विशेषः for the bracketed portion
4 A तदैव॰
5 A विशेषः
6 A नत्यम
7 A omits the bracketed portion
8 A omits अमुक
9 A reads the bracketed portion just before तथा :—दत्त्वा कनकभूमिन्तु etc., a little below
10 I. O. omits उद्यानारोपणोचिता

तथा (३।३०५।९ख) :—

रत्नाकरभुवं [1]दत्त्वा शक्रलोके महीयते ॥६॥

अर्चिताय ब्राह्मणायार्चितां[2] रत्नोत्पत्तियोग्यां[3] भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सोत्कर्षशक्रलोकप्राप्तिकामोऽहं प्रियदत्तां रत्नाकरभुवं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३०५।१०क) :—

दत्त्वा कनकभूमिन्तु वह्निलोके महीयते ॥७॥

अर्चिताय ब्राह्मणायार्चितां [4]सुवर्णोत्पत्तियोग्यां भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सोत्कर्षवह्निलोकप्राप्तिकामोऽहं प्रियदत्तां [5]कनकभूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३०५।१०ख-११क) :—

अन्येषामाकरभुवं[6] लोहानां यः प्रयच्छति।
तस्यापि गतिरुद्दिष्टा[7]लोके हौताशने द्विजाः[8] ॥८॥

द्विजा इति सम्बोधनम्। अन्येषां रजतादीनामष्टानां[9] लोहानाम्। अर्चिताय ब्राह्मणायार्चितां[10] रजतोत्पत्तिभूमिम्[11] ॐ[12] अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। हौताशनलोकप्राप्तिकामोऽहं प्रियदत्तां रजताकरभुवं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। [13]एवमपि च ताम्रादिलोह-[14]षट्काकरभुवामिच्छया[15]दाने दानवाक्ये अमुक-[16]लोहाकरभुवमिति [17]विशेषः। उत्कृष्टोत्कृष्टलोहाकरभूमिदाने[18]वह्निलोक-[19][वासकालभूयस्त्वमुन्नेयम्]।

तथा (३।३०५।११ख) :—

[20]धात्वाकरभुवं दत्त्वा नाकपृष्ठे[21] महीयते ॥९॥

---

1 A दद्यात्
2 A omits अर्चितां
3 I. O. रत्नोत्पत्ति, A रत्नोपपत्तिं
4 A सुवर्णोत्पत्तियोग्यं, I.O. सुवर्णोत्-पत्ति
5 I. O. सुवर्णोत्पत्तिभूमिं
6 A ०माकारभुवं, I. O. ०माकरभुवां
7 A गतिरुद्दिष्ट
8 A omits it
9 I. O. omits अष्टानां
10 A omits अर्चितां
11 A जरतोत्पत्तिभूमिं
12 A omits it
13 A एवपर
14 A omits षट्का
15 A दान
16 A लोहकर०
17 A शेषः
18 A दान
19 I. O. वासे कालमुन्नेयं for the bracketed portion
20 V. D. धात्वाकर०
21 V. D. ०लोके

धातवो [1]गैरिकादयः। अर्चिताय ब्राह्मणायार्चितां [2]धातूत्पत्तिभूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सोत्कर्षनाकलोकप्राप्तिकामोऽहमेतां[3] प्रियदत्तां [4]धात्वाकरभुवं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३०५।१२) :—

[5]अञ्जनाकरभूमिन्तु यः प्रयच्छति वै द्विजाः।

पितृभिर्यमलोकस्थः [6][पूज्यते स] नरोत्तमः ॥१०॥

द्विजा इति सम्बोधनम्। अञ्जनं [7]रसाञ्जनम्। अर्चिताय ब्राह्मणायार्चितामञ्जनोत्पत्तिभूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोत्तरोक्ताञ्जनाकरभूमिदान[8]फलप्राप्तिकामोऽहं प्रियदत्ता-[9]मञ्जनाकरभूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३०५।१३क) :—

लवणाकरभूमिञ्च सोमलोके महीयते ॥११॥

यः प्रयच्छतीति सम्बन्धः। अर्चिताय ब्राह्मणायार्चितां लवणोत्पत्तिभूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सोत्कर्षसोमलोकप्राप्तिकामोऽहं प्रियदत्तां लवणाकरभूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३०५।१३ख-१४क) :—

[10]शिम्बिशस्यप्ररोहान्तु भुवं दत्त्वा नरोत्तमः।

साध्यानां लोकमाप्नोति नात्र कार्य्या विचारणा ॥१२॥

अर्चिताय ब्राह्मणायार्चितां शिम्बिशस्योत्पत्तिभूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। साध्यलोकप्राप्तिकामोऽहं प्रिदयत्तां शिम्बिशस्यप्ररोहभुवं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३०५।१४ख) :—

[11]इन्धनाकरभूमिन्तु [12][वह्निलोके महीयते ॥१३॥]

दत्त्वेति सम्बन्धः। अर्चिताय ब्राह्मणायार्चिताम् इन्धनोत्पत्तिभूमिम् [13]ॐ अद्यादि

---

1 I. O. गौरिकादय:
2 A धातूत्पत्तिं भूमिं, I. O. धातूत्--पत्तिभुवं
3 I. O. omits एतां
4 A धात्वावेवभुवं
5 I. O. अञ्जनाकारभूमिन्तु
6 I. O. and V. D. पूज्यतेऽसौ for the bracketed portion
7 I. O. रसाञ्जनादि
8 A omits फल
9 A omits अञ्जनाकर
10 A शिम्बिप्ररोहान्त
11 A ऐन्धनाकरभूमिन्तु
12 V. D. omits the b. p.
13 A omits it

तुभ्यमन्तमुक्त्वा दद्यात्। सोत्कर्षवह्नि[1]-लोकप्राप्तिकामोऽह-[2]मेतां प्रियदत्तामिन्धनाकरभूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३०५।१४ख) :—

[3]औषधाकरभूमिन्तु [4]नासत्यैः [5][सह मोदते] ॥१४॥

दत्त्वेति सम्बन्धः। अर्चिताय ब्राह्मणायार्चितामाषधोत्पत्तिभूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सोत्कर्ष-[6]नासत्यलोकप्राप्तिकामोऽहं प्रियदत्तामौषधाकरभूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३०५।१५क) :—

[7]शूकधान्यभुवं दत्त्वा रुद्रलोके महीयते ॥१५॥

अर्चिताय ब्राह्मणायार्चितां यवादि-[8]शूकधान्योत्पत्तिभूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सोत्कर्षरुद्रलोकप्राप्तिकामोऽहं प्रियदत्तां [9]शूकधान्यभुवं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३०५।१६ख-१७क) :—

इक्षुभूमिं नरो दत्त्वा द्राक्षाभूमिमथापि वा।
सोमलोकमवाप्नोति सर्वकामांश्च विन्दति ॥१६॥

अर्चिताय ब्राह्मणायार्चितामिक्षूत्पत्तिभूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोत्तरोक्तेक्षुभूमिदानफलप्राप्तिकामोऽहं प्रियदत्तामिक्षुभूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत। द्राक्षाभूमिदान इक्षुपदस्थाने द्राक्षापदनिवेशो वाक्ये[10] विशेषः।

तथा (३।३०५।१५ख-१६क) :—

केदारभूमिं धर्मज्ञ [11][धर्मतो यः प्रयच्छति]।
[12][स महत्पुण्यमाप्नोति ब्रह्मलोकञ्च गच्छति ॥१७॥]

धर्मज्ञ इति सम्बोधनम्। केदारभूमिं क्षेत्रं धर्मतो [13]यथाविधीत्यर्थः। अर्चिताय

---

1 A ०ब्रह्म
2 I. O. omits एतां
3 I. O. भेषजाकरभूमिन्तु, V. D. omits it
4 A सापरैः
5 V.D. सहितस्तथा for the b. p.
6 A नाक for नासत्य
7 A शुक०
8 A ०शुक०, I. O. ०शूकर०
9 A शुक०
10 A वाक्य०
11 I. O. and V. D. यः प्रयच्छति धर्मतः for the bracketed portion
12 A omits the bracketed portion
13 A यथाविधिना ददातीत्यर्थः

ब्राह्मणायार्च्चितां केदारभूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महापुण्यप्राप्ति-[1][पूर्वक-ब्रह्मलोकगमन]-कामोऽहं प्रियदत्तां केदारभूमिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

[2][तथा (३।३०५।३२ख-३३क) :—

[3]पक्वशस्यां वसुमतीं योऽलङ्कृत्य प्रयच्छति।

कामगेन विमानेन ब्रह्मलोकं स गच्छति ॥१८॥

अलङ्कृत्य वस्त्रादिना। भूमि-[4]मुक्तरूपामर्च्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। कामगविमानारोहणपूर्वक-ब्रह्मलोकगमनकामोऽहमेतां [5]पक्वशस्यामलङ्कृतां प्रियदत्तां वसुमतीं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। ]

तथा (३।३०५।३०ख-३१क) :—

भूमिं क्रीत्वा[6] तु [7][यो दद्याद् ब्राह्मणाय मनस्विने ]।

स्वर्गलोकमवाप्नोति पुरुषोऽतिसुदारुणः ॥१९॥

अतिसुदारुण इत्यत्रापिशब्दोऽध्याहार्य्यः। तेन सुदारुणोऽपि [8]स्वर्गं प्राप्नोतीत्यर्थः। अर्च्चिताय मनस्विने ब्राह्मणाय [9]संक्रयेणोत्पादितामर्च्चितां भूमिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। स्वर्गलोक[10]-प्राप्तिकामोऽहमियत्पुरुषपोषणयोग्यां प्रियदत्तां भूमिं ददानि। स्वस्त्यादि-स्वीकारान्तं पूर्ववत्।

इति महाराजाधिराज-निःशङ्क-[11]शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे भूमिदानावर्तः।

---

1 A omits the bracketed portion

2 I. O. omits the bracketed portion

3 Corrected from V. D. A पङ्कशस्या

4 A उक्तरूपां after ब्राह्मणाय, just below.

5 A पक्व०

6 A ज्ञात्वा

7 I. O. and V. D. यः कुर्य्याद्देव-ब्राह्मणसात्नरः for the bracketed portion

8 I. O. स्वर्ग

9 A शक्रयोगो० for संक्रयेणो०

10 A omits लोक

11 A सङ्कर

# अथ प्रजापतिदैवतासनदानावर्त्तः । (१२)

स्कन्दपुराणे :—

आसनं यः प्रयच्छेच्च[1] सपीठं ब्राह्मणाय वै ।

स [2]राज्यस्थानमाप्नोति [3][स्वर्गमाप्नोति विज्वरः] ॥१॥

[4]राज्यस्थानं [5]पृथिवीम् आसनं [6]खट्वादि सपीठं [7]पादपीठसहितम् । अत्र यजमानोऽर्च्चिताय ब्राह्मणाय सपीठमासनमर्च्चितं[8] दद्यात् । ॐ अद्यामुकसगोत्रायामुक-[9]वेदामुकशाखाध्यायिनेऽमुक-[10]देवशर्म्मणे तुभ्यं स्कन्दपुराणोक्तासनदानफलप्राप्तिकामोऽहमेतत् सपीठमासनमर्चितं [11]ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा आसनमिदं प्रजापतिदैवतमित्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । [12]तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा आसनं स्पृशेत् ।

आदित्यपुराणे :—

[13]सुसन्धि चित्राभरणोपशोभितं यस्त्वासनं वेदविदे प्रदद्यात् ।

ग्रामाधिपत्यं लभते [14]समग्रकं कुलं महत्त्वञ्च लभेत् समग्रम् ॥२॥

[15]सुसन्धि दृढं चित्राभरणोपशोभितं नानाविधगजदन्ताद्यलङ्कृतं [16]ग्रामाधिपत्यं [17]ग्रामस्य जातिपरत्वात्तदाधिपत्यं [18]समग्रकं सार्वभौमिकम्[19] । [20]ब्राह्मणायार्च्चितायार्च्चितं[21] यथोक्तमासनम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । आदित्यपुराणोक्तासनदानफलप्राप्तिकामोऽहमेतच्चित्राभरणोपशोभितमासनं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

---

1 I. O. प्रयच्छेत्
2 A वाद्यस्थान०
3 A ब्राह्मणो वेदविद्वर: for the bracketed portion
4 A वाद्यस्थानं
5 A पृथिवी, I. O. पृथ्वीं
6 I. O. षट्वादि
7 A omits पाद
8 A अर्चिताय again before अर्चितं
9 A ०शाखा अमुकवेदाध्यायिने
10 A omits देव
11 I. O. omits अर्चितं
12 A omits it
13 I. O. स्वयस्थि, A स्वसन्धि
14 I. O. मशीलं
15 I. O. स्वयस्थि
16 A ग्रामाधिपत्यस्य
17 A ग्रामाधि
18 Both I. O. and A omit it
19 A सर्व्वभौमिकं, I. O. सार्व्वभौमत्वं
20 I. O. ब्राह्मणायार्चितायार्चितं
21 A omits अर्चितं

ब्रह्मपुराणे :—

काष्ठपादुकयानानि पीठ-[1]काष्ठासनानि च ।
यैर्दत्तानि [2]द्विजातिभ्यस्तेऽध्वानं यान्ति वै सुखम् ॥३॥

दातृबहुत्वापेक्षया संप्रदानबहुत्वं देयबहुत्वञ्च । अध्वानं यममार्गम् । अत्र चासन-[3]पदसमभिधानात् पीठपदं[4] [5]पादपीठपरम् ।

सुवर्णमणिपीठेषु पादौ [कृत्वोत्तमेषु च][6] ।
ते प्रयान्ति विमानैस्तु अप्सरोगण-[7]मण्डितैः ॥४॥

अर्चिताय ब्राह्मणायार्चितमासनम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । ब्रह्मपुराणोक्तासनदानफलप्राप्तिकामोऽह[8]-मेतदासनं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । पादपीठदाने तु वाक्ये आसन-[9]पदस्थाने पीठपद-[10][निवेशो विशेषः] ।

[11][विष्णुधर्मोत्तरे (३।३११।१क) :—

[12]नर आसनदानेन स्थानं सर्वत्र विन्दति ॥५॥

सर्वत्रेति सर्वलोकेषु । ब्राह्मणायार्चिताय यथाशक्त्युत्कृष्टमासनमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्तासनदानफलप्राप्तिकामोऽहमेतदासनं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (३।३११।६क) :—

पादपीठप्रदानेन[13] स्थानं सर्वत्र विन्दति ॥६॥

अर्चिताय ब्राह्मणाय यथाशक्त्युत्कृष्टं पादपीठमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्तपादपीठदानफलप्राप्तिकामोऽहमेतत् पादपीठं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

इति महाराजाधिराजनिःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे आसनदानावर्तः ।

---

1 A काम्या for काष्ठा
2 A द्विजातिभ्य०
3 A ०पदसम्बन्धिधानात्, I. O. ०सम्बिधानात्
4 I. O. पीठवत्
5 A omits पाद
6 A कृत्वा तु ये सुधा for the bracketed portion
7 I. O. ०पण्डितैः
8 I. O. omits ऽहम्
9 I. O. omits पद
10 I. O. विशेषो निवेशः for the bracketed portion
11 A omits the bracketed portion
12 V. D. नरस्त्वासन०
13 Corrected from V. D. I. O. ०प्रमाणेन

## अथ वरुणदैवतवारिदानावर्तः । ( १३ )

### तत्र वारिदानप्रशंसा ।

महाभारते :—

एतत्सुदुर्लभतरं परलोके द्विजोत्तमाः ।
आपो नित्यं प्रदेयास्ते पुण्यं ह्येतदनुत्तमम् ॥१॥

तथा (cf. अनु—५७।२०) :—

पानीयस्य गुणादित्या प्रेतलोके विशेषतः । ]
तत्र पुण्योदका[1] नाम नदी तेषां विधीयते ॥२॥
अक्षयं सलिलं तत्र पिबन्ति ह्यमृतोपमम् ।
[2][स तत्र तोयं] पिबति पानीयं यः प्रयच्छति ॥३॥

तथा (अनु—५८।२१) :—

[3]सर्वदानैर्गुरुतरं सर्वदानैर्विशिष्यते ।
पानीयं नरशार्दूल तस्माद्दातव्यमेव हि ॥४॥

### अथ दानम् ।

याज्ञवल्क्यः (१।२१०) :—

[4]भूमिपश्नन्नवस्त्राम्भस्तिलसर्पिःप्रतिश्रयान् ।
नैवेशिकं स्वर्णधुर्य्यान्[5] दत्त्वा स्वर्गे महीयते ॥५॥

[6]इदं ब्राह्मण-[7]मात्रदेयभूम्यादिसमभिव्याहाराद् ब्राह्मणाय दानम् । अत्र यजमानोऽर्चिताय[8] ब्राह्मणायार्चितं जलम्[9] [10][ॐ अद्यादि तुभ्यमन्तमुक्त्वा] दद्यात् । ॐ

---

1 I. O. पुण्योदकी

2 I. O. तत्र तोयं च for the bracketed portion

3 A सर्व्वदानं गुरुतरं

4 I. O. भूदीपाश्वान्न॰

5 A स्वर्णमुख्यान

6 A इति

7 A देयमात्र॰

8 A omits अर्चिताय

9 A दद्यात् again after this

10 I. O. omits the bracketed portion

अद्यामुक[1]-सगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं सोत्कर्ष-[2]स्वर्गप्राप्तिकामोऽह-मेतदम्भो ददानि। प्रतिग्रहीता [3]स्वस्तीत्युक्त्वा सावित्रीं पठित्वा अम्भ इदं वरुणदैवत-मित्युक्त्वा यथाशाखं कामस्तुतिं पठेत्। तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणा-मेतत् काञ्चनं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा जलं स्पृशेत्।

महाभारते (अनु—५७।३७क) :—

[4]भक्ष्यान्नपानीयरसप्रदाता सर्वान् समाप्नोति रसान् प्रकामम् ॥६॥

अस्य [5][ ब्राह्मणसम्प्रदानकदानप्रकरणे ] पाठाद्ब्राह्मणसम्प्रदानकत्वम्। पानीयमर्चित-मर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [6]अत्यर्थसर्वरसप्राप्तिकामोऽह-मेतत्पानीयं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (वन—१६६।२४) :—

पादोदकं पादघृतं [7]दीपमन्नं प्रतिश्रयम्।

[8][ये प्रयच्छन्ति वै राजन्नो[9]-पसर्पन्ति ते यमम् ] ॥७॥

गृहीतोदपूर्णताम्र-[10]पात्र उदङ्मुखो ब्राह्मणाय पादोदकदानं[11] सङ्कल्पयेत्। [12]ॐ यमानुपसर्पणकामोऽहं ब्राह्मणाय पादोदकं दास्ये। तदवधि [13]यथेच्छं ब्राह्मणाय पाद-प्रक्षालनार्थिने पादोदकं दद्यात्।

[14]ब्रह्मपुराणे :—

पानीयं ये प्रयच्छन्ति सर्वप्राण्यनुजीवनम्[15]।

तेऽपि [16][तृप्ताः सुखं] यान्ति विमानैस्तं[17] महापथम् ॥८॥

1 A अद्यामुके मासि for अद्यामुक
2 I. O. omits स्वर्ग
3 A omits it
4 A भक्ष्यान्नपानीयसंप्रदाता
5 A ब्राह्मणं प्रकरण for the bracketed portion
6 A अत्यन्त०
7 I. O. पापमन्नं
8 I. O. प्रयच्छन्ति तु ये राजन् उपसर्पन्ति ते यमः for the bracketed portion
9 A न्न for न्नो
10 A पात्रं उदग्मुखो, I. O. पात्रोदङ्मुखो
11 I. O. पादोदकदान
12 A omits it
13 I. O. यथोक्तं
14 I. O. ब्राह्मपुराणे
15 A सर्वपाण्यनुजीवनं, I. O. सर्वप्राण्यानुजीविनं
16 I. O. तृप्ता सुखं for the b. p.
17 I. O. ०स्तं

[1][ब्रह्मपुराणे[2] एतद्वचन[3]-पूर्वोत्तरवाक्ययोर्द्विजेभ्य इति [4]श्रुतेर्ब्राह्मणायैतद्दानम् । ब्राह्मणायार्चिताय [5]स्वादुशीतलजलमभ्यर्च्य ॐ अद्यादि तुभ्यमन्तमुक्ता दद्यात् । ] [6]ब्रह्मपुराणोक्त-पेय-वारिदान-फलप्राप्ति-कामोऽहमेतत् पानीयं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा :—

[7][पादाभ्यङ्गं शिरोऽभ्यङ्गं] स्नानपादोदकं तथा ।
ये प्रयच्छन्ति विप्रेभ्यस्ते [8][न यान्ति यमालयम्] ॥९॥

ब्राह्मणेभ्यः स्नानार्थिभ्यः पादधावनार्थिभ्यो वा जलदानं पूर्ववत् सङ्कल्पयेत । [9]ॐ ब्राह्मणेभ्यो [10]ब्रह्मपुराणोक्त-स्नानोदकदान-फलप्राप्तिकामोऽहं स्नानोदकं दास्ये । तदादि यथेच्छं [11]कालं दद्यात् । पादोदकदानवाक्ये तु स्नानोदकपदस्थाने पादोदकपद-[12][निवेशो विशेषः] ।

स्कन्दपुराणे :—

सुगन्धा शीतलाश्चापो रसैर्दिव्यैः समन्विताः ।
यः [13]प्रयच्छति विप्रेभ्यस्तस्य दानफलं शृणु ॥१०॥

सुगन्धाः सुधूपिताः । [14][रसैर्दिव्यैः समन्विताः] तथा सुधूपिताः कर्तव्याः यथोतकृष्ट-रसयुक्ता भवन्ति ।

विमानं सूर्य्यसङ्काशमप्सरोगणसेवितम् ।
सोऽधिरुह्य दिवं याति वरुणस्य सलोकताम् ॥११॥
[15][तत्रासावयुतान्यष्टा-[16]वुषित्वा देववत् सुखी । ]
[17][असङ्कीर्णे कुले शुद्धे] जायते [18]धनधान्यवान् ॥१२॥

---

1 A omits the bracketed portion
2 I. O. ब्राह्मपुराणे
3 I. O. एतद्वन्
4 I. O. श्रुतैर्ब्रह्मणा०
5 I. O. जलं स्वादुशीतलजलं चाभ्यर्च्य
6 I. O. ब्राह्मपुराणोक्त०
7 A पादाभ्यङ्गजलं मत्वा
8 I. O. यान्त्यद्यवैर्य्यमालयं for the bracketed portion
9 A omits it
10 I. O. ब्राह्मपुराणोक्त०
11 I. O. omits it
12 A निवेशः for the bracketed portion
13 A प्रयच्छन्ति
14 I. O. omits the bracketed portion
15 A अत्र यजमानोऽर्चिताय ब्राह्मणायार्चितं जलं ददानि for the bracketed portion
16 I. O. •वुषित्वाद्देववत्
17 I. O. कुले महत्वसंकीर्णे for the bracketed portion
18 A जन for धन

असङ्कीर्णे [1]सुवृत्तिमात्रोपजीविनीत्यर्थः। ब्राह्मणेभ्योऽर्चितेभ्यः [2]सुधूपितं सुरस-[3]मर्चितं वारि दद्यात्। ॐ अद्यामुकसगोत्रेभ्यो[4]ऽमुकवेदामुकशाखाध्यायिभ्योऽमुकदेवशर्मभ्यो युष्मभ्यं स्कन्दपुराणोक्त-जलदानफलप्राप्तिकामोऽहमेताः सुगन्धा अपो ददानि। स्वस्त्यादि-स्वीकारान्तं पूर्ववत्।

नन्दिपुराणे :—

दत्त्वा वारि सुखस्पर्शं पादाभ्यां ब्राह्मणाय वै।
उच्छिष्टमार्जनाच्चापि गोदानफलमाप्नुयात् ॥१३॥

सुखस्पर्शं[5] शीतलम्। ग्रीष्मे शीते च [6]कदुष्णं पूर्ववद् ब्राह्मणेभ्यः सुखस्पर्शपादोदक-[7][दानं सङ्कल्पयेत्] [8]ॐ गोदानफलप्राप्तिकामोऽहं ब्राह्मणेभ्यः सुखस्पर्शं पादप्रक्षालनार्थमुदकं दास्ये। ततः प्रभृति यथोक्तसमयोचितं यथेच्छं ब्राह्मणेभ्यः [9]सुखस्पर्शपादोदकं [10]दद्यात्।

[11]आदित्यपुराणे :—

स्कन्धेन तारयेद् यस्तु [12]तृष्णार्तानां जलप्रदः।
पक्वान् ददाति केदारान् [13]फलवांश्चैव पादपान् ॥१४॥
षष्टिकोटिसहस्राणि अर्बुदानाञ्च वै त्रयम्।
क्रीडन्ति च[14] श्वेतपुरे एतदुक्तं द्विजोत्तमाः ॥१५॥

अत्र फलोत्कर्षश्रवणात्[15] [16]सुशीतलसुवासितजलदानम्। [17]पूर्ववद् यथेच्छं तृष्णार्तेभ्यो ब्राह्मणेभ्यो जलदानं सङ्कल्पयेत्। [18]ॐ आदित्यपुराणोक्तजलदानफलप्राप्तिकामोऽहं तृष्णार्तेभ्यो ब्राह्मणेभ्यो जलं दास्ये। तदादि यथेच्छं[19] तृष्णार्तेभ्यो जलं दद्यात्। ब्राह्मणसम्प्रदानक-[20][दानमध्यपतित]-त्वाद् ब्राह्मणे दानमेतत्।

---

1 I. O. सु, वृत्ति for सुवृत्ति
2 I. O. सुपूजितं
3 A धूम for म
4 A म for भ्यो
5 I. O. सुखस्पर्श
6 I. O. कदुष्ण, A कटुष्णं
7 I. O. दान सङ्कल्पयेत् for the bracketed portion
8 A omits it
9 I. O. omits सुखस्पर्श
10 A दास्ये
11 A आदिपुराणे
12 I. O. तृष्णार्त्ता ना
13 A सफलांश्च पदे पदे
14 I. O. ते
15 I. O. ०श्रवणात्
16 I. O. सुशीत for सुशीतल
17 A पूर्ववत्सुखेच्छं
18 A omits it
19 I. O. यथेच्छ
20 I. O. मध्यपति for the bracketed portion

विष्णुधर्मोत्तरे (३।३११।१३क) :—

शौच-[1]स्नानोदकं दत्त्वा [2]विरोगस्त्वभिजायते ॥१६॥

अस्य ब्राह्मणदेय-[3]प्रकरणे श्रवणाद् ब्राह्मणसम्प्रदानकत्वम्। यथेच्छसंख्यब्राह्मणेभ्यः शौच-[4]स्नानोदकदानं सङ्कल्पयेत्। ॐ विरोगत्वप्राप्तिकामोऽहं ब्राह्मणेभ्यः शौचार्थमुदकं दास्ये। [5]स्नानोदकदाने तु शौचार्थमितिस्थाने स्नानार्थमिति निवेशो विशेषः। ततःप्रभृति यथेच्छं शौचस्नानोदके दद्यात्।

## अथ [6]शौचस्नानान्यजलदानम्।

[7][मनुः (४।२२६क) :—

वारिदस्तृप्तिमाप्नोति ॥१७॥

नानासत्त्वेभ्यो वारिदानं सङ्कल्पयेत्। ॐ तृप्तिप्राप्तिकामोऽहं नानासत्त्वेभ्यो वारि दास्ये।

नन्दिपुराणे :— ]

योऽपि कश्चित्तृषार्ताय जलदानं प्रयच्छति।

स नित्यतृप्तो [8]वसति [9][स्वर्गे युगशतं] नरः ॥१८॥

अत्र फलबाहुल्यात् तृषार्तायेत्येक[10]-वचनमविवक्षितार्थं[11] किन्तु तृषार्तानां [12]सम्प्रदानत्वोपदर्शकम्। तृषितेभ्यः पूर्ववद्वारिदानं[13] सङ्कल्पयेत्। [14]ॐ नन्दिपुराणोक्ततृषार्तसंप्रदानक-[15]जलदानफलप्राप्तिकामोऽहं तृषितेभ्यो जलं दास्ये। इति सङ्कल्प्य यथाकालमुपस्थितेभ्यस्तृषितेभ्यो जलं[16] दद्यात्।

[17][महाभारते (अनु—६७।१६) :—

[18]तोयदो मनुजव्याघ्र [19]स्वर्गं गत्वा महाद्युते।

[20]अक्षयं समवाप्नोति लोकमित्यब्रवीन्मनुः ॥१६॥

1 Corrected from V. D. A ०स्नानोदके, I. O. ०दानोदके
2 A विरागस्त्वभिजायते, I. O. बिरोगश्चति जायते
3 A ०प्रकरणश्रवणात्
4 A ०स्नानोदकं
5 I. O. स्नानार्थोदकदाने
6 I. O. शौचान्य०, A सामान्य०
7 A omits the bracketed portion
8 A भवति
9 A सर्गे युतशतं for the bracketed portion
10 A अमुक for येत्येक
11 I. O. वचनं अविवक्षितार्थं, A वचनमविवक्षतार्थं
12 A सम्प्रदानत्वास्यापदकं
13 Both I. O. and A omit दानं
14 A omits it
15 I. O. omits जल
16 A omits it
17 A omits the bracketed portion
18 I. O. तोयदो
19 I. O. स्वर्ग
20 I. O. अक्षयाम्

[1]पूर्ववन्नानासत्त्वेभ्यो वारि सङ्कल्प्य दद्यात्। ॐ स्वर्गगतिपूर्वकाक्षयलोकप्राप्तिकामोऽहं यथेच्छं [2]नानासत्त्वेभ्यो [3]वारि दास्ये। ]

[प्रपाश्च कार्य्याः][4] पानार्थं नित्यन्तु द्विजसत्तम। (cf. अनु—६८।२२ख)
भुक्तेऽप्यथ [5]प्रदीयन्ते पानीयानि विशेषतः ॥२०॥
निदाघकाले पानीयं यस्य तिष्ठत्यवारितम्।
स [दुर्गं विषमं][6] कृच्छ्रं न [7]कदाचिदवाप्नुयात् ॥२१॥

ग्रामे चतुष्पथे [8]वान्यतरे निर्जने देशे [9]पानीयशालां [10]विधाय [11]ज्यैष्ठोपक्रमदिने [12]नानासत्त्वेभ्यो [13]जलपानार्थमुत्सृज्य जलं दद्यात्। ॐ महाभारतोक्त-प्रपादानफलप्राप्ति-कामोऽहं नानाप्राणिभ्योऽवारित[14]-वारिपानार्थं प्रपातमुत्सृज इति सङ्कल्प्य मासद्वयम-[15]वारितं [16][वारि प्रपायां] दद्यात्।

[17]विष्णुधर्मे :—
पानीयं सर्वलोकेषु पावनं परमं स्मृतम्।
पानीयस्य प्रदानेन तृप्तिर्भवति शाश्वती[18] ॥२२॥

पूर्ववन्नानासत्त्वेभ्यो यथाशक्त्युत्कृष्टं वारि सङ्कल्प्य दद्यात्। [19]ॐ शाश्वततृप्तिप्राप्ति[20]-कामोऽहं नानासत्त्वेभ्यः पानीयं दास्ये।

विष्णुधर्मोत्तरे (३।२६८।४–१६क) :—
प्रपां पथि तथा [21]कृत्वा नाकलोके महीयते।
प्रपास्थानं शुभं कृत्वा स्थानमाप्नोति शाश्वतम् ॥२३॥

1 I. O. पूर्व्वन्तु for पूर्ववत्
2 I. O. नानासर्व्वेभ्यो
3 I. O. वारिं
4 A पानीयं शालां for the bracketed portion
5 I. O. न दीयन्ते
6 A न्यं विकलं for the b. p.
7 A कदाचिद्पिदवाप्नुयात्
8 A वान्यतरा, I. O. राज्यतवा
9 A पानीशालां
10 I. O. निधाय
11 I. O. ज्येष्ठो॰ and A ष्ठो॰ for ज्यैष्ठो॰
12 I. O. नानासर्व्वभ्यो
13 I. O. जलं for जल
14 I. O. सुवारित and A भू for ऽवारित
15 Both I. O. and A ॰वारित
16 A प्रदपादानं for the b. p.
17 A विष्णुधर्मोत्तरे
18 A omits it
19 I. O. omits it
20 A omits प्राप्ति
21 A कृत्वात्

तस्य स्थानात्तथात्यागात् फलवृद्धिः[1] प्रकीर्तिता ।
तस्योपलेपनं कृत्वा सर्वपापैः प्रमुच्यते ॥२४॥
रज्जुं दत्त्वा प्रपास्थाने गोदो भवति मानवः ।
[2]वारिधानीं तथा दत्त्वा तदेव फलमाप्नुयात् ॥२५॥

[3]स्वकृतान्यकृतप्रपासन्निहितकूपपानीयोद्धरणार्थं रज्जुदानम् ।

कुम्भप्रदानाद्[4] भवति [5]पुमान् पूर्णमनोरथः[6] ।
प्रपायाञ्च तथा दत्त्वा [7]पुरुषं परिचारकम् ।
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥२६॥
वर्द्धमानानि यो दद्यात् प्रपायां द्विजसत्तमाः ।
[8][विविधां वृद्धिमाप्नोति तेजसा यशसा श्रिया ] ॥२७॥

वर्द्धमानानि [9]शरावान् ।

[10]लवणस्य प्रदानेन रसानाप्नोति शाश्वतान् ।
तथा [11]हरीतकं दत्त्वा गवां लोकमवाप्नुयात् ॥२८॥

हरीतकं घासम् । [12]श्रान्तापरगवीभ्यो घासदानमित्यर्थः ।

फलप्रदानेन तथा वह्निष्टोमफलं लभेत् ।
शकुनाञ्च प्रदानेन [13][गोसवस्य फलं नरः ] ।
गोरसानां प्रदानेन गवां लोकमवाप्नुयात् ॥२९॥
[14][शय्याश्च विविधाः[15] कृत्वा [16]प्रपायामासनानि च ।

---

1 I. O. फलवृद्धि
2 A वारिधानि
3 A सु and I. O. स्म for स्व
4 I. O. omits द्
5 I. O. and V. D. सदा
6 I. O. पूर्णमनोरथा:
7 I. O. पुरुषं
8 A reads the bracketed portion as विविधं वृद्धिमाप्नोति तेजसां जससां श्रियां
9 I. O. सरावान्, A सरावान
10 I. O. मरवस्य
11 A हरितकान
12 A श्रान्तागवगवीभ्यो, I. O. प्रासा-श्रतगवीभ्यो
13 Corrected from V. D. I. O. गोपुरस्य तथा वर: for the bracketed portion
14 A reads the bracketed portion just before हरीतकं घासम्, a little above
15 A शयाश्च विविधां
16 I. O. प्रपायां सासनानि च

स्वर्गलोकमवाप्नोति मानुष्ये [1]स्थानमेव च ॥३०॥
कृत्वा निर्वातं शरणं [2]प्रपास्थाने मनोहरम् ।
स्वारत्नं लोकमाप्नोति [3]वसूनां नात्र संशयः ॥३१॥ ]

शरणं गृहम् ।

तत्र [4]वह्निन्तथा दत्त्वा शीतत्राणाय [5]मानवः ।
कायाग्निदीप्तिं [6]प्राकाश्यं सौभाग्यञ्च तथाप्नुयात् । ३२॥
इन्धनानां प्रदानेन शत्रुभिर्नाभिभूयते ।
तत्रोपयोज्यभाण्डानां [7] [दानात् स्वर्गमवाप्नुयात् ] ।
[8]चन्द्रलोकमवाप्नोति स्थापनात्तुहिनस्य तु ॥३३॥

[9]तुहिनस्य [10]श्रान्तस्य [11]तापोपशान्तये तुषारीयन्त्रस्य तदेव शुभस्थानम् । गोमयोपलिप्तां रज्जु-वारिधानीकुम्भ-[12]परिचारकपुरुष-शराव-[13][लवण-गोघासफल-शक्तु]-गोरसानेकशय्यानेकासना-[14]दीन्धनाद्युपयोज्यापरद्रव्य-तुषारीयन्त्रान्वितां [15][निर्वातां प्रपां ]राजपथे निर्माय सङ्कल्पपूर्वकं दद्यात् । ॐ विष्णुधर्मोत्तरोक्त-[16]प्रपादानफलप्राप्तिकामोऽहं नाना-[17]सत्त्वेभ्योऽवारित-[18][ वारिपान--गोघासदान--लवणफलशक्तुगोरसभक्षण-सुखशयन--सुखोपवेशन-शीतार्तजन्तु-[19]शीतवारण-सन्तप्ततापो[20]-पशमनार्थमेतां ] रज्जुवारिधानी-[21]कुम्भ-[22]परिचारकपुरुष--शराव--लवण--[23]गोघासफलशक्तुगोरसानेकशय्यानेकासनादीन्धनाद्युपयोज्या--

---

1 I. O. स्थानमेव
2 Corrected from V. D. I. O. A प्रपास्थानमनोहरं, I. O. प्रपास्थानं मनोरमं
3 A वसूनां
4 Both I. O. and A वह्निस्तथा
5 A मनवः
6 Corrected from V. D. A कायाग्निदीप्तिप्राकाश्यं, I. O. कायाग्निदीप्तिं प्रकाश्यं
7 I. O. प्रदानात् स्वर्गमाप्नुयात् for the b. p.
8 A स्वर्ग for चन्द्र
9 A तत्र हितस्य
10 I. O. प्राप्य
11 A तत्रोपशान्तये, I. O, तापोपशान्तये
12 I. O. प्रतिचारक०
13 A घासफलशक्तु, I. O. लवणस्नानफलसर्व for the b. p.
14 I. O. ०मौन्धनाद्यप्रयोज्यापरद्रव्य०
15 A omits the bracketed portion
16 Both I. O. and A प्रदान०
17 I. O. ०सर्वेभ्यो
18 A omits the bracketed portion
19 I. O. omits शीत
20 I. O. ०तापा०
21 A omits it
22 I. O. प्रतिचारक०
23 I. O. omits गो

परद्रव्यतुषारीयन्त्रान्वितां [1]प्रपां दास्ये। ततोऽवारितं सङ्कल्पिततत्तद्द्रव्याणि [2][ समुपस्थितेभ्यो दद्यात्। अत्र च प्रपायां स्थाननिर्माणोपलेपनरज्जुदानादिषु गुणेषु पृथक् पृथक् फलश्रुतेः सम्पूर्णप्रपाकरणोपयुक्तेन परप्रपायामपि स्थाननिर्माणोपलेपन-रज्जुदानादीनि एकैकशोऽपि सङ्कल्प्य सुस्थेयानि। तद् यथा ॐ विष्णुधर्मोत्तरोक्त-प्रपास्थान-शुभकरण-फलप्राप्तिकामोऽहमेतत् प्रपास्थानं शुभं करिष्य इति सङ्कल्प्य प्रपाभूमिकर्मस्वरूपं कुर्य्यात्। एवमुपलेपनेऽपि[3]। रज्ज्वादिदानेषु सङ्कल्पवाक्यं यथा ] ॐ विष्णुधर्मोत्तरोक्तरज्जुदानफलप्राप्तिकामोऽहं प्रपायामेतां रज्जुं दास्ये। एवं वारिधान्यादिदानेष्वपि तत्तदुक्तद्रव्यनिवेशेन[4] वाक्यमूहनीयम्।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे वारिदानावर्तः।

---

1 A प्रदास्ये for प्रपां दास्ये

2 A reads the bracketed portion as निर्माणोपलेपनरज्जुदानानि एकैकमपि सङ्कल्प्योत्थनारूपं कुर्यात्

3 I. O. ॰लेपनेऽपि

4 I. O. ॰निवेशन

# अथ विष्णुदैवत-तैजसपात्रदानावर्तः । (१४)

[2]विष्णुः :—

तैजसानां [3][प्रदानेन [4]पात्रो भवति कामानाम् ] ॥१॥

[5][ तेजसां पात्राणां तैजसानामिति ] सुवर्ण-[6]रजतताम्रकांस्यपित्तलत्रपुसीसकलोहमयानां पात्राणामिति । बहुत्वं [7]तैजसद्रव्यबहुत्वापेक्षम् । [8][अत एषामन्यतमस्य पात्रस्य दानम् । अत्र यजमानोऽर्चिताय ब्राह्मणायोक्तद्रव्याणामन्यतमस्य पात्रमर्चितं दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं विष्णूक्ततैजसपात्रदानफलप्राप्तिकामोऽहमेतत्तैजसपात्रं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा पात्रमिदं विष्णुदैवतमित्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं दक्षिणामेतत् काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा पात्रं स्पृशेत् । तैजसपात्रोत्कर्षबहुत्वे च फलभूयस्त्वम् ।

स्कन्दपुराणे :—

भाजनं यः प्रयच्छेत्तु हेमं रत्नविभूषितम् ।
[9]सोऽप्सरःशतसङ्कीर्णे विमाने दिवि राजते ॥२॥

रत्नविभूषितं नानारत्नालङ्कृतम् । अर्चिताय ब्राह्मणायार्चितं यथोक्तं सौवर्णभाजनम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । ] स्कन्दपुराणोक्त-हैमभाजन-दानफलप्राप्तिकामोऽहमेतद्रत्नभूषितं हैमभाजनं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा :—

राजतं यः [10]प्रयच्छेच्च विप्रेभ्यो भाजनं शुभम् ।
स गन्धर्वपदं प्राप्य उर्वश्या सह मोदते ॥३॥

विप्रेभ्य इति बहुवचनं [11]जात्यपेक्षया एकस्य भाजनस्य बहुभ्यो दानासम्भवात् । शुभं दर्शनीयम् । अर्चिताय ब्राह्मणायार्चितं [12]राजतभाजनम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा

---

1 A ०तैजसदानावर्तः
2 A स्कन्दपुराणे
3 I. O. reads the bracketed portion as पात्राणां दानेन पात्रो भवति मानवां
4 A पत्रो
5 I. O. reads the bracketed portion as तैजसानामिति
6 A राजत०
7 A तेजसद्रव्यं बहुत्वापेक्षं
8 A omits the bracketed portion
9 I. O. सोऽप्सरा०
10 I. O. प्रयच्छेत्तु
11 I. O. जात्यपेक्षं
12 A रजत०

दद्यात्। स्कन्दपुराणोक्त-[1]राजतभाजन-दानफलप्राप्तिकामोऽहमेतत्-[2]राजतभाजनं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथाः—

ताम्रं यो भाजनं दद्याद् ब्राह्मणेभ्यो विशेषतः।
स भवेद् [3][यक्षोराजस्य पक्षौ बलसमन्वितौ] ॥४॥

विशेषत इति विशिष्टमुत्कृष्टमित्यर्थः। ब्राह्मणायार्चितायार्चितं[4] ताम्रभाजनम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। स्कन्दपुराणोक्त-ताम्रभाजनदानफलप्राप्तिकामोऽहमेतत्ताम्रभाजनं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

विष्णुधर्मे :—

ताम्रायसानां भाण्डानां दाता [5]रत्नाधिपो भवेत्।
[6]लभतेऽल्पदं स्थानं बलवान् जायते सदा ॥५॥

अत्र ताम्रायसानामिति द्वन्द्वः[7] क्रियापेक्षया इतरेतरयोगे[8]। अतस्ताम्रपात्राणा-[9][मायसपात्राणां वा मिलितानां वा दानं कर्तव्यम्]। मिलितदाने फलातिरेकः। ब्राह्मणायार्चिताय यथेच्छ-[10]संख्यानि ताम्रपात्राणि लौहपात्राणि चार्चितानि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोक्त[11]-ताम्रपात्र-लोहपात्र-दानफलप्राप्तिकामोऽहमेतानि ताम्रपात्राणि लौहपात्राणि च ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। अन्यतरपात्रदाने तु [12]विष्णुधर्मोक्तामुकपात्रदान-फलप्राप्तिकामोऽहमेतान्यमुकपात्राणीति निवेशो विशेषः।

विष्णुधर्मोत्तरे (३।३११।१६) :—

तैजसानि तु पात्राणि दत्त्वा सलवणानि तु।
[13]पात्रतामेति कामानां [14]लावण्यञ्चाप्नुयान्महत् ॥६॥

अत्र यद्यपि पात्रबहुत्वं तैजसद्रव्यबहुत्वादप्युपपद्यते तथापि दानचतुष्टयेऽपि बहुत्वोपादानाद् विवक्षितम्। ब्राह्मणायार्चिताय सुवर्णादीनामन्यतमस्य त्रीणि पात्राण्युपादाय लवणेन

1 I. O. भाजन only, while A रजतभाजतभाजन
2 A ०द्रजत०
3 I. O. यक्षराजस्य पक्षौ बलसमन्वित: and A यक्षराजस्तु यक्षोवरसमन्वित: for the bracketed portion
4 A omits अर्चितं
5 A रंत्विधपो
6 A लभतेशुपगतं
7 I. O. मिद्दिल for मिति द्वन्द्व:
8 A इतरेतरयोग:
9 A चार्लितानां कर्तव्य: for the bracketed portion
10 I. O. ०सौख्यमित
11 A विष्णुधर्मोत्तरोक्त, I. O. स्कन्दपुराणोक्त
12 I. O. विष्णुधर्मोत्तरोक्तामुक०
13 I. O. पात्रात्वामिति
14 A लावण्यमन्यच्चाप्याप्नुयात्

पूरयित्वाऽर्चितानि ॐ[1] अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्त-सलवण-पात्रदान-फलप्राप्तिकामोऽहमेतानि सलवणानि तैजसपात्राणि ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (३।३११।१७) :—

तैजसानि तु पात्राणि सतैलानि प्रयच्छतः ।
आरोग्यमुत्तमं प्रोक्तं लावण्यमपि चोत्तमम् ॥७॥

ब्राह्मणायार्चिताय सुवर्णादीनामन्यतमस्य त्रीणि पात्राणि तैलपूर्णान्यर्चितानि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । उत्तमारोग्य-लावण्यप्राप्तिकामोऽहमेतानि [2]तैलपूर्णानि तैजसपात्राणि [3]ददानि । [4][स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा :—

तैजसानि तु पात्राणि सघृतानि प्रयच्छतः ।
आरोग्यमुत्तमं प्रोक्तं स्वर्गे वासस्तथा द्विजाः ॥८॥

द्विजा इति सम्बोधनम् । ] [5]ब्राह्मणायार्चिताय सुवर्णादीनामन्यतमस्य त्रीणि पात्राणि घृतपूर्णान्यर्चितानि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात । उत्तमारोग्यपूर्वकस्वर्गवासप्राप्तिकामोऽहमेतानि घृतपूर्णानि तैजसपात्राणि ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

[6]तथा (३।३११।१८) :—

तैजसानि तु पात्राणि समधूनि प्रयच्छतः ।
लावण्यमुत्तमं प्रोक्तं सौभाग्यमपि चोत्तमम् ॥९॥

ब्राह्मणायार्चिताय सुवर्णादीनामन्यतमस्य [7]त्रीणि पात्राणि मधुपूर्णान्यर्चितानि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । उत्तमलावण्यप्राप्तिपूर्वकोत्तमसौभाग्यप्राप्तिकामोऽहमेतानि मधुपूर्णानि [8]तैजसपात्राणि ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । एषु चतुर्ष्वपि तैजसपात्रोत्कर्षफलभूयस्त्वम् ।

तथा (३।३१०।१७) :—

रुक्मपात्रप्रदानेन पात्रो भवति मानवः ।
सर्वेषामेव [9]कामानां [10]यशसस्त्रिदिवस्य च ॥

1 A omits it
2 A तैलानि
3 A प्रददानि, I. O. ददानि
4 A omits the bracketed portion
5 I. O. ब्राह्मणार्चिताय
6 A omits it
7 A omits it
8 A तैजसानि पात्राणि
9 Corrected from V. D. I. O. देवानां, A दानानां
10 I. O. यशसस्त्रिदिवस्य

ब्राह्मणायार्चिताय यथेच्छपरिमाणसुवर्णघटितं पात्रमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्त-रुक्म-[1]पात्रदानफल-प्राप्तिकामोऽहमेतद्रुक्मपात्रं ददानि । स्वस्त्यादि-स्वीकारान्तं पूर्ववत् ।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
[2]श्रीदानसागरे तैजसपात्रदानावर्तः ।

1 I. O. omits पात्र    2 I. O. omits श्री

# अथ वरुणदैवतजल-[1]पात्रदानावर्त्तः । (१५)

आदित्यपुराणे :—

ये ददन्ति घटीपात्रं [2]कुटिकां करकांस्तथा ।
तृषार्तेभ्यस्तथा घर्मे [3]लभन्ते शीतलं जलम् ॥१॥

घटीपात्रं ताम्रघट्यादि, कुटिका कलसी, करकः कमण्डलुः । अत्र यजमानो जलाहरणार्थ[4]-गुणपात्राभावाज्जलाहरणासमर्थाय [5]तदर्थिने [6]तृष्णार्तायार्च्चिताय ब्राह्मणाय उक्तपात्राणां यथालाभमन्यतमं पात्रमर्चितं दद्यात् । ॐ अद्यामुकसगोत्रायामुक-[7]वेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यमादित्यपुराणोक्तघटी-[8]पात्रदानफलप्राप्तिकामोऽहं[9]--मेतद्‌घटीपात्रं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा घटीपात्रमिदं वरुणदैवतमित्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । [10]तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा जलपात्रं स्पृशेत् । कुटिकादाने तु आदित्य-पुराणोक्त-कुटिकादानफलप्राप्तिकामोऽहमेतां [11][कुटिकामिति विशेषः] । [करकदाने[12] तु आदित्यपुराणोक्त-करकदानफलप्राप्तिकामोऽहमेतं करकमिति विशेषः । ][13]

[14]ब्रह्मपुराणे :—

जलभाजनदातारः कुटिका-[15]करकप्रदाः ।
पूज्यमानाप्सरोभिश्च यान्ति तृप्ता महागजैः ॥२॥

यान्ति स्वर्गं [16]यान्तीत्यर्थः । जलभाजन-[17]मुक्तेतरजलपात्रं [18]कुटिका कलसी करकः कमण्डलुः । उक्तानामन्यतमं जलपात्र-[19]मर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्त-

---

1 A omits पात्र
2 I. O. कुटिकं करकां तथा, A कुटिकाकरकास्तथा
3 I. O. लभेते
4 A तु for र्थ
5 A तदात्मने
6 A तृषितायार्च्चिताय
7 A omits वेदामुक
8 A पात्रा, I. O. omits it
9 I. O. omits हं
10 A omits it
11 I. O. कुटिकां only for the bracketed portion
12 I. O. करकादाने
13 A omits the bracketed portion
14 I. O. ब्राह्मपुराणे
15 A ०करकःप्रदाः, I. O. ०करकाप्रदः
16 I. O. स्वर्गान्तीत्यर्थः
17 A दान before this
18 I. O. घटि
19 A omits मर्चित

मुक्त्वा दद्यात्। [1]ब्रह्मपुराणोक्त-जलभाजन-दानफलप्राप्तिकामोऽहमेतज्जलभाजनं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। कुटिकादाने [2]ब्रह्मपुराणोक्तकुटिकादानफलप्राप्तिकामोऽहमेतां [3][कुटिकामिति विशेषः। करकदाने ब्रह्मपुराणोक्तकरकदानफलप्राप्तिकामोऽहमेतं[4]] करकमिति विशेषः। अत्र च[5] फलोत्कर्षाद्द्रव्योत्कर्षः।

स्कन्दपुराणे :—

कमण्डलुन्तु[6] यो दद्याद् ब्राह्मणाय नरोत्तमः।
स तेन कर्मणा देव्यो धर्मनिष्ठत्व[7]-माप्नुयात् ॥३॥

[8]देव्य इति सम्बोधनम्। अर्चिताय ब्राह्मणाय यथाशक्ति ताम्रादीनामन्यतमेन द्रव्येण विरचितं कमण्डलुमर्चितम् ॐ अद्यादि तुभ्यमहंसम्प्रददे इत्युक्त्वा दद्यात्। धर्मनिष्ठत्व[9]-कामोऽहमेतं कमण्डलुं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

[10]अद्भिस्तु पूर्णं यो भाण्डं ब्राह्मणाय प्रयच्छति।
[11]रमास्तस्योपतिष्ठन्ते[12] पूज्यते च दिवं गतः[13] ॥४॥

अर्चिताय ब्राह्मणाय [14]यथाशक्ति कुम्भादिभाण्डं जलपूर्णमर्चितम् ॐ अद्यादि तुभ्यमहंसम्प्रददे इत्युक्त्वा दद्यात्। स्कन्दपुराणोक्ताप्पूर्णभाण्ड-[15][दानफलप्राप्तिकामोऽहमेतदप्पूर्ण-भाण्डं] ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

[16][तथा :—

भाजनानि च यो दद्याद-[17]प्पूर्णानि शुभानने।
भाजनैः स महाभागस्तारयेच्च पितॄन् भयात् ॥५॥

अर्चिताय ब्राह्मणाय यथाशक्ति कुम्भादिरूपं जलपूर्णभाजनत्रयमर्चितम् ॐ अद्यादि

---

1 I. O. ब्राह्मपुराणोक्त
2 I. O. ब्राह्मपुराणोक्त
3 I. O. omits the bracketed portion
4 A ॰मेतां
5 A omits it
6 I. O. स्त्र for न्तु
7 A ॰नित्यत्व॰
8 A त्रिय
9 Both I. O. and A ॰नित्यत्व॰
10 I. O. अपान्तु
11 I. O. वसा॰
12 I. O. ॰तिष्ठन्ति
13 A वियद्गतः, I. O. दिवङ्गतः
14 A omits यथा
15 A omits the bracketed portion
16 A omits the bracketed portion
17 I. O. ॰पूर्णानि

तुभ्यमन्तमुक्त्वा दद्यात्। स्कन्दपुराणोक्ता-[1]प्पूर्णानेकभाजनदानफलप्राप्तिकामोऽहमेतान्यप्पूर्णानि भाजनानि ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। ]

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्वल्लालसेनदेवविरचिते
श्रीदानसागरे जलपात्रदानावर्तः।

1 I. O. ॰पूर्णा॰

# अथ प्रजापतिदैवतान्नदानावर्तः । (१६)

## तत्र अन्नदानस्तुतिः ।

ब्रह्मपुराणे :—

अन्ने प्रतिष्ठिता लोका-[1][तस्मादन्नं प्रशस्यते] ।
अन्नमेव[2] प्रशंसन्ति सदैव पितृमानवाः ।
[3][अन्नस्य हि प्रदानेन स्वर्गमाप्नोति मानवः ॥१॥

तथा :— ]

अन्नस्य हि[4] प्रदानेन नरो याति परां गतिम् ।
सर्वकामसमायुक्तः [5][प्रेत्य चाप्यश्नुते] शुभम् ॥२॥

तथा :—

अन्नमूर्जस्वलं[6] लोके दत्त्वोर्जस्वी भवेन्नरः ।
सतां पन्थानमाश्रित्य[7] सर्वपापैः प्रमुच्यते ॥३॥

[8]महाभारते (अनु—६३।२५ख-२६क) :—

अन्नदः पशुमान् पुत्री धनवान् भोगवानपि ।
प्राणवांश्चापि भवति रूपवांश्च तथा [9]नृप ॥४॥

तथा (अनु—६३।३५) :—

अन्नदस्य मनुष्यस्य बलमोजो यशांसि च ।
कीर्तिश्च वर्धते शश्वत् त्रिषु लोकेषु पाण्डव ॥५॥

[10]आग्नेयपुराणे अन्नस्तुत्यनन्तरम्—

तस्मादन्नं सदा देहि श्रद्धया नृपसत्तम ।
ब्रह्महत्यादिकं[11] पापमन्नदस्य प्रणश्यति ॥६॥

---

1 A अन्नमाश्रयं परं for the bracketed portion
2 A तस्मादन्नं
3 A omits the bracketed portion
4 A omits it
5 A प्रेत्य चेहाधिकं for the bracketed portion
6 I. O. ०स्करं
7 I. O. ०इत्य
8 A omits it
9 A नृपः
10 I.O. reads the couplet viz. तथा पादोदकं···ति यमं. (V. 7 of p. 342) just before this
11 I. O. ब्रह्महत्याकृतं

तथा :—

अन्नदानात् परं दानं न भूतं न भविष्यति ।
पुण्यं यशस्यमायुष्यं बलपुष्टिविवर्धनम् ।
[1]सर्वश्चान्नप्रदानेन भवतीति विनिश्चयः ॥७॥
महाकाञ्चनचित्राणि सेवितान्यप्सरोगणैः ।
अन्नदस्योपतिष्ठन्ति विमानानि सुरालये ॥८॥
[2]भक्ष्यभोज्यमयाः शैला दिव्यरूपा [3]ह्यलङ्कृताः ।
हृष्ट-[4]पुष्टजना नित्यमुपतिष्ठन्ति चाग्रतः ॥९॥
हस्त्यश्वरथयानैश्च क्रीडमानाश्च ते नराः ।
[5] [पुत्रपौत्रैर्वृताः सर्वे हस्त्यश्वरथदायकाः ॥१०॥
गन्धमाल्यैरलङ्कारैः पुष्टहृष्टाश्च नित्यशः ।
गन्धमाल्यप्रदीप्तास्तु दाननिश्चयतत्पराः ॥११॥ ]
धर्मज्ञाः सत्यशीलाश्च सर्वदुःखविवर्जिताः ।
मोदन्ते [6]दैवतैः सार्द्धं नित्यकालं महामुने ॥१२॥

पद्मपुराणे :—

[7]आपर्वतनदीवापी पृथिवी सर्वकामदा ।
विधिना तेन सा दत्ता [8] [योऽन्नं ददाति] सर्वदा ॥१३॥
क्षुधिते यः प्रयच्छेत अन्नं श्रद्धासमन्वितः ।
ब्रह्मणो[9] भुवने स[10] वै ब्रह्मणा सह मोदते ॥१४॥
[11]चान्द्रवारुणलोकश्च [12]याम्यकौबेरकस्तथा ।
[13] [गोलोको ब्रह्मलोकश्च] सर्वे चान्ने प्रतिष्ठिताः ॥१५॥
ददत् कन्यामलङ्कृत्य हस्त्यश्वञ्च महा-[14]बलम् ।
अन्नदानस्य चैतानि कलां नार्हन्ति षोडशीम् ॥१६॥

---

1 A सर्व्वमनुष्यदानेन
2 A भोज्य, I. O. भक्ष्य
3 A च for ह्य
4 I. O. ०पुष्प०
5 A omits the bracketed portion
6 A देवतं, I. O. पितरैः
7 I. O. आपर्व्वतं
8 I. O. योन्न ददति for the b. p
9 I. O. ब्रह्मणे
10 I. O. सर्व्वो for स वै
11 I. O. इन्द्रवारुणलोकाश्च
12 I. O. याम्याः कौबेरकास्तथा
13 I. O. गोलोके ब्रह्मलोके वा for the bracketed portion
14 A ०धनं

विष्णुधर्मोत्तरे :—

यावतो ग्रसते ग्रासान् विद्वान् विप्रः [1]स्वलङ्कृतः ।
अन्नप्रदस्य तावन्तः क्रतवः परिकीर्तिताः ॥१७॥

## अथान्नदानधर्माः ।

यमः :—

आदरेण च [2]भक्त्या च यदन्नमुप-[3]दीयते ।
तत् प्रीणयति पात्राणि [4]साम्रतं मानवर्जितम् ॥१८॥
दुर्लभस्तु [5]मुदा दाता [6]मुदा भोक्ता च दुर्लभः ।
[7]मुदा दाता च भोक्ता च तावुभौ स्वर्गगामिनौ ॥१६॥
योऽन्नं बहुमतं भुंक्ते यश्चान्नं नावमन्यते ।
यश्चान्नं प्रीतितो दद्यात्तस्यान्नमुपतिष्ठते ॥२०॥
प्रीतितोऽन्नञ्च यो दद्याद् गृह्णीयाद् योऽभिपूज्य च ।
प्रीतितोऽन्नयमश्नाति पूजितः स्वर्गमश्नुते ॥२१॥
यो दद्याद्विप्रियेणान्नं यश्चान्नं नाभिनन्दति ।
तावुभौ नरके मग्नौ वसेतां शरदः शतम् ॥२२॥

## अथान्नदानविशेषे[8] [9]फलविशेषपरिभाषा ।

कूर्मपुराणे (२।२६।१८) :—

गृहस्थाया[10]-न्नदानेन फलं [11]नाप्नोति मानवः ।
[12]आममेवास्य दातव्यं दत्त्वाप्नोति परां गतिम् ॥२३॥

अन्नदानेन [13]पक्वान्नदानेन फलं [14]नाप्नोतीति [15]गृहस्थायामान्नदानेन यादृशं फलं तादृशं [16]पक्वान्नदानेन नाप्नोतीत्यर्थः । गृहस्थस्या-[17]मान्नदाने सति तस्य पञ्चयज्ञनिष्पत्तेः ।

---

1 A सुसंस्कृतः
2 A भोक्ता
3 I. O. ०नीयते
4 I. O. मानृतं
5 A यदा
6 A तथा
7 A अन्नदाता
8 A ०विशेष
9 I. O. फफ०
10 I. O. गृहस्थाया०
11 A and K. P. प्राप्नोति
12 I. O. आममेवाभ्य, A अन्नमेवास्य, K. P. आगमे वास्य
13 I. O. पक्वान्नं दानेन, A पक्वान्नदानेन
14 I. O. नाप्नोति पति, A प्राप्नोतीति
15 I. O. गृहस्थायामन्नदानेन, A गृहस्थायान्नदानेन
16 I. O. पक्वान्नदाने, A पक्वान्नदाने
17 A omits मा

## अथ सामान्यान्नदानम् ।

नन्दिपुराणे :—

अन्नाद्भूतानि जातानि देवा ह्यन्नस्य[1] काङ्क्षिणः ।
न तस्य पात्रादिविधिर्विना श्राद्धं प्रकीर्तितः ॥१॥

तथा :—

अपि कीटपतङ्गानां शुनाश्चाण्डाल-[2]योनीनाम् ।
दत्त्वान्नं लोकमाप्नोति प्राजापत्यं समासतः ॥२॥
बान्धवेभ्योऽतिथिभ्योऽन्नं पुत्रेभ्योऽन्नं प्रयच्छतः ।
दीनान्धकृपणानाञ्च स्वर्गः स्यादन्नदायिनाम् ॥३॥
ग्रासमात्रं नरो दत्त्वा [3]त्वन्नानामन्नगृध्नवे ।
[4][स्वर्गे[5] वसेत् समानान्तु] शतं भोगैर्मनोरमैः ॥४॥
ग्रासे ग्रासे फलं ह्येतद् विधिवत् परिकीर्तितम् ।
एतदेवायने[6] प्रोक्तं द्विगुणं पुण्यगौरवम् ॥५॥
अन्नं विना कृशाङ्गस्य दत्त्वान्नं देशकालतः ।
फलं पञ्चगुणं प्रोक्तं सर्वभावसमन्विते[7] ॥६॥

सर्वभाव-[8][समन्वित इति] सम्बोधनम् । अत्र यजमानः प्राणिमात्रेभ्यो गृहीतोदपूर्ण-[9]ताम्रपात्र उदङ्मुखः सङ्कल्प्य यथेष्ट-[10]कालावध्यन्नं दद्यात् । तद् यथा :—[11]ॐ नन्दिपुराणोक्त-प्राणिमात्रान्न-दानफलप्राप्तिकामोऽहं प्राणिभ्योऽन्नं दास्ये । [12]तदवधि यथासम्भवं [13]प्राणिमात्रेभ्यः स्वगृहे अन्यत्र वा भक्तशालां कृत्वाऽ[14]विच्छिन्नमन्नं देयम् ।

---

1 A ह्यन्नाद्य
2 Both I. O. and A ०योनिनां
3 A त्वन्नानामन्नगृध्नवे, I. O. त्वन्नाना-मर्थगृध्नवे
4 A सम्वत्सरशतमात्र for the bracketed portion
5 I. O. स्वर्गो
6 I, O. एतदेवापरे
7 A ०समन्वितं
8 I. O. प्रति for the bracketed portion
9 I. O. omits ताम्र
10 A ०कालावधि अन्नं, I. O. ०कामा-वध्यन्नं
11 A omits it
12 A एदवधि
13 A प्राणिभ्यः
14 A ०वच्छिन्न०

अतएव धार्मिकास्ताम्र-[1]पट्टविलिखितां[2] भूमिं [3]समुपकल्प्य आचन्द्रार्क-[4]स्थायिनीं भक्तशालां [5]ददति ।

वायुपुराणे :—

क्षिप्रमत्युष्णमक्लिन्नं[6] दद्यादन्नं बुभुक्षिते ।
सव्यञ्जनं सदा स्निग्धं [7]भक्ष्यं [8][तत् कृत्य यत्नतः] ॥७॥

क्षिप्र-[9][मतिथिप्राप्त्य]-नन्तरमेव । [10]अक्लिन्नमनुपहतम् । [11]भक्ष्यमप्रतिषिद्धम् ।

तरुणादित्यसङ्काशं विमानं हंसवाहनम् ।
[12][अन्नदो लभते] तिस्रः कल्पकोटीस्तथैव च ॥८॥
अन्नदानात् परं दानं न भूतं न भविष्यति ।
अन्नाद्भूतानि जायन्ते जीवन्ति च न संशयः[13] ॥९॥
जीवदानात् परं दानं न किञ्चिदपि विद्यते ।
अन्नाज्जीवति[14] त्रैलोक्यं [15]त्रिलोक्या सह [16]तत्फलम् ॥१०॥

बुभुक्षितेभ्यो [17]यथोक्तमन्नं पूर्ववत् सङ्कल्प्य दद्यात् । ॐ [18]वायुपुराणोक्तान्नदानफल-प्राप्तिकामोऽहं बुभुक्षितेभ्यः सव्यञ्जनं स्निग्धमन्नं दास्ये एवं सङ्कल्प्य बुभुक्षितानन्विष्य[19] तेभ्यो यथोक्तमन्नं दद्यात् ।

महाभारते (अनु—६६।५७) :—

[20]श्रान्ताय क्षुधितायान्नं यः प्रयच्छति भूमिप ।
स्वायम्भुवं महत् स्थानं स गच्छति नराधिप ॥११॥

---

1 I. O. ०पत्राङ्क०
2 I. O. ०लिखित', A ०विलिखित'
3 I. O. उपकल्प्य
4 I. O. ०कायिनीं
5 I. O. ददाति, A ददानि
6 Both I. O. and A ०क्लिष्ट'
7 Both I. O. and A भक्ष्यं
8 A सततं दापयेत् for the bracketed portion
9 I. O. मयि प्रार्थना for the bracketed portion
10 I. O. अक्लिष्ट०
11 I. O. भक्ष्य०
12 A अन्नदानाल्लभते for the bracketed portion
13 I. O. संशयं
14 I. O. ०जीवन्ति
15 A त्रैलोक्यस्यैव
16 I. O. तः फल'
17 A omits यथोक्तम
18 A पद्म०
19 A omits च
20 Both I. O. and A श्रान्ताय

[1]श्रान्ताय क्षुधितायान्नं पूर्ववत् [2]सङ्कल्प्य दद्यात्। [3]ॐ स्वायम्भुवस्थानप्राप्तिकामोऽहं श्रान्ताय क्षुधितायान्नं दास्ये इति सङ्कल्प्य [4]यथाकालं श्रान्तं क्षुधितमनुसन्धायान्नं[5] तस्मै दद्यात्।

[6]तथा (अनु—६६।६०) :—

सद्भ्यो[7] ददाति यश्चान्नं[8] सदैकाग्र[9]-मना नरः।
न स दुर्गाण्यवाप्नो-[10]तीत्येवमाह पराशरः[11] ॥१२॥

अभीष्टसमये सद्ब्राह्मणक्षत्रियवैश्यशूद्रेभ्योऽन्नं पूर्ववत् सङ्कल्प्य दद्यात्। [12]ॐ महाभारतोक्त-[13]सद्भ्योऽन्नदानफलप्राप्तिकामोऽहं [14]सद्भ्योऽन्नं दास्ये। ततःप्रभृति [15]अमित-कालावधि [16][सद्भ्यो ब्राह्मणादिभ्योऽन्नं दद्यात्]।

[17]तथा (अनु—७।७=Cf. अनु—६३।१४-१५=वि. ध.—३।३१५।११) :—

यो दद्यादपरिक्लिष्टमन्न-[18][मध्वनि वर्तते]।
[19][श्रान्ताया-[20]दृष्टपूर्वाय तस्य पुण्यफलं महत् ॥१३॥

अपरिक्लिष्टमनुपहतम्। [21]यथोक्तप्राणिनेऽन्नं पूर्ववत् सङ्कल्पयेत्। ॐ महापुण्यफल-प्राप्तिकामोऽहं [22]श्रान्तायाध्वगाया-[23]दृष्टपूर्वायान्नं दास्ये इति सङ्कल्प्य यथाकालमध्वगमन्विष्य यथोक्तमन्नं [24]तस्मै दद्यात्। अत्राध्वनि वर्तत इति [25]शतृनिर्देशात् पथि [26][गच्छते पथिकाय] वर्त्मनि कुटीं कृत्वा तरुतले चान्नं दद्यात्।

---

1 A श्रान्ताया, I. O. श्रान्ताया
2 A सङ्कल्पयेत्
3 A omits it
4 A यथाकालश्रान्तं, I. O. यथा-कालमध्वान्नं
5 A °सन्धायान्न
6 A omits it
7 I. O. सभ्यो
8 A यश्चान्नं
9 I. O. °ग्र°
10 A °ति°
11 Both I. O. and A परासर:
12 A omits it
13 I. O. सभ्योऽन्न°, A साङ्गवरान्न°
14 I. O. सभ्योऽन्नं
15 A अभियुतकालि
16 I. O. सब्राह्मणेभ्योऽन्नं दास्ये for the bracketed portion
17 A omits it
18 A मत्युयामद्भुतं for the bracketed portion
19 A omits the bracketed portion
20 I. O. °दृष्ट°
21 A यथोक्तं
22 I. O. श्रान्तामाध्वगाया°
23 A अदृष्टाय before this
24 I. O. तस्मै
25 A शत°
26 I. O. गच्छति पथिका: for the bracketed portion

विष्णुधर्मोत्तरे (३।३१६।२३) :—

[1]मृष्टान्नं मानवो दत्त्वा [2][मृष्टान्नार्थिनि काङ्क्षितम्] ।
अक्षयं फलमाप्नोति स्वर्गलोकञ्च गच्छति ॥१४॥

[3][मृष्टं संस्कृतम् ।] सव्यञ्जनमन्नं पूर्ववत् सङ्कल्प्य तदर्थिभ्यो [4]दद्यात् । विष्णु-[5]धर्मोत्तरोक्त[6]-मृष्टान्न[7]-दानफलप्राप्तिकामोऽहं यथाशक्ति [8]मृष्टान्नार्थिभ्यो [9]मृष्टान्नं दास्ये इति सङ्कल्प्य [10]मृष्टान्नार्थिनोऽनुसन्धाय तेभ्यो यथाशक्ति [11]मृष्टान्नं दद्यात् ।

[12]तथान्नदानप्रकरणे (३।३१५।१२) :—

[13]सहस्रपरिवेशस्तु नरकन्तु[14] न गच्छति ।
विमानेनार्कवर्णेन स्वर्गलोके महीयते ॥१५॥

सहस्रपरिवेशः सहस्राय मनुष्येभ्योऽन्नप्रदः[15] । यथासम्भवं सहस्राय मनुष्येभ्यः [16]सिद्ध-मन्नं पूर्ववत् सङ्कल्प्य[17] दद्यात् । [18]ॐ विष्णुधर्मोत्तरोक्तसहस्रपरिवेशनफलप्राप्तिकामोऽहं यथासम्भवं सहस्राय मनुष्येभ्यो व्यञ्जनादिसहितमन्नं दास्ये इति सङ्कल्प्य यथाशक्ति नानादिनैः सहस्रं मनुष्यान्[19] भोजयेत् ।

देवलः :—

कृत्वापि [20][पातकं कर्म] यो दद्यादन्नमीप्सितम् ।
[21][ब्राह्मणानां विशेषेण स निहन्त्या[22]-त्मनस्तमः ॥१६॥ ]

---

1 A and V. D. मिष्टान्नं
2 A and V. D. मिष्टान्नार्थिनि काङ्क्षितं and I. O. मृष्टान्नानि तु काङ्क्षितान् for the bracketed portion
3 A omits the bracketed portion
4 I. O. मृष्टमन्नं दास्ये
5 I. O. ०धर्मोत्तरा०
6 I. O. काङ्क्ष्यो and A मिष्टान्नकांक्षगोचर after this
7 A मिष्टान्न०
8 A मिष्टान्नार्थिभ्यो, I. O. omits it
9 A मिष्टमन्नं
10 A मिष्टान्नार्थिनो०
11 A मिष्टान्नं
12 A अथान्न०
13 I. O. सहस्रायचवेयत्
14 I. O. नरकस्तु
15 A ०न्नं दद्यात्
16 I. O. सिद्धान्नं, A सिद्धमन्नं
17 A सङ्कल्प्यं
18 A omits it
19 I. O. मनुष्यान
20 I. O. पापकर्मा for the bracketed portion
21 A omits the bracketed portion
22 I. O. ०त्मा०

[1]ब्राह्मणानां विशेषेणेत्यभिधानाद् [2][ब्राह्मणेभ्योऽपि दाने] फलमेतद् भवत्येव। [3]एतच्च [4]सामान्यदानमिदम्। ईप्सितमित्यर्थिनः[5] [6]पृष्ट्वा [7][यथायथमभिमतमन्नमुत्पाद्य तेभ्यः पूर्ववत् सङ्कल्पयेत। ॐ ब्राह्मणप्रमुखनानावर्णेभ्य आत्मीयतमःक्षयकामोऽहं यथासम्भवम्] ईप्सितमन्नं [8]दास्ये। ततःप्रभृति यथायथ-[9]मुपस्थितेभ्य ईप्सितमन्नं दद्यात्।

## अथ विशेषान्नदानम्।

बृहस्पतिः :—

अन्नदानं गुणकरं सर्वदानाधिकं स्मृतम्।
अन्नात् [10]प्राणप्रजननं नृणां सञ्जायते सदा ॥१॥
[11]प्राणाप्यायनमात्रन्तु यो विप्राय प्रयच्छति।
दुर्भिक्षे तु विशेषेण [12]स[लभेताक्षयां दिवम्][13] ॥२॥

विशेषेणेति[14] सातिशयमित्यर्थः[15]।

हेमरत्नाम्बर-[16]धरोऽ[17]भुञ्जानो म्रियते नरः।
[18]अश्नन् विनाप्यलङ्कारैर्जीर्णवस्त्रोऽपि जीवति ॥३॥
तस्मात् प्रदद्याद्विप्रेभ्यः संस्कृतान्नं सदक्षिणम्।
तेनेह कीर्तिमाप्नोति स्वर्गं [19][चानन्तकं तथा] ॥४॥

अर्चितेभ्यो ब्राह्मणेभ्योऽर्चितमन्नं[20] दद्यात्। ॐ अद्यामुकसगोत्रेभ्योऽमुकवेदामुकशाखाध्यायिभ्योऽमुकदेवशर्मभ्यो[21] युष्मभ्यमक्षयस्वर्गप्राप्तिकामोऽहमेतत [22]सुसंस्कृतमन्नं

---

1 I. O. omits it
2 A ब्राह्मणेपि for the bracketed portion
3 I. O. एवञ्च
4 A सामान्यं०
5 I. O. ०त्यर्थेन
6 A स्पृष्ट्वा
7 I. O. यथायथसम्भवम् only for the bracketed portion
8 A ददामि
9 A ०मर्चितेभ्य:
10 A प्राणां प्रजनानां
11 A प्राण०
12 A स
13 I. O. लभेताक्षया दिवं, A लभेताक्षयं फलं for the b. p.
14 I. O. विशेषेण
15 I. O. सातिशयामित्यर्थ:
16 I. O. ०युतो
17 I. O. omits the avagraha
18 A अश्नन्विनाप्यलङ्कारै०
19 I. O. चानन्तकस्तथा, A चानन्तं तथा for the bracketed portion
20 A ०र्चितान्नं
21 A ०मुकामुकशर्मभ्यो
22 I. O. संस्कृतान्नं

ददानि। प्रतिग्रहीतारः स्वस्तीत्युक्त्वा सावित्रीं पठित्वा अन्नमिदं प्रजापतिदैवतमित्युक्त्वा यथा-शाखं कामस्तुतिं पठेत्। ततः ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं युष्मभ्यमहं दक्षिणामेतत् काञ्चनं ददानि। प्रतिग्रहीतारः स्वस्तीत्युक्त्वाऽन्नं स्पृशेयुः। ब्राह्मणे दातरि संस्कृतान्नं पक्वान्नं शूद्रे तु [1]शष्कुलाजादयो द्रष्टव्याः।

स्कन्दपुराणे :—

अन्नं यस्तु सुसंस्कृत्य प्रयच्छेत द्विजातये।
[2]सर्वान् कामानवाप्नोति पूज्यते च त्रिविष्टपे ॥५॥

अत्र द्विजातय इत्येकवचनं जाति-[3]परत्वादविवक्षितं फलबाहुल्या-[4]द्बहुभ्यो दानावगतेः। [5]आवृत्य वा दातव्यम्।

मयूरहंसयुक्तञ्च सर्वकामसमृद्धिवत्।
विमानं सूर्य्यसङ्काश-[6]मन्नदो लभते शुभम् ॥६॥
यदि [7]मानुषतां याति कदाचिन्नरसत्तम[8]।
धनधान्यसमाकीर्णे कुले जायेत रूपवान् ॥७॥
यथाशक्त्या तु तद्दद्याद्दिवसे दिवसे नरः।
स तेन कर्मणा प्राप्तः प्रजापतिसलोकताम् ॥८॥

दिवसे दिवसे [9]दद्यादिति तेन कर्मणा जन्मान्तरेऽपि प्रतिदिनमन्नमसौ ददातीत्यर्थः। अर्चितेभ्यो यथेच्छसंख्यब्राह्मणेभ्योऽन्नं सुसंस्कृतमर्चितम् ॐ[10] अद्यादि [11]युष्मभ्यमन्तमुक्त्वा दद्यात्। स्कन्दपुराणोक्त-द्विजातिसम्प्रदान-[12]कान्नदानफलप्राप्तिकामोऽहमेतत् सुसंस्कृतमन्नं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा :—

कदाचिदपि[13] यो दद्यादन्नं विप्राय [14]सत्कृतम्।
तस्यापि तच्छतगुणं सहस्रगुणमेव च।

---

1 I. O. सर्वसाद्यामयो
2 I. O. सर्व्व
3 I. O. वचन and A वक्त for पर
4 I. O. ब
5 I. O. and A आवृत्वा
6 A ०मन्नदानप्रभावत्वं
7 I. O. मायुवता
8 Both I. O. and A ०सत्तमः
9 A दद्यात्
10 A omits it
11 A तुभ्यमन्त०
12 A ०त्वान्न०
13 I. O. कदाचिदापं
14 A संस्कृतं

[1]सत्कृतं सत्कार-[2]पूर्वकं यथा स्यात् ।

[3][उपतिष्ठति लोकेषु इहापि च सुखी भवेत् ॥९॥

जन्मसंस्कारविद्याशालिने प्रणिपातपूजादिना [4]सत्कृत्य ब्राह्मणाय यथालाभमर्चित-मन्नं[5] दद्यात् । ] ॐ [6]अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं स्कन्दपुराणोक्त-विप्रसम्प्रदानकान्नदान[7]-फलप्राप्तिकामोऽहमेतदन्नं[8] ददानि । [9][प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा अन्नमिदं प्रजापतिदैवतमित्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामेतत् काञ्चनं ददानि । ] प्रतिग्रहीता स्वस्तीत्युक्त्वा अन्नं स्पृशेत् ।

वामनपुराणे (६५।४४) ब्राह्मणाधिकारे :—

दासीदासमलङ्कारमन्नं [10]षड्रससंयुतम् ।

[11]पुरुषोत्तमतुष्ट्यर्थं प्रदेयं सार्वकालिकम् ॥१०॥

सार्वकालिक-[12]मनियतकालिकं [13]षड्रसा मधुरादयः । अर्चिताय ब्राह्मणाय [14]षड्रस-व्यञ्जन-[15]सहितमन्नम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । पुरुषोत्तमतुष्टये[16] एतत् [17]षड्रस-संयुतमन्नं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

नन्दिपुराणे :—

ये च भक्त्या प्रयच्छन्ति गुडपानकमुत्तमम् ।

ओदनञ्च [18]द्विजाग्रेभ्यो विशुद्धेनान्तरात्मना[19] ॥११॥

---

1 A संस्कृतं
2 I. O. ०पूर्व्वं
3 I. O. omits the bracketed portion
4 A संस्कृताय
5 A ०मर्च्चितामन्नमतं
6 A omits अद्य
7 A omits दान
8 I. O. ०मन्नं
9 A omits the bracketed portion
10 I. O. सड्रस०
11 Corrected from Vāmana P. I. O. and A पुरुषोत्तमस्य तुष्ट्यर्थं
12 I. O. सा for म
13 I. O. सड्रसा
14 I. O. सड्रस०
15 A omits सहित
16 A omits ये
17 I. O. सड्रससंयुतमन्नं
18 A द्विजातिभ्यो
19 A ०त्मने

न्कारा‍द्दानमन्त्र[1] समुच्चितम्[2] ।

ते यान्ति काञ्चनैर्दिव्यैर्विविधैश्च [3]यमालयम् ।

वरस्त्रीभिर्यथा-[4]कामं सेव्यमानाः[5] पुनः पुनः ॥१२॥

गुड-[6]पानकं गुड-[7]मिश्रितपानकम् । द्विजाग्र्येभ्य इति बहुवचनं [8]दातृबहुत्वात् । विद्यातपःसम्पन्नायार्चिताय [9]ब्राह्मणायार्चितं गुडपानकमन्नञ्च ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । नन्दिपुराणोक्तगुडपानकौ[10]-दनदानफलप्राप्तिकामोऽहमेतद् गुडपानकमोदनञ्च ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा :—

सम्भोजयेत [11]यो [12][भक्तं ब्राह्मणं] तीर्थ-[13]चारिणम् ।

तस्यामृतप्रवाहि-[14][ण्यो नद्यस्तिष्ठन्ति] सर्वशः ।

स्वर्गे नास्य च सन्देहो [15][यत्र यत्रापि कामयेत् ] ॥१३॥

स्वर्गे [16][यत्र यमर्थं ] कामयते तत्र नास्य सन्देहो निश्चिता प्राप्तिरित्यर्थः । तीर्थचारि[17]-ब्राह्मणाया-[18]र्चितायार्चितं भक्तम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । नन्दिपुराणोक्ततीर्थ-[19][चारिब्राह्मणसम्प्रदानकभक्तदान]-फलप्राप्तिकामोऽहमेतद्भक्तं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

[20]ब्रह्मपुराणे :—

[21]अवाप्य प्राणसन्देहं [22]कायक्लेशसमर्जितम् ।

अन्नं दत्त्वा द्विजातिभ्यः शूद्रः [23]पापात् प्रमुच्यते ॥१४॥

---

1 A ०मात्र
2 Both I. O. and A समुचितं
3 A ममालयं
4 I. O. ०ष्टिये:
5 A सेव्यमान:
6 I. O. ०पान
7 I O. ०मिश्रित०
8 I. O. दातृबहुत्वापेक्षं
9 A omits ब्राह्मणाय
10 A नौ for नकौ
11 A reads च before it
12 I. O. भक्तं ब्राह्मणं for the bracketed portion
13 A ०चारिणं
14 I. O. ण्या नद्यस्तिष्ठन्ति for the bracketed portion
15 A यत्रापि चापि कारयेत् for the bracketed portion
16 A यत्रार्थं यद्यं for the b. p.
17 I. O. तीर्थचारि०, A तीर्थायारि०
18 A omits र्चिताया
19 A यातृसंप्रदान for the bracketed portion
20 I. O. ब्राह्मपुराणे
21 I. O. अवाप्य
22 A कायक्लेशसमर्जितं, I. O. कायक्लेशसमर्जितं
23 A पापाद्विमुच्यते

अन्नमामान्नम्। शूद्रो [1][युद्धकान्तारदुर्ग]-लङ्घनादिनाऽर्जितमामान्नमर्चितमर्चितेभ्यो ब्राह्मणेभ्य ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। पाप-[2]प्रमोचनकामोऽहमेत-[3]दन्नं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा शूद्राधिकारे :—

औरसेन बलेनान्नमर्जयित्वाऽविहिंसकः।
यः प्रयच्छति विप्रेभ्यो [4][न स दुर्गाणि] सेवते ॥१५॥

शूद्राऽर्चितेभ्यो ब्राह्मणेभ्यः परहिंसाव्यतिरेकेण [5]औरसबलार्जित-[6]मामान्नमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [7]ब्रह्मपुराणोक्तौरस[8]-बलार्जितान्नदानफलप्राप्तिकामोऽहमेतदन्नं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

[9]तथा शूद्राधिकारे :—

न्यायेनावाप्त-[10][मन्नन्तु नरो] हर्षसमन्वितः।
द्विजेभ्यो वेदवृद्धेभ्यो दत्त्वा पापात् प्रमुच्यते ॥१६॥

शूद्रो न्यायार्जितमामान्न-[11]मर्चितमर्चितेभ्यो वेदविद्ब्राह्मणेभ्यः [12]प्रमोदपूर्वकम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। पाप-[13]प्रमोचनकामोऽहमेतदन्नं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा :—

यश्च वाकिञ्चनं विप्रं [14]भोज्यैः पर्वसु पूजयेत्।
स सर्वकामसम्पूर्णो[15] नरो लोके महीयते ॥१७॥

अकिञ्चनं दरिद्रं पर्वसु अमावस्यादिषु पञ्चसु। उक्त-[16]समये दरिद्राय जन्मसंस्कारविद्यायुक्तायार्चिताय [17][ब्राह्मणाय नाना]-व्यञ्जनसहितमन्नम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा

---

1 A omits the bracketed portion
2 I. O. ०प्रमोचक०, A ०प्रशमन०
3 I. O. omits ह
4 I. O. नासद्धर्माचि for the bracketed portion
5 A स for औरस
6 I. O. मनसान्न for मामान्न
7 I. O. ब्राह्म०
8 A ०पुराणोक्तस०
9 A omits it
10 I. O. मन्नंत नरो and A मन्नन्तु नाना for the bracketed portion
11 I. O. omits मर्चित
12 I. O. प्रमोदक
13 I. O. ०प्रमोचक०, A ०प्रशमन०
14 I. O. भोगैः
15 I. O. ०सम्पूर्णो
16 A omits it
17 I. O. ब्राह्मणाय and A नाना for the bracketed portion

दद्यात् । सर्वकामसम्पूर्ण-[1]लोकप्राप्तिकामोऽहमेतद्भोज्यं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । एवं प्रतिपर्वसु यथाशक्ति दद्यात् ।

तथा :—

अन्नं ये तु प्रयच्छन्ति ब्राह्मणेभ्यः सुसंस्कृतम् ।
[2]श्रोत्रियेभ्यो विशेषेण भक्त्या परमया युताः ॥१८॥
तरुणीभिर्वरस्त्रीभिः सेव्यमानाः प्रयत्नतः ।
धर्मराजपुरं यान्ति विमानैरभ्यलङ्कृतैः ॥१९॥

दातृबहुत्वापेक्षया[3] सम्प्रदानबहुत्वम् । अर्चिताय ब्राह्मणायार्चितं[4] सुसंस्कृतमन्नं प्रणतिपूर्वकम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [5]ब्रह्मपुराणोक्त-ब्राह्मणमात्रसम्प्रदानक-सुसंस्कृतान्नदानफलप्राप्तिकामोऽह-[6][मेतत् सुसंस्कृतमर्चितमन्नं[7]प्रणतिपूर्वकं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । श्रोत्रियाय दानवाक्ये ब्रह्मपुराणोक्त]-श्रोत्रियसम्प्रदानक-सुसंस्कृतान्नदानफलप्राप्तिकामोऽहमिति विशेषः ।

[8]तथा :—

यावल्लब्धं प्रदातव्यं द्विजातिभ्योऽन्नमुत्तमम् ।
स्वाध्याय-[9]समुपेतेभ्यः प्रहृष्टेनान्तरात्मना ॥२०॥

यावल्लब्धं यथाशक्त्युपात्तम् ।

यस्य ह्यन्नमुपाश्नाति ब्राह्मणानां शतद्वयम् ।
प्रहृष्टमनसा दत्तं न स तिर्यग्गतिर्भवेत् ॥२१॥

यथाशक्त्युपात्तोपकरणसहितमुत्तम[10]-मन्नमुपादाय [11]स्वाध्याययुक्तशतद्वयसंख्यब्राह्मणेभ्य उत्सृज्य दद्यात् । ॐ अद्य [12]ब्रह्मपुराणोक्त-ब्राह्मणशतद्वयसम्प्रदानकान्नदानफलप्राप्तिकामोऽहं [13]यथासम्भवगोत्रनामभ्यः [14][वेदविद्भ्यो शताभ्यां ब्राह्मणेभ्यः] यावल्लब्धमुत्तममन्नं ददानि ।

---

1 I. O. प्रजा
2 I. O. अर्चितेभ्यो
3 I. O. ०पेक्षं
4 A अर्चितं after सुसंस्कृतम्
5 I. O. ब्राह्म०
6 I. O. omits the bracketed portion
7 A प्रणमति
8 A omits it
9 I. O. ०समयेतेभ्यः
10 A omits मुत्तम
11 A स्वान्याय०, I. O. आध्याय०
12 I. O. ब्राह्म०
13 I. O. यथासम्भवं नामगोत्रनामभ्यः
14 I. O. शताभ्यां ब्राह्मणाभ्यां and A वेदविद्भ्यो ब्राह्मणेभ्यः for the bracketed portion

दक्षिणा पूर्ववद् यथासम्भवगोत्रनामोल्लेखेन [1]कस्मैचिदेकस्मै देयेति। ततो यथासम्भवं [2][समुदितान् ब्राह्मणान्] भोजयेत्।

आग्नेयपुराणे:—

सुसंस्कृतञ्च[3] यो दद्यादन्नं [4]श्रद्धासमन्वितः।

इन्द्रलोके वसेत् सोऽपि यावदिन्द्राश्चतुर्दश ॥२२॥

सुसंस्कृतं सुसिद्धं [5]दाहादिदोषरहितञ्च। अर्चितं सुसंस्कृतमन्नमर्चिताय ब्राह्मणाय [6]ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। आग्नेयपुराणोक्तसुसंस्कृतान्नदानफल[7]-प्राप्तिकामोऽहमेतत् सुसंस्कृतमन्नं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। फलोत्कर्षश्रुतेश्च[8] यथेच्छमात्रत्व[9] दानम्।

कूर्मपुराणे (२।२६।१७):—

दद्यादहरहस्त्वन्नं श्रद्धया ब्रह्मचारिणे।

सर्वपापविनिर्मुक्तो [10]ब्रह्मणः स्थानमाप्नुयात् ॥२३॥

अहरहरिति यदा यदा [11]ब्रह्मचारी प्राप्यते तदा तदा तस्मै भिक्षा [12]प्रदातव्येत्यर्थः। इदमनुप्रानमात्रं[13] [14]त्रैवर्णिकदेयञ्च।

शिवपुराणे:—

[15]अन्नं यस्तु प्रयच्छेत सम्वीतं ब्राह्मणाय वै।

राज्यस्थानमवाप्नोति स्वर्गञ्चाप्नोति विज्वरः ॥२४॥

सम्वीतं सुसंस्कृतम्। अर्चिताय ब्राह्मणाय सुसंस्कृतमर्चित[16]-मन्नम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। शिवपुराणोक्तान्नदानफलप्राप्तिकामोऽहमेतदन्नं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

---

1 A कस्मै वेदविदे कस्मै
2 A समुदितो ब्राह्मण and I. O. समुदितो ब्राह्मणा for the bracketed portion
3 A सुसंस्कृतं
4 A श्राद्ध०
5 I. O. दाह्यादि०
6 A omits ॐ
7 A omits फल
8 A ०कर्षादितेच्छा
9 I. O. ०त्वा, A ०त्वता
10 A ब्राह्मण, K. P. ब्राह्मणां
11 A ब्रह्म
12 I. O. omits प्र०
13 I. O. ०मात्र
14 A त्रैवर्णिकन्तु देयं
15 A चान्नं
16 A omits मर्चित

पद्मपुराणे (सृष्टिखण्डम् १५।१४०ख—१४१क) :—

यः पात्रपूरणीं भिक्षां यतीनान्तु प्रयच्छति ।

[1]विमुक्तः सर्वपापेभ्यो [2]न स दुर्गतिमाप्नुयात् ॥२५॥

यथासम्भवमुपस्थिताय [3]यतये भिक्षापात्रं यावता [4]पूर्य्यते तावदन्नं यथाशक्ति [5]दद्यात् । अनुष्ठानमात्रमिदम् ।

महाभारते (अनु—६५।११) :—

पायसं सर्पिषा मिश्रं द्विजेभ्यो यः प्रयच्छति ।

गृहं तस्य न रक्षांसि धर्षयन्ति कदाचन ॥२६॥

अर्च्चितेभ्यो ब्राह्मणेभ्यो घृतमिश्रितं[6] पायसमर्च्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [7][महाभारतोक्तघृतमिश्रित]-पायसदानफलप्राप्तिकामोऽहमेतं [8]सर्पिर्मिश्रं पायसं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा :—

यथाशक्ति [9][च यो] दद्यादन्नं विप्रे [10]सुसंस्कृतम् ।

स तेन कर्मणाप्नोति प्रजापतिसलोकताम् ॥२७॥

विप्रे जन्मसंस्कारविद्यायुक्ते ब्राह्मणे सुसंस्कृतं सुसिद्धं [11]दाहादिदोषरहितञ्च । यथाशक्ति सोपकरणमन्नमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । प्रजापतिसालोक्यप्राप्तिकामोऽहमेतत् सुसंस्कृतमन्नं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । यथाशक्ति दद्यादिति श्रुतेः [12]शक्तौ बहुभ्योऽपि दद्यात् । बहुभ्यो दाने ॐ अद्यादि युष्मभ्यमन्तमुक्त्वा दानमिति [13]विशेषः ।

[14]तथा ( अनु—५७।२०ख) :—

अन्न-[15]पानप्रदानेन तृप्यन्ते कामभोगतः ॥२८॥

---

1 A विमुक्त
2 Padma p. नासौ
3 A प्रयतये
4 A पूर्य्यन्ते
5 I. O. दद्यादित्यनुष्ठान०
6 I. O. घृतमिश्रं
7 A महाभारतोक्तानियतकालिक for the bracketed portion
8 I. O. सर्पिषा मिश्रं
9 A omits the bracketed portion
10 A सु०
11 I. O. दाहादि०
12 A शक्तौ
13 A शेषः
14 A omits it
15 A ०दान०

अर्चिताय [1]ब्राह्मणायार्चितमन्नम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [2]कामभोग-तृप्तिकामोऽहमेतदन्नं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा ( अनु—५७।३७क ) :—

[3]भक्तान्नपानीयरस-[4]प्रदाता सर्वान् समाप्नोति रसान् प्रकामम् ॥२९॥

[5][अर्चिताय ब्राह्मणायार्चितमन्नम्] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। अत्यर्थ-सर्व[6]-रसप्राप्तिकामोऽहमेतदन्नं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। [7][दानधर्मे ब्राह्मणाय दानप्रकरणे] पाठात् ब्राह्मणसम्प्रदानकमिदं दानद्वयम्।

तथा (अनु—११२।१५) :—

ब्राह्मणानां सहस्राणि दश भोज्य[8] नरर्षभ[9]।
[10]नरोऽधर्मात् प्रमुच्येत पापेष्वपि रतः सदा ॥३०॥

यथोक्तसंख्यब्राह्मणेभ्यो [11]भोज्यान्युत्सृज्य दद्यात्। [12]ॐ यथासम्भवगोत्र-[13]नामभ्यो दशसहस्रसंख्यब्राह्मणेभ्यः पापक्षयकामोऽहं [14]दशसहस्रसंख्यानि भोज्यानि उत्सृजे[15]। ततो ब्राह्मण-[16]सहस्रदशकपूरणावधि भोज्यानि दद्यात्।

तथा (अनु—११२।१४) :—

यस्य [17]ह्यन्नमुपाश्नन्ति ब्राह्मणानां [18][शता दश]।
हृष्टेन मनसा दत्तं न [19]स तिर्यग्गतिर्भवेत् ॥३१॥

यथाशक्ति सहस्रसंख्यब्राह्मणेभ्योऽन्न-[20]मुत्सृज्य दद्यात्। [21]तिर्यग्गत्यगमनकामोऽहं

1 I. O. ब्राह्मणार्च्चितमन्नम्
2 A ॐ before it
3 I. O. भक्तान्न॰
4 A ॰प्रदात्
5 A ॐ अर्च्चिताय भोगतृप्तिकामोऽह-मेतदन्नं for the bracketed portion
6 A omits सर्व
7 A तथा दानधर्मे दानप्रकरण for the bracketed portion
8 A भोज्यं
9 I. O. and A नवर्षभ
10 A नरो धर्मा
11 A भोज्यान्नं उत्सृज्य, I. O. भोज्यानुत्सृज्य
12 A omits it
13 I. O. ॰सनामभ्यो
14 I. O. दशसहस्रसंख्या, A दशसहस्रं
15 I. O. उत्सृज्य, A उत्सृजेत्
16 I. O. omits सहस्र
17 I. O. शून्य॰ for ह्यन्न॰
18 A शतं सदा for the bracketed portion
19 A च
20 A ॰मुतसृजेत्
21 I. O. अतिर्यग्गतिभवन॰

यथासम्भवगोत्रनामभ्यः [1]सहस्राय ब्राह्मणेभ्यो यथासम्भवमन्नमुत्-[2]सृजे। ततो ब्राह्मण-सहस्रपूरणावधि अन्नं दद्यात्।

तथा (अनु—११२।१६) :—

भैक्षेणान्नं समाहृत्य विप्रो वेदपुरस्कृतः।
[3][स्वाध्यायनिरते विप्रे] [4]दत्त्वेह सुखमेधते ॥३२॥

भैक्षमनेक-[5]गृहार्जिता भिक्षा। [6][ब्राह्मणोऽनेकगृहा-[7]र्जितभिक्षासमा]-हृतमन्न-[8][मर्चित-मर्चिताय] स्वाध्यायशालिने ब्राह्मणाय ॐ अद्यादि तुभ्यमन्नमुक्त्वा दद्यात्। सुखप्राप्ति-कामोऽहमेतदन्नं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (अनु—११२।२८-२६) :—

भोजयित्वा दशशतं नरो वेदविदां नृप।
न्याय-[9]विद्धर्मविदुषां स्मृतिभाष्यविदां[10] तथा ॥३३॥
न याति नरकं घोरं [मश्चारश्च न][11] सेवते।
सर्वकामसमायुक्तः प्रेत्य चाप्यश्नुते सुखम् ॥३४॥

यथोक्तसंख्येभ्यो वेदविद्भ्यो ब्राह्मणेभ्यो [12]भोज्यान्युत्सृज्य दद्यात्। ॐ यथासम्भवगोत्र-नामभ्यो वेदविद्भ्यः [13]सहस्राय ब्राह्मणेभ्यो महाभारतोक्तवेदवित्-[14]सहस्रसंप्रदानकभोज्यदानफल-प्राप्तिकामोऽहं [15]सहस्रभोज्यान्युत्सृजे। [16]कस्मैचिद् ब्राह्मणाय दाक्षणादानं पूर्ववत्। न्याय-विद्-धर्मवित्-स्मृतिविद्-[भाष्यविन्मिलित][17]-ब्राह्मणसंप्रदानक-[18][भोज्यदानेषु प्रत्येक]-वाक्येषु न्यायविद्भ्यो [19][धर्मविद्भ्यो वा स्मृतिविद्भ्यो भाष्यविद्भ्यो वा मिलितेभ्यो] वेत्यूहनीयम्।

---

1 A सहस्र
2 A ०सृजेत्, I. O. ०सृज्य
3 I. O. स्वाध्यायनिरतो विप्र for the bracketed portion
4 I. O. and A' दत्त्वैव
5 I. O. ०गृहान्वितो
6 I. O. मया only for the bracketed portion
7 A ०न्वितभिक्ष०
8 A मर्चिय for the bracketed portion
9 A ०व०
10 I. O. ०विदा
11 A संसारान्तं पूर्ववत। वान्तश्च for the bracketed portion
12 A' भोज्यान्नमुतसृज्य, I. O. भोज्यानुत्सृज्य
13 A' सहस्र
14 A omits सहस्र
15 A भोज्यानुत्सृजेत्, I. O. सहस्र-भोज्यान्नमुत्सृज्य
16 A कस्यचिद
17 I. O. भाष्यविद्भिर्मिलिते and A भाष्य-विन्नीतिविद for the bracketed portion
18 A दानेषु प्रत्येक and I.O. भोज्य-दानफलप्राप्तिकामोऽहं for the bracketed portion
19 A' वा स्मृतिविद्भ्यो वा स्मृति तेभ्यो for the b. p.

तथा (अनु—६३।२४ख) :—

नित्यं मिष्टान्नदायी च स्वर्गे वसति सत्कृतः ॥३५॥

[1]अस्य ब्राह्मण-[2]संप्रदानकदानप्रकरणे [पाठाद् ब्राह्मणेभ्यो दानम् । ब्राह्मणेभ्यो मिष्टमन्नं यथेष्टकालं[3] सङ्कल्प्य दद्यात् । तद् यथा यथासम्भवगोत्रनामभ्यो ब्राह्मणेभ्यः सत्कारपूर्वकस्वर्गवासप्राप्तिकामोऽहं मिष्टान्नं दास्ये । तदवधि यथेष्टकालं यथासम्भवं[4] मिष्टमन्नं ब्राह्मणेभ्यो दद्यात् ।

विष्णुधर्मोत्तरे (३।३१५।१०क, ११ख )][5]ब्राह्मणाय दानानुवृत्तौ :—

परमान्नप्रदानेन तृप्तिर्भवति शाश्वती ।

श्रान्तायादृष्टपूर्वाय तस्य पुण्यफलं महत्[6] ॥३६॥

उक्तरूपाय ब्राह्मणायार्चितायार्चितं पायसम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्तपरमान्नदानफलप्राप्तिकामोऽहमेतत् परमान्नं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (३।३१६।७ख) :—

विद्याध्ययनसक्ता[7]-नामन्नदानं महाफलम् ॥३७॥

श्रुताध्ययनसम्पन्नेभ्यो ब्राह्मणेभ्योऽर्चितेभ्योऽर्चितमन्नम् ॐ अद्यादि [8]युष्मभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्त-विद्याध्ययनसक्त[9]-पात्रकान्नदानफलप्राप्तिकामोऽहमेतदन्नं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (३।३१६।२२) :—

बाले क्रीडनकं दत्त्वा मिष्टमन्नं तथैव च ।

फलं मनोहरञ्चापि अग्निष्टोमफलं लभेत् ॥३८॥

अर्चिताय वटवे[10] अर्चितं मिष्टमन्नम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । अग्निष्टोमफलप्राप्तिकामोऽहमेतत् मिष्टान्नं[11] ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

---

1 I. O. अन्य
2 A °सं प्रदानप्रकरणात
3 I. O. यथेष्टकाल after this
4 I. O. यथासम्भव
5 A omits the bracketed portion
6 I. O. भृणु
7 A °सक्ता°
8 A तुभ्यमन्त°
9 A °सक्त
10 I. O. बाले
11 I. O. मिष्टमन्नं

तथा :—

[1]देवमुद्दिश्य विप्राणां यो ददातीह भोजनम् ।

स देवः प्रीतिमानस्य कामानिष्टान् प्रयच्छति ॥३६॥

भोजनं भोजनीयमन्नम् । अर्चितेभ्यो ब्राह्मणेभ्योऽर्चितमन्नम् ॐ अद्यादि तुभ्यमन्त-मुक्त्वा दद्यात् । अमुकदेवप्रीतय एतद्भोजनं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे अन्नदानावर्तः ।

1 I. O. देवानुद्दिश्य

# अथ विष्णुदैवतभक्ष्यदानावर्तः । (१७)

नन्दिपुराणे :—

भक्षयेद्विविधैर्भक्ष्यै[1]-र्ब्राह्मणं वेदपारगम् ।

तस्यामृतप्रवाहिण्यो[2] [नद्यस्तिष्ठन्ति सर्वशः ॥१॥

अत्र यजमानो विद्यावेदवतेऽर्चिताय ब्राह्मणायार्चितं नानाविधं पिष्टकादिभक्ष्यं दद्यात् । ॐ अद्यामुकसगोत्रेभ्योऽमुकामुकवेदामुकामुकशाखाध्यायिने]ऽमुकदेवशर्मणे तुभ्यं नन्दिपुराणोक्त-भक्ष्यदानफलप्राप्तिकामोऽहमेतद्भक्ष्यं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा भक्ष्यमिदं विष्णुदैवतमित्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं [3]दक्षिणामेतत् काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा भक्ष्यं[4] स्पृशेत् ।

महाभारते (अनु—५७।३७क) :—

भक्ष्यान्न-पानीय-रसप्रदाता सर्वान् समाप्नोति रसान् प्रकामम् ॥२॥

भक्ष्याणि पिष्टकफलमूलानि । एषामन्यतममुपादायार्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [5][ अनन्त-सर्वरसप्राप्तिकामोऽहमेतद् भक्ष्यं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

विष्णुधर्मोत्तरे (३।३१५।७ख) :—

भक्ष्यदः स्वर्गमाप्नोति ॥३॥

भक्ष्याणां पिष्टकफलमूलानामन्यतममर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । ] स्वर्गप्राप्तिकामोऽहमेतद् भक्ष्यं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे भक्ष्यदानावर्तः ।

---

1 I. O. सम्भोजयेत यो भक्त्या

2 A' omits the bracketed portion

3 A' omits दक्षिणाम्

4 A omits भक्ष्यं

5 I. O. omits the bracketed portion

# अथ सोमदैवतलवणदानावर्तः । (१८)

सम्वर्तः—

गुडमिक्षुरसञ्चैव लवणं व्यञ्जनानि च ।

सुरभीणि च पानानि दत्त्वात्यन्तं[1] सुखी भवेत ॥१॥

अत्र यजमानोऽर्चिताय ब्राह्मणायार्चितं लवणं दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यमत्यन्तसुखप्राप्तिकामोऽहमेतल्लवणं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा लवणमिदं सोमदैवतमित्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामेतत् काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा लवणं स्पृशेत ।

आदित्यपुराणे :—

लवणञ्च यथाशक्ति भक्त्या ये वै ददन्ति च ।

तेषां पुण्यकृतां[2] लोकं गवां लोकं व्रजन्ति ते ॥२॥

यथाशक्ति लवणमुपादायार्चिताय ब्राह्मणाय अर्चितं लवणम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात । आदित्यपुराणोक्त-लवणदानफलप्राप्तिकामोऽहमेतल्लवणं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

विष्णुधर्मे :—

लवणस्य प्रदातारस्तिलानां सर्पिषां तथा ।

तेजस्विनोऽभिजायन्ते [3]भोगिनश्चिरजीविनः ॥३॥

अर्चिताय ब्राह्मणाय अर्चितं लवणम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोक्त[4]-लवणदानफलप्राप्तिकामोऽहमेतल्लवणं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत ।

विष्णुधर्मोत्तरे ( ३।३१४।१३ख ) :—

सर्वान् कामानवाप्नोति लवणं यः प्रयच्छति ॥४॥

अर्चिताय ब्राह्मणायार्चितं लवणम् अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णु-

---

1 I. O. दत्त्वात्यर्थं

2 I. O. पुण्यकृतं

3 A योगिन०

4 I. O. विष्णुधर्मोत्तरोक्त

धर्मोत्तरोक्त-लवणदानफलप्राप्तिकामोऽहमेतल्लवणं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। अत्र काम्योत्कर्षाद्देयोत्कर्षः कर्तव्यः[1]।

तथा (३।३१६।२७):—

यवसानां[2] प्रदानेन धेनुमत्सु द्विजातिषु।
लवणस्य च धर्मज्ञ फलमक्षयमश्नुते ॥५॥

धर्मज्ञ इति सम्बोधनम्। धेनुमद्भ्यो ब्राह्मणेभ्योऽर्चितेभ्यो[3]ऽर्चितं लवणं दद्यात्। ॐ अद्यामुकसगोत्रेभ्योऽमुकामुकवेदामुकामुकशाखाध्यायिभ्योऽमुकदेवशर्मभ्यो युष्मभ्यमक्षयफल-प्राप्तिकामोऽहमेतल्लवणं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे लवणदानावर्तः।

---

1 A omits कर्तव्यः
2 A यवषानां
3 A omits अर्चितेभ्यो

# अथ विष्णुदैवतघृतदानावर्तः। (१९)

## तत्र घृतदानप्रशंसा।

महाभारते ( अनु—६५।७-८ ) :—

बृहस्पतेर्भगवतः पूष्णश्चैव भगस्य च।
[1]अश्विनोश्चैव वह्नेश्च प्रीतिर्भवति सर्पिषा ॥१॥
परमं भेषजं ह्येतद् यज्ञानामेतदुत्तमम्।
रसानामुत्तमं चैतत् फलानाश्चैवमुत्तमम् ॥२॥

विष्णुधर्मे :—

घृतमग्निर्घृतं सोमो यन्मयाः सर्वदेवताः।
घृतं प्रयच्छता दत्ता भवन्त्यखिलदेवताः ॥३॥

## अथ दानम्।

याज्ञवल्क्यः (१।२१०) :—

भूदीपाश्चान्नवस्त्राम्भस्तिलसर्पिःप्रतिश्रयान्।
नैवेशिकस्वर्णधूर्यान् दत्त्वा स्वर्गे महीयते ॥४॥

अत्र यजमानोऽर्चिताय ब्राह्मणाय अर्चितं घृतं दद्यात्। ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं सोत्कर्षस्वर्गप्राप्तिकामोऽहमेतत् सर्पिर्ददानि। [प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा घृतमिदं विष्णुदैवतमित्युक्त्वा यथाशाखं कामस्तुतिं पठेत्। तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि][2]। प्रतिग्रहीता स्वस्तीत्युक्त्वा घृतं स्पृशेत्।

विष्णुः :—

मधुघृततिलदानेना[3]-रोग्यम् ॥५॥

अर्चिताय ब्राह्मणायार्चितं घृतम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। ॐ आरोग्यप्राप्तिकामोऽहमेतद्घृतं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

---

1 A भाजन०
2 A omits the bracketed portion
3 I. O. ०दानादा०

यमः ८—

तथा घृतप्रदानेन दीर्घं विन्दति जीवितम् ॥६॥

अर्चिताय ब्राह्मणायार्चितं घृतम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। दीर्घ[1]-जीवितप्राप्तिकामोऽहमेतद्घृतं ददानि[2]। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

महाभारते (अनु—६५।६) :—

फलकामो यशस्कामः पुष्टिकामश्च नित्यदा।

घृतं दद्याद्द्विजातिभ्यः पुरुषः शुचिरात्मवान् ॥७॥

यथेच्छसंख्यब्राह्मणेभ्योऽर्चितेभ्योऽर्चितानि घृतानि दद्यात्। ॐ अद्यामुकामुकसगोत्रेभ्योऽमुकामुकवेदामुकामुकशाखाध्यायिभ्योऽमुकदेवशर्मभ्यो युष्मभ्यं महाभारतोक्तघृतदानफलप्राप्तिकामोऽहमेतानि घृतानि ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। एतच्च नित्यदेतिपदश्रवणादावृत्य देयम्।

वराहपुराणे (२०६।१८ख-२२) चित्रगुप्तवाक्ये :—

दधि क्षीरं घृतञ्चैव येन दत्तं द्विजातिषु।

एष [आयातु नः पार्श्वे अस्मिन्][3] पूजां करोम्यहम्[4] ॥८॥

नीयतां नीयतां शीघ्रं [यत्र यत्र न चालयेत्][5]।

गोरसस्य तु पूर्णानि भाजनानि सहस्रशः ॥९॥

[6]तत्र दत्त्वा च पीत्वा च बान्धवेभ्यो विभागशः।

ततः पश्चादयं यातु यत्र लोकोऽनसूयकः ॥१०॥

तत्रैव वसतां[7] वीरो[8] बहुवर्षशतान्ययम्।

बहुसुन्दरनारीभिः सेव्यमानो महातपाः।

अमराख्यो भवेत्तत्र[9] [गोलोके सुसमाहितः][10] ॥११॥

---

1 A वृत॰
2 A omits ददानि
3 Varāha P. reads the b. p. as वा यातु नः पार्श्वमस्मै
4 I. O. and Varāha P. प्रयच्छथ
5 Corrected from Varāha P. I. O. and A यातु तिष्ठतु चालये for the b. p.
6 Varāha P. यत्र
7 I. O. and Varāha P. रमतां
8 Varāha P. धीरो
9 I. O. महातत्र
10 Varāha P. reads the b. p. as गोलोकेषु समाहितः

अर्चितेभ्यो यथेच्छसंख्यब्राह्मणेभ्योऽर्चितानि घृतानि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। वराहपुराणोक्त-घृतदानफलप्राप्तिकामोऽहमेतानि घृतानि ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

नन्दिपुराणे :—

ये च क्षीरं प्रयच्छन्ति घृतं मधु गुडं दधि।
ब्राह्मणेभ्यः प्रयत्नेन शुद्धेभ्यस्तु सुसंस्कृतम् ॥१२॥

सम्प्रदानबहुत्वं दातृबहुत्वापेक्षया[1], शुद्धेभ्यो जन्मविद्यासंस्कारसम्पन्नेभ्यः, सुसंस्कृतमपनीतकेशकीटादिकं सुरभि च।

चक्रवाकप्रयुक्तैस्तु विमानैश्च[2] हिरण्मयैः।
यान्ति गन्धर्ववादित्रैः सेव्यमाना यमालयम् ॥१३॥

अर्चिताय ब्राह्मणायार्चितमुत्कृष्टं घृतम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। नन्दिपुराणोक्त-घृतदानफलप्राप्तिकामोऽहमेतद् घृतं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

[3]विष्णुधर्मे :—

लवणस्य प्रदातारस्तिलानां [4]सर्पिषान्तथा।
तेजस्विनोऽभिजायन्ते भोगिनश्चिरजीविनः ॥१४॥

अर्चिताय ब्राह्मणायार्चितं घृतम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोक्त-सर्पिर्दानफलप्राप्तिकामोऽहमेतत् सर्पिर्ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे घृतदानावर्तः।

1 I. O. दातृबहुत्वापेक्षं
2 A विमानैस्तु
3 A विष्णुपुराणे, though it reads विष्णुधर्मोक्त three lines below
4 A सर्पिषस्तथा

# अथ विष्णुदैवतदधिदानावर्तः । (२०)

वराहपुराणे (२०६।१८ख-२२) चित्रगुप्तवाक्ये :—

दधि क्षीरं घृतञ्चैव येन दत्तं द्विजातिषु ।
एष [1][आयातु नः पार्श्वे अस्मिन् ] पूजां प्रयच्छथ ॥१॥
नीयतां नीयतां शीघ्रं [यत्र यत्र न चालयेत्][2] ।
गोरसस्य तु पूर्णानि भाजनानि सहस्रशः ॥२॥
[3]तत्र दत्त्वा च पीत्वा च बान्धवेभ्यो विभागशः ।
ततः पश्चादयं यातु यत्र लोकोऽनसूयकः ॥३॥
तत्रैव वसतां[4] वीरो[5] बहुवर्षशतान्यपि[6] ।
बहुसुन्दरनारीभिः सेव्यमानो महातपाः ।
अमराख्यो भवेत्तत्र [गोलोके सुसमाहितः][7] ॥४॥

अत्र यजमानोऽर्चितेभ्यो यथेच्छसंख्यब्राह्मणेभ्योऽर्चितानि दधीनि दद्यात् । ॐ अद्यामुकसगोत्रेभ्योऽमुकामुकवेदामुकामुकशाखाध्यायिभ्योऽमुकदेवशर्मभ्यो युष्मभ्यं वराहपुराणोक्त-दधिदानफलप्राप्तिकामोऽहमेतानि दधीनि ददानि । प्रतिग्रहीतारः स्वस्तीत्युक्त्वा सावित्रीं पठित्वा दधीदं विष्णुदैवतमित्युक्त्वा यथाशाखं कामस्तुतिं पठेयुः । ततः ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं युष्मभ्यमहं दक्षिणामिदं[8] काञ्चनं ददानि । प्रतिग्रहीतारः स्वस्तीत्युक्त्वा दधि स्पृशेयुः ।

नन्दिपुराणे :—

ये च क्षीरं प्रयच्छन्ति घृतं मधु गुडं दधि ।
ब्राह्मणेभ्यः प्रयत्नेन शुद्धेभ्यस्तु सुसंस्कृतम् ॥५॥

---

1 Varāha P. वा यातु नः पार्श्वमस्मै for the b. p.
2 Corrected from Varāha P. I. O. and A यातु तिष्ठतु चाक्षये for the b. p.
3 Varāha P. यत्र
4 I. O. and Varāha P. रमतां
5 Varāha P. धीरो
6 I. O. and Varāha P. ०शतान्यथ
7 Varāha P. गोलोकेषु समाहितः for the b. p.
8 I. O. दक्षिणामेतत्

चक्रवाकप्रयुक्तैस्तु विमानैश्च हिरण्मयैः ।
यान्ति गन्धर्ववादित्रैः सेव्यमाना यमालयम् ॥६॥

सम्प्रदानबहुत्वं दातृबहुत्वापेक्षम् । अर्चिताय जन्मविद्यासंस्कारसम्पन्नाय [1]ब्राह्मणायार्चितमपनीतकेशकीटादिकं[2] दधि दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं नन्दिपुराणोक्तदधिदानफलप्राप्तिकामोऽहमेतद्दधि ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा दधोदं विष्णुदैवतमित्युक्त्वा यथाशास्त्रं कामस्तुतिं पठेत् । [तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा दधि स्पृशेत् ।

विष्णुधर्मोत्तरे (३।२०६।६५ख) ][3] :—

तथा दध्नः प्रदानेन मङ्गलान्याप्नुते सदा ॥७॥

अर्चिताय ब्राह्मणायार्चितं दधि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्तदधिदानफलप्राप्तिकामोऽहमेतद्दधि ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे दधिदानावर्तः ।

1 A omits ब्राह्मणाय
2 A ०कीटादिरहितं
3 A omits the bracketed portion

# अथ विष्णुदैवतक्षीरदानावर्तः । (२१)

वराहपुराणे (२०६।१८ख-२२) चित्रगुप्तवाक्ये :—

दधि क्षीरं घृतञ्चैव येन दत्तं द्विजातिषु ।
एष [आयातु नः पार्श्वे अस्मिन्][1] पूजां प्रयच्छथ ॥१॥
नीयतां नीयतां शीघ्रं [यत्र यत्र न चालयेत्][2] ।
गोरसस्य तु पूर्णानि भाजनानि सहस्रशः ॥२॥
[3]तत्र दत्त्वा च पीत्वा च बान्धवेभ्यो विभागशः ।
ततः पश्चादयं यातु यत्र लोकोऽनसूयकः ॥३॥
तत्रैव वसतां[4] वीरो[5] बहुवर्षशतान्ययम् ।
बहुसुन्दरीनारीभिः सेव्यमानो महातपाः ।
अमराख्यो भवेत्तत्र [गोलोके सुसमाहितः][6] ॥४॥

अत्र यजमानोऽर्चितेभ्यो ब्राह्मणेभ्योऽर्चितानि क्षीराणि दद्यात् । ॐ अद्यामुक-सगोत्रेभ्योऽमुकामुकवेदामुकामुकशाखाध्यायिभ्योऽमुकामुकदेवशर्मभ्यो युष्मभ्यं वराहपुराणोक्त-क्षीरदानफलप्राप्तिकामोऽहमेतानि क्षीराणि ददानि । प्रतिग्रहीतारः स्वस्तीत्युक्त्वा सावित्रीं पठित्वा क्षीरमिदं विष्णुदैवतमित्युक्त्वा यथाशाखं कामस्तुतिं पठेयुः । ततः ॐ अद्य कृतैत द्दानप्रतिष्ठार्थं युष्मभ्यमहं दक्षिणामिदं काञ्चनं ददानि । प्रतिग्रहीतारः स्वस्तीत्युक्त्वा क्षीरं स्पृशेयुः ।

नन्दिपुराणे :—

ये च क्षीरं प्रयच्छन्ति घृतं मधु गुडं दधि ।
ब्राह्मणेभ्यः प्रयत्नेन शुद्धेभ्यस्तु सुसंस्कृतम् ॥५॥

---

1 Varāha P. reads the b. p. as वा यातु नः पार्श्वमद्य

2 Corrected from Varāha P. I. O. यातु तिष्ठतु चाक्षयम् for the b. p.

3 Varāha P. यत्र

4 I. O. and Varāha P. रमतां

5 Varāha P. धीरो

6 Varāha P. reads the b. p. as गोलोकेषु समाहितः

चक्रवाकप्रयुक्तैश्च विमानैश्च हिरण्मयैः ।
यान्ति गन्धर्ववादित्रैः सेव्यमाना यमालयम् ॥६॥

सम्प्रदानबहुत्वं दातृबहुत्वापेक्षया । अर्चिताय जन्मविद्यासंस्कारशालिने ब्राह्मणायार्चितमपनीतकेशकीटादिकं क्षीरं दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं नन्दिपुराणोक्त-क्षीरदानफलप्राप्तिकामोऽहमेतत क्षीरं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

[1][विष्णुधर्मोत्तरे (३।३०६।६६क) :—

क्षीरदस्तृप्तिमाप्नोति सर्वदुःखैर्विमुच्यते ॥७॥

अर्चिताय ब्राह्मणायार्चितं क्षीरम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोत्तरोक्तक्षीरदानफलप्राप्तिकामोऽहमेतत् क्षीरं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । ]

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे क्षीरदानावर्तः ।

1 A' omits the bracketed portion

# अथ सोमदैवतेक्षुरसदानावर्तः। (२२)

सम्वर्तः :—

गुडमिक्षुरसञ्चैव लवणं व्यञ्जनानि च।

सुरभीणि च पानानि दत्त्वात्यन्तं[1] सुखी भवेत् ॥१॥

अत्र यजमानोऽर्चिताय ब्राह्मणायार्चितं गुडं दद्यात्। ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यमत्यन्तसुखप्राप्तिकामोऽहमेतं गुडं ददानि। [प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा गुडोऽयं सोमदैवतमित्युक्त्वा यथाशाखं कामस्तुतिं पठेत्। ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि। ][2] प्रतिग्रहीता स्वस्तीत्युक्त्वा गुडं स्पृशेत्। [3]इक्षुरसदानवाक्ये तु गुडपदस्थाने इक्षुरसपदनिवेशो विशेषः।

नन्दिपुराणे :—

ये च क्षीरं प्रयच्छन्ति घृतं मधु गुडं दधि।

ब्राह्मणेभ्यः प्रयत्नेन शुद्धेभ्यस्तु सुसंस्कृतम् ॥२॥

चक्रवाकप्रयुक्तैस्तु विमानैश्च हिरण्मयैः।

यान्ति गन्धर्ववादित्रैः सेव्यमाना यमालयम् ॥३॥

अर्चिताय विद्यातपःसम्पन्नाय ब्राह्मणाय यथाक्रमर्चितं गुडम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। नन्दिपुराणोक्तगुडदानफलप्राप्तिकामोऽहमेतं गुडं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

विष्णुधर्मोत्तरे (३।३१४।१४क) :—

[4]सिकतादस्तथा तपः[5] ॥४॥

[6]प्राप्नोतीति शेषः। [सिकता शर्करा।][7] [8][अर्चिताय ब्राह्मणायार्चितां शर्कराम्[9]

---

1 A दत्त्वात्यथं

2 I. O. reads the bracketed portion twice

3 I. O. इक्षुरसदाने तु वाक्ये

4 A सिताद्स्तथा

5 V. D. श्रियम्. A omits it

6 I. O. प्राप्नोति

7 I. O. omits the bracketed portion

8 A omits the bracketed portion

9 I. O. °मर्चितं शर्करा

ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। तपःप्राप्तिकामोऽहमेतां सिकतां ददानि। स्वस्त्यादि-स्वीकारान्तं पूर्ववत्।

तथा (३।३१४।१२ख) :—

खण्डप्रदश्च सौभाग्यम् ॥५॥

प्राप्नोतीति शेषः।] अर्चिताय ब्राह्मणायार्चितं खण्डम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सौभाग्यप्राप्तिकामोऽहमेतत्खण्डं[1] ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते श्रीदानसागरे [2]ऐक्षवदानावर्तः।

---

1 A मेतं मीतां    2 I. O. ऐक्षदानावर्तः

## अथ विष्णुदैवतपानकदानावर्तः । (२३)

सम्वर्तः :—

गुडमिक्षुरसश्चैव लवणं व्यञ्जनानि च ।

सुरभीणि च पानानि दत्त्वात्यन्तं[1] सुखी भवेत् ॥१॥

पानानि पानकानि । सुरभीणि सुगन्धिद्रव्यसंयुतानि[2] । अत्र यजमानो[3][ऽर्चिताय ब्राह्मणाया]-र्चितानि सुरभिपानकानि दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे[4][तुभ्यमत्यन्तसुखप्राप्तिकामोऽहमेतानि सुरभीणि पानानि ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा पानानीमानि विष्णुदैवतानि इत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । ततः ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं]तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा पानकं स्पृशेत् ।

महाभारते (अनु—५७।२०ख) :—

अन्नपानप्रदानेन तृप्यन्ते कामभोगतः ॥२॥

पानं पानकम् । अर्चिताय ब्राह्मणायार्चितं पानकम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । कामभोगतृप्ति[5]-प्राप्तिकामोऽहमेतत् पानकं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

विष्णुधर्मोत्तरे (३।३१५।६) :—

पानकानि सुगन्धीनि शीतलानि प्रयच्छतः[6] ।

सर्वकामसमृद्धिः स्यान्नात्र कार्य्या विचारणा ॥३॥

सुगन्धीनि सुगन्धिद्रव्यसंयुतानि[7] । अर्चिताय ब्राह्मणायार्चितानि [8]सुगन्धिशीतलपान-

---

1 A दत्त्वाक्षयं
2 A सुगन्धद्रव्ययुतानि
3 A omits the bracketed portion
4 A omits the bracketed portion
5 A omits तृप्ति
6 A प्रयच्छत:
7 A सुगन्धिद्रव्ययुतानि
8 I. O. सुशीतल०

कानि ॐ अद्यादि तुभ्यमन्तमुक्ता दद्यात्। अमुककामोऽहमेतानि [1]सुगन्धिशीतलपानकानि ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३१५।८ख) :—

वारुणं लोकमाप्नोति तथा पानप्रदो नरः ॥८॥

अर्चिताय ब्राह्मणायार्चितं पानकम् ॐ अद्यादि तुभ्यमन्तमुक्ता दद्यात्। वारुण-लोकप्राप्तिकामोऽहमेतत् पानकं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

इति महाराजाधिराज-निःशङ्कशङ्कर श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे पानकदानावर्त्तः।

1 A सुगन्धीनि

# अथ वनस्पतिदैवत-[1]फलदानावर्तः । (२४)

[2]संवर्तः :—

फलमूलानि पानानि शाकानि विविधानि च ।
[3]पानानि दत्त्वा विप्रेभ्यो मुदा युक्तः सदा भवेत् ॥१॥

अत्र यजमानोऽर्चितेभ्यो यथेच्छसंख्यब्राह्मणेभ्योऽर्चितानि विविधानि फलानि दद्यात् । ॐ अद्यामुकसगोत्रेभ्योऽमुकामुकवेदामुकामुकशाखाध्यायिभ्योऽमुकामुकदेवशर्मभ्यो युष्मभ्यं सम्वर्तोक्तफलप्राप्तिकामोऽहमेतानि फलानि ददानि । [4][प्रतिग्रहीतारः स्वस्तीत्युक्त्वा सावित्रीं पठित्वा फलानि वनस्पतिदैवतानि इत्युक्त्वा यथाशाखं कामस्तुतिं पठेयुः । ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं युष्मभ्यमहं दक्षिणामिदं काञ्चनं ददानि । ] प्रतिग्रहीतारः स्वस्तीत्युक्त्वा फलानि स्पृशेयुः ।

स्कन्दपुराणे :—

फलानि यः प्रयच्छेत ब्राह्मणेभ्यः समाहितः ।
[5]फलानां तत्र भोगी स्याद्रूपेण सुभगश्च ह ॥२॥

अर्चितेभ्यो यथेच्छसंख्यब्राह्मणेभ्योऽर्चितानि फलानि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । स्कन्दपुराणोक्तफलदानप्राप्तिकामोऽहमेतानि फलानि ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

[6]ब्रह्मपुराणे :—

ये फलानि प्रयच्छन्ति पुष्पाणि सुरभीणि च ।
हंसयुक्तैर्विमानैस्तु यान्ति धर्मपुरं नराः ॥३॥

अत्र पुष्पाणि चेति समुच्चये चकारः । पुष्पदानेऽपीदं फलमित्यर्थः[7] । अर्चिताय ब्राह्मणायार्चितानि फलानि यथेच्छं दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं [8]ब्रह्मपुराणोक्तफलदानप्राप्तिकामोऽहमेतानि फलानि ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

---

1 A ०पानकदानावर्तः

2 A and I. O. omit संवर्तः, which is supplied from the following explanatory note

3 A यानानि दत्त्वा विप्रेभ्यो

4 I. O. omits the bracketed portion

5 A स तु भागी परत्र स्याद्०

6 I. O. ब्राह्मपुराणे

7 I. O. फलमित्यादेः

8 I. O. ब्राह्म०

वराहपुराणे (२०७।५४ख) :—

फलैस्तु लभते पुत्रम् ॥४॥

दत्तैरिति शेषः। अर्चिताय ब्राह्मणायार्चितानि फलानि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। पुत्रप्राप्तिकामोऽहमेतानि फलानि ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

महाभारते (अनु—५७।२६ख) :—

लभते च शिवं स्थानं फलपुष्पप्रदो नरः ॥५॥

अत्र फलपुष्पप्रद[1] इति क्रियापेक्षया इतरेतरयोगे द्वन्द्वः। अर्चिताय ब्राह्मणायार्चितमुत्कृष्टं फलम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। शिवस्थानप्राप्तिकामोऽहमेतत् फलं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

विष्णुधर्मोत्तरे (३।३१६।२२) :—

बाले क्रीडनकं दत्त्वा मिष्टमन्नं तथैव च।
फलं मनोहरञ्चापि अग्निष्टोमफलं लभेत् ॥६॥

अर्चिताय वटवेऽर्चितान्यभीष्टानि फलानि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। अग्निष्टोमफलप्राप्तिकामोऽहमेतानि फलानि ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३११।२३क) :—

दत्त्वा पूगफलं विप्राः सफलां विन्दते क्रियाम् ॥७॥

विप्रा[2] इति सम्बोधनम्। अर्चिताय ब्राह्मणायार्चितं गुवाकफलम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोत्तरोक्त[3]-पूगफलदानफलप्राप्तिकामोऽहमेतत पूगफलं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत।

तथा (३।३१४।११क) :—

इक्षुमृद्वीकयोर्दानात् परं सौभाग्यमाप्नुयात् ॥८॥

मृद्वीका द्राक्षा। अर्चिताय ब्राह्मणायार्चितां मृद्वीकाम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। परमसौभाग्यप्राप्तिकामोऽहमेतां मृद्वीकां ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

---

1 I. O. omits प्रद
2 A and I. O. विप्र
3 A and I. O. विष्णुधर्मोक्त

[1] [तथा :—

फलानाञ्च तथा दानं कृष्णपक्षे महाफलम् ॥६॥

*अभीष्टमासिक-कृष्णपक्षसम्बन्ध्यभिमततिथौ ब्राह्मणायार्चितायार्चितानि फलानि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्।* महाफलप्राप्तिकामोऽहमेतानि फलानि ददानि। *स्वस्त्यादि-स्वीकारान्तं पूर्ववत्।* ]

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे फलदानावर्तः।

---

1 A omits the bracketed portion

# अथ विष्णुदैवतमधुदानावर्त्तः। (२५)

यमः :—

गन्धौषधमथाभ्यङ्गं माक्षिकं लवणं तथा।
यः प्रयच्छति विप्राय सौभाग्यं स तु विन्दति ॥१॥

माक्षिकं मधु। अत्र यजमानोऽर्चिताय ब्राह्मणायार्चितं मधु दद्यात्। ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं सौभाग्यप्राप्तिकामोऽहमेतन्माक्षिकं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा माक्षिकमिदं विष्णुदैवतमित्युक्त्वा यथाशास्त्रं कामस्तुतिं पठेत्। तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा मधु स्पृशेत्।

विष्णुः :—

मधुघृततैलदानेनारोग्यम् ॥२॥

अर्चिताय ब्राह्मणायार्चितं मधु ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। आरोग्यप्राप्तिकामोऽहमेतन्मधु ददानि। स्वस्त्यादिस्त्रीकारान्तं पूर्ववत्।

नन्दिपुराणे :—

ये च क्षीरं प्रयच्छन्ति घृतं मधु गुडं दधि।
ब्राह्मणेभ्यः प्रयत्नेन शुद्धेभ्यस्तु सुसंस्कृतम् ॥३॥
चक्रवाकप्रयुक्तैस्तु विमानैश्च[1] हिरण्मयैः।
यान्ति गन्धर्ववादित्रैः सेव्यमाना यमालयम् ॥४॥

दातृबहुत्वापेक्षया संप्रदानबहुत्वम्। अर्चिताय जन्मसंस्कारविद्याशालिने ब्राह्मणायापनीतकेशकीटादिकमर्चितं मधु ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। नन्दिपुराणोक्तमधुदानफलप्राप्तिकामोऽहमेतन्मधु ददानि। स्वस्त्यादिस्त्रीकारान्तं पूर्ववत्।

[2][विष्णुधर्मोत्तरे (३।३१४।१२ख) :—

सर्वान् कामान् मधुप्रदः ॥५॥

1 A विमानैस्तु

2 A omits the bracketed portion

प्राप्नोतीति शेषः। अर्चिताय ब्राह्मणाय मधु अर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। अमुककामोऽहमेतन्मधु ददानि। स्वस्त्यादिस्त्रोकारान्तं पूर्ववत्।] अत्र [काम्योत्कर्षे देयोत्कर्षः करणीयः][1]।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे मधुदानावर्तः।

1 A काम्योत्कर्षो श्रेयोतकर्षः for the b. p.

## अथ विष्णुदैवताभ्यङ्गदानावर्तः । (२६)

सम्वर्तः :—

तैलमामलकं यच्छन् पादाभ्यङ्गं तथैव च ।
[1]नरः सुहृष्टस्तेजस्वी सुखवांश्चैव जायते ॥१॥

अत्र यजमानः पादाभ्यङ्गार्थं तैलं घृतमर्चितमर्चिताय ब्राह्मणाय दद्यात्। ॐ अद्यामुकसगोत्रायामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं सम्वर्तोक्तपादाभ्यङ्गदानफलप्राप्तिकामोऽहमेतं पादाभ्यङ्गं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा अभ्यङ्गोऽयं विष्णुदैवत इत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा [2]अभ्यङ्गार्थद्रव्यं स्पृशेत् ।

यमः :—

गन्धौषधमथाभ्यङ्गं माक्षिकं लवणं तथा ।
यः प्रयच्छति विप्राय सौभाग्यं स तु विन्दति ॥२॥

अभ्यङ्गार्थं तैलं घृतं वाचिंतमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । सौभाग्यप्राप्तिकामोऽहमेतदभ्यङ्गं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

[3]ब्रह्मपुराणे :—

पादाभ्यङ्गं शिरोऽभ्यङ्गं स्नानपादोदकं तथा ।
ये प्रयच्छन्ति विप्रेभ्यस्ते यान्त्याश्चर्यमालयम् ॥३॥

विप्रेभ्य इति बहुत्वं दातृबहुत्वापेक्षम् । पादाभ्यङ्गार्थं तैलं घृतं वाचिंतमर्चिताय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [4]ब्रह्मपुराणोक्तपादाभ्यङ्गदानफलप्राप्तिकामोऽहमेतं [5][पादाभ्यङ्गं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । शिरोऽभ्यङ्गदाने ब्रह्मपुराणोक्तशिरोऽभ्यङ्गदानफलप्राप्तिकामोऽहमेतं] शिरोऽभ्यङ्गमिति विशेषः ।

---

1 I. O. मनः
2 A अभ्यङ्गार्थं द्रव्यं
3 I. O. ब्राह्मपुराणे
4 I. O. ब्राह्मपुराणोक्त०
5 I. O. omits the bracketed portion

नन्दिपुराणे :—

पादाभ्यङ्गन्तु यो दद्यात् पान्थाय परिखेदिने ।
स [1]शुभाभरणैः पादैर्बन्दिभिर्नित्यवन्दितः ।
भवेन्नृपो महाभागो मण्डले दशयोजने ॥४॥

पादाभ्यङ्गं पादाभ्यङ्गार्थं तैलादि । गृहीतोदपूर्णपात्र उदङ्मुखो खिन्नाय पथिकब्राह्मणाय [2]पादाभ्यङ्गार्थं यथेच्छं तैलादिकं सङ्कल्प्य दद्यात् । ॐ नन्दिपुराणोक्तपादाभ्यङ्गदान-फलप्राप्तिकामोऽहमेतं पादाभ्यङ्गं ददानि । ततस्तथाभूतब्राह्मणप्राप्तौ दद्यात् ।

विष्णुधर्मोत्तरे ( ३।३११।१२ख ) :—

रोगनाशमवाप्नोति तथाभ्यङ्गप्रदः सदा[3] ॥५॥

सदेत्यनेकदा । ब्राह्मणायाचिंताय पादाभ्यङ्गार्थं तैलं घृतं वार्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । रोगनाशप्राप्तिकामोऽहमेतदभ्यङ्गं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरेऽभ्यङ्गदानावर्तः ।

---

1 I. O. शुभातरणैः
2 I. O. दायाभ्यङ्गार्थं
3 I. O. ०सदा

## अथ गन्धर्वदैवतगन्धदानावर्तः। (२७)

ब्रह्मपुराणे :—

सुगन्धागुरुकर्पूरपुष्पधूपान्[1] द्विजोत्तमाः।

प्रयच्छन्ति द्विजातिभ्यो भक्त्या परमयाश्रिताः ॥१॥

सुगन्धमनेकसुरभिद्रव्ययोगरूपम्। द्विजोत्तमा इति सम्बोधनम्। द्विजातिभ्य इति [2]बहुवचनं दातृबहुत्वापेक्षम्।

ते सुगन्धाः सुवेशाश्च सुप्रभाः स्रग्विभूषिताः।

यान्ति धर्मपुरं यानैर्विचित्रैरभ्यलङ्कृताः ॥२॥

अत्र यजमानोऽर्चिताय ब्राह्मणायार्चितं गन्धम् ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं ब्रह्मपुराणोक्तसुगन्धदानफलप्राप्तिकामोऽहमेतत् सुगन्धं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा सुगन्धमिदं गन्धर्वदैवतमित्युक्त्वा यथाशाखं कामस्तुतिं पठेत्। तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा सुगन्धं स्पृशेत्। अगुरुदाने तु ब्रह्मपुराणोक्तागुरुदानफलप्राप्तिकामोऽहमेतदगुरु [कर्पूरदाने ब्रह्मपुराणोक्त][3]-कर्पूरदानफलप्राप्तिकामोऽहमेतत् कर्पूरमिति च विशेषः।

मार्कण्डेयपुराणे (१०।५७क) :—

शीतं [4]जयन्तोन्धनदास्तापं चन्दनदायिनः ॥३॥

ब्राह्मणायार्चिताय चन्दनमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। तापजयकामोऽहमेतच्चन्दनं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

महाभारते (अनु—५७।३८) :—

[5]स्रग्गन्धधूपान्यनुलेपनानि स्नानानि माल्यानि च मानवो यः[6]।

दद्याद्द्विजेभ्यः स भवेदरोग-[7]स्तथाभिरूपश्च [8]नरेन्द्रलोके ॥४॥

---

1 I. O. ०कर्पूरं पुष्पधूमान्
2 A दातृबहुत्वापेक्षया बहुवचनं
3 A omits the bracketed portion
4 Mārkaṇḍeya P. जयन्ति धनदा०
5 A सुगन्ध०
6 I. O. य:
7 I. O. ०बचा
8 A चन्द्रलोके

सम्प्रदान-[बहुत्वं देय][1]-बहुत्वापेक्षम् । ब्राह्मणायार्चिताय यथेच्छं चन्दनादिगन्धद्रव्य-मर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । महाभारतोक्तगन्धदानफलप्राप्तिकामोऽहमेतद् गन्धद्रव्यं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

विष्णुधर्मे :—

गन्धमाल्यप्रदानेन तुष्टिर्भवति निश्चला ॥५॥

ब्राह्मणायार्चिताय कुङ्कुमचन्दनागुरुकर्पूरकस्तूरीजाती-[2]फलानामन्यतममर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । निश्चलतुष्टिकामोऽहमेतं गन्धं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

विष्णुधर्मोत्तरे ( ३।३११।१६क) :—

नरश्चन्दनदानेन सर्वपापैः प्रमुच्यते ।।६।।

ब्राह्मणायार्चिताय यथेष्टं चन्दनमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । सर्व-पापप्रमोचनफलप्राप्तिकामोऽहमेतच्चन्दनं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा ( ३।३११।१६ख ) :—

तथैवागुरुदानेन यशसा[ तु विराजते ][3] ।।७।।

ब्राह्मणायार्चितायार्चितमगुरु ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्ता-गुरुदानफलप्राप्तिकामोऽहमेतदगुरु ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा ( ३।३११।२०क ) :—

सौभाग्यकारकं प्रोक्तं प्रदानं कुङ्कुमस्य तु ।।८।।

ब्राह्मणायार्चितायार्चितं कुङ्कुमम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । सौभाग्यप्राप्ति-कामोऽहमेतत् कुङ्कुमं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (३।३११।२०ख ) :—

तथा कर्पूरदानेन सर्वान् कामानवाप्नुयात् ।।६।।

ब्राह्मणायार्चिताय कर्पूरमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [4]अमुकप्राप्ति-

1 I. O. omits the bracketed portion

2 A फलान्यतम०

3 A तु विवर्धते and V. D. भुवि राजति for the b. p.

4 I. O. अमुककामो०

कामोऽहमेतत् कर्पूरं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । अत्र [1]काम्योत्कर्षाद्देयोत्कर्षः कर्तव्यः ।

तथा ( ३।३११।२१क ) :—

[2]मृगदर्पप्रदानेन यशसा तु विराजते[3] ॥१०॥

ब्राह्मणायार्चितायार्चितां कस्तूरिकाम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्तमृगदर्पदानफलप्राप्तिकामोऽहमेतं मृगदर्पं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा ( ३।३११।२१ख ) :—

दत्त्वा जातीफलं विप्राः सफलां विन्दते क्रियाम् ॥११॥

विप्रा इति सम्बोधनम् । ब्राह्मणायार्चिताय जातीफलमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्तजातीफलदान[4]-फलप्राप्तिकामोऽहमेतज्जातीफलं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा ( ३।३११।१३ख ) :—

स्नानीयानि सुगन्धानि[5] दत्त्वा सौभाग्यमश्नुते ॥१२॥

ब्राह्मणायार्चिताय सुगन्धानि स्नानोचितद्रव्याण्यर्चितानि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । सौभाग्यप्राप्तिकामोऽहमेतानि सुगन्धीनि स्नानीयानि ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे गन्धदानावर्तः ।

---

1 A काम्योत्कर्षापेक्षया देयोत्कर्षः
2 V. D. reads the entire line as मृगधर्मप्रदानेन यशसा भुवि राजते
3 A विवर्धते
4 A ०जन्य०
5 A and V. D. सुगन्धीनि

## अथ गन्धर्वदैवतधूपदानावर्तः । (२८)

विष्णुः :—

धूपप्रदानेनोर्द्ध्वगतिर्भवति ॥१॥

धूपप्रदानेन धूपोपयुक्तसुरभिद्रव्यदानेनेत्यर्थः । अत्र यजमानोऽर्चिताय ब्राह्मणाय गन्धशास्त्रोक्त-सुगन्धिपूर्णरूपं सुगन्धिवर्तिरूपं यथेच्छं धूपमर्चितं दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यम् ऊर्द्ध्वगतिप्राप्तिकामोऽहमेतं धूपं[1] ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा धूपोऽयं गन्धर्वदैवत इत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामेतत् काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा धूपं स्पृशेत् । [2]ततस्तेन धूपेन ब्राह्मणमुपधूपयेत् ।

ब्रह्मपुराणे :—

सुगन्धागुरुकर्पूरपुष्पधूपान् द्विजोत्तमाः ।
प्रयच्छन्ति द्विजातिभ्यो भक्त्या परमयाश्रिताः ॥२॥
ते सुगन्धाः सुवेशाश्च सुप्रभाः स्रग्विभूषिताः ।
यान्ति धर्मपुरं यानैर्विचित्रैरभ्यलङ्कृताः ॥३॥

[3]द्विजोत्तमा इति सम्बोधनम् । [4][ द्विजातिभ्य इति बहुवचनं दातृबहुत्वापेक्षम् । ] अर्चिताय ब्राह्मणायार्चितं गन्धशास्त्रोक्तं धूपद्रव्यम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । ब्रह्मपुराणोक्त-धूपदानफलप्राप्तिकामोऽहमेतं धूपं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

नन्दिपुराणे :—

धूपदः सुरभिर्नित्यम् ॥४॥

अर्चिताय ब्राह्मणाय गन्धशास्त्रोक्तं धूपद्रव्यमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । नन्दिपुराणोक्त-[5]धूपदानफलप्राप्तिकामोऽहमेतं धूपं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

महाभारते ( अनु—५७।३८ ) :—

---

1 I. O. एतद्धूपं

2 I. O. ततस्तेन धूपद्रव्येण ब्राह्मणमधूपेत् for the whole sentence

3 A and I. O. द्विजोत्तम

4 A omits the bracketed portion

5 A omits धूप

[1][ स्रग्धूपगन्धान्यनुलेपनानि सुगन्धिमाल्यानि च मानवो यः ।
दद्याद्द्विजेभ्यः स भवेदरोगस्तथाभिरूपश्च नरेन्द्रलोके ॥५॥ ]

द्विजेभ्य इति बहुवचनं देयबहुत्वापेक्षम् । गन्धशास्त्रोक्तधूपद्रव्यमर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । महाभारतोक्तधूपदानफलप्राप्तिकामोऽहमेतान् धूपान्[2] ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

[3][विष्णुधर्मोत्तरे (३।३११।२२) :—

स्नानानां सुखवासानां[4] धूपानाञ्च प्रदायकाः ।
लोके प्रयान्ति प्रियतां भवन्ति च सुगन्धिनः ॥६॥

अर्चिताय ब्राह्मणाय गन्धशास्त्रोक्तधूपद्रव्याणि अर्चितानि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । लोकाधिपत्यसहितसुगन्धित्व[5]-प्राप्तिकामोऽहमेतान् धूपान् ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । ]

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे धूपदानावर्तः ।

---

1 A reads the following for the bracketed portion :—
दत्त्वा द्विजेभ्यो धूपञ्च सुरलोके चिरं वसेत्

2 A एतं धूपं

3 I. O. omits bracketed portion

4 A सुखवाससा

5 A •सुगन्धि•

# अथ गन्धर्वदैवतानुलेपनदानावर्तः । (२९)

[1]विष्णुः :—

[2]अनुलेपनदानात् कीर्त्तिमान् भवति ॥१॥

अत्र यजमानोऽर्चिताय ब्राह्मणायार्चितमनुलेपनं[3] दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं कीर्त्तिप्राप्तिकामोऽहमेतदनुलेपनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा अनुलेपनमिदं गन्धर्वदैवतमित्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामेतत् काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा अनुलेपनं स्पृशेत् ।

याज्ञवल्क्यः (१।२११) :—

गृहधान्याभयोपानच्छत्रमाल्यानुलेपनम् ।

यानं वृक्षं प्रियां शय्यां दत्त्वात्यन्तं सुखी भवेत् ॥२॥

अर्चिताय ब्राह्मणायार्चितमनुलेपनम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । अत्यन्तसुखप्राप्तिकामोऽहमेतदनुलेपनं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

महाभारते (अनु—५७।३८) :—

[4]स्रग्धूपगन्धान्यनुलेपनानि स्नानानि माल्यानि च मानवो यः ।

दद्याद्द्विजेभ्यः स भवेदरोगस्तथाभिरूपश्च नरेन्द्रलोके ॥३॥

द्विजेभ्य इति बहुवचनं देयबहुत्वापेक्षम् । अर्चिताय ब्राह्मणायार्चितान्यनुलेपनानि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । महाभारतोक्तानुलेपनदानफलप्राप्तिकामोऽहमेतान्यनुलेपनानि ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

[5][विष्णुधर्मोत्तरे (३।३११।१४) :—

अनुलेपनदानेन रूपवानभिजायते ।

कायाग्निदीप्तिं प्राकाश्यं गतिश्चैव तथोत्तमाम् ॥४॥

---

1 A omits विष्णुः

2 A अनुलेपनदानेन कीर्त्तिमान् भवति द्विजाः

3 I. O. चतुःसमादि for अनुलेपनं

4 A सुगन्धधूपान्यनुलेपनानि

5 A omits the bracketed portion

प्राप्नोतीति शेषः। अत्र फलभूयस्त्वादुत्कृष्टानुलेपनदानम्।] अर्चिताय ब्राह्मणायार्चितमनुलेपनम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोत्तरोक्तानुलेपनदानफलप्राप्तिकामोऽहमेतदनुलेपनं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे अनुलेपनदानावर्तः।

# अथ नानादैवतपुष्पदानावर्तः । (३०)

विष्णुः :—

पुष्पदानेन श्रीमान् भवति ॥१॥

अत्र यजमानोऽर्चिताय ब्राह्मणायार्चितानि पुष्पाणि दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं [1]श्रीमत्त्वप्राप्तिकामोऽहमेतानि पुष्पाणि ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा पुष्पाण्येतानि वनस्पतिदैवतानि इत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं [2]तुभ्यमहं दक्षिणामेतत् काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा पुष्पाणि[3] स्पृशेत् ।

याज्ञवल्क्यः (१।२११) :—

गृहधान्याभयोपानच्छत्रमाल्यानुलेपनम् ।
यानं वृक्षं प्रियां शय्यां दत्त्वात्यन्तं सुखी भवेत् ॥२॥

अर्चिताय ब्राह्मणायार्चितानि माल्यानि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । अत्यन्तसुखप्राप्तिकामोऽहमेतानि माल्यानि ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा माल्यानि विष्णुदैवतानि इत्युक्त्वा[4] यथाशाखं कामस्तुतिं पठेत् । स्वस्त्यादि[5]-स्वीकारान्तं पूर्ववत्[6] ।

ब्रह्मपुराणे :—

ये फलानि प्रयच्छन्ति पुष्पाणि सुरभीणि च ।
हंसयुक्तैर्विमानैस्ते[7] यान्ति धर्मपुरं नराः ॥३॥

अर्चिताय ब्राह्मणायार्चितानि सुगन्धिपुष्पाणि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् ।

---

1 A श्रीमत्वप्राप्ति०, I. O. श्रीमत्त्वाप्ति०
2 I. O. omits तुभ्यमहं
3 I. O. omits पुष्पाणि
4 I. O. दद्यात् between इत्युक्त्वा and यथाशाखं
5 I. O. omits स्वस्त्यादि
6 A reads the two sentences प्रतिग्रहीता…पूर्ववत् as follows :—स्वस्तिसावित्रीपाठान्ते माल्यानेतानि विष्णुदैवतानि प्रतिग्रहीतृवाक्यं कामस्तुत्यादिस्वीकारान्तं पूर्ववत्
7 A ०विमानैश्च

ब्रह्मपुराणोक्त-सुरभि-पुष्पदानफलप्राप्तिकामोऽहमेतानि सुरभीणि पुष्पाणि[1] ददानि। स्वस्त्यादि-स्वीकारान्तं पूर्ववत्।

तथा :—

सुगन्धागुरुकर्पूरपुष्पधूपान् द्विजोत्तमाः।
प्रयच्छन्ति द्विजातिभ्यो भक्त्या परमयाश्रिताः ॥४॥

द्विजोत्तमा इति सम्बोधनम्।

ते सुगन्धाः सुवेशाश्च सुप्रभाः स्रग्विभूषिताः।
यान्ति धर्म-[पुरं यानैर्विचित्रैरभ्यलङ्कृताः ॥५॥

द्विजातिभ्य इति दातृबहुत्वापेक्षं बहुवचनम्। अर्चिताय ब्राह्मणायार्चितानि पुष्पाणि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। ब्रह्म]-[2]पुराणोक्त-सुगन्धादिफल[3]-पुष्पदानफलप्राप्ति-कामोऽहमेतानि पुष्पाणि ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

वराहपुराणे (२०७।५४ख) :—

फलैस्तु लभते पुत्रं पुष्पैः सौभाग्यमेव च ॥६॥

ब्राह्मणायार्चितायार्चितानि पुष्पाणि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सौभाग्य-प्राप्तिकामोऽहमेतानि पुष्पाणि ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

नन्दिपुराणे :—

धूपदः सुरभिर्नित्यं पुष्पदः सुभगः सदा।
[4]भवते मानवो नित्यं दशजन्मान्यसंशयम् ॥७॥

अर्चिताय ब्राह्मणायार्चितं पुष्पम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। नन्दिपुराणोक्त-पुष्पदानफलप्राप्तिकामोऽहमेतत् पुष्पं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

महाभारते (अनु—५७।२६ख) :—

लभते च [5]शिवं स्थानं फलपुष्पप्रदो नरः ॥८॥

ब्राह्मणायार्चितायार्चितानि[6] पुष्पाणि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। शिवस्थान-प्राप्तिकामोऽहमेतानि पुष्पाणि ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

---

1 A सुरभिपुष्पाणि
2 A omits the bracketed portion
3 A सुगन्धित्वादिफलक॰
4 A reads the whole line as 'भवति मानवो धन्यो दशजन्मा नासंशयः'
5 A शिवस्थानं
6 A एतानि for अर्चितानि

तथा (अनु—५७।३८) :—

स्रग्धूपगन्धान्यनुलेपनानि स्नानानि माल्यानि च मानवो यः ।
दद्याद्द्विजेभ्यः स भवेदरोगस्तथाभिरूपश्च[1] नरेन्द्रलोके ॥६॥

द्विजेभ्य इति बहुवचनं देयबहुत्वापेक्षम् । अर्चितानि [2]माल्यान्यर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । महाभारतोक्त-माल्यदानफलप्राप्तिकामोऽहमेतानि [माल्यानि ददानि][3] । स्वस्तिसावित्रीपाठान्ते[4] माल्यान्येतानि विष्णुदैवतानीति प्रतिग्रहीतृवाक्यं कामस्तुत्यादिस्वीकारान्तं पूर्ववत् ।

विष्णुधर्मोत्तरे :—

पुष्पाणाञ्च सिते पक्षे दानं लक्ष्मीकरं स्मृतम्[5] ॥१०॥

यथेच्छमासशुक्लपक्षे ब्राह्मणायार्चिताय पुष्पाण्यर्चितानि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । लक्ष्मीप्राप्तिकामोऽहमेतानि पुष्पाणि ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे पुष्पदानावर्तः ।

---

1 I. O. ०स्तथातिरूपश्च
2 A omits माल्यानि
3 I. O. omits the bracketed portion
4 I. O. ०पाठान्ते
5 A तथा

# अथ बृहस्पतिदैवतवस्त्रदानावर्तः । (३१)

## तत्र वस्त्रदानप्रशंसा ।

विष्णुधर्मोत्तरे (३।३१३।११ख—१२क, १३) :—

यथा यथा तु वस्त्रस्य भवतीह[1] महार्घता ।
यथा यथा शुभ्रता च तथा [2]पुण्यफलं महत् ॥१॥
सर्वदो[3] वस्त्रदः प्रोक्तो यतः सर्वत्र वस्त्रवान् ।
[4]पूजामाप्नोति धर्मज्ञास्तद्धि तस्माद्विशिष्यते ॥२॥

तथा (३।३१३।१४-१५) :—

वस्त्रदः सुचिरं कालं भुक्त्वा देवसुखं दिवि ।
विमानेनार्कवर्णेन हंसयुक्तेन भास्वता ॥३॥
मानुष्यमासाद्य भवत्यरोगः शौचान्वितः सौख्य-[परो विनीतः][5] ।
जनाभिरामश्च तथा सुवेशः पूज्यश्च लोके विदुषां सदैव ॥४॥

तथा (३।३१३।२) :—

वस्त्रदाता सुवेशः स्याद्रूपद्रविणसंयुतः ।
युक्तो लावण्य-[6]सौभाग्यैर्विरोगश्च तथा द्विजाः ॥५॥

## अथ दानम् ।

मनुः (४।२३१क) :—

वासोदश्चन्द्रसालोक्यम् ।

अत्र यजमानोऽर्चिताय ब्राह्मणायार्चितं वस्त्रं दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं चन्द्रसालोक्यप्राप्तिकामोऽहमेतद्वासो ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं [7]पठित्वा [8]वास इदं बृहस्पतिदैवतम् इत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामेतत् काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा [9]वस्त्रं दशाग्रे गृहीत्वा परिदध्यात् ।

---

1 I. O. भवतीद
2 I. O. प्रश्नफलं
3 I. O. सर्वदा
4 I. O. प्रजा०
5 Corrected from V. D. A ०परोपविनीत:, I. O. ०परोधिनाय:
6 A ०सौभाग्यश्च द्विजा तथा
7 I. O. पाठान्ते
8 I. O. वासं for वास इदं
9 A वस्त्रदशां for वस्त्रं दशाग्रे

सम्वर्तः :—

वस्त्रदाता सुवेशः स्यात् ॥६॥

ब्राह्मणायार्चिताय वस्त्रमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सुवेशत्वप्राप्ति-कामोऽहमेतद्वस्त्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

महाभारते (अनु—६८।३२) :—

वाससां सम्प्रदानेन स्वदारनिरतो नरः।
सुवस्त्रश्च सुवेशश्च भवतीत्यनुशुश्रुम ॥७॥

अत्र वाससामिति बहुवचनश्रवणाद् यथेच्छं बहूनि वस्त्राण्यर्चितानि अर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्त-स्वदारनिरतत्वादिफलकवासोदानफल-प्राप्तिकामोऽहमेतानि वासांसि ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (अनु—२३।९८) :—

वैवाहिकानां द्रव्याणां [1]प्रैष्याणाञ्च युधिष्ठिर।
दातारो वाससाञ्चैव पुरुषाः स्वर्गगामिनः ॥८॥

ब्राह्मणायार्चिताय वस्त्रत्रयमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। स्वर्गप्राप्ति-कामोऽहमेतानि वासांसि ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

स्कन्दपुराणे :—

यस्तु वस्त्रं प्रयच्छेत ब्राह्मणाय महायशाः।
स लोकं प्राप्य वैराजं वर्षकोटिं सुखं वसेत् ॥९॥

अर्चिताय ब्राह्मणायार्चितमुत्कृष्टवस्त्रम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। स्कन्द-पुराणोक्त वस्त्रदानफलप्राप्तिकामोऽहमेतद्वस्त्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

ब्रह्मपुराणे :—

ये प्रयच्छन्ति वस्त्राणि तथैवाभरणानि च।
ते यान्त्यश्वै रथैश्चैव कुञ्जरैश्चाप्यलङ्कृताः।
धर्मराजपुरं दिव्यं छत्त्रैः सौवर्णराजतैः ॥१०॥

अर्चितं वस्त्रत्रयमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। ब्रह्म-पुराणोक्त-वस्त्रदानफलप्राप्तिकामोऽहमेतानि वस्त्राणि ददानि। [2][स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

---

1 A पुण्याणाञ्च

2 A omits the bracketed portion

शिवपुराणे :—

यस्तु वस्त्रं प्रयच्छेत सम्वीतं ब्राह्मणाय च ।
स सोमलोकमाप्नोति क्रीडते कालमक्षयम् ॥११॥

सम्वीतं स्वरूपम् । ] ब्राह्मणायार्चिताय यथाशक्ति सम्वीतं[1] वस्त्रमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । ॐ सोमलोकगोचराक्षयकालक्रीडाप्राप्तिकामोऽहमेतत् सम्वीतं[2] वस्त्रं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

वराहपुराणे (२०७।४६ख) :—

वस्त्रप्रदानेन सुरूपता च [3]धनैश्च पुत्रैश्च वृता[4] भवन्ति ॥१२॥

ब्राह्मणायार्चिताय वस्त्रमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । वराहपुराणोक्त-वस्त्रदानफलप्राप्तिकामोऽहमेतद्वस्त्रं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

[5]अग्निपुराणे :—

द्विजानां योगिनां ये तु [6]शुभवस्त्रप्रदा नराः ।
वस्त्रगन्धयुतः पन्थास्तेषां सजलशीतलाः ॥१३॥

योगिनामध्यात्मविदां शुभवस्त्रप्रदाः शोभनवस्त्राणां [7]दातारः द्विजानां [8]योगिनामिति बहुवचनं दातृबहुत्वापेक्षम् । शोभनं वस्त्रमर्चितं ब्राह्मणायाध्यात्मविदेऽर्चिताय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [9]अग्निपुराणोक्त-शुभवस्त्रदानफलप्राप्तिकामोऽहमेतद्वस्त्रं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत ।

तथा :—

नवं सूक्ष्मं सुविपुलं ये प्रयच्छन्ति कम्बलम् ।
शीतार्दितद्विजेन्द्राय [10]तेषामग्निः सुखप्रदः ॥१४॥

शीतार्दिताय विद्यातपःसम्पन्नायार्चितं कम्बलम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [11]अग्निपुराणोक्त-कम्बलदानफलप्राप्तिकामोऽहमेतं कम्बलं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

---

1 A स्वरूपं. I. O. पुरुषं
2 A एतानि वीतं, I. O. एतत् सर्वं तत्
3 Supplied from Varāha P. There is a lacuna here in both I. O. and A
4 Varāha P. भृता
5 I. O. आग्नेयपुराणे
6 A शुचि०
7 A प्रदातारः
8 I. O. omits योगिनाम
9 A and I. O. आग्नेय०
10 A तेषामाशु शीतार्दितः
11 A and I. O. आग्नेय०

आदित्यपुराणे :—

[1][वह्रिवस्त्रप्रदानेन ब्रह्मलोकं प्रपद्यते ॥१५॥ ]

वह्रिवस्त्रप्रदानेन वह्रिप्रदानेन[2] वस्त्रप्रदानेन वेत्यर्थः। अत्र फलबाहुल्यादुत्कृष्टवस्त्र-दानम्। ब्राह्मणायार्चिताय वस्त्रमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। ब्रह्मलोक-प्राप्तिकामोऽहमेतद्वस्त्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

नरसिंहपुराणे :—

द्विजेभ्यस्तर्पणं कृत्वा दत्त्वा वस्त्राणि भक्तितः।
[3]श्वेतन्तु लभते स्वर्गं यत्र गत्वा न शोचति ॥१६॥

अत्र द्विजेभ्य इति [4]बहुवचनं फलभूयस्त्वात्। [5]यथेच्छबहून् [6]ब्राह्मणान् [7]चन्दनादिना सन्तर्प्य तेभ्यो वस्त्राण्यर्चितानि दद्यात्। अद्यामुकसगोत्रेभ्योऽमुकामुकवेदामुकामुकशाखा-ध्यायिभ्योऽमुकामुकदेवशर्मभ्यो युष्मभ्यं नरसिंहपुराणोक्तवस्त्रदानफलप्राप्तिकामोऽह-[8]मेतानि वस्त्राणि ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

नन्दिपुराणे :—

वस्त्रं [9]यश्चार्थिने दद्यात् छत्रञ्चापि यदृच्छया।
स भवेद्धनवान् श्रीमान् बृहस्पतिपुरे वसेत् ॥१७॥

अर्चिताय ब्राह्मणायार्चितं वस्त्रम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [10][नन्दिपुराणोक्त-वस्त्रदानफलप्राप्तिकामोऽहमेतद्वस्त्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

विष्णुधर्मोत्तरे (३।३१३।४क) :—

दत्त्वा कार्पासिकं वस्त्रं स्वर्गलोके महीयते ॥१८॥

ब्राह्मणायार्चितायार्चितं वस्त्रम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् ] सोत्कर्षस्वर्ग-प्राप्तिकामोऽहमेतत् कार्पासिकं वस्त्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३१३।४ख) :—

दत्त्वा सरोम तदपि फलं दशगुणं लभेत् ॥१९॥

---

1 I. O. omits the bracketed portion
2 A omits प्रदानेन
3 A श्वेतवर्णं लभेत्
4 I. O. बहुवचनात् फलभूयस्त्वाच
5 I. O. omits यथेच्छ
6 I. O. omits it
7 A कायमादिना
8 A omits मेतानि
9 A यथार्थिने
10 A omits the bracketed portion

सरोम कूलपटीमिति यावत् तदपि कार्पासिकमित्यर्थः। ब्राह्मणायार्चितायार्चितां कूलपटीम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोत्तरोक्त-सरोमवस्त्रदानफलप्राप्ति-कामोऽहमेतत् सरोमवस्त्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३१३।५क) :—

आविकं वसनं दत्त्वा [1]भृगुलोकमवाप्नुयात् ॥२०॥

आविकं मेषलोमभवम्। ब्राह्मणायार्चिताय मेषलोमभवं [2]वस्त्रमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। भृगुलोकप्राप्तिकामोऽहमेतदाविकं वसनं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा वस्त्रप्रकरणे (३।३१३।५ख) :—

छागं दत्त्वा चाङ्गिरसं ॥२१॥

लोकमाप्नुयादित्यनु-[3]षज्यते। ब्राह्मणाय [4]अर्चिताय छागरोमसम्भवं वस्त्रमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। आङ्गिरसलोकप्राप्तिकामोऽहमेतच्छागवस्त्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३१३।५ख) :—

क्षौमं दत्त्वा [5]बृहस्पतेः ॥२२॥

लोकमाप्नुयादित्यनुषज्यते। क्षौमं क्षुमाभवं वस्त्रं [6]क्षुमाजनितवस्त्रम्। ब्राह्मणायार्चिताय क्षौममर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। बृहस्पतिलोकप्राप्तिकामोऽहमेतत् क्षौमं वस्त्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३१३।६क) :—

वसूनां लोकमाप्नोति कुशकौषेयवाससी ॥२३॥

दत्त्वेत्यनुषज्यते। कौषेयं कोषकारतन्तुभवम्। [7]कुशवस्त्रं प्रसिद्धम्। कौषेयवस्त्रमर्चितं ब्राह्मणायार्चिताय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। वसुलोकप्राप्तिकामोऽह-

---

1 I. O. and V. D. भृगूणां लोकमाप्नुयात्

2 A omits स्त्र

3 A ०सज्यते

4 I. O. omits अर्चिताय

5 I. O. बृहस्पति

6 A क्षुमाजनीतवस्त्रं, I. O. क्षुमाभवीति

7 A कुशवस्त्रप्रसिद्धं, I. O. कुशवस्त्रम-प्रसिद्धं

मेतत् [1]कौषेयवासो ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। कुशवस्त्रदाने एतत् कुशवस्त्रमिति विशेषः।

तथा वस्त्रप्रकरणे (३।३१३।६ख) :—

कृमिजञ्च तथा दत्त्वा सोमलोके महीयते ॥२४॥

कृमिजं [2]पट्टीयसूत्रभवम्। ब्राह्मणायार्चिताय कृमिजं वस्त्रमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सोत्कर्ष-[3]सोमलोकप्राप्तिकामोऽहमेतत् कृमिजं वस्त्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३१३।७क) :—

अग्निष्टोममवाप्नोति दत्त्वैव मृगलोमिकम् ॥२५॥

मृगलोमनिर्मितं वस्त्रमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। अग्निष्टोमफलप्राप्तिकामोऽहमेतन्मृगलोमिकं वस्त्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३१३।७ख) :—

दत्त्वा वल्कलजं वासो वसूनां लोकमाप्नुयात् ॥२६॥

वल्कलभवं वासोऽर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। वसुलोकप्राप्तिकामोऽहमेतद्वल्कलजं वासो[4] ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

[5][तथा वस्त्रप्रकरणे (३।३१३।१०क) :—

कुसुम्भरक्तं दत्त्वा तु सौभाग्यं महदाप्नुयात् ॥२७॥

ब्राह्मणायार्चिताय सिन्दूरिकावस्त्रमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महासौभाग्यप्राप्तिकामोऽहमेतत् कुसुम्भरक्तं वस्त्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।]

तथा (३।३१३।१०ख) :—

[6]दानात् कुङ्कुमरक्तस्य लावण्यं [7]महदाप्नुयात् ॥२८॥

1 A omits कौषेय, I. O. कौषेयवासोसो
2 I. O. पतनी०
3 A omits सोम
4 A एतत् दुकूलसम्भववस्त्रं
5 A omits the bracketed portion
6 I. O. दिनात्
7 I. O. बहदा०

अर्चिताय ब्राह्मणायार्चितं कुङ्कुमरक्तवस्त्रम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महालावण्यप्राप्तिकामोऽहमेतत् कुङ्कुमरक्तवस्त्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३१३।११क) :—

रक्तैरन्यैरनीलैश्च रक्तं दत्त्वा सुखी भवेत् ॥२६॥

अन्यैः कुसुम्भकुङ्कुमेतरैरित्यर्थः। अनीलैर्नीलीरक्तं विनेत्यर्थः। यथा प्रसिद्धशेफालिकादि-रक्तं वस्त्रमर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सुखप्राप्ति-कामोऽहमेतदमुक[1]-द्रव्यरक्तं वस्त्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे वस्त्रदानावर्तः।

---

1 I. O. एतत्क॰

# अथ विष्णुदैवतयज्ञोपवीतदानावर्तः ॥(३२)

*आदित्यपुराणे :—*

*क्षौमजं वापि कार्पासं पट्टसूत्रमथापि वा ।*

दद्याद् यज्ञोपवीतं यो न तं हिंसन्ति राक्षसाः ॥१॥

क्षौमजं क्षुमाभवं कार्पासं कार्पासभवं [1]पट्टसूत्रं पट्टसूत्रमयम् । अत्र यजमानो ब्राह्मणायार्चिताय उक्तयज्ञोपवीतानामन्यतमं यज्ञोपवीतमर्चितं दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यमादित्यपुराणोक्त-यज्ञोपवीतदानफलप्राप्तिकामोऽहमेतदमुकयज्ञोपवीतं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा यज्ञोपवीतमिदं विष्णुदैवतमित्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा यज्ञोप-[2][वीतं स्पृशेत् ।

नन्दिपुराणे :—

यज्ञोपवीत]-दानेन सुरेभ्यो ब्राह्मणाय वा ।

भवेद्द्विप्रश्चतुर्वेदः शुद्धधीर्नात्र संशयः ॥२॥

ब्राह्मणायार्चिताय यज्ञोपवीतमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । नन्दिपुराणोक्तयज्ञोपवीतदानफलप्राप्तिकामोऽहमेतद् यज्ञोपवीतं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

विष्णुधर्मोत्तरे :—

यज्ञोपवीतदानेन वस्त्रदानफलं लभेत् ॥३॥

ब्राह्मणायार्चिताय यज्ञोपवीतमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । वस्त्रदानफलप्राप्तिकामोऽहमेतद् यज्ञोपवीतं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे यज्ञोपवीतदानावर्तः ।

---

1 I. O. omits it

2 A omits the bracketed portion

# अथाग्निदैवतसुवर्णदानावर्तः । (३३)

तत्र [1]सुवर्णदाने बृहस्पतिः :—

[2]गृहादिके पुण्यफलं भवेन्मूल्यानुसारतः ।
तस्मात् सर्वप्रदानानां हिरण्य-[3]मधिकं भवेत् ॥१॥
यथा सान्तानिकादीनां हेम्ना सम्पद्यते क्रियाः ।
[4]न तथा गृहदानेन हिरण्यमधिकं ततः ॥२॥
[5]अग्नेरपत्यं प्रथितं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः ।
तेषामनन्तं फलमश्नुवीत यः काञ्चनं गाश्च महीञ्च दद्यात् ॥३॥

[6]दानबृहस्पतिः :—

सुवर्णदानं गोदानं भूमिदानञ्च वासव ।
[7]एतत् प्रयच्छमानो हि सर्वपापैः प्रमुच्यते ॥४॥

सम्वर्तः :—

सर्वेषामेव दाननामेकजन्मानुगं[8] फलम् ।
हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम् ॥५॥

महाभारते (अनु—८४।२७ख-२८क) :—

दशपूर्वान् दश [9]परांस्तथा सन्तारयन्ति ते ।
सुवर्णं ये [10][प्रयच्छन्तीत्येवं मां [11]पितरोऽब्रुवन् ] ॥६॥

तथा :—

[पृथिवीनाञ्च दत्त्वेह][12] यच्चान्यदपि किञ्चन ।
[13]विशिष्यते सुवर्णस्य दानं परमकं विभो ॥७॥

---

1 I. O. सुवर्णदानमनुस्मृतिः
2 I. O. गृहादिकं
3 I. O. ०मधिकस्ततः
4 I. O. तथाच
5 I. O. आग्नेयपत्नं
6 A दाने बृहस्पतिः
7 I. O. एतद्वै०
8 I. O. ०जन्मानुगं
9 I. O. ०परान्यां०
10 A प्रयच्छन्ति दृष्टवैवं पितरो भुवं for the b. p.
11 I. O. पितरो
12 A पृथिवीं गाश्च सुवर्णञ्च for the b. p.
13 I. O. विशिष्यत्तु

[1]अजरं पावनञ्चैव सुवर्णममरद्युते ।
प्रयच्छद्द्विजमुख्येभ्यः पावनं ह्येतदुत्तमम् ॥८॥
सुवर्णमेव [2]सर्वासु दक्षिणासु प्रशस्यते ।
सुवर्णं ये प्रयच्छन्ति [3]सर्वदास्ते [4]भवन्त्युत ॥९॥
[5]अग्निर्हि देवताः सर्वाः सुवर्णञ्च [6]तदात्मकम् ।
तस्मात् सुवर्णं ददता दत्ताः स्युः सर्वदेवताः ॥१०॥
सर्वान् कामान् प्रयच्छन्ति [7][ये प्रयच्छन्ति काञ्चनम् ।
इत्येवं भगवानत्रिः] पितामहसुतोऽब्रवीत् ॥११॥

[8]नन्दिपुराणे :—

तस्मात् सर्वात्मना पात्रे दद्यात् कनकदक्षिणाम्[9] ।
अपात्रे पातयेद्दत्तं सुवर्णं नरकार्णवे ।
दानार्थमेव [तत् सृष्टम् उत्कृष्टं][10]सर्वसाधकम् ॥१२॥

विष्णुधर्मे :—

सुवर्णं ये प्रयच्छन्ति नराः शुद्धेन चेतसा ।
देवतास्ते प्रयच्छन्ति समस्ता इति नः श्रुतम् ॥१३॥

## अथ सुवर्णदानपरिभाषा ।

विष्णुधर्मोत्तरे (३।३१०।११) :—

सकृत्कृष्णलदानेन स्वर्गे वर्षं [11]सुखी भवेत् ।
तथा च पञ्चवर्षाणि स्वर्गे [दत्त्वैव माषकम् ][12] ॥१४॥

1 A अजय पावकञ्चैव
2 A सर्वस्वे
3 A सर्वतास्ते
4 A भवत्युत, I. O. भवन्त्युते
5 I. O. अग्निभिर्देवता:
6 I.O. तथात्मकं
7 A omits the bracketed portion
8 Raghu reads the first two lines as from विष्णुपुराण in S. T. (pp. 346-7) and M. T, (p. 796)
9 Raghu in M. T. and S. T. कनकमुत्तमम्
10 I. O. उत्कृष्टं तत्सर्वं for the b. p.
11 A वर्षं
12 A दत्त्वैव साधकं for the b. p.

[1]नन्दिपुराणे :—

[प्रमादाद्धस्तु[2] [3]यन्नष्टं तावन्मात्रं नियोजयेत् ।

अन्यथा स्तेययुक्तः स्याद्धेम्न्यदत्ते [4]विनाशिनि ।।१५।।

[5]तद्धेम ब्राह्मणायोत्सृष्टं ब्राह्मणसात्कृतं यदि चौरादिना ह्रियते, तदा तावदेव पुनरुत्सृज्य देयमित्यर्थः ।

## अथानियतसुवर्णदानम् ।

दानञ्चेदं सर्वकामिकम् ।

तथा च यमः :—

रुक्मदः सर्वमाप्नोति ।।१।।

सर्वं यत् किञ्चित् कामयते तदा तत् प्राप्नोतीत्यर्थः । तथा षोडशवाजिके बहुविधानि सुवर्णदानानि श्रूयन्ते । कालिकापुराणेऽपि घटिताघटितसुवर्णदानानि प्रतिपादितानि ।

तथा च सुवर्णमित्यनुवृत्तौ कालिकापुराणे :—

पूतमेतत् परं नित्यं सुराः कार्येषु नित्यशः ।

धारयन्ति यतः सर्वे अमलार्थं × × ।।२।।

अतः पापानि सर्वाणि पात्रेभ्यो विधिपूर्वकम् ।

दत्तं पुनाति काले च देशे च हरसन्निधौ ।।३।।

श्रूयतां येन रामेण विधिना प्राक् तपोधन ।

प्रदत्तं काञ्चनं पूतं× × महात्मना ।।४।।

सर्वं हेममयं यज्ञमिष्ट्वा विप्राः प्रतर्पिताः ।

हेमैराभरणैः पूज्य दत्तं पलशतं तथा ।।५।।

भूय एव तुलान्तेन स्वमारोप्य प्रयत्नतः ।

हेम द्वितीये पार्श्वे तु द्विजातिभ्यो ददौ स्वयम् ।।६।।

---

1 Raghu विष्णुपुराणे in S. T. (pp. 346-7) and विष्णुपुराणम् in M. T. (p. 796)

2 Raghu in M. T. ( p. 796 ) and S. T. (p. 347) प्रमादतस्तु

3 I. O. तं नष्टं

4 I. O. विनाशिनि

5 Supplied from Raghu who quotes the whole sentence. I. O. omits it.

भूयोऽपि तन्मयान्येव पूर्य पात्राणि तेन च ।
स्वभावादिषु तीर्थेषु ब्राह्मणेभ्यो ददौ तदा ॥७॥
गवां चन्द्रसुवर्णानां विप्रं कृत्वा पृथक् पृथक् ।
सहस्रञ्च सहस्रञ्च सवत्सानां स्वरूपिणाम् ॥८॥
रज्ज्वा कम्बलमाक्रम्य पलान्येकादशैव तु ।
एकस्य तु पृथक्त्वेन दत्तं हेम तु तेन वै ॥९॥
कारयित्वा सुपद्मानि जातरूपमयानि च ।
भ्रमता तीर्थलिङ्गानां मूर्द्धि कृत्वानि (?) तेन वै ॥१०॥

जातरूपमयानि सुवर्णरूपमयानि ।

तन्मयाभरणैः स्रक्शतशोऽथ सहस्रशः ।
सम्पूज्य तर्पिता विप्रा भूयस्तेनैव मानद ॥११॥
प×श्चैव पताकाश्च मालाश्चैव विशेषतः ।
रुद्रादीनां नियुक्ताश्च कारयित्वा गृहे गृहे ॥१२॥
उपवीतञ्च यष्टिञ्च मेखला पादुके तथा ।
लेखनीं मसीपात्रञ्च दत्तं विप्रेषु तेन वे ॥१३॥
भानसोपस्करं कृतस्नमासनं धाम तन्मयम् ।
द्विजेभ्यश्चैव दत्तानि कारयित्वा सहस्रशः ॥१४॥

भानसोपस्करं रसवत्युपयोगि द्रव्यम् ।

ग्रहाणां देवतानाञ्च कृत्वा रूपाणि भूयसः ।
न्यस्तानि विधिवत् पूज्य द्विजानाञ्चैव मन्दिरे ॥१५॥
काञ्चनीं रोदसीं दृष्ट्वा नगोपरि×स्वस्तिकाम् ।
पुण्योषधिवरैर्युक्तां ददौ विप्रेभ्य एव सः ॥१६॥
एवमाद्यैरनेकैश्च प्रकारैर्यत् कृतं पुरा ।
पापापनुत्तये दत्तं पात्रमासाद्य भूयसः ॥१७॥

अत्र यजमानः पुण्यसमये पुण्यदेशे च महेश्वरसन्निधौ वा ब्राह्मणं विद्यातपःसम्पन्न-मभ्यर्च्य तस्मै यथेष्टपरिमाणं सुवर्णमर्चितं दद्यात् । ॐ अद्य श्रीमन्महेश्वरसन्निधौ अमुकगोत्रा-यामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यममुकफलप्राप्तिकामोऽहमेतत् सुवर्णं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सुवर्णं स्पृशेत् । घटितदाने तु अमुकफलप्राप्तिकामोऽमुकरूपमिदं सुवर्णं ददानीति वाक्ये विशेषः । तत्र यदाकारं सुवर्णं दीयते तदाकारस्य या देवता सा

परिभाषायामेव ज्ञातव्या । यथा सौवर्णवारिपात्रे वरुणो देवता । सुवर्णपादुकायामुत्तानाङ्गिरो देवता । सुवर्णच्छत्रे प्रजापतिर्देवता । एवमन्यदप्यूहनीयम् । ][1] प्रतिमाश्च प्रतिष्ठाप्य [ द्विजवेश्मसु स्थाप्याः ][2] ।

नन्दिपुराणे :—

[कृष्णलाः पञ्चमाषास्तु माषैः षोडशभिः स्मृतम् । ][3]
सुवर्णमेकं [4]तद्दाता स्वर्गलोकमवाप्नुयात् ॥१८॥

यथोक्तपरिमाणं सुवर्णमर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । स्वर्गप्राप्तिकामोऽहमेतत् सुवर्णं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

स्कन्दपुराणे :—

ब्राह्मणस्य विशुद्धस्य सुवर्णं यः प्रयच्छति ।
सुवर्णानां शतं तेन दत्तं भवति निश्चयः ॥१९॥

सुवर्णं पञ्चरत्तिकमानेन षोडशमापकाः । सुवर्णानां शतं दत्तमिति [5][सुवर्णशतदानफलं प्राप्नोतीत्यर्थः । जन्मसंस्कारादिशुद्धायार्चिताय ब्राह्मणाय यथोक्तं सुवर्णमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । ] सुवर्णशतदानफलप्राप्तिकामोऽहमेतत् सुवर्णं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा:—

सुवर्णं यः प्रयच्छेत्तु दरिद्राय द्विजातये ।
दशानामश्वमेधानां [6]फलं प्राप्नोति मानवः ॥२०॥

दरिद्रं ब्राह्मणमभ्यर्च्य तस्मै यथेच्छपरिमाणमर्चितं सुवर्णम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । अश्वमेध-[7]दशफलप्राप्तिकामोऽहमेतत् सुवर्णं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

कूर्मपुराणे :—

[8]हिरण्यगोप्रदानेन निरहङ्कारमाप्नुयात् ॥२१॥

---

1 A reads प्रमाद इति वाक्यविशेषः ॥ देवताविष्णुरिति । only for the bracketed portion
2 A संस्थाप्या द्विजवेश्मसु for the b. p.
3 A omits the bracketed portion
4 A यद्दानात् दाता स्वर्गमवाप्नुयात्
5 I. O. omits the bracketed portion
6 A प्राप्नोतीति for फलं प्राप्नोति
7 A omits दश
8 I. O. सुवर्ण०

[1]निरहङ्कारः स्वर्गविशेषः। [[2]अत्र फलोत्कर्षाद्बहुसुवर्णदानम्। अर्चिताय ब्राह्मणायार्चितं यथेच्छबहुपरिमाणं [3]हिरण्यम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। निरहङ्कारप्राप्तिकामोऽहमेतद्धिरण्यं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।][4]

ब्रह्मपुराणे :—

सुवर्णं राजतं वापि विद्रुमं मौक्तिकं तथा।
ये प्रयच्छन्ति ते यान्ति विमानैः कनकोज्ज्वलैः ॥२२॥

ब्राह्मणायार्चिताय यथेष्टपरिमाणमर्चितं सुवर्णम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। ब्रह्मपुराणोक्त-सुवर्णदानफलप्राप्तिकामोऽहमेतत् सुवर्णं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

शिवपुराणे महेश्वर-[5]पुरकथनानुवृत्तौ :—

गोसहस्रप्रदातारो भूमिदातार एव च।
ये सुवर्णप्रदातारस्तथा सर्वप्रियम्बदाः ॥२३॥
[6]ते तत्र गत्वा [7]हृष्टास्तु निवसन्ति यथासुखम्।
कल्पायुतसहस्राणां सहस्राणि चतुर्दश ॥२४॥
विचरित्वा पुरवरं पुनः प्राप्य महीतलम्।
जायन्ते श्रेष्ठवर्णेषु सुखैश्च परमैर्युताः ॥२५॥

सुवर्णमर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। शिवपुराणोक्त-महेश्वरपुरगमनादिकफल[8]-प्राप्तिकामोऽहमेतत् सुवर्णं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। फलबाहुल्याद्देयद्रव्यबाहुल्यं ज्ञेयम्।

तथा :—

सुवर्णदानं[9] यो दद्याद् ब्राह्मणेषु विशेषतः।
रूपवान् [10]शीलसम्पन्नो [11]विद्याभागी भवेन्नरः ॥२६॥

ब्राह्मणेभ्योऽर्चितेभ्यो यथेष्टपरिमाणं सुवर्णमर्चितं दद्यात्। ॐ अद्यामुकामुकसगोत्रेभ्योऽमुकामुकवेदामुकामुकशाखाध्यायिभ्योऽमुकामुकदेवशर्मभ्यो युष्मभ्यं रूप-[12]शीलविद्या-

---

1 I. O. निरहङ्कारं मोक्षदं
2 A omits the line अत्र...दानम्
3 I. O. सुवर्णम्
4 I. O. reads the bracketed portion twice
5 A omits पुर
6 I. O. च
7 A तुष्टास्तु
8 I. O. adds सुवर्णदानफल here
9 A omits दानं
10 A शौच॰
11 A विद्याभोगी
12 A ०शौच॰

प्राप्तिकामोऽहमेतत् सुवर्णं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। दक्षिणावाक्ये तु सम्प्रदानबहुत्वं विशेषः।

वराहपुराणे (२०७।२६) यम-[1]गृहानुवृत्तौ :—

तिलान् गाश्च हिरण्यञ्च पृथिवीमपि[2] शाश्वतीम्।
ब्राह्मणेभ्यः प्रयच्छन्ति न गच्छन्ति न संशयः ॥२७॥

यमगृहं न गच्छन्तीत्यर्थः। ब्राह्मणेभ्य इति बहुवचनं दातृबहुत्वापेक्षम्। ब्राह्मणायार्चिताय यथेष्टपरिमाणं सुवर्णमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। यम-[3]गृहासर्पणकामोऽहमेतत् सुवर्णं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

आदित्यपुराणे :—

सुवर्णं ये प्रयच्छन्ति यथाशक्त्या न संशयः।
जन्मप्रभृति यत् पापं [4]मातृकं पैतृकं तथा ॥२८॥
[5]सुवर्णदानाद्दारिद्र्यं न पश्यन्ति कदाचन।
मणिमुक्ताप्रवालेन वैदूर्य्येण स्वलङ्कृतः ॥२९॥
गन्धर्वैश्चाप्सरोभिश्च स्तूयमानः समन्ततः।
गच्छते रुद्रलोकन्तु विष्णुलोकं तथैव च ॥३०॥

ब्राह्मणायार्चिताय सुवर्णमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। आदित्यपुराणोक्त-जन्मप्रभृत्युपार्जित-पापाभावादिफलक-सुवर्णदानफलप्राप्तिकामोऽहमेतत् सुवर्णं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। फलबाहुल्याद्विभवानुरूपं[6] बहुसुवर्णं देयं न तु वित्तशाठ्यं कार्यम्।

तथा सुवर्णदानानुवृत्तौ :—

यद्देवमर्चयत्तेन यस्य चैव प्रयच्छति।
तस्य लोके निवसति नित्यश्चैव ददाति यः ॥३१॥
नित्यन्तु यजते यज्ञैः × × कदाचन।
पुत्रपौत्रैः परिवृतः श्रीयुक्तो जायते नरः ॥३२॥

1 A ०पुरा०
2 Varāha P. पृथिवीचापि
3 I. O. ०गृहानुसर्पण०
4 A मातृजं पैतृजं तथा
5 I. O. सुवर्णदाता दारिद्र्यं
6 A ०ब (वि ?) वानुरूपं

ब्राह्मणायार्च्चिताय सुवर्णमर्च्चितम् ॐ अद्यादि तुभ्यमन्तमुक्का दद्यात्। आदित्य-पुराणोक्तसुवर्णदानफलप्राप्तिकामोऽहमेतत् सुवर्णं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। अत्र नित्यमितिपदश्रवणाद् यथेच्छमावृत्तदानम्।

नरसिंहपुराणे :—

[ सुवर्णदायी सौभाग्यं लभेत् स्वर्गं महातपाः ॥३३॥

ब्राह्मणायार्च्चिताय सुवर्णमर्च्चितम् ॐ अद्यादि तुभ्यमन्तमुक्का दद्यात। नरसिंह-पुराणोक्त-सुवर्णदानफलप्राप्तिकामोऽहमेतत् सुवर्णं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत।

आग्नेयपुराणे : —][1]

दश पूर्वान् परांश्चैव प्रोवाचेदं बृहस्पतिः।
सुवर्णं ये प्रयच्छन्ति नराः सन्तारयन्ति ते। ३४॥

ब्राह्मणायार्च्चिताय यथेच्छपरिमाणं सुवर्णमर्च्चितम् ॐ अद्यादि तुभ्यमन्तमुक्का दद्यात। मदीयपूर्वपर[2]-पुरुषदशकसन्तारणकामोऽहमेतत् सुवर्णं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। फलबाहुल्याद्देयबाहुल्यमत्र युज्यते।

तथा :—

पुष्ये वा जन्मनक्षत्रे अयने विषुवेषु च।
ग्रहणे च व्यतीपाते संक्रान्तौ च दिनक्षये ॥३५॥
यानमश्वमनड्वाहं हेमरूप्यमनीं[3]-स्तिलान्।
ये प्रयच्छन्ति पापेषु निरताः सर्वदा मुने।
न तेषां भैरवः पन्था दत्त्वैषां दानमित्युत ॥३६॥

अत्रोक्तसमयानामन्यतमे ब्राह्मणायार्च्चिताय यथेच्छपरिमाणमर्च्चितं सुवर्णम् ॐ अद्यादि तुभ्यमन्तमुक्का दद्यात। आग्नेयपुराणोक्तामुकसमयविहितहेमदानफलप्राप्तिकामोऽहमेतद्धेम ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। सर्वदेतिपददर्शनादतिप्रचुरपापक्षयार्थमिदं[4] दानम्।

तथा :—

शृणु राजन् परं दानं सर्वकिल्विषनाशनम।
यद्दत्वा[5] त्रिविधं पापं सद्यो विलयमेति हि ॥३७॥

---

1 I. O. omits the bracketed portion
2 A ०पूर्वापर०
3 I. O. ०रूप्यगवा०
4 A ०प्रचुरतरपापक्षयार्थमिदं
5 A यत् कृत्वा

त्रिविधं वाङ्मनःकायार्जितम् ।

[1]सुवर्णरोमां [2]सौवर्णीं [3]प्रत्यच्चान्तु सुशोभनाम् ।
सुवर्णतिलकोपेतां सर्वालङ्कारशोभिताम् ॥३८॥
सुशोभनां स्वलुपाञ्च [4]सर्वालङ्कारभूषिताम् ।
[5][सर्वालङ्कारभूषितां यथाशक्ति सौवर्णग्रैवेयकपट्टिकाघट्टिकालङ्कृताम् ।
कौशेयपरिधानां तां दिव्यचन्दनभूषिताम् ॥३९॥ ]
दिव्यपुष्पोपहाराञ्च सर्वधातुरसैर्युताम् ।
सप्तधान्यसमायुक्तां फलपुष्पवतीं तथा ॥४०॥

कौशेयं [6]कोशकारकर्पटः, दिव्यमुत्तमं[7], सर्वधातु-सर्वरस-सप्तधान्यानि[8] परिभाषोक्तानि ग्राह्याणि ।

शतेन कारयेत्तान्तु सुवर्णस्य प्रयत्नतः ।
यथाशक्त्याथ वा कुर्याद्वित्तशाठ्यं विवर्जयेत् ॥४१।

सुवर्णस्य परिमाणविशेषावच्छिन्नस्य हेम्नः ।

अयने विषुवे चैव ग्रहणे शशिसूर्य्ययोः ।
दुःस्वप्नदर्शने चैव जन्मर्क्षे तिथिसंक्षये ॥४२॥
यदा वा जायते वित्तं वित्तं श्रद्धासमन्वितम् ।
तदैव दानकालः स्याद् यतोऽनित्यं हि जीवितम् ।४३॥
नद्यास्तीर्थे गृहे वापि यत्र वा रमते मनः ।
तत्र संस्थाप्य देवेशमुमया सह शङ्करम् ॥४४॥
ब्रह्माणं सह गायत्र्या श्रीधरञ्च श्रिया सह ।
रत्या सह तथानङ्गं लोकपालन् ग्रहानपि ॥४५॥
[9]एतान् पूज्य विधानेन गन्धपुष्पविलेपनैः ।
तदग्रे कारयेद्धोमं तिलाज्येन विधानतः ॥४६॥

---

1 I. O. सुव for सुवर्ण०
2 I. O. सौवर्णी
3 A प्रत्यच्चन्तु
4 A सुवर्णालङ्कार०
5 I. O. omits the bracketed portion
6 A कोशकारपटः; I. O. कोशकार कपटः
7 A उत्कृष्ट
8 A सर्वधातुः सर्वरसं सर्वधान्यानि, I. O. सर्वधातुसर्वरसधान्यानि
9 A ताम् प्रपूज्य

[1]सुसम्पूज्य द्विजान् सम्यक् वस्त्रालङ्कारभूषणैः ।
तल्लिङ्गमन्त्रैर्होमश्च कर्त्तव्यो ज्वलितानले ॥४७॥

[2][अलङ्कारभूषणैरित्यलङ्कारेण भूषणैरलङ्करणैरित्यर्थः । ] तल्लिङ्गमन्त्रैः पूजितदेवताप्रकाशकमन्त्रैः ।

ततस्ताञ्च प्रतिष्ठाप्य देवानाञ्च तिलोपरि ।
[3]लवणाभिमुखीं कृत्वा मन्त्रेणानेन मन्त्रयेत् ॥४८॥

लवणाभिमुखी-[4][मग्रस्थापितपात्रस्थलवणाम् । देवानाञ्चेति देवानामग्रत इत्यर्थः ।

रोम × × सर्वोपकरणैस्तथा ।
जगतः संप्रवृत्तासि त्वामतः] प्रार्थये शिवाम् ॥४६॥
वाङ्मनःकायजनितं [5]यत् किञ्चित् मम दुष्कृतम् ।
तत सर्वं विलयं [6]यातु [7]मामुद्धरात्मसम्भवे ॥५०॥
एवमुच्चार्य्य तां दद्यात् ब्राह्मणाय कुटुम्बिने ।
नाभिभाषेत तां दत्त्वा न × × वलोकयेत् ॥५१॥
न × × दक्षिणाहीना दातव्या [8]नाविधानतः ।
[9]यथा पुनर्गृहीता स्यात् कुर्य्यान्नान्यस्य सत्तम ॥५२॥

यथान्यस्य पुनर्गृहीता न स्यात्तथा कुर्यात् । प्रतिग्रहीता यथा पुनस्तां नान्यस्मै दद्यात्, तथा [10]तमनुनयेदित्यर्थः ।

पुरा दत्तमिदं दानं गौर्य्या सत्या विधानतः ।
रुक्मिण्या च तथान्यैश्च राजभिः सगरादिभिः ॥५३॥
दानस्यास्य प्रभावेण सुखमत्यन्तमाप्नुयुः[11] ।
अपुत्रो लभते पुत्रमधनो लभते धनम् ।
[12]आरोग्यं चैवमाप्नोति परत्र च शुभां गतिम् ॥५४॥

---

1 A स्वयं पूज्य
2 A omits the bracketed portion
3 I. O. लवणादिमुखी, A लवणाभिमुखी
4 A omits the bracketed portion
5 I. O. किञ्चिन्मम दुष्कृतं
6 A and I. O. यान्तु
7 I. O. द्दानात् वाम्बुसम्भवे
8 A च विधानतः
9 A दत्त्वा पुनर्ग्रहीत स्यात०
10 A तमत्यर्थं योजयतीत्यर्थः, I. O. तमत्यन्वयेदित्यर्थः
11 A आप्नुयात्
12 I. O. श्रियं दाराम(न ?)वाप्नोति

अयनादीनामन्यतमे समये नदीतीर्थादीनामन्यतमे देशे चोक्तशङ्करादिदेवानिन्द्रादिलोकपालानादित्यादिग्रहान् प्रतिमासु स्थण्डिले वाग्रतः पङ्क्तिक्रमेण सप्तविंशतिपुञ्जिकाः कृत्वा तासु क्रमेण पूजयेत्। [1]तद् यथा :—

एत एत उमासहितशङ्कर-गायत्रीसहितब्रह्म-श्रीसहितश्रीधर-रतिसहितानङ्ग इत्यावाह्य शङ्करमारोपयामि उमारोपयामि ब्रह्माणमारोपयामि गायत्रीमारोपयामि श्रीधरमारोपयामि श्रीमारोपयामि अनङ्गमारोपयामि रतिमारोपयामि इत्यारोप्य एत एत लोकपाला इत्यावाह्य इन्द्रमारोपयामि अग्निमारोपयामि यममारोपयामि निर्ऋतिमारोपयामि वरुणमारोपयामि वायुमारोपयामि सोममारोपयामि ईशानमारोपयामि अनन्तमारोपयामि ब्रह्माणमारोपयामि इत्यारोप्य एत एत नवग्रह इत्यावाह्य आदित्यमारोपयामि सोममारोपयामि अङ्गारकमारोपयामि बुधमारोपयामि बृहस्पतिमारोपयामि शुक्रमारोपयामि शनैश्चरमारोपयामि राहुमारोपयामि केतुमारोपयामीत्यारोपयेत्। ततः शङ्कराय उमायै ब्रह्मणे गायत्र्यै श्रीधराय श्रियै अनङ्गाय रत्यै इन्द्राय अग्नये यमाय निर्ऋतये वरुणाय वायवे सोमाय ईशानाय अनन्ताय ब्रह्मणे आदित्याय सोमाय अङ्गारकाय बुधाय बृहस्पतये शुक्राय शनैश्चराय राहवे केतवे इति प्रत्येकमुच्चार्य एतत् पाद्यं नम इति क्रमादेकैकशः पाद्यं सर्वेभ्यो दद्यात्। तथैव एषोऽर्घ्यो नमः इत्यर्घ्यम् एतदाचमनीयं नम इत्याचमनीयम् एष गन्धो नम इति गन्धम् [ एतत् पुष्पं नम इति पुष्पम् ][2] एतद्विलेपनं नम इति विलेपनम्[3] एष धूपो नम इति धूपं एष दीपो नम इति दीपम् एतन्नैवेद्यं नम इति नैवेद्यं प्रत्येकं दद्यात्। ततस्त्रीन् ब्राह्मणान् वस्त्रालङ्काराभ्यां श्रद्धातिशयेन सम्पूज्य पूजितदेवतानामग्रतोऽग्निमुपसमाधाय यथाक्रमं पूजितदेवतानां प्रकाशकैः[4] स्वशाखोक्तैर्मन्त्रैः प्रत्येकमेकैकां घृताक्ततिलाहुतिं दद्यात्। शूद्रो ब्राह्मणद्वारा होमं कारयेत्। मन्त्राश्च शङ्करस्य ऋग्वेदे इमा रुद्रायेति[5], यजुर्वेदे मा नस्तोक इति, सामवेदे आ वो राजानमिति, अथर्ववेदे भवो दिवे भव इति। उमायाः ऋग्वेदे मदभ्युत्तेति[6] मादन इति। यजुर्वेदे अम्बे अम्बिके इति। सामवेदे मदभ्युत्तेति मादन इति। अथर्ववेदे य [7]एवं विदुषेदत्तेति। ब्रह्मणो वेदचतुष्टयेऽपि ब्रह्म जज्ञानमिति[8]।

1 A omits तद् यथा
2 I. O. omits the bracketed portion
3 I. O. चतुःसमं
4 I. O. प्रत्येकैः
5 A नमो रुद्रादिति
6 A मदभ्युत्तेति
7 A एवं विदुषे दत्तेति
8 A यजमनमिति, I. O. यज्ञान इति

गायत्र्याः ऋग्वेदे यद्[1]गायत्र्ये अधि गायत्रमिति । यजुर्वेदे अयं पुरो-[2]भुवस्तस्येति । सामवेदे [3]युञ्जे वाचं शतपदीमिति । अथर्ववेदे गायत्री च्छन्दसामध्यक्षेति[4] । विष्णोः ऋग्वेदे अतो देवा इति । [5]यजुर्वेदसामवेदयोः इदं विष्णुरिति । अथर्ववेदे उरु विष्ण इति । लक्ष्म्याः ऋग्वेदयजुर्वेदयोः मनसः कामम् आ-[6]कूतिमिति । सामवेदे श्रीरसि मयि रमस्वेति । अथर्ववेदे श्रियं धातरिति[7] । कामदेवस्य ऋग्वेदे कामस्तदग्रे समवर्ततेति[8] । यजुर्वेदे कोदादिति[9] । सामवेदे वेद ते नामेति । अथर्ववेदे [10]कामस्तदग्र इति । रत्याः ऋग्वेदे इच्छन्ति त्वा सोम्यास[11] इति । यजुर्वेदे इह रतिरिति । सामवेदे परि प्रिया दिवस्कविरिति[12] । अथर्ववेदे मूर्द्धानं दिवो अरतिमिति[13] । इन्द्रस्य ऋग्वेदयजुर्वेदयोः त्रातारमिन्द्रमिति[14] । सामवेदे त्वामिद्धि हवामह[15] इति । अथर्ववेदे इन्द्रस्य बाहू इति । अग्नेः ऋग्वेदेऽग्निं दूतं वृणीमह इति । यजुर्वेदे त्वन्नो अग्ने तव देवेति । सामवेदेऽग्निं दूतं वृणीमह इति । अथर्ववेदे अग्नेर्मन्व[16] इति । यमस्य ऋग्वेदे असि यम इति । यजुर्वेदे सुगं नुः पन्थामिति । सामवेदे [17]नाके सुपर्णमिति । अथर्ववेदे [18]यमो नो गातुमिति । निर्ऋतेः ऋग्वेदे वेत्था हि निर्ऋतीनामिति । [यजुर्वेदे असुन्वन्तमयजमानमिति । सामवेदे वेत्था हि निर्ऋतीनामिति । अथर्ववेदे अपेत एत्विति । वरुणस्य ऋग्वेदे वरुणं वो रिशादशमिति । यजुर्वेदे त्वा यामीति । सामवेदे घृतवती भुवनानामिति । ][19] अथर्ववेदे उदुत्तमं [20]वरुणेतिपाश इति । वायोः ऋग्वेदे [21]वात आ वात्विति । यजुर्वेदे आनो नियुद्भिरिति । साम-

1 I. O. ०गायत्रं अधिगायत्रमिति
2 A भवस्तस्ये
3 A पाश्वावं गो यदीति
4 A छन्दमध्यक्षेति विशेषः for छन्दसामध्यक्षेति विष्णोः
5 A यजुर्वेदः कविस्ते इति for यजुर्वेद...(in the middle) उरु विष्ण इति
6 A ०कूतमिति
7 I. O. धातरिति
8 A कामस्तुल
9 I. O. दाद्दिति
10 A कामस्तदग, I. O. कामस्तदेकापत
11 A omits स्यास
12 A दिवस्करिति, I. O. दिवः कविरिति
13 A मुद्धानन्दं नोवमिति
14 A वतारानिन्द्रमिति, I. O. त्रातारमिन्द्रमिति
15 A त्वामिन्विद्दमाव
16 अग्निर्मन्न
17 I. O. नाकेषु यत्तमिति
18 A यायानागान्त इति
19 A omits the bracketed portion
20 A वरुणपाश
21 A वायो धन्निति

वेदे [1]वात आ वात्विति। अथर्ववेदे वायोः सवितुरिति। सोमस्य ऋग्वेदे कुविदङ्ग नमसा ये[2] इति। यजुर्वेदे वयं सोमेति[3]। सामवेदे सोमं राजानं वरुणमिति। अथर्ववेदे[4] सोदक्रामत् सा वनस्पतीनिति। [5][ईशानस्य ऋग्वेदे] ईशाना वार्याणामिति। [यजुर्वेदे तमीशानामिति][6]। [7]सामवेदे आत्वा सोमस्येति। अथर्ववेदे तस्मै सर्वेभ्य ईशानस्येति। अनन्तस्य ऋग्वेदे काडिको नाम सर्प इति। यजुर्वेदे[8] [नमोऽस्तु सर्पेभ्य इति। सामवेदे यां सन्ध्यां समभवत्तेति। अथर्ववेदे अनन्तं विततमिति।. ब्राह्मणः ऋग्वेदे ब्रह्मा देवानामिति। यजुर्वेदे] [आ ब्रह्मन्निति। सामाथर्वणोः ब्रह्म जज्ञानमिति। आदित्यस्य ऋग्वेदयजुर्वेदयोः आ कृष्णेनेति। सामवेदे बण्महाँ असीति। अथर्ववेदे आदित्य नावमिति। सोमस्य][9] ऋग्वेदे आ प्यायस्वेति। यजुर्वेदे इमं देवा इति। सामवेदे आ प्यायस्वेति। अथर्ववेदे यद्राजानमिति। अङ्गारकस्य ऋग्यजुःसामसु अग्निर्मूर्द्धेति। अथर्ववेदे त्वया मन्य इति। बुधस्य ऋग्वेदे अग्ने विवस्वदुषस[10] इति। यजुर्वेदे उद्बुध्यस्वेति। सामवेदे अग्ने विवस्वदुषस इति। अथर्ववेदे दर्शोऽसीति[11]। बृहस्पतेः ऋग्वेदे बृहस्पते परि दीयेति। यजुर्वेदे [बृहस्पते अतियदर्य इति। सामवेदे बृहस्पते परि दीयेति। अथर्ववेदे बृहस्पतिर्न इति। शुक्रस्य ऋग्वेदे शुक्रन्ते अन्यदिति। यजुर्वेदे अन्नात् परिश्रुत इति।][12] सामवेदे शुक्रन्ते अन्यदिति। अथर्ववेदे येनावपदिति[13]। शनैश्चरस्य ऋग्यजुःसामसु शन्नो देवारिति। [अथर्ववेदे प्राणाय नम इति।][14] राहोः ऋग्वेदे कया नश्चित्र इति। यजुर्वेदे काण्डात् काण्डादिति। सामवेदे कया नश्चित्र इति। अथर्ववेदे राहुं राजानमिति। केतोः वेदचतुष्टयेऽपि केतुं कृण्वन्निति।

ततो यथोक्तपरिमाणसुवर्णघटितां मेषामुक्तोपकरणयुतां पूजितदेवाग्रे तिलोपरि स्थापयित्वा लवणाभिमुखीं कृत्वाभ्यर्च्य ॐ [15]व्योमकृन्तमित्यादि मन्त्रद्वयं पठित्वा अर्चिताय

1 A वाता आरादिति
2 I. O. कविदङ्गनमसा यच्च
3 A सोमर्मिति
4 I. O. adds आत्मा सोमस्येति here
5 A omits the bracketed portion
6 A omits the bracketed portion
7 A सोमस्य वेदे
8 I. O. omits the bracketed portion.
9 A omits the bracketed portion
10 I. O. ०सुदषस
11 I. O. दर्शोसीति, A द्वाश्शोसीति
12 A बृहस्पति पद्य इ त for the bracketed portion
13 A परावपर्मिति
14 A omits the bracketed portion
15 I. O. रोमकृष्णामित्यादि

कुटुम्बिने ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। ॐ आग्नेयपुराणोक्त-सौवर्णी[1]-प्रदानफलप्राप्तिकामोऽहमेतां सौवर्णी[2] [3]सौवर्णतिलकोपेतां सर्वालङ्कारभूषितां कौशेयवस्त्र-परीधानां दिव्यचन्दनभूषितां दिव्यपुष्पोपहारां सर्वधातु-सर्वरस-सप्तधान्य[4]-नानाफलपुष्पयुतां तिलोपरिस्थापितां लवणाभिमुखीमूर्णायुन्ददानि[5]। प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते ऊर्णायु-रयं[6] वरुणदैवतेति[7] वदेत्[8]। कामस्तुत्यादि पूर्ववत्। [पुच्छग्रहणं स्वीकारः।][9] स्वरूप-मेषीदाने तु वाक्ये[10] सौवर्णीमिति पदस्थाने प्रत्यक्षामिति पदनिवेशो विशेषः। ततो दाता प्रतिग्रहीतारं वदेदियं मेषी न विक्रेतव्या [न चान्यस्मै दातव्या][11] भवतेति। ततो दाता तां मेषीं सुप्तामवलोकयेत् [न चाङ्गयेत][12]। सुवर्णमेषीदानसमानफलत्वाचास्य स्वरूपमेषी-दानस्यालङ्करणं[13] दक्षिणा च यथाशक्ति बहुसुवर्णं[14] कर्त्तव्ये। सुवर्णमेषीदानसमानप्रचुर-विधित्वेन पशुदानावर्त्ते लिखनयोग्यस्याप्यस्याल लिखनं कृतम्।

महाभारते (अनु—८५।१५४) :—

आदित्योदयसम्प्राप्तं विधिमन्त्रपुरस्कृतम्।
ददाति काञ्चनं यो वै दुःस्वप्नं[15] प्रतिहन्ति सः[16] ॥१॥

विधिमन्त्रपुरस्कृतमिति मन्त्रस्तु :—

हिरण्यगर्भगर्भस्त्वं हेमबीजं विभावसोः।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे।
इत्येव जातरूपस्त्वं जातदुःस्वप्ननाशनः[17] ॥२॥

सूर्योदयाव्यवहितपूर्वकाले यथेच्छपरिमाणं [18]काञ्चनमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। दुःस्वप्नदोषप्रशमनकामोऽहमेतत् [19]काञ्चनं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

1 A ०सौवर्णमेषी०
2 A सौवर्णी मेषीं
3 A सुवर्णतिलकेनोपेता।
4 A adds सहितां after सप्तधान्य
5 A लवणाभिमुखीं पूर्णां प्रददानि
6 A ऊर्णायं
7 I. O. वरुणो देवदेति
8 A वदो, I. O. वदत्
9 A omits the bracketed portion
10 I. O. omits it
11 A reads the bracketed portion after सुप्तामवलोकयेत् in the next sentence
12 A omits the bracketed portion
13 A ०दानस्य न सङ्कर
14 I. O. वर्णं for सुवर्णं
15 A दुष्कृतं
16 I. O. नः
17 I. O. reads the entire line as इत्येव रूपः। जातदुःस्वप्नदर्शनः
18 I. O. सुवर्ण०
19 I. O. सुवर्णं

तथा सुवर्णदानानुवृत्तौ (अनु—८५।१५५क) :—

दद्यात्युदितमात्रे यः तस्य पाप्मा विधूयते ।

[1][सूर्योदयसमये यथेच्छपरिमाणं सुवर्णमर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । पापविधूननकामोऽहमेतत् सुवर्णं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (अनु—८५।१५५ख) :—]

मध्याह्ने ददते[2] रुक्मं हन्ति पापमनागतम् ॥३॥

मध्याह्नसमये ब्राह्मणायार्चिताय यथेच्छपरिमाणं सुवर्णमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । अनागतपापक्षयकामोऽहमेतत् रुक्मं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (अनु—८५।१५६क—१५६क) :—

ददाति पश्चिमां सन्ध्यां यः सुवर्णं यतव्रतः[3] ।

ब्रह्मवाय्वग्निसोमानां सालोक्यमुपयाति[4] सः ॥४॥

[5]सेन्द्रेषु चैव लोकेषु प्रतिष्ठां विन्दते[6] शुभाम् ।

इह लोके यशः प्राप्य शान्तपाप्मा च मोदते ॥५॥

ततः सम्पद्यते[7]ऽन्येषु लोकेष्वप्रतिमः सदा ।

अनावृतगति[8]-श्चैव कामचारी भवत्यतः[9] ॥६॥

न च क्षरति तेभ्यश्च यशश्चैवाप्नुयान्महत् ।

यतव्रतोऽकृताहारः कृतचण्डालपाषण्डालापानृतभाषणादिवर्जननियमः । सायमर्चिताय ब्राह्मणाय यथेच्छं[10] सुवर्णमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । महाभारतोक्तपश्चिमसन्ध्याविहित-सुवर्णदानफलप्राप्तिकामोऽहमेतत् सुवर्णं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । फलभूयस्त्वादत्र देयसुवर्णबहुत्वं बोद्धव्यम् ।

तथा (अनु—८५।१५६ख) :—

सुवर्णमक्षयं दत्त्वा लोकानाप्नोति पुष्कलान् ॥७॥

1 A omits the bracketed portion
2 I. O. ददतो
3 A प्रयच्छतः
4 I. O. ०यान्ति
5 A सत्त्व षु
6 I. O. विन्दतां
7 I. O. सम्पद्यते
8 A ०मति०
9 A भवेन्नृप:
10 A यथेच्छपरिमाणं

अक्षयं रूप्यताम्रायसंपृक्तम्[1]। अर्चिताय ब्राह्मणायाक्षयं सुवर्णमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। पुष्कललोकप्राप्तिकामोऽहमेतत् सुवर्णं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

मनुः (४।२३०ख) :—

दीर्घमायुर्हिरण्यदः ॥८॥

अर्चिताय ब्राह्मणाय अर्चितं यथेच्छपरिमाणं सुवर्णम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। दीर्घायुष्ट्वप्राप्तिकामोऽहमेतद्धिरण्यं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

सम्वर्तः :—

हिरण्यदो महावृद्धिं दीर्घमायुश्च विन्दति ॥९॥

अर्चिताय ब्राह्मणाय यथेच्छपरिमाणं सुवर्णमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महावृद्धिसहितदीर्घायुष्ट्वप्राप्तिकामोऽहमेतद्धिरण्यं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। अत्र [2]फलोत्कर्षादधिकसुवर्णदानम्।

विष्णुधर्मे यममार्गानुवृत्तौ :—

हिरण्यदाः[3] सुखं यान्ति पुरुषाः स्वभ्यलङ्कृताः[4] ॥१०॥

ब्राह्मणायार्चितायार्चितं सुवर्णम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [5]स्वलङ्कारधारणपूर्वकयममार्गसुगमनकामोऽहमेतद्धिरण्यं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा :—

सुवर्णदानं गोदानं पृथिवीदानमेव च।
एतत् प्रयच्छमानो हि सर्वपापैः प्रमुच्यते ॥११॥

ब्राह्मणायार्चिताय सुवर्णमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सर्वपापक्षयकामोऽहमेतत् सुवर्णं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा :—

सुवर्णं परमं दानं सुवर्णं दक्षिणा परा।
एतत् पवित्रं परममेतत् स्वस्त्ययनं महत् ॥१२॥

1 A रूप्यं only, I. O. रूप्यताम्रायसंपृक्तम्
2 I. O. कालोत्०
3 I. O. हिरण्यदः
4 A स्वभ्यलङ्कृतं, I. O. स्वस्त्यालङ्कृताः
5 A अलङ्कार for स्वलङ्कारधारण

दशपूर्वान् दशपरान् [वंशानाञ्च विशाम्पते][1] ।
अपि पापशतं कृत्वा दत्त्वा विप्रेषु तारयेत् ॥१३॥

ब्राह्मणेभ्योऽर्चितेभ्यो यथेष्टपरिमाणमर्चितं सुवर्णम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोक्तपुरुषदशक[2]-तारणादि[3]-फलकसुवर्णदानफलप्राप्तिकामोऽहमेतत् सुवर्णं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा :—

सुवर्णदः स्वर्गलोके कामानिष्टानुपाश्नुते ।
विरजो देवसम्वीतः[4] परियाति[5] यतस्ततः ॥१४॥
विमानेनार्कवर्णेन भास्वरेण विराजता ।
अप्सरोगणपूर्णेन भास्वता स्वेन तेजसा ॥१५॥
हंससारसयुक्तेन कामगेन नरोत्तमः ।
दिव्यगन्धवहः स्वर्गं परिगच्छेद् यतस्ततः ॥१६॥

ब्राह्मणायार्चिताय यथेच्छपरिमाणं सुवर्णमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात । विष्णुधर्मोक्त[6]-स्वर्गगोचर-सर्वकामाप्त्यादिफलक-सुवर्णदानफलप्राप्तिकामोऽहमेतत् सुवर्णं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । फलबाहुल्याद्देयबाहुल्यम् ।

विष्णुधर्मोत्तरे सुवर्णदानानुवृत्तौ (३।३१०।५ख) :—

दत्त्वा कृष्णलमात्रन्तु नरः पापात् प्रमुच्यते ॥१७॥

[7]प्रचुरदानासामर्थ्ये देयमिदं कृष्णलमात्रम्[8] । सुवर्णमर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । पापक्षयकामोऽहमेतत् सुवर्णं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

अथ सुवर्णदानानुवृत्तौ (३।३१०।६क) :—

दत्त्वा तु माषकं तस्य पुण्यं फलमुपाश्नुते[9] ॥१८॥

पुण्यं श्रेष्ठम् । ब्राह्मणायार्चिताय पञ्चकृष्णलपरिमितं सुवर्णमाषकमर्चितम् ॐ अद्यादि

1 A नामोनञ्च विशाम्पते for the b. p.
2 A शतक
3 I. O. तारणा for तारणादि
4 I. O. विरजोऽस्वरसम्वीतः
5 I. O. परिपाति
6 I. O. विष्णुधर्मोत्तर
7 I. O. प्रसुर०
8 A प्रचुरदानासमर्थस्येदं for the entire line
9 Corrected from V. D. I. O. दत्त्वा त माषकं पुण्यं फलं तस्यमुपाश्नुते, A ०पुण्यफलमाप्नुयात्

तुभ्यमन्तमुक्त्वा दद्यात् । पुण्यफलप्राप्तिकामोऽहमेतत् सुवर्णमाषकं ददानि । स्वस्त्यादि-स्वीकारान्तं पूर्ववत् ।

तथा (३।३१०।६ख-७क) :—

सुवर्णमाषकं दत्त्वा सूर्यस्योदयनं प्रति ।

हुत्वाग्निं सर्वपापेभ्यो मोक्षमाप्नोत्यसंशयम् ॥१६॥

सूर्योदये स्नात्वा यथाविध्यग्निमुपसमाधाय ॐ प्रजापतये स्वाहेत्याज्याहुतिं हुत्वा शूद्रो ब्राह्मणद्वारा होमं कारयित्वा [1]पञ्चकृष्णलमितं सुवर्णमाषकमर्चिताय ब्राह्मणाय [ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् ][2] । सर्वपापविमोचन[3]-प्राप्तिकामोऽहमेतं सुवर्णमाषकं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । एवं प्रत्यहं यथेच्छकालावधि कुर्याद् बहुदानानि [4]नित्यदानेनेति श्रुतेः ।

तथा (३।३१०।८) :—

दिनमध्यगते सूर्ये हुत्वाग्निं यः[5] प्रयच्छति ।

[6]तस्यापि नित्यदानेन [7]महत्फलमुदाहृतम् ॥२०॥

नित्यदानेन प्रतिदिनं दानेन अत्रापिशब्देन[8] माषकमित्यनुषज्यते । [9]होमादिकं पूर्ववत् । दानवाक्ये तु विष्णुधर्मोत्तरोक्त-मध्याह्नविहित-सुवर्णदानफलप्राप्तिकामोऽहमिति विशेषः ।

तथा (३।३१०।९) :—

[10]सूर्यास्तसमये वह्निं हुत्वा तद्धि प्रयच्छति ।

पुण्यं [11]महान्तमुद्दिष्टं नित्यदानेन वै द्विजाः ॥२१॥

तदिति सुवर्णमाषकं [द्विजा इति सम्बोधनम् । दानवाक्ये तु विष्णुधर्मोत्तरोक्त-सूर्यास्त-समयविहित-सुवर्णमाषक-दानफलप्राप्तिकामोऽहमिति विशेषः । ][12]

1 A यथा०

2 I. O. omits the bracketed portion

3 I. O. ०विमोचक०, A ०विमोक्षक०

4 I. O. उत्तरदानेन

5 A हुताग्नियः

6 A तथा नित्यप्रदानेन

7 A महाफल०

8 I. O. and A अत्रापि

9 I. O. मोक्षादिकं

10 I. O. सूर्यस्यास्तमये हुत्वा वह्निं तद्द प्रयच्छति, V. D... वह्निं हुत्वा... (the rest as I. O.)

11 V. D. महत् समाप्नोति, A महत् समुद्दिष्टं

12 A omits the bracketed portion but repeats the portion of the last verse from हुत्वा to द्विजाः

तथा (३।३१०।१०) :—

[1]त्रिसन्ध्यं कनकं यस्तु हुत्वा वह्निं प्रयच्छति ।
न लिप्यते स पापेन पद्मपत्रमिवाम्भसा ॥२२॥

त्रिसन्ध्यं पूर्वोक्तविधिना होमं कृत्वार्चिताय ब्राह्मणायार्चितं सुवर्णम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । याव-[दुत्पन्नपापध्वंस][2]-पूर्वकानागतपापासम्बन्धप्राप्तिकामोऽहमेतत् कनकं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (३।३१०।१२) :—

यः सुवर्णं[3] सुवर्णस्य ब्राह्मणाय प्रयच्छति ।
निर्दोषस्य स नाके तु मोदत्यब्दशतं नरः ॥२३॥

सुवर्णस्योत्कृष्टवर्णस्य[4] निर्दोषस्य[5] न्यायार्जितस्य हेम्नः पञ्चकृष्णलमानेन षोडशमाषकपरिमाणं सुवर्णमित्यर्थः । ब्राह्मणायार्चिताय[6] उत्कृष्टं[7] सुवर्णमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । अब्दशत-सोत्कर्ष-स्वर्गवासकामोऽहमेतन्निर्दोषं सुवर्णं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (३।३१०।१३क—१५क) :—

आत्मतुल्यं सुवर्णन्तु[8] यः प्रयच्छति वै द्विजाः ।
सर्वपापविनिर्मुक्तो यथेष्टां गतिमाप्नुयात् ॥२४॥

द्विजा इति सम्बोधनम् ।

ब्रह्मघ्नो वा सुरापो वा स्तेनो वा गुरुतल्पगः ।
सर्वपातकयुक्तोऽपि [9]तेन दानेन मुच्यते ॥२५॥
[10]व्रतानामुत्तमं ह्येतद्दानानामपि चोत्तमम् ॥२६॥

आत्मतुलितं सुवर्णमर्चितमर्चितेभ्यो यथेच्छसंख्यब्राह्मणेभ्यः ॐ अद्यादि युष्मभ्यमन्तमुक्त्वा

---

1 I. O. omits the above verse but repeats the previous one
2 A omits the bracketed portion
3 A omits it
4 A सुवर्णस्यादुष्टवर्णस्य
5 A omits it
6 I. O. अर्चित for अर्चिताय
7 A दुष्टं
8 I. O. सुवर्णस्य
9 A मुच्यते नात्र संशयः
10 A च only for व्रतानामुत्तमं, V. D. ब्रताना०

दद्यात् । विष्णुधर्मोत्तरोक्तात्मतुलितसुवर्णदानफलप्राप्तिकामोऽहमेतदात्मतुलितं सुवर्णं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । सुवर्णस्य बाहुल्याद्बहुभ्यो लिखितं [न बहुत्वनियमः][1] ।

तथा (३।३१०।२८ख-३०क) :—

दत्वा सुवर्णं लोकेषु [2]यथेच्छमथ मोदते ।
विमानेनार्कवर्णेन हंसयुक्तेन भास्वता ॥२७॥
देवरामागणाढ्येन कामगेन विहायसा ।
भुक्त्वा दिवि चिरं भोगान् मानुष्ये सुखमाप्नुयात् ॥२८॥

अत्र फलोत्कर्षाद् यथाशक्ति बहुसुवर्णदानम् । ब्राह्मणायार्चिताय यथेच्छपरिमाणं सुवर्णमर्चितम् ओँ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्त-सकललोकगोचराभिमत-मोदादि-फलक-सुवर्णदानफलप्राप्तिकामोऽहमेतत् सुवर्णं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे सुवर्णदानावर्तः ।

1 I. O. त्वव नियम: for b. p.   2 A यथष्ट' स तु

# अथाग्निदैवतरूप्यदानावर्तः । (३४)

मनुः (४।२३०घ) :—

रूप्यदो रूपमुत्तमम् ॥१॥

अत्र यजमानोऽर्चिताय ब्राह्मणाय यथेच्छपरिमाणं रजतमर्चितं दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यमुत्तमरूपप्राप्तिकामोऽहमेतद्रूप्यं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा रूप्यमिदमग्निदैवतमित्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । ततः ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा रजतं स्पृशेत् ।

आग्नेयपुराणे :—

पुष्ये वा जन्मनक्षत्रे अयने विषुवेषु च ।
ग्रहणे च व्यतीपाते संक्रान्तौ च दिनक्षये ॥२॥
यानमश्वमनड्वाहं हेमरूप्यमणींस्तिलान् ।
ये प्रयच्छन्ति पापेषु निरताः सर्वदा मुने ।
न तेषां भैरवः पन्था दत्त्वैषां[1] दानमित्युत ॥३॥

अत्रोक्तसमयानामन्यतमे ब्राह्मणायार्चितायार्चितं [2]यथेष्टपरिमाणं रूप्यम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । आग्नेयपुराणोक्तामुकसमयविहितरूप्यदानफलप्राप्तिकामोऽहमेतद्रूप्यं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । सर्वदेतिपददर्शनादति-[3]प्रचुरपापक्षयार्थमिदं दानम् ।

नरसिंहपुराणे :—

रूप्यदानेन [4]स्वर्गन्तु निर्मलं लभते नरः ॥४॥

ब्राह्मणायार्चिताय [5]यथेष्टपरिमाणं रजतमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । निर्मल-[6]स्वर्गप्राप्तिकामोऽहमेतद्रूप्यं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

---

1 A यत्वैषां
2 A यथेच्छ०
3 A प्रचुरतर०
4 A सुवर्ण
5 A यथेच्छ०
6 A omits स्वर्ग

ब्रह्मपुराणे :—

*सुवर्णं रजतं वापि विद्रुमं मौक्तिकं तथा ।*

*ये प्रयच्छन्ति ते यान्ति विमानैः कनकोज्ज्वलैः ॥५॥*

ब्राह्मणायार्चिताय [1]यथेष्टपरिमाणमर्चितं रजतम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । ब्रह्मपुराणोक्त-रजतदानफलप्राप्तिकामोऽहमेतद्रजतं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे रजतदानावर्तः ।

---

1 A यथे॰

## अथ विष्णुदैवतालङ्कारदानावर्तः । (३५)

नन्दिपुराणे :—

अलङ्कारन्तु यो दद्याद्विप्रायाथ सुराय वा ।
स गच्छेद्वारुणं लोकं नानाभरणभूषितः ।
जातः पृथिव्यां कालेन भवेद्द्वीपपतिर्नरः ॥१॥

अत्र यजमानः प्रसिद्धहैमरौप्यमौक्तिकाद्यलङ्करणानामन्यतमं यथेष्टमुपादायार्चितं ब्राह्मणायार्चिताय दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं नन्दिपुराणोक्तालङ्कारदानफलप्राप्तिकामोऽहमेतमलङ्कारं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा अलङ्कारोऽयं विष्णुदैवत इत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । ततः ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा[1] अलङ्कारं स्पृशेत् ।

वामनपुराणे (६५।४४) ब्राह्मणाय दानानुवृत्तौ[2] :—

दासीं दासमलङ्कारमन्नं षड्रससंयुतम्[3] ।
[4]पुरुषोत्तम-[5]प्रीत्यर्थं प्रदेयं सार्वकालिकम् ॥२॥

नियतमासक-[6]दानानन्तरस्याभिधानात् सार्वकालिकमित्यनियतमासदेयम् । प्रसिद्धालङ्काराणामन्यतममर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । पुरुषोत्तमप्रीतये एतमलङ्कारं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

महाभारते ( अनु—५७।३८ ) :—

[7]स्रग् धूपगन्धान्यनुलेपनानि स्नानानि माल्यानि च मानवो यः ।
दद्याद्द्विजेभ्यः स भवेद्विरोगस्तथाभिरूपश्च[8] नरेन्द्रलोके ॥३॥

---

1 I. O. omits सावित्रीं पठित्वा

2 A ब्राह्मणदानानुवृत्तौ

3 A मङ्गलद्रव्यसंयुतम् for अन्न ...(in the middle) संयुतम्

4 Corrected from Vāmana P. I. O. and A पुरुषोत्तमस्य०

5 Vāmana P. ०तुष्ट्यर्थं

6 I. O. omits दा

7 Both A and I. O. सुगन्धधूपान्यनुलेपनानि. स्रग्धूपगन्धा etc. has been supplied from a previous quotation of the same and from a consideration of the following paragraph, which becomes meaningless without this reading.

8 A ०तथाभिजातश्च

अत्र माल्यानि पृथगुक्त्वा स्रग्ग्रहणमलङ्करणरूपमुक्तास्रक्प्रतिपादनार्थम्। यथाशक्ति मुक्ता-सुवर्ण-रजतादिस्रजामन्यतमां स्रजमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्तस्रग्दानफलप्राप्तिकामोऽहमेतां स्रजं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

विष्णुधर्मोत्तरे (३।३१०।१५ख—१६ख):—

[1]रुक्माभरणदानेन सुखी सर्वत्र जायते।

चिरान्नाकपरिभ्रष्टो रूपसौभाग्यसंयुतः।

[2]सतां कुले तु सुस्फीते गुणैः सर्वैर्युतो नरः ॥४॥

प्रसिद्धानामलङ्काराणामन्यतममलङ्कारमर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोत्तरोक्तरुक्माभरणदानफलप्राप्तिकामोऽहमेतत् रुक्माभरणं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते श्रीदानसागरे अलङ्कारदानावर्तः।

1 V. D. रुक्मं दत्त्वा ब्राह्मणाय 2 V. D. तासां

## अथ विष्णुदैवतरत्नदानावर्तः । (३६)

यम :—

> राजोपकरणं दत्त्वा रत्नानि विविधानि च ।
> नगरञ्च[1] तथा दत्त्वा राजा भवति भूतले ॥१॥

अत्र यजमानो ब्राह्मणायार्चिताय प्रसिद्धरत्नानि इच्छया[2] नानाजातीयानि यथेष्टसंख्य-रत्नान्यर्चितानि दद्यात् । ॐ [3]अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं [4]भूतलराज्यप्राप्तिकामोऽहमेतानि रत्नानि ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा रत्नानीमानि विष्णुदैवतानीत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । ततः ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा रत्नानि स्पृशेत् ।

आग्नेयपुराणे :—

> पुष्ये वा जन्मनक्षत्रे अयने विषुवेषु च ।
> ग्रहणे च व्यतीपाते संक्रान्तौ च दिनक्षये ॥२॥
> यानमश्वमनड्वाहं हेमरूप्यमणींस्तिलान् ।
> ये प्रयच्छन्ति पापेषु निरताः[5] सर्वदा मुने ।
> न तेषां भैरवः पन्था दत्त्वैषां दानमित्युत ॥३॥

अत्रोक्तसमयानामन्यतमे ब्राह्मणायार्चितायार्चितं यथेष्टं[6] मणित्रयम् ॐ अद्यादि तुभ्य-मन्तमुक्त्वा दद्यात् । आग्नेयपुराणोक्तामुकसमयविहितमणिदानफलप्राप्तिकामोऽहमेतान् मणीन् ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । सर्वदेतिपददर्शनादतिप्रचुरतरपापक्षयार्थमिदं दानम्[7] ।

ब्रह्मपुराणे :—

> सुवर्णं रजतं वापि विद्रुमं मौक्तिकं तथा ।
> ये प्रयच्छन्ति ते यान्ति विमानैः कनकोज्ज्वलैः ॥४॥

---

1 I. O. न परञ्च
2 I. O. मिच्छया
3 I. O. अद्यादितुभ्यममुक०
4 A भूराज्य०
5 I. O. निरताः
6 A यथेष्ट
7 A omits दानम्

विद्रुमं प्रवालम् । ब्राह्मणायार्चिताय [1]प्रवालमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । ब्रह्मपुराणोक्त-विद्रुमदानफलप्राप्तिकामोऽहमेतं विद्रुमं ददानि । स्वस्त्यादि-स्वीकारान्तं पूर्ववत् । मुक्तादाने तु वाक्ये ब्रह्मपुराणोक्तमुक्तादानफलप्राप्तिकामोऽहमेतन्मौक्तिक-मिति विशेषः ।

विष्णुधर्मोत्तरे (३।३१०।२३क-२६क) :—

रत्नानाञ्च प्रदानेन राजैवेह[2] प्रजायते ।
रत्नदानस्य यल्लोकं तद्भुक्त्वा सुचिरं द्विजाः ॥५॥

रत्नानामिति वक्ष्यमाणानां राजैवेह प्रजायत इति वक्ष्यमाणरत्नदानफलेषु[3] प्रत्येकं सम्बध्यते । भुक्त्वा यथोक्तलोकान् इह राजा भवतीत्यर्थः ।

वज्रदः शक्रलोकन्तु[4] पद्मरागप्रदो रवेः ।
मर्त्यो मरकतं दत्त्वा विष्णुलोके महीयते ॥६॥
मुक्ताफलप्रदानेन वारुणं लोकमश्नुते ।
वैदूर्यस्य प्रदानेन द्वीपानासाद्य[5] मोदते ।
रत्नान्यन्यानि दत्त्वैव [राजराजस्य तु][6] द्विजाः ॥७॥

लोकमासाद्येति शेषः । रत्नान्यन्यानीति नील[7]-गोमेद-[8]कदलीगर्भ-पुष्पराग-[9]रूपाणि । ब्राह्मणायार्चिताय हीरकमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्त-वज्रदानफलप्राप्तिकामोऽहमेतद्वज्ररत्नं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । [10]पद्मरागादि-दानेषु तु विष्णुधर्मोत्तरोक्तामुकरत्नफलप्राप्तिकामोऽहममुकरत्नमिति वाक्ये विशेषः ।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे [11]रत्नदानावर्तः ।

---

1 A omits प्रवालम्
2 A[1] राजोद्राहं
3 I. O. ०फलेषु
4 A[1] रजदः शक्र,लोकया
5 V. D. द्वीपानां सम
6 I. O. मुक्तिमायाति वै for the b. p.
7 I. O. omits नील
8 A करलीगर्भ
9 I. O. omits रू
10 A reads पद्मरागदाने and omits तु
11 A नानारत्न०

# अथ विष्णुदैवतगृहदानावर्तः[1] । (३७)

## तत्र सोपकरणगृहदानानि ।

कालिकापुराणे :—

कारयित्वा [2]तथोद्वाहं श्रोत्रियाणां कुलेषु च ।
[3]वेदविच्छीलवृत्तेषु [4]द्विजेष्वेकादशेष्वथ ॥१॥

[5][समावृत्ताय ब्राह्मणाय] दानेषु निषिद्ध इति वाक्यार्थः ।

ततो गृहाणि रम्याणि कुर्यादेकादशैव तु ।
कारयित्वा तु धान्यैश्च विविधैश्च प्रपूजयेत् ॥२॥

विविधैरिति व्रीहियवमाषमुद्गतिलप्रभृतिभिः ।

[6]दासं गोमहिषांश्चापि[7] शयनासन[8]-पादुकाः ।
भाजनानि विचित्राणि ताम्रमृन्मयकानि[9] च ॥३॥
पात्राणि भोजनार्थं च [10]रुक्म सोपस्करञ्च यत् ।
लोहञ्च कनकञ्चैव वस्त्राणि च विशेषतः ॥४॥

उपस्कर-[11]मुदूखलमुषलादि ।

[12]संपूज्यैतं सुसम्भारं गृहेषु विनियोजयेत् ।
[13]योजयेच्चैव वृत्यर्थं वसतो वा शतं शतम् ॥५॥
पृथक् पृथगिमांश्चैव निवर्तनशतार्द्धतः ।
विषयं [14]खर्वटं खेटं ग्रामं ग्रामार्द्धमेव वा ॥६॥
इ × भूमिं योजये × ×
एकादशैव तास्तत्र दम्पत्यो ×
विचिन्त्य परया भक्त्या तद्गृहेषु प्रवेशयेत् ॥७॥

---

1 A omits the heading
2 I. O. ततोद्वाहं
3 I. O. विविधद्वीनवृत्तेष,
4 I. O. सर्वे॰
5 I. O. समावृत्तयो ब्राह्मणा
6 I. O. गोमी
7 I. O. गोमहिषोंश्चापि, A गोमहिषांश्चापि
8 A and I. O. ॰सन॰
9 A ताम्रवक्रमयानि च
10 I. O. रुक्म
11 A ॰उलुखल॰
12 A सस्टजीतं
13 A योजयेष, मवृत्यार्थं यक्षितो वा शतं शतं
14 A कर्वटं, I. O. करट

[1]ग्राहयेदग्निहोत्राणि [2]प्रवेश्यैतान् द्विजोत्तमान् ।
विधिपूर्वं यथान्यायमात्मनः श्रेयसे नरः ॥८॥
अदुष्टजलजानाञ्च विधिरेष [3]निरन्तरः ।
शीलवृत्तैर्विभक्तानां द्विजानां कारयेत् सदा ॥९॥
यश्च प्रेष्यान् द्विजान् मूढो योजयेद्धव्यकव्ययोः ।
न भवेत्तत्फलं तस्य वैदिकीयं श्रुतिर्ध्रुवा ॥१०॥
यज्ञदानव्रताद्यञ्च तीर्थयात्रादिकञ्च यत् ।
यस्त्वेवं कारयेज्जन्तुस्तेन सर्वमनुष्ठितम् ॥११॥
[4]समासाद्यार्कसङ्काशं विमानं रत्नमालिनम् ।
आरुह्य तत्पदं पुण्यं सुरस्त्रीभिरलङ्कृतम् ॥१२॥
[5]विमानैश्चापरैर्दिव्यैः सहस्रैः परिवारितः ।
सर्वलोकगतान् भोगान् भुक्त्वा तस्मिन् प्रपद्यते ॥१३॥
ज्ञात्वा[6]चैव स्वसामर्थ्यमेकं चोद्वाहयेद्द्विजम् ।
तेनाप्याप्नोति तत्स्थानं शिवभक्तो नरो ध्रुवम् ।
[7]स्थानेन स्थानसम्प्राप्तिर्विधिवत्तेन [8]जायते ॥१४॥
मातापितृविहीनन्तु संस्कारोद्वाहनादिभिः ।
यः संस्थापयति तस्येह पुण्यसंख्या न विद्यते ॥१५॥

अत्र वेदवृत्तशीलान्वितेषु कुलेषु [9]एकादशविहितान् ब्राह्मणान् विवाहं कारयित्वा तेषामवस्थानार्थमग्निहोत्रार्थञ्च एकादशसु स्थानेषु प्रतिस्थानं नानाविधविचित्रगृहाणि कारयित्वा एकैकशो निवर्तनशतात्मकां [10]पञ्चाशन्निवर्त्तनावच्छिन्नां वा भूमिकेकैकशो विषय-[11]खर्वट-खेट-ग्राम-[12]ग्रामार्द्धानामन्यतमपरिमाणेनावच्छिन्नां वा[13] भूमिमुपकल्प्यात्रोक्तद्रव्याणि नानाविध-[14]धान्य-

1 I. O. omits ग्राहयेदग्नि
2 I. O. प्रवेशितान्
3 I. O. चिन्तनः
4 I. O. स यात्यर्कसमानाभं
5 I. O. विमानैश्चामरैर्दिव्यैः
6 I. O. चैतत्
7 A omits स्थानेन
8 A संजायते
9 I. O. एकादशाविहितान्
10 I. O. पञ्चाशन्निवर्त्तनीवर्त्तनावच्छिन्ना स्वा भूमिम्
11 I. O. कवट, A कर्वट
12 I. O. omits ग्रामार्द्ध
13 I. O. omits वा
14 A ०धान्याद्य०, I. O. omits it

दासीदासगोमहिषीशय्यापीठिका[1]-पादुका[2]-भाजनताम्रकलसताम्रघटी-[3]पित्तलघटीपित्तलदीप-वृन्त-नानाविधमृन्मयपात्र--भोजनार्थस्थान--मुषलोदूखल[4]--सूर्प--सम्मार्जनी--कुद्दालदात्रकुठार--खनित्र-कर्त्तरी[5]-शर्कराखण्ड-गुड-घृत-तैल-लवणार्द्रक-हिङ्गु-मरीच धान्याक सर्षप-हरिद्रा-शुण्ठी-पिप्पली-मुद्ग-माष-मसूर-द्विदलकादि-[6]रन्धनोचित--सामग्रीं शिलापट्टशिला-[7]पुत्रिकादि--गृहवसत्युचित-सामग्रीश्च लोह-कनकानेकविधवस्त्राणि च तेषु गृहेषु स्थापयित्वा [8]तान् सभार्यान् तत्र तत्रानीय यजमानः शुचिः स्नातः[9] तान् ब्राह्मणान् शिवमूर्त्तीन् ध्यात्वा ब्राह्मणीश्च गौरीमूर्त्तीर्ध्यात्वाभ्यर्च्य वस्त्रादिना तेभ्यो ब्राह्मणेभ्यस्तानि गृहाण्यर्चितानि दद्यात्। ॐ अद्यामुकसगोत्रेभ्योऽमुकामुक-वेदामुकामुकशाखाध्यायिभ्यो युष्मभ्यमेकादशभ्यो यथासंख्यं कालिकापुराणोक्तैकादशब्राह्मणसम्प्र-दानकगृह-[दानफलप्राप्तिकामोऽह][10]-मेतान्येकैकशो [11][नानाविध-धान्य]-दासीदास-गो-महिषी-शय्या-पीठिका-पादुका-भाजन-ताम्रकलस-ताम्रघटी--पित्तलघटी[12]-पित्तलदीप-वृन्त--नानाविधमृन्-मयपात्र-[13]भोजनस्थान-मुषलोदूखल[14]-सूर्प-सम्मार्जनी-कुद्दालदात्रकुठारखनित्रकर्त्तरी-शर्कराखण्ड-गुड-घृततैल-लवणार्द्रक-हिङ्गु-मरीच-धान्याक सर्षप-हरिद्रा-शुण्ठी-पिप्पली-मुद्ग-माष-मसूर-द्विदल-कादिरन्धनोचितसामग्रीं शिलापट्ट-शिलापुत्रिकादि-गृहवसत्युपयोगिद्रव्यसहितानि लोहसुवर्णा-नेकवस्त्रयुतान्येकैकशः पञ्चाशन्निवर्त्तनभूमिसहितानि एकादशगृहाणि ददानि। प्रतिग्रहीतारः स्वस्तीत्युक्त्वा सावित्रीं पठित्वा गृहमेतद्विष्णुदैवतमिति प्रत्येकमुक्त्वा यथाशाखं कामस्तुतिं पठेयुः। ततः ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं युष्मभ्यमहं दक्षिणामेतत् काञ्चनं ददानि। प्रतिग्रहीतारः स्वस्तीत्युक्त्वा गृहं प्रविशेयुः। ततस्तान् द्विजान् गृहाणि प्रवेश्य यथाविभ्यग्निहोत्राणि ग्राहयेत्। एकस्मै दानत्वे एकं ब्राह्मणं विवाहं कारयित्वा पूर्वलिखितक्रमेण तस्यावस्थानार्थं गृहं कारयित्वा पूर्वोक्तनिवर्त्तनशतादीनामन्यतमपरिमाणां भूमिमुपकल्प्य पूर्वोक्तगृहोपकरणद्रव्याणि तत्र स्थापयित्वा तं सभार्यं यथायथं शिवगौरीरूपं ध्यात्वा वस्त्रादिनाभ्यर्च्य तस्मै गृहमर्चितं दद्यात्। ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं कालिका-

---

1 I. O. ०पीडिका
2 I. O. भाजनताम्बल for भाजन-ताम्र
3 I. O. पित्तलो०
4 I. O. मुषलोदूषखल
5 I. O. कर्त्तनी
6 A omits रन्ध
7 A पुत्रषादि
8 A तत्
9 A स्नातः शुचिः
10 A omits the bracketed portion
11 A नानाविधान्य for the b. p.
12 I. O. पित्तलो, A omits it
13 I. O. omits भोजन
14 I. O. मुषलोदूखल, A मुषलोल्खल

पुराणोक्तासमर्थ[1]-दातृकगृहदान[2]-फलप्राप्तिकामोऽहमेतन्नानाविधगृहवसत्युचितसामग्रीयुतं लोह-सुवर्णानेकवस्त्रसंयुतम्[3] [4]इयत्परिमाणभूमिसहितं गृहं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। ततस्तमग्निहोत्रं दापयेत्[5]। एवं मातापितृविहीन-कारितोप-[6]नयनोद्वाहाद्यैक-ब्राह्मण-[7][सम्प्रदानपक्षे कालिकापुराणोक्तमातापितृविहीनकारितोपनयनविवाहैकब्राह्मण]-संप्रदान-कगृहदानफलप्राप्तिकाम इत्युपरिलिखितदानवाक्ये विशेषः।

आदित्यपुराणे :—

सर्वैश्च भाण्डैरुपशोभिताङ्गं दद्याद् गृहं ब्राह्मणसुव्रताय।
सर्वांश्च कामान् लभते च शीघ्रं पुत्रांश्च[8] पौत्रांश्च लभते[9] समग्रान्॥१६॥

सर्वैश्च भाण्डैरिति गृहवसत्युचितोपकरणैरिति[10] गृहैकादशकदाने[11] लिखितैः। सुव्रता-[य शोभनव्रतशालिने][12]। ब्राह्मणाय शोभनव्रतशालिनेऽर्चितायार्चितं गृहवसत्युचितसामग्री-सहितं गृहम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। आदित्यपुराणोक्तगृहदानफलप्राप्तिकामोऽहमेतत् सर्वभाण्डोपशोभिताङ्गं गृहं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

स्कन्दपुराणे :—

गृहं यस्तु प्रयच्छेत सर्वकामसमृद्धिमत्[13]।
स लोकं ब्रह्मणः प्राप्य सर्वकामैर्हि सेव्यते[14]॥१७॥

सर्वकामसमृद्धिमदिति[15] गृहस्थोपकरणयावद्गृहवसत्युचितसामग्रीसम्पन्नमित्यर्थः।

वर्षकोटीः स तत्रोष्य चतस्रस्तेन कर्मणा।
गृहमेधी सदा दाता भोगवांश्चैव जायते॥१८॥

गृहस्थोपकरण[16]-यावद्गृहवसत्युचितसामग्रीसहितं गृहमर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। स्कन्दपुराणोक्तगृहदानफलप्राप्तिकामोऽहमेतत् सर्वकाम-

---

1 I. O. ०समग्र
2 I. O. दामादाम for दान
3 A युतम् for वस्त्रसंयुतम्
4 A वृषत्०
5 A वाचयेत्
6 A ०मयनविवाहैक०
7 I. O. omits the bracketed portion
8 I. O. omits च
9 A लभेत्
10 A ०करण
11 I. O. omits कदाने
12 A omits the bracketed portion
13 A ०समृद्धिमान्
14 A ०निषेव्यते
15 A ०समृद्धिमानदिति
16 A ०करणीय०

समृद्धिमद्गृहं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। गृहवसत्युचितसामग्री गृहैकादशकदाने लिखिता तत [1]एव ज्ञेयाः।

नन्दिपुराणे :—

यश्च वेश्म शुभं दद्यात् सर्वोपकरणान्वितम्।
विप्राय नियमस्थाय स पूतः पातकैर्भवेत् ॥१६॥

शुभमुत्कृष्टं सर्वोपकरणान्वितं[2] गृहैकादशक[3]-दानलिखितगृहवसत्युचितसामग्रीसहितं नियमस्थायोपवासादिव्रतशीलाय गृहवसत्युचितसकलसामग्रीसहितं गृहमुत्कृष्टमर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। नन्दिपुराणोक्तगृहदानफलप्राप्तिकामोऽहमेतत् सर्वोपकरणान्वितं गृहं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

बृहस्पतिः :—

रसान्नोपस्करयुतं गृहं विप्राय योऽर्पयेत्।
तस्य न क्षीयते वंशः स्वर्गं प्राप्नोत्यसंशयम् ॥२०॥

उपस्करः गृहवसत्युचितसामग्री गृहैकादशदाने लिखिता। ब्राह्मणायार्चिताय धान्यलवणादिरसगृहवसत्युचितसामग्रीसहितं गृहमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। बृहस्पत्युक्त[4]-गृहदानफलप्राप्तिकामोऽहमेतद्गृह[5]- वसत्युचित[6]-सामग्रीधान्यलवणादिरससहितं[7] गृहं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

महाभारते (cf. अनु-५७।३६) :—

बीजैरुपेतं शयनैरुपेतं दद्याद् गृहं यः पुरुषो द्विजाय।
सुखाभिरामं बहुरत्नपूर्णं लभेदधिष्ठानवरं[8] स राजन् ॥२१॥

शयनैरिति उपरिरचितवस्त्रमयशय्यायुक्तखट्वाभिस्तिसृभिः। ब्राह्मणायार्चितायार्चितं धान्यादिबीजशय्यात्रयोपेतं गृहम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्तसोपकरणगृहदानफलप्राप्तिकामोऽहमेतद्धा-[न्यमुद्ग-माष-सर्षप-यव-तिल-मसूरसहितं शयनैर्युतं ][9] गृहं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

---

1 A एवानुसन्धेया
2 A सर्वोपकरणं
3 I. O. omits क
4 I. O. बृहस्पत्युचित
5 I. O. omits एतद्गृह
6 A वत्युचित
7 A ०रसचित
8 A ०रत्नं
9 A दियुक्तमर्चितमर्चिताय for the b. p.

विष्णुधर्मोत्तरे ( ३।३०५।२१ख—२३क) :—

धनधान्ययुतं स्फीतं [1]गृहोपकरणैर्युतम् ।
[2]शय्यासनयुतं रम्यं गोजात्यश्वयुतं[3] तथा ॥२२॥

[ स्फीतं बृहत् । गृहोपकरणैर्युतं][4] पूर्वलिखितगृहैकादशदानोक्तगृहोपकरणयुतम् ।

गृहं दत्त्वा द्विजेन्द्राय तावत् स्वर्गमुपाश्नुते ।
यावत् कल्पावसानन्तु कल्पादौ पार्थिवो भवेत् ॥२३॥

द्विजेन्द्राय विद्यातपःसम्पन्नाय ब्राह्मणायार्चिताय सुवर्णधान्य[5]-गृहोपकरणशय्यासन-[6]गोजात्यश्वयुतं महदुत्कृष्टं गृहमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्तसोपकरणगृहदानफलप्राप्तिकामोऽहमेतद्धनधान्ययुतं स्फीतं[7] बहुविधगृहोपकरणसहितं [ शय्यासनयुतं [8]गोजात्यश्वसहितं][9] गृहं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

---

1 Corrected from V, D, T, O. and A सर्वो०
2 I. O. and A शय्यासन०
3 A गोजात्यंश्वयुतं
4 A omits the bracketed portion
5 A धा for धान्य
6 I. O. गोजात्यश्व, A गोजात्यश्वयुतं
7 I O. omits स्फीतं
8 I. O. गोजात्यश्व०
9 A omits the bracketed portion

## अथानुपकरणगृहदानम्।

मनुः ( ४।२३०ग) :—

गृहदोऽग्र्याणि वेश्मानि ॥१॥

आप्नोतीति सम्बन्धः ।

[याज्ञवल्क्यः ( १।२११ ) :—

गृहधान्यतोयोपानच्छत्रमाल्यानुलेपनम् ।

यानं वृक्षं प्रियां शय्यां दत्त्वात्यन्तं सुखी भवेत् ॥२॥

यम :—

गृहदो नगरं तथा ॥३॥

आप्नोतीति सम्बन्धः । ][1]

सम्वर्तः :—

गृहदाता सुखी प्राज्ञो वितृष्णः सर्ववस्तुषु[2] ॥४॥

ब्राह्मणायार्चिताया[3]-र्चितं गृहम् ॐ अद्यादि तुभ्यमहमुक्त्वा दद्यात् । '[4]अग्र्यवेश्मप्राप्ति-कामोऽहमेतद्गृहं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । याज्ञवल्क्योक्तगृहदानफल-प्राप्ति-[कामनायामत्यन्तसुखप्राप्ति][5]-कामोऽहमिति यमोक्तगृहदानफलप्राप्ति-[कामनायां नगरप्राप्ति][6]-कामोऽहमिति सम्वर्तोक्तगृहदानफलप्राप्ति [कामनायां ][7] [सुख-प्राज्ञता-सर्ववस्तुवितृष्णता-प्राप्ति][8] कामोऽहमेतेषामन्यतमपदं दानवाक्ये कामनायां यथायथं निवेशनीयम् ।

महाभारते ( अनु—२३।१०० ) :—

निवेशनानां क्षेत्राणां [9]वसतीनाञ्च भारत ।

दातारः प्रार्थितानाञ्च पुरुषाः स्वर्गगामिनः ॥५॥

---

1 I. O. omits the bracketed portion

2 A सर्ववस्तुतः

3 A omits अर्चिताय

4 A अग्र्यात for अग्र्यवेश्म

5, 6 & 7 A omits the bracketed portions

8 A omits it and I. O. reads सम्वर्तोक्तगृहदानफलप्राप्ति which is almost a repetition of the previous phrase

9 A वसतीनां युधिर (युधिष्ठिर?)

वसतीनां गृहाणां, वसतीनामिति[1] बहुवचनं दातृबहुत्वापेक्षम्[2]। ब्राह्मणायार्चिताय गृह[3]मर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। स्वर्गप्राप्तिकामोऽहमेतां वसतिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

ब्रह्मपुराणे :—

गृहावसथदातारो गृहैः काञ्चनमण्डितैः।
व्रजन्ति बालार्कनिभैर्धर्मराजगृहं [4]नराः ॥६॥

अर्चिताय ब्राह्मणाय [5]यथेष्टगृहमुपादायार्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। ब्रह्मपुराणोक्तगृहदानफलप्राप्तिकामोऽहमेतद्गृहं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

विष्णुधर्मोत्तरे :—

ब्राह्मणाय गृहं दत्त्वा वसूनां लोकमाप्नुयात् ॥७॥

ब्राह्मणायार्चिताय [6][गृहमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। वसुलोकप्राप्तिकामोऽहमेतद्गृहं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे गृहदानावर्तः।

---

1 A omits it
2 I. O. adds उक्तम्
3 A omits अर्चिताय गृहम्
4 A adds न before नराः
5 A यथेच्छ०
6 A omits the bracketed portion

# अथ प्रतिश्रयदानावर्तः । (३८)

यमः :—

दत्त्वा प्रतिश्रयं लोके तथा दत्त्वैव चाभयम् ।
तथा दत्त्वा क्षितिं विप्रे ब्रह्मलोके महीयते ॥१॥

अत्र यजमानो ब्राह्मणादेर्विश्रामार्थं[1] गृहं मनोहरं निर्मायोत्सृज्य दद्यात् । ॐ अद्य महाभारतोक्त-ब्रह्मलोकप्राप्तिकामोऽहं विश्रामार्थं[2] प्रतिश्रयमुत्सृजे । ततश्चारभ्य यथायथमागतान् ब्राह्मणादीन् विश्रामयेत् ।

महाभारते (अनु—६६।३०ख—३१क) :—

तथा गवार्थे शरणं शीतवर्षसहं शुभम् ।
आसप्तमं तारयति कुलं भरतसत्तम ॥२॥

शरणं गृहम् । उपकल्प्येति विशेषः । शुभं सुदृढं[3] यथोक्तगृहमुत्पाद्य गवां निवासार्थ-मुत्सृज्य दद्यात् । ॐ महाभारतोक्त-गोदान-फलप्राप्तिकामोऽहं गवार्थमुत्सृजे इत्युत्सृज्य गास्तत्रावारितं विश्रामयेत् ।

विहारावसथोद्यान-कूपाराम-सभाप्रदाः ।
विप्राणाश्चोपकर्तारस्ते नराः स्वर्गगामिनः ॥३॥ (अनु—२३।६६)

विहारावसथोऽग्निहोत्रगृहं सभा[4] सभा[5]-जनगृहं यत्र बहवो जनाः सुखेनोपविश्य कथादि कुर्वन्ति । अग्निहोत्रिणे अग्निहोत्रकरणोचितं गृहमर्चितं दद्यात् । ॐ अद्य महाभारतोक्त-विहारावसथदानफलप्राप्तिकामोऽहमग्निहोत्रिणे तुभ्यं विहारावसथं ददानि । नानासत्त्वविश्रा-मार्थं सभामुत्सृज्य दद्यात् । ॐ ब्राह्मणमुखनानासत्त्वेभ्यः स्वर्गप्राप्तिकामोऽहमेतां विश्रामार्थं सभामुत्सृजे । तदादि यथायथं तत्र श्रान्तान् विश्रामयेत्[6] ।

तथा (वन—१६६।२४) :—

पादोदकं पादघृतं दीपमन्नं प्रतिश्रयम् ।
प्रयच्छन्ति तु ये राजन्नोपसर्पन्ति ते यमम् ॥४॥

---

1 & 2 I. O. विश्रमार्थं
3 I. O. सुदृढं शुभं
4 I. O. सता
5 I. O. सभा॰
6 I. O. विश्रमयेत्

प्रतिश्रयं निर्माय श्रान्तविश्रामार्थमुत्सृज्य दद्यात्। ॐ ब्राह्मणप्रमुखनानाश्रान्तेभ्यो विश्रामार्थं [1]यमानुपसर्पणरूपफलप्राप्तिकामोऽहमेतं प्रतिश्रयमुत्सृजे। इत्युत्सृज्य [2]यथाकालमागतान् श्रान्तान् [3]विश्रामयेत्।

तथा (अनु—५७।३७ख) :—

प्रतिश्रयाच्छादनसंप्रदाता प्राप्नोति [4]तान्येव न संशयोऽत्र ॥५॥

तान्येवेति प्रतिश्रयाच्छादनान्येव इत्यर्थः। श्रान्तविश्रामार्थं प्रतिश्रयमुत्सृज्य दद्यात्। ॐ ब्राह्मणप्रमुखनानाश्रान्तेभ्यो विश्रामार्थं बहुप्रतिश्रयप्राप्तिकामोऽहमेतं प्रतिश्रयमुत्सृजे। तदादि यथायथमुपस्थितान् श्रान्तान् तत्र [5]विश्रामयेत।

स्कन्दपुराणे :—

योगिभ्यो ब्रह्मचारिभ्यो ब्राह्मणेभ्यो यतात्मवान्।
यः प्रयच्छेदावसथं सोऽश्वमेधफलं लभेत् ॥६॥

आवसथं विश्रामगृहम्।

आप्तावास[6] पुण्डरीकं गोसहस्रञ्च विन्दति।
स्मृतिं च परमां[7] लब्ध्वा योगमाप्नोति सुव्रतः ॥७॥

शीतवर्षाद्युपद्रवरहितं दृढं गृहमुत्पाद्य त्रिदण्ड्येकदण्डिभ्योऽवस्थानार्थं सङ्कल्प्य दद्यात्। ॐ स्कन्दपुराणोक्तावसथदानफलप्राप्तिकामोऽहं योगि-ब्रह्मचारि-ब्राह्मणविश्रामार्थमेतमावसथमुत्सृजे। ततआरभ्य यथायथं त्रिदण्डिन एकदण्डिनश्च विश्रामयेत्[8]।

आग्नेयपुराणे :— ]

कारयित्वा दृढस्तम्भं [शुभं पक्के][9]-ष्टकामयम्।
प्रतिश्रयं [सुविस्तीर्णं सुभूमिं][10] लक्षणान्वितम् ॥८॥

शुभं शोभनं सुभूमिं[11] [12]परिकल्पितभूमिं लक्षणान्वितं मठलक्षणान्वितम्।

---

1 I. O. यामानुसर्पण
2 I. O. यथकाल०
3 I. O. विश्रमयेत्
4 I. O. तान्येव
5 I. O. विश्रमयेत्
6 I. O. आप्तापास
7 I. O. परमं
8 I. O. विश्रमयेत्
9 A सर्व for the bracketed portion
10 I. O. सुविस्तीर्णभूमि for the bracketed portion
11 I. O. भूमिं
12 I. O. परिकल्पितभूमिं

मठं कमठ(?)-[पृष्ठाभं भस्म(?)सितदिगम्बरम् ।][1]

सुधानुलिप्तं गुप्तञ्च सुखशाला[2]-विराजितम् ॥९॥

गुप्तं रक्षितं [3]प्राकारादिवेष्टितमित्यर्थः ।

दद्यादनन्तफलदं शैववैष्णवयोगिनाम् ॥१०॥

यथोक्तं मठं निर्माय शिवध्यानरतेभ्यो ब्राह्मणेभ्योऽथर्ववेदविहितपाशुपतव्रतधारिभ्यो वा विष्णुध्यानरतेभ्यो द्विजेभ्यो[4] भगवद्भ्यो वा उत्सृज्य दद्यात् । ॐ आग्नेयपुराणोक्त-मठ[5]-प्रतिश्रयदानफलप्राप्तिकामो शैवयोगिभ्यो वैष्णवयोगिभ्यो[6] विश्रामार्थमेतं सुखशालान्वितं [मठं प्रतिश्रययुतं ददानि इत्युत्सृजेत्][7] । ततःप्रभृति यथासम्भवमुपस्थिता-[न् शैवयोगिनो वैष्णवयोगिनो वा यथेच्छं][8] मठे विश्रामयेत्[9] ।

[10]वायुपुराणे (२।१८।५६) :—

[प्रतिश्रयन्तु यो][11] दद्यादतिथिभ्यः[12] कृताञ्जलिः ।

[13]देवास्तमुपतिष्ठन्ते द्विजातिथ्यैः सहस्रशः ॥११॥

वातवर्षादिसहं[14] [15]गृहमुत्पाद्यातिथिभ्यो विश्रामार्थमुत्सृज्य दद्यात् । ॐ [16]वायुपुराणोक्तप्रतिश्रयदानफलप्राप्तिकामोऽहमतिथिभ्यो विश्रामार्थमेतं प्रतिश्रयमुत्सृजे । ततःप्रभृति यथाकालमुपस्थितानतिथीन् कृताञ्जलिरादरेण विश्रामयेत् ।

ब्रह्मपुराणे :—

गृहावसथदातारो गृहैः काञ्चनमण्डितैः ।

व्रजन्ति बालार्कनिभैर्धर्मराजगृहं नराः ॥१२॥

---

1 A omits the bracketed portion

2 A सुखाखान्

3 I. O. and A प्रकारादि०

4 I. O. omits द्विजेभ्यो

5 I. O. मत्

6 I. O. omits this

7 I. O. मठप्रतिश्रयमुत्सृजे इत्युत्सृज्य for the b p.

8 A 'वैष्णवयोगिनो वा यथेच्छं' for the b. p.

9 I. O. विश्रमयेत्

10 A पद्मपुराणे

11 Vāyu P. प्रतिश्रयं यदा for the b. p.

12 A दद्यादतिथिभ्यश्च

13 Vāyu P. देवास्ते सं प्रतीक्षन्ते

14 A निमित्ताय for सहं

15 I. O. omits गृहम्

16 A पद्मपुराणोक्त०

आवसथो विश्रामार्थं गृहम्[1] । श्रान्तविश्रामोचितं दृढं गृहमुत्पाद्य श्रान्तेभ्य उत्सृज्य दद्यात् । [ॐ ब्रह्मपुराणोक्तावसथदानफलप्राप्तिकामोऽहं श्रान्तविश्रामार्थमेतमावसथमुत्सृजे । ततःप्रभृति तस्मिन् वेश्मनि यथाकालमागतान् श्रान्तान् विश्रामयेत् ।][2]

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे प्रतिश्रयदानावर्तः ।

---

1 I, O. गृहं twice

2 A ब्रह्मपुराणे only for the bracketed portion

# अथ प्रजापतिदैवतशय्यादानावर्तः । (३९)

[1]विष्णुः :—

शय्यादानेन भार्य्याम् ॥१॥

प्राप्नोतीति शेषः[2] । अत्र यजमानो ब्राह्मणायार्चितायार्चितां शय्यां दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं भार्य्याप्राप्तिकामोऽहमेतां शय्यां ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा शय्येयं प्रजापतिदैवतेत्युक्त्वा[3] यथाशास्त्रं कामस्तुतिं पठेत् । ततः ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामेतत् काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा शय्यां स्पृशेत् ।

याज्ञवल्क्यः (१।२११ख) :—

यानं वृक्षं प्रियां[4] शय्यां दत्त्वात्यन्तं सुखी भवेत् ॥२॥

ब्राह्मणायार्चितायार्चितां शय्याम् ॐ अद्यादि[5] तुभ्यमन्तमुक्त्वा दद्यात् । अत्यन्तसुखप्राप्तिकामोऽहमेतां शय्यां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

महाभारते (अनु-५७।४०) :—

सुगन्धाचित्रास्तरणोपधानं दद्यान्नरो यः[6] शयनं द्विजाय ।

रूपान्वितां[7] रूपवतीं[8] मनोज्ञां भार्य्यामपत्योपचितां लभेत् सः ॥३॥

उपधानं गेण्डुकम् । ब्राह्मणायार्चिताय शय्यां सुगन्धिचित्रास्तरणां सोपधानां [9]खट्वारूपामर्चियाम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात । महाभारतोक्तशय्यादानफलप्राप्तिकामोऽहमेतत् [10]सास्तरणोपधानं शयनं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

---

1 A reads विष्णुः before the heading of this topic, just above.

2 A प्राप्नोतीत्यर्थः

3 I. O. प्रजापतिदैवतेति पठित्वा

4 A and I. O. प्रियं

5 A प्रतिग्रहीता for ॐ अद्यादि

6 A सुवर्णं for नरो यः

7 A रूपान्विता

8 A रूपवतीं

9 I. O. adds पर्यङ्करूपाम् after खट्वारूपाम्

10 A सास्तरणोपधानम्

स्कन्दपुराणे :—

यस्तु शय्यां प्रयच्छेत स्वास्तीर्णां नरसत्तम ।

स हि भार्य्याः प्रिया दिव्या बह्वीर्भर्त्ता[1] समश्नुते[2] ॥४॥

स्वास्तीर्णां खट्वोपरिविस्तृतशोभनरूपाम् । अर्च्चितां स्वास्तीर्णां शय्यामर्च्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । स्कन्दपुराणोक्त-शय्यादानफलप्राप्तिकामोऽह-मेतां स्वास्तीर्णां शय्यां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

शिवपुराणे :—

शय्याप्रदानं यो दद्याद् ब्राह्मणेभ्यो[3] विशेषतः ।

षष्टिं वर्षसहस्राणि स्वर्गलोके महीयते ।

यदि कालक्षयं गत्वा[4] जायते विपुले कुले ॥५॥

[5]यथेष्टसंख्यब्राह्मणेभ्योऽर्च्चितेभ्यो[6] यथाशक्ति शय्यामर्च्चितां[7] दद्यात् । ॐ अद्या-मुकामुकसगोत्रेभ्योऽमुकामुकवेदामुकामुकशाखाध्यायिभ्योऽमुकामुकदेवशर्मभ्यो युष्मभ्यं शिव-पुराणोक्तशय्यादानफलप्राप्तिकामोऽहमेताः शय्या ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । अत्र फलोत्कर्षादुत्कृष्टशय्यादानम् ।

आदित्यपुराणे :—

ये च शय्यां प्रयच्छन्ति देवेषु च गुरुष्विह ।

ज्ञानवृद्धेषु विप्रेषु दत्त्वा नश्यन्ति कण्टकम् ॥६॥

सम्प्रदानबहुत्वं दातृबहुत्वापेक्षम् । गुरवे ब्राह्मणाय [8]बहुश्रुतायार्च्चितायार्च्चितां शय्याम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । कण्टकनाशकामोऽहमेतां शय्यां ददानि । स्वस्त्यादि-स्वीकारान्तं पूर्ववत् ।

[9]ब्रह्मपुराणे :—

[10]उपानद्युगलं छत्रं [11]शय्यासनमथापि च ।

ये प्रयच्छन्ति वस्त्राणि तथैवाभरणानि च ॥७॥

---

1 A बह्वीभर्त्ती, I. O. बह्वीभर्त्ता:

2 A समाप्नुते

3 I. O. ब्राह्मणेषु,

4 A दत्वा

5 A यथ°

6 A omits अर्च्चितेभ्यो

7 I. O. शय्या अर्च्चिता

8 A omits बहुश्रुतायार्च्चिताय

9 A omits ब्रह्मपुराणे

10 A पादुका for उपानद्

11 A शय्यां कांस्यं for शय्यासनम्

ते यान्त्यश्वै रथैश्चैव कुञ्जरैश्चाभ्यलङ्कृताः ।
धर्मराजपुरं रम्यं छत्रैः सौवर्णराजतैः ॥८॥

अत्र फलोत्कर्षश्रवणादुत्कृष्टशय्यादानम् । ब्राह्मणायार्चिताया[1]-र्चितां शय्याम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । ब्रह्मपुराणोक्त-शय्यादानफलप्राप्तिकामोऽहमेतां शय्यां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

विष्णुधर्मोत्तरे (३।३११।२-३) :—

दत्त्वा द्विजाय शयनं स्वास्तीर्णं सोत्तरच्छदम् ।
कुले महति [सम्भूतां रूपद्रविणसंयुताम् ][2] ॥९॥
तथा पल्लवतीं[3] भार्य्यां प्राप्नोति वशगां[4] तथा ।
अनेनैव तु दानेन भार्य्या पतिमवाप्नुयात् ॥१०॥

[5]पल्लवतीं कुटुम्बिनीम् । भार्या पतिमिति[6] महाकुलत्वादियुक्तं पतिमित्युन्नेयम् । शय्यां सुपरिष्कृतामुपरि[7]-वस्त्राच्छादितामर्चिता[8] मर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्त-स्वास्तीर्णशय्यादानफलप्राप्तिकामोऽह-[मेतत् सोत्तरच्छदं शयनं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (३।३११।२५ख) :—

शय्याप्रदानं लोकेषु तथा स्थानकरं परम् ॥११॥

ब्राह्मणायार्चिताय यथाशक्त्युपकल्पितां शय्यामर्चिताम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्तानुपकरणशय्यादानफलप्राप्तिकामोऽह][9]-मेतां शय्यां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे शय्यादानावर्तः ।

---

1 I. O. omits अर्चिताय
2 Corrected from V. D. I. O. रूपभूतो रूपद्रविणसंयुतम and A सम्भूता रूपद्रविणसम्पदा for the b. p.
3 A दलवतीं
4 Corrected from V. D. A सवशां and I. O. च समां
5 A दलवतीं
6 I. O. पति for पतिमिति
7 I. O. सुपरिष्कृता परि, A उप-स्कृतामुपरि
8 A omits अर्चिताम
9 A omits the bracketed portion

# अथ विष्णुदैवतेन्धनदानावर्तः[1]। (४०)

विष्णुः :—

इन्धनप्रदानेन दीप्ताग्निर्भवति संग्रामे च जयमाप्नोति ॥१॥

अत्र यजमानोऽर्चिताय ब्राह्मणायार्चितमिन्धनं दद्यात्। ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं विष्णूक्तेन्धनदानफलप्राप्तिकामोऽहमेतदिन्धनं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा इदमिन्धनं विष्णुदैवतमित्युक्त्वा यथाशाखं कामस्तुतिं पठेत्। ततः ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि। [2]प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा[3] इन्धनं स्पृशेत्।

महाभारते ब्राह्मणायेन्धनदानानुवृत्तौ (अनु—६५।१४ख-१६क) :—

प्रतापनार्थं राजेन्द्र व्रतवद्भ्यः[4] सदा नरः।
सिध्यन्त्यर्थाः सदा तस्य कार्य्याणि विविधानि च ॥२॥
उपर्युपरि शत्रूणां वपुषा दीप्यते च सः।
भगवांश्चास्य सुप्रीतो[5] वह्निर्भवति नित्यशः ॥३॥

[6]शीतार्त्तानां [7]व्रतकृच्छ्रब्राह्मणानां प्रतापनार्थं काष्ठान्युत्सृज्य दद्यात्। ॐ महाभारतोक्तप्रतापनार्थकाष्ठदानफलप्राप्तिकामोऽहं [8]व्रतपरब्राह्मणेभ्यः प्रतापनार्थं काष्ठमुत्सृजे। [9][ततः काष्ठानि दद्यात्। तत्कार्य्योण्याद्वृत्त्या[10] सदेतिपददर्शनात्।

आग्नेयपुराणे :—

य इन्धनानि काष्ठानि ब्राह्मणेभ्यः प्रयच्छति।
सर्वार्थास्तस्य सिध्यन्ति तेजस्वी चाभिजायते ॥४॥

इन्धनानि[11] काष्ठविशेषणं वह्निप्रज्वालनोपयोगीनि काष्ठानीत्यर्थः। अर्चितेभ्यो ब्राह्मणेभ्योऽर्चितानि काष्ठानि दद्यात्। ॐ] अद्यामुकसगोत्रेभ्योऽमुकामुकवेदामुकामुकशाखाध्यायिभ्यो

---

1 A omits this heading, I. O. ...दैवत इन्धन...

2 A प्रतिग्रहीता स्वस्तीत्युक्त्वा इन्धनं ददानि before this

3 A omits सावित्रीं पठित्वा

4 I. O. व्रतवद्भ्यः

5 I. O. सुप्रीतो

6 I, O. शीतार्त्तानां

7 A व्रतकृच्छ्र०, I. O. कृच्छ्र०

8 I. O. व्रतवद्ब्राह्मणेभ्यः

9 A reads the following only for the bracketed portion viz. ततः काष्ठान्याहृत्य दद्यात्

10 I. O. ०वृत्त्यात्

11 I. O. इन्धनादीनि

[ऽमुकामुकदेवशर्मभ्यो][1] युष्मभ्यमाग्नेयपुराणोक्तकाष्ठदानफलप्राप्तिकामोऽहमेतानि काष्ठानि ददानि। स्वस्त्यादिस्त्रीकारान्तं पूर्ववत्। उत्सृज्य वा क्रमशो दद्यात्।

मार्कण्डेयपुराणे (१०।५७क) यममार्गगमनानुवृत्तौ :—

शीतं [2]जयन्तीन्धनदाः ॥५॥

अर्चिताय ब्राह्मणायार्चितमिन्धनम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। मार्कण्डेयपुराणोक्तेन्धनदानफलप्राप्तिकामोऽहमेतदिन्धनं ददानि। [3]स्वस्त्यादिस्त्रीकारान्तं पूर्ववत्। सङ्कल्प्य वा क्रमशो दद्यात्।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते श्रीदानसागरे इन्धनदानावर्तः।

---

1 A omits the bracketed portion

2 Mārkaṇḍeya P. जयन्ति धनदाः

3 A reads this sentence before शीतं जयन्तीन्धनदाः (V. 5)

# [1]अथ विष्णुदैवतदीपदानावर्त्तः । (४१)

## तत्र दीपदानस्तुतिः ।

महाभारते (cf. अनु—१३०।२६ख) :—

प्रदीपस्य प्रदानेन श्रूयतां गुणविस्तरः ।
तमोऽन्धकारे नियतं[2] दीपदो न प्रणश्यति[3] ॥१॥
प्रभाश्चास्य[4] प्रयच्छन्ति सोमभास्करपावकाः[5] ।
देवताश्चानुमन्यन्ते विमलाः सर्वतो दिशः ॥२॥
द्योतते च यथादित्यः स्वर्गलोकगतो[6] नरः ।
तस्माद्दीपः प्रदातव्यः पानीयञ्च विशेषतः ॥३॥
यस्मादूर्द्ध्वगमेतत्तु तमसश्चैव भेषजम् ।
तस्मादूर्द्ध्वगतिर्दाता[7] भवत्यत्रेति निश्चयः ॥४॥
देवास्तेजस्विनो यस्मात् प्रभावन्तः प्रकाशकाः ।
तामसा राक्षसाश्चैव तस्माद्दीपः प्रदीयते ॥५॥
आलोकदानाच्चक्षुष्मान्[8] प्रभायुक्तो भवेन्नरः ।
तान् दत्त्वा नोपहिंसेत न हरेन्नोपनाशयेत्[9] ॥६॥
दीपहर्त्ता भवेदन्धस्तमोगतिरसुप्रभः ।
दीपप्रदः स्वर्गलोके दीपमालेव[10] राजते ॥७॥

ब्रह्मपुराणे :—

दीपदा [11]यान्ति यानैस्तु दीपयन्तो दिशो दश ।
आदित्यसदृशैर्यानैर्दीप्यमाना[12] यथाग्नयः ॥८॥

---

1 A omits this heading
2 A तमोन्धकारनियतां
3 A दीपदा न प्रपश्यति
4 A प्रभावत्स्मै
5 A ॰पावगाः
6 I. O. स्वर्गलोकागतो, A प्रेतलोकगतो
7 A ॰गतिलाभ
8 I. O. ॰दानाच्चक्षुष्मान्
9 A ॰नोपनाशयेत्, I. O. ॰नोपवासयेत्
10 A दीपदामिव
11 I. O. यान्तु पारेच
12 A ॰दीपमाना

वराहपुराणे (almost the same as २०७।५२ख-५३क) :—

[1]दीपप्रदानेन द्युतिं लभन्ते घृतेन तेजः सुकुमारताञ्च[2] ।

प्राणद्युतिं[3] स्निग्धताञ्चापि तैलै-[4]र्द्रव्यैर्नानारसतृप्तताञ्च ॥९॥

नन्दिपुराणे :—

याम्यं तमोमयं घोरं [5]वनं दुर्गं महाभयम् ।

[6]व्रजन्ति ते च सुखिनो ये केचिद्दीपदायिनः ॥१०॥

## अथ दीपदानपरिभाषा ।

महाभारते :—

हविषा प्रथमः कल्पो द्वितीयश्चौषधो × ।

वसामेदोऽस्थि-[7]निर्यासैर्न कार्य्यः पुष्टिमिच्छता[8] ॥११॥

विष्णुधर्मोत्तरे :—

घृतेन दीपा दातव्या तैलैर्वा यदुनन्दन ।

वसामज्जादिभिर्देया न तु दीपाः कथञ्चन ॥१२॥

[9]दत्त्वा दीपं न कर्तव्यं तेन कर्म विजानता ।

निर्वापणञ्च दीपस्य हिंसनञ्च विगर्हितम् ॥१३॥

यः कुर्यात्तानि[10] कर्माणि स्यादसौ पुष्पितेक्षणः ।

दीपहर्त्ता भवेदन्धः काणो निर्वापको[11] भवेत् ।

दीपस्य दानात् परं दानं न भूतं न भविष्यति ॥१४॥

## अथ दानम् ।

याज्ञवल्क्यः (१।२१०) :—

भूदीपाश्चान्न[12]-वस्त्राम्भस्तिलसर्पिःप्रतिश्रयान् ।

नैवेशिकस्वर्ण-[धुर्यान् दत्त्वा स्वर्गे][13] महीयते ॥१५॥

---

1 I. O. दीपप्रदाने दुर्गतिं लभते
2 I. O. स्वर्गमावभाष
3 I. O. स्निग्धताच
4 I. O. ०र्द्रव्य०
5 A वनदुर्गं for वनं दुर्गं
6 I. O. व्रजन्ते तेन
7 A मजाद्यै for निर्यासै
8 I. O. ०मिच्छत:
9 I. O. मत्वा
10 I. O. कुर्य्यात्तं न. A कुर्य्यात्तन
11 I. O. निर्दीपको
12 I. O. ०चान्न०
13 I. O. भूपाय स्वर्गलोके for the bracketed portion

[1]इदं ब्राह्मणमात्रदेयभूम्यादिसमभिव्याहारात् ब्राह्मणाय [2]दीपदानम्। अत्र यजमानोऽर्च्चिताय ब्राह्मणायार्च्चितं दीपं दद्यात्। ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्म्मणे तुभ्यं सोत्कर्ष-[3]स्वर्गप्राप्तिकामोऽहमेतं दीपं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा [दीपोऽयं विष्णुदैवत इत्युक्त्वा][4] यथाशाखं कामस्तुतिं पठेत्। ततः ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामेतत् काञ्चनं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा दीपं स्पृशेत्।

शिवपुराणे :—

दीपप्रदानं[5] यो दद्याद् दैवते ब्राह्मणेषु च[6]।
तेन दीपप्रदानेन [7]अक्षय्यां गतिमाप्नुयात् ॥१६॥

ब्राह्मणेष्विति बहुवचनं प्रयोगबहुत्वापेक्षया। अर्च्चिताय [8]ब्राह्मणायार्च्चितं दीपम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [9]अक्षय्यगतिप्राप्तिकामोऽहमेतं दीपं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

नन्दिपुराणे :—

दीपं ददाति यो मर्त्यः सुरब्राह्मणवेश्मनि[10]।
स [11]दिव्येन तु [12]यानेन महाद्युति[13]-प्रभासिना[14]।
[15]गच्छति स्वर्गमण्डलं वसेत्तत्र समाः शतम् ॥१७॥

[16]गृहीतोदपूर्णताम्रपात्र उदङ्मुखो दीपदानं सङ्कल्प्य ब्राह्मणवेश्मसु [17]यथेच्छकालावधि दद्यात्। ॐ नन्दिपुराणोक्त-[18]ब्राह्मणवेश्म-दीपदानफलप्राप्तिकामोऽहं ब्राह्मणवेश्मसु दीपं दास्ये[19]। [20][अद्य फलभूयस्त्वाद् यथेष्ट]-चिरकालदीपदानम्।

---

1 A ततः
2 A omits दीप
3 A फल०
4 A omits the bracketed portion
5 A दीपं प्रासाद
6 A वा
7 I. O. अक्षयां
8 A omits ब्राह्मणाय
9 I. O. अक्षय०
10 A देवब्राह्मणवेश्मनि, I. O. सुरब्राह्मणवेश्मनो
11 I. O. दिव्ये व
12 I. O. यानेन, A जालेन
13 I. O. महाप्राभ
14 A प्रभाषिणा
15 I. O. गच्छति
16 A reads ततः before गृहीतो०
17 A यथेच्छया
18 A adds एव before ब्राह्मण०
19 A ददानि
20 A श्रुतिस्मृतिसंभूयवचांस for the bracketed portion

शाम्बपुराणे :—

दीपं ददाति[1] यो नित्यं देवतायतनेषु च ।

चतुष्पथेषु रथ्यासु रूपवान् [2]सुभगो भवेत् ॥१८॥

चतुष्पथेषु दीपदानं पूर्ववत् सङ्कल्पयेत् । ॐ शाम्बपुराणोक्तदीपदानफलप्राप्तिकामोऽहं चतुष्पथेषु दीपं दास्ये । ततो यथेष्टचिरकालावधि दद्यात् । रथ्यासु दीपदाने रथ्यास्विति [3]दानवाक्ये विशेषः । फलभूय-[स्त्वार्थिनोक्तदेशे[4]-ष्वेकदैव दीपा देयाः । [5]अत्र च वाक्येऽ-मुकामुक-[6]देवतायतनेषु चतुष्पथेषु[7] रथ्यासु च दीपं दास्य इति विशेषः ।

महाभारते (cf. अनु-५७।२२) :—

[8]दीपालोकप्रदानेन चक्षुष्मान् [9]भवते नरः ।

तस्माद्दीपाः प्रदातव्याः [10]सायं वै गृहमेधिभिः ।

[11]दिव्यं चक्षुरवाप्नोति [12]प्रेत्य दीपस्य दायकः ॥१६॥

शुचौ स्थाने [13]सायं यथेष्ट-[14]बहुसंख्यान् दीपान् यथेष्टचिरकालावधि सङ्कल्प्य दद्यात् । ॐ महाभारतोक्त-सायं-दीपदानफलप्राप्तिकामोऽहं साय-[15]मेतान् दीपान् दास्ये ।

विष्णुधर्मोत्तरे :—

दीपदान-[16][न्तु कर्तव्यं विप्र]-वेश्मसु पण्डितैः ॥२०॥

एतद्दीपदानं[17] मोक्षफलम् । अन्यत्र दीपदानेन महत्फलमवाप्नुयादित्यनन्तर[18]-श्रुतेः । महत्फलं मोक्षः । अन्यत्रेति देवगृह-[19]व्यतिरिक्ते दीपदानस्थान इत्यर्थः । दीपदानं सङ्कल्प्य जन्मसंस्कारविद्यासम्पन्नब्राह्मणगृहेषु चिरं दद्यात् । ॐ विष्णुधर्मोत्तरोक्तविप्रगृहदीपदान-फलप्राप्तिकामोऽहं विप्रगृहेषु दीपान् [20]दास्ये ।

---

1 A ददामि
2 A सुखभगो
3 A and I. O. लिखितदानवाक्ये
4 A स्नाविव राष्ट्रायतने चतुष्पथादि for the bracketed portion
5 A तत्र for अत्र च
6 I. O. दैवायतनेषु
7 A चतुष्पथ
8 A यस्माद्दीपप्रदानेन
9 A भवति
10 A सायाह्ने for सायं वै
11 A दिव्यचक्षुमवाप्नोति
12 A प्रत्य
13 A omits सायं
14 A चिरकाल for बहु
15 A एतं दीपं
16 I. O. ग्राम द्रव्यं for the bracketed portion
17 A •दानक्ष
18 A उत्तरत्र for अनन्तर
19 I. O. •व्यतिरिक्तान् दीप for •व्यतिरिक्ते
20 A दद्यात्

तथा :—

*गिरिशृङ्गे प्रदातव्या नदीनां [1]पुलिनेषु च ।*
वृक्षमूलेषु गोष्ठेषु [2]कान्तारगहनेषु च ।
दीपदानेन सर्वत्र महत् फलमुपाश्नुते ॥२१॥
[3]यावन्त्यक्षिनिमेषाणि दीपः प्रज्वलते नृप ।
तावन्त्येव स राजेन्द्र वर्षाणि दिवि मोदते ॥२२॥
दीपदानेन राजेन्द्र चक्षुष्मानिह जायते ।
रूपसौभाग्ययुक्तश्च धनधान्यसमन्वितः ॥२३॥

[4]गिरिशृङ्गादिषु पूर्वोक्तेषु दीपदानं पूर्ववत् सङ्कल्पयेत्[5] । ॐ [6]विष्णुधर्मोत्तरोक्त-गिरिशृङ्गदीपदानफलप्राप्तिकामोऽहं गिरिशृङ्गे दीपं दास्ये इति सङ्कल्प्य गिरिशृङ्गे यथेष्टकालावधि दीपं दद्यात् । एवं नदीपुलिनदीपदानफलप्राप्तिकामोऽहं [7][नदीपुलिन इति । वृक्षमूलदीपदानफलप्राप्तिकामोऽहं] वृक्षमूल इति । गोष्ठदीपदान-[8]फलप्राप्तिकामोऽहं गोष्ठ इति । कान्तारदीपदानफलप्राप्तिकामोऽहं कान्तार इति । वनदीपदानफलप्राप्तिकामोऽहं[9][वन इति लिखितवाक्ये विशेषः । अत्र फलभूयस्त्वार्थिनोक्तदेशेषु एकदैव दीपा देयाः । तत्र दानवाक्यम् । ॐ विष्णुधर्मोत्तरोक्त-महत्फलजनकत्वोपलक्षितदीपदानफलप्राप्तिकामोऽहं] गिरिशृङ्ग-नदीपुलिन-वृक्षमूल-गोष्ठ-कान्तारवनेषु दीपान् दास्ये इति सङ्कल्प्य उक्तस्थानेषु दीपान् दद्यात् ।

इति महाराजाधिराज-निःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे दीपदानावर्तः ।

1 A पुलिनेषु च
2 A कान्तारे गहनेषु
3 I. O. यावन्त्यक्षि°
4 A गिरिशृङ्गादिषु
5 A omits सङ्कल्पयेत्
6 I. O. विष्णुधर्मोक्त
7 A omits the bracketed portion
8 A omits फल
9 A omits the bracketed portion

# अथ सरस्वतीदैवतपुराणदानावर्तः । (४२)

मत्स्यपुराणे (५३।३-४) :—

पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा[1] स्मृतम् ।
अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥१॥
[पुराणमेकमेवासी-[2]त्तस्मिन् कल्पान्तरे सदा ।
त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ॥२॥

[3]तथा (५३।११-५६) —

[4]तदर्थोऽत्र चतुर्लक्षैः संक्षेपेण प्रदर्शितः । ][5]
पुराणानि दशाष्टौ च [6]साम्प्रतं तदिहोच्यते ॥३॥
नामतस्तानि वक्ष्यामि[7] शृणुध्वमृषिसत्तमाः ।
ब्रह्मणाभिहितं पूर्वं यावन्मात्रं मरीचये ।
ब्राह्मं [8]तद्दशसाहस्रं पुराणं परिकीर्त्यते ॥४॥
लिखित्वा तच्च[9] यो दद्याज्जलधेनुसमन्वितम् ।
वैशाखे पौर्णमास्यां स ब्रह्मलोके महीयते ॥५॥
एतदेव यदा पद्ममभूद्धिरण्मयं जगत ।
[10]तद्वृत्तान्ताश्रयन्तद्वत् [11]पाद्ममित्युच्यते बुधैः ॥६॥
[12]पाद्मं तत् पञ्चपञ्चाशत् सहस्राणीह पठ्यते ।
तत्पुराणञ्च यो [13]दद्यात् सुवर्णकमलान्वितम् ।
ज्यैष्ठे मासि तिलैर्युक्तं सोऽश्वमेधफलं लभेत् ॥७॥

1 A ब्रह्माच
2 M. P. •त्तदा कल्पान्तरेऽनघ
3 A omits तथा
4 A reads this line as तदर्थं च चतुर्लक्षो संक्षेपात्र प्रदर्शित:
5 A repeats the bracketed portion
6 A संप्रतं
7 A वक्ष्यामि
8 M. P. त्रिदश•
9 I. O. तत्र
10 A तत्तथान्ताश्रयं तद्वत्
11 A पद्म•
12 A पद्मं
13 I. O. दत्वा

अत्र पौर्णमासीप्रकरणात् [1]ज्यैष्ठपौर्णमासी ग्राह्या ।

[2]वराहकल्पवृत्तान्तमधिकृत्य पराशरः ।
[3]यान् प्राह धर्मानखिलांस्तद्युक्तं वैष्णवं विदुः ॥८॥
[4]तदाषाढे तु यो दद्याद् घृतधेनुसमन्वितम् ।
पौर्णमास्यां [5]हि पूतात्मा स पदं याति [6]वारुणम् ॥९॥
त्रयोविंशतिसाहस्रं तत्-[7]पुराणं विदुर्बुधाः ।
श्वेतकल्पप्रसङ्गेन [8]धर्मान् वायुरिहाब्रवीत् ॥१०॥
यत्र तद्वायवीयं स्याद्रुद्रमाहात्म्यसंयुतम् ।
[9]चतुर्विंशत्सहस्राणि पुराणं तदिहोच्यते ॥११॥
[10]श्रावण्यां श्रावणे मासि गुडधेनुसमन्वितम् ।
यो दद्याद्द-धि[11]-संयुक्तं ब्राह्मणाय कुटुम्बिने ।
शिवलोके [12]स शान्तात्मा कल्पमेकं वसेन्नरः ॥१२॥
[13]यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं[14] [15]तद्भागवतमुच्यते ॥१३॥
[16][सारस्वतस्य कल्पस्य मध्ये [17]ये स्युर्नरोत्तमाः ।
तद्वृत्तान्तोद्भवं लोके तद्भागवत-[18]मुच्यते ॥१४॥ ]

1 A जेष्ठ मासी जेष्ठमासीञ्चपौर्णमासी
2 A वराहकल्पानुवृत्तौ अधिकृत्य and M. P. वाराह०
3 A यत्तं च
4 A तदामाषा
5 A विपूतात्मा
6 A वारवम्
7 M. P. ०प्रमाणं
8 Corrected from M. P. A धर्मोत्मापूवितानब्रवीत् and I. O. धर्मोर्वायु०
9 A चतुर्विंशत्वाच आदिपुराणं
10 A श्रावण्यां
11 M. P. इच० and A गाव० for दधि
12 A समस्ताद्दा and M. P. स पूतात्मा
13 I. O. यत्राधिक्व गायत्री
14 A यत्र for पेतं
15 I. O. तद्भागवत उच्यते
16 A omits the bracketed portion
17 I. O. येषु नरामरा:
18 I. O. उ for मु

लिखित्वा [1]तच्च यो दद्याद्धेम-[2]शृङ्गसमन्वितम् ।
पौर्णमास्यां प्रौष्ठपद्यां स याति परमं पदम् ।
अष्टादशसहस्राणि पुराणं [3]तत् प्रकीर्त्तितम्[4] ॥१५॥
यत्राह नारदो धर्मान् [5]बृहत्कल्पा-[6]श्रयांस्त्विह ।
[7]पञ्चविंशत्सहस्राणि नारदीयं तदुच्यते ॥१६॥
[8]आश्विने पञ्चदश्यान्तु यो दद्याद्धेनुसंयुतम् ।
परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभाम् ॥१७॥
[9]यत्राधिकृत्य शकुनीन् धर्माधर्मविचारणा ।
[10][व्याख्याता वै मुनिप्रश्ने मुनिभिर्धर्मचारिभिः ॥१८॥
मार्कण्डेयेन कथितं तत् सर्वं विस्तरेण तु । ]
पुराणं नवसाहस्रं मार्कण्डेयमिहोच्यते ॥१९॥
[11]प्रतिलिख्य तु यो दद्यात् सौवर्ण-[12]करिसंयुतम् ।
कार्त्तिक्यां पुण्डरीकस्य [13]यज्ञस्य फलभाग् भवेत् ॥२०॥
[14]यत्तदीशानकल्पस्य वृत्तान्तमधिकृत्य च ।
वशिष्ठ-[15]याग्निना प्रोक्तमाग्नेयं तत् प्रचक्षते ॥२१॥
लेखयित्वा च यो दद्या-[16]द्धेमपद्मसमन्वितम् ।
[17]मार्गशीर्ष्यां विधानेन तिलधेनुयुतं तथा ।
तच्च षोडशसाहस्रं सर्व-[18]क्रतुफलप्रदम् ॥२२॥

---

1 I. O. तत्र
2 I. O. ॰विंषृ॰
3 I. O. तं
4 M. P. प्रचक्षते
5 A बृहतकन्याश्रयस्त्विह
6 M. P. ॰श्रयाञ्चि च
7 A पञ्चविंशत्वाह मुनिर्नारदीयं तदुच्यते
8 A तद्दिने, I. O. तदीये
9 I. O. repeats पञ्चविंशत्…तदुच्यते of V. 16 before this
10 A omits the bracketed portion, I. O. reads the first line of the b. p. as व्याख्यातं अभिनिप्रश्ने र्मुनिभिर्धर्मचारिभिः
11 Corrected from M. P. I. O. परिलिखन्तु यो दद्या, A परिलिख्य etc.
12 Corrected from M. P. A करि॰, I. O. कमि॰
13 A सकल
14 M. P. यत्तदीशानकं कल्पं, I. O. and A यत्त, दीशानकल्पस्य
15 A omits या
16 A हैमस्य च चतुर्मुखम्
17 Corrected from M. P. A मार्गशीर्षं, I. O. मार्गशीर्षा
18 A धर्म for क्रतु

यत्राधिकृत्य [1]माहात्म्यमादित्यस्य चतुर्मुखः ।
अघोरकल्पवृत्तान्तप्रसङ्गेन [2]जगत्स्थितिम् ॥२३॥
मनवे कथयामास भूतग्रामस्य लक्षणम् ।
चतुर्दशसहस्राणि तथा [3]पञ्चशतानि च ।
[4]भविष्यचरितप्रायं भविष्यं तदिहोच्यते ॥२४॥
तत् पौषे मासि यो दद्यात् पौर्णमास्यां विमत्सरः[5] ।
[6]गुडकुम्भसमायुक्तमग्निष्टोमफलं लभेत् ॥२५॥
[7]रथान्तरस्य कल्पस्य वृत्तान्तमधिकृत्य च ।
[8]सावर्णिना नारदाय कृष्णमाहात्म्यसंयुतम् ॥२६॥
यत्र ब्रह्मवराहस्य [9]चरितं [10]वर्ण्यते मुहुः ।
तदष्टादशसाहस्रं ब्रह्मवैवर्त्तमुच्यते ॥२७॥
पुराणं ब्रह्मवैवर्त्तं दद्याद् यो माघमासि तु[11] ।
पौर्णमास्यां [12]सभवनं ब्रह्मलोके महीयते ॥२८॥

[सभवनं गृहसहितम् ।][13]

यत्राग्निलिङ्ग[14]-मध्यस्थः प्राह देवो महेश्वरः ।
धर्मार्थकाम-[15]मोक्षार्थानाग्नेयमधिकृत्य च ।
[16][कल्पान्ते लैङ्गमित्युक्तं[17] पुराणं ब्रह्मणा स्वयम् ॥२९॥

1 A माहात्मिमादित्यस्य
2 A जगत्स्थितिं
3 A पञ्च०
4 M. P. भविष्यचरित० I. O. भविष्य-चरित०
5 Corrected from M. P. I. O. and A विमत्सरः
6 I. O. गुड०
7 I. O. रथान्तरस्य, M. P. रथन्तरस्य
8 Corrected from M. P. A नाम मदाय and I. O. सावर्णिनारायणाय
9 I. O. रचितं, M. P. चोदितं
10 M. P. वर्णितं
11 A and M. P. च
12 A स भगवान्, M. P. शुभदिने
13 A omits the bracketed portion
14 I. O. लिङ्गं for लिङ्ग
15 A मोक्षार्थं for मोक्षार्थान्
16 I. O. omits the bracketed portion
17 Corrected from M. P. A कल्पं तल्लिङ्गमुवाच

तदेकादशसाहस्रं फाल्गुन्यां यः प्रयच्छति ।
तिलधेनुसमायुक्तं स याति शिव [1]सात्मताम् ॥३०॥
महावराहस्य [2]पुनर्माहात्म्यमधिकृत्य च ।]
विष्णुनाभिहितं च्चोण्यै तद्वाराहमिहोच्यते ॥३१॥
मानवस्य प्रसङ्गेन कल्पस्य मुनिसत्तमाः ।
[3]चतुर्विंशत्सहस्राणि तत्पुराणमिहोच्यते ॥३२॥
काञ्चनं गरुडं कृत्वा तिलधेनुसमन्वितम् ।
पौर्णमास्यां [4]मधौ दद्याद् ब्राह्मणाय कुटुम्बिने ।
वराहस्य प्रसादेन पदमाप्नोति वैष्णवम् ॥३३॥
यत्र माहेश्वरं धर्ममधिकृत्य च षण्मुखः[5] ।
[6]कल्पे [7][तत्-[8]पुरुषे वृत्ते चरितैरुपशोभितम् ॥३४॥
स्कान्दं नाम पुराणन्तु [9]ह्येकाशीतिर्निगद्यते ।
सहस्राणि शतञ्चैकमिति[यत्नेन पठ्यते][10] ।३५॥
परिलिख्य च यो दद्याद्धेमशूलसमन्वितम् ।
शैवं पदमवाप्नोति मीने चोपागते[11] रवौ ॥३६॥

अत्रैकस्मिन् वाक्ये पौर्णमास्यां मधाविति माससहितपौर्णमासीश्रवणादन्यत्र च मीने चोपागते रवाविति तिथिविशेषाश्रवणात् अन्योन्यापेक्षया चैत्रपौर्णमास्यामेव दानद्वयम् ।

त्रिविक्रमस्य माहात्म्यमधिकृत्य चतुर्मुखः ।
त्रिवर्गमभ्यधाद् यत्र[12] वामनं परिकीर्त्यते[13] ॥३७॥
पुराणं दशसाहस्रं [14]कौर्मकल्पानुगं शिवम् ।
यः शरद्विषुवे दद्याद्वैष्णवं यात्यसौ पदम् ॥३८॥

1 M. P. ०साम्यताम्
2 Corrected from M. P. A पुरा for प्रभर्
3 A चतुर्विंशं
4 Corrected from M P. A च यो and I. O. तु यो
5 Corrected from M. P. A सन्मुख:, I. O. षड् मुख:
6 A कल्प
7 A omits the bracketed portion
8 M. P. ०पुरुषं वृत्तं
9 Corrected from M. P. I. O. दैकाशीति०
10 M. P. मर्त्येषु गद्यते for the b. p.
11 Corrected from M. P. I. O. चोपगते
12 M. P. ०भाषत
13 M. P. परिकीर्तितम्
14 M. P. कूर्म०

यत्र धर्मार्थकामानां मोक्षस्य च रसातले ।
माहात्म्यं कथयामास कूर्मरूपी जनार्दनः ॥३६॥
[1]इन्द्रद्युम्नप्रसङ्गेन ऋषीणां [2]शक्रसन्निधौ ।
[3]अष्टादशसहस्राणि लक्ष्मीकल्पानुषङ्गिकम् ॥४०॥
यो दद्यादयने [4]कौर्मं हेमकूर्मसमन्वितम् ।
गोसहस्रप्रदानस्य[5] स फलं प्राप्नुयान्नरः ॥४१॥
श्रुतीनां यत्र कल्पादौ प्रवृत्त्यर्थं जनार्दनः ।
मत्स्य-[6]रूपी च मनवे नरसिंहोपवर्णनम् ॥४२॥
अधिकृत्याब्रवीत् सप्तकल्पवृत्तं मुनीश्वराः[7] ।
तन्मात्स्यमिति जानीध्वं सहस्राणि [8]त्रयोदश ॥४३॥
विषुवे हेममत्स्येन धेन्वा चैव समन्वितम् ।
यो दद्यात् पृथिवी तेन दत्ता भवति चाखिला ॥४४॥
यदा च गारुडे कल्पे [9]विश्वाण्डाद् गरुडोद्भवम् ।
अधिकृत्याब्रवीत् [10]कृष्णो गारुडं तदिहोच्यते ।
[11][तदष्टादशकं चैव] सहस्राणीह पठ्यते ॥४५॥
[12][सौवर्णहंसमिथुनसंयुक्तं विषुवे नराः ।
यो ददाति पुमान् सिद्धिमाप्नोति शिवसम्मितः ॥४६॥ ]

शिवसम्मितः शिवतुल्यरूपः । अतएव सिद्धिमणिमाद्यष्टैश्वर्यम् ।

ब्रह्मा ब्रह्माण्डमाहात्म्यमधिकृत्याब्रवीत् पुनः ।
तच्च द्वादशसाहस्रं ब्रह्माण्डं द्विशताधिकम् ॥४७॥

---

1 Corrected from M. P. I. O. इन्द्रस्य सु०
2 Corrected from M. P. I. O. सत्
3 Corrected from M. P. I. O. सप्तं
4 M. P. कूर्मं
5 Corrected from M. P. I. O. ०प्रदानेन
6 M. P. ०रूपेण for रूपी च
7 Corrected from M. P. I. O. सुनिसत्ताः
8 M. P. चतुर्दश
9 Corrected from M. P. I. O. विश्वाख्य
10 Corrected from M. P. I. O. कृत्यां
11 Corrected from M. P. I. O. reads the b. p. as तदष्टादश चैकञ्च
12 M. P. reads the b. p. as सौवर्णहंससंयुक्तं यो ददाति पुमान्-मिह । स सिद्धिं लभते मुख्यां शिवलोके च संस्थितिम् ॥

भविष्याणाञ्च कल्पानां [1]श्रूयते यत्र विस्तरः ।
तद्ब्रह्माण्डपुराणन्तु ब्रह्मणा समुदाहृतम् ॥४८॥
यो [2]दद्यात्तु व्यतीपाते [3]पीतोर्णायुगसंयुतम् ।
राजसूयसहस्रस्य फलमाप्नोति मानवः ॥४९॥

अत्राष्टादशपुराणानि लेखयित्वा यजमानो वैशाखपौर्णमास्यां शुचिं पुराणपाठशक्तं श्रद्धालुं कुटुम्बिनं ब्राह्मणमभ्यर्च्य तस्मै पुराणोक्तजलधेनुसहितं ब्रह्मपुराणमर्चितं दद्यात् । ॐ अद्यामुकगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं सोत्कर्षब्रह्मलोकप्राप्ति-कामोऽहमेतज्जलधेनुसहितं ब्रह्मपुराणं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा पुराणमिदं सरस्वतीदैवतमित्युक्त्वा यथाशास्त्रं कामस्तुतिं पठेत् । तत ॐ अद्य कृतैत-द्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा पुराणं स्पृशेत् । एवमपरपुराणसप्तदशकदानेष्वपि दक्षिणादानं [4]सरस्वतीदैवतपुराणस्पर्शनं स्वीकरणञ्चोन्नेयम् । एवं ज्यैष्ठपौर्णमास्यां सौवर्णकमलतिलचुप्यडिकासहितपद्मपुराणदान-वाक्ये अश्वमेधफलप्राप्तिकामोऽहमेतत् सुवर्णकमलतिलसहितं पद्मपुराणं ददानीति विशेषः । [5]आषाढपौर्णमास्यां मत्स्यपुराणोक्तघृतधेनुसहित-विष्णुपुराण-[6]दानवाक्ये पूतात्मतापूर्वकवारुण-पदप्राप्तिकामोऽहमेतद्घृतधेनुसहितं विष्णुपुराणं ददानीति विशेषः । श्रावणपौर्णमास्यां दधिपूर्णपात्रमत्स्यपुराणोक्तगुडधेनुसहितवायुपुराण-[7]दानवाक्ये शान्तात्मकत्वपूर्वकैककल्प-शिवपुरवासकामोऽहमेतद्दधिगुडसहितं वायुपुराणं ददानीति विशेषः । भाद्रपौर्णमास्यां सुवर्णशृङ्गयुक्तभागवतपुराण-[8]दानवाक्ये परमपदप्राप्तिकामोऽहमेतत् सौवर्णशृङ्गसहितं भागवतपुराणं ददानीति विशेषः । आश्विनपौर्णमास्यां सुवर्णशृङ्गाद्यलङ्कृतस्वरूपधेनुसहित-नारदीयपुराण-[9]दानवाक्ये पुनरा]-वृत्तिदुर्लभ-परमसिद्धिप्राप्तिकामोऽहमेतत् सुवर्णशृङ्गाद्यल-ङ्कृतधेनुसहितं नारदीयपुराणं ददानीति विशेषः । कार्तिकपौर्णमास्यां सौवर्णहस्तिसहित-मार्कण्डेयपुराणदानवाक्ये पुण्डरीकयज्ञफलप्राप्तिकामोऽहमेतत् सौवर्णहस्तिसहितं मार्कण्डेय-पुराणं ददानीति विशेषः । मार्गशीर्षपौर्णमास्यां मत्स्यपुराणोक्तसौवर्णपद्म[10]-तिलधेनु-

1 Corrected from M. P. I. O. स्तूयते
2 M. P. दद्यात्तद्
3 Corrected from M. P. I.O. पत्रोर्णा०
4 I. O. सरस्वतीदैवतञ्च पुराणस्पर्शनञ्च स्वीकरणञ्चोन्नेयम्
5 I. O. आषाढे०
6 I. O. दाने
7 I. O. दाने
8 I. O. दाने
9 I. O. दाने
10 I. O. सौवर्णपद्ममत्स्यपुराणोक्त०, A omits सौवर्णपद्म

सहिताग्नेयपुराणदान[1]-वाक्ये सर्वक्रतु[2]-फलप्राप्तिकामोऽहमेतत् सौवर्णपद्मतिलधेनुसहितमाग्नेय-पुराणं ददानीति विशेषः। पौषपौर्णमास्यां गुडकुम्भसहितभविष्यपुराण[3]-दान[4]-वाक्ये अग्नि-ष्टोमफलप्राप्तिकामोऽहमेतद्गुडकुम्भसहितं भविष्यपुराणं ददानीति विशेषः। माघपौर्णमास्यां गृहसहितब्रह्मवैवर्त्तपुराणदान[5]-वाक्ये सोत्कर्षब्रह्मलोकप्राप्तिकामोऽहमेतत् सभवनं ब्रह्म-वैवर्त्तपुराणं ददानीति विशेषः। फाल्गुनपौर्णमास्यां मत्स्यपुराणोक्ततिलधेनुसहितलिङ्ग-पुराण[6] दान[7]-वाक्ये शिवसात्मताप्राप्तिकामोऽहमेतत्तिलधेनुसहितं लिङ्गपुराणं ददानीति विशेषः। चैत्रपौर्णमास्यां [8]मत्स्यपुराणोक्तसौवर्णगरुडतिलधेनुसहित-[9]वराहपुराणदान[10]-वाक्ये [11]वैष्णवपदप्राप्तिकामोऽहमेतत् सौवर्णगरुडतिलधेनुसहितं वराहपुराणं ददानीति विशेषः। तथा [12]तस्मिन् दिने सौवर्ण-[13]शूलसहितस्कन्दपुराण-[14]दानवाक्ये शैवपदप्राप्तिकामोऽहमेतत् सौवर्ण-[15]शूलसहितं स्कन्दपुराणं ददानीति विशेषः। शरद्विषुवे केवलवामनपुराण-[16]दान-वाक्ये वैष्णवपदप्राप्तिकामोऽहमेतद्वामनपुराणं ददानीति विशेषः। [17]उत्तरायणे सौवर्णकूर्म-सहितकूर्मपुराणदानवाक्ये गोसहस्रप्रदानफलप्राप्तिकामोऽहमेतत् सौवर्णकूर्मसहितं कूर्मपुराणं ददा-नीति विशेषः। वसन्तविषुवे सौवर्णमत्स्यसुवर्णशृङ्गाद्यलङ्कृतधेनुसहितमत्स्यपुराण[18]-दानवाक्ये अखिलपृथिवीदानफलप्राप्तिकामोऽहमेतत् सौवर्णमत्स्यसुवर्णशृङ्गाद्यलङ्कृतधेनुसहितं मत्स्यपुराणं ददानीति विशेषः। तथा वसन्तविषुव [19]एव सौवर्णहंसमिथुनसहित-[20]गरुडपुराणदानवाक्ये शिवसालोक्यपूर्वकसिद्धिप्राप्तिकामोऽहमेतत् सौवर्णहंसमिथुनसहितं [21]गरुडपुराणं ददानीति विशेषः। व्यतीपाते [22]धौतकौशेयवस्त्र[23]-युगयुतब्रह्माण्डपुराण[24]-दानवाक्ये राजसूयसहस्रफल-प्राप्तिकामोऽहमेतत् [25]पीतोर्णायुगसहितं ब्रह्माण्डपुराणं ददानीति विशेषः।

---

1 I. O. दाने
2 A omits क्रतु
3 A ०पुराणोक्तपुराण०
4 I. O. दाने
5 I. O. दाने
6 A ०पुराणोक्त०
7 I. O. दाने
8 A omits मत्स्य, I. O. सौवर्ण-गरुडमत्स्यपुराणोक्त०
9 A omits वराह
10 I. O. दाने
11 A विष्णु०
12 A अस्मिन्नेव
13 I. O. ०मूल०
14 I. O. दाने
15 I. O. ०मूल०
16 I. O. दाने
17 A omits उत्तरायणे
18 A ०पुराणोक्त०
19 I. O. एतत्
20 I. O. गारुड०
21 I. O. गारुडपुराणं
22 A धौत twice
23 I. O. ०वस्त्र
24 A ०पुराणे
25 I. O. कौशेयवस्त्रयुग०

कूर्मपुराणे ( २।४६।१२२, १२४-१२६ ):—

एतत् पुराणं [1]परमं भाषितं[2] कूर्मरूपिणा ।
साक्षाद्देवाति[3]-देवेन विष्णुना विश्वयोनिना ॥५०॥
लिखित्वा चैव यो दद्याद् वैशाखे [4]मासि सुव्रतः[5] ।
विप्राय वेदविदुषे[6] तस्य पुण्यं निबोधत ॥५१॥
सर्वपापविनिर्मुक्तः सर्वैश्वर्यसमन्वितः ।
भुक्त्वा तु विपुलान्[भोगान् स्वर्गे ][7] दिव्यान् सुशोभनान् ॥५२॥
ततः स्वर्गात् परिभ्रष्टो विप्राणां जायते कुले ।
पूर्वसंस्कारमाहात्म्या[8]-द्ब्रह्मविद्यामवाप्नुयात् ॥५३॥

कूर्मपुराणं यथाशक्ति लेखयित्वार्चितं वैशाखाभिमततिथौ ब्राह्मणायार्चिताय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । कूर्मपुराणोक्त-कूर्मपुराणदानफलप्राप्तिकामोऽहमेतत् कूर्मपुराणं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे पुराणदानावर्तः ।

1 K. P. सकलं
2 A भावितं
3 K. P. धि for ति
4 K. P. कार्त्तिकेऽपि वा for मासि सुव्रतः
5 I. O. सत्वतः
6 A विदुषे only
7 K. P. मर्त्यो भोगान् for the b. p.
8 A ॰माहात्म्ये

# अथ ब्रह्मदैवतविद्यादानावर्तः । (४३)

## तत्र विद्यादानप्रशंसा ।

मनुः (४।२३३) :—

सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते ।
[1]वार्यन्न-[2]गोमहीवास-[3]स्तिलकाञ्चनसर्पिषाम् ॥१॥

याज्ञवल्क्यः (१।२१२) :—

सर्वदानमयं[4] ब्रह्म प्रदानेभ्योऽधिकन्ततः[5] ।
[6]तं ददत् समवाप्नोति ब्रह्मलोकमविच्युतः[7] ॥२॥

यम :—

य इमां पृथिवीं दद्यात सर्वरत्नोपशोभिताम् ।
दद्याच्छास्त्रञ्च विप्राणां [8]तच्च दानञ्च च ततसमम् ॥३॥

आदित्यपुराणे :—

त्रीणि तुल्यप्रदानानि त्रीणि तुल्यफलानि च ।
सर्वकामदुघा धेनुर्गावः पृथ्वी सरस्वती ॥४॥

विष्णुधर्मोत्तरे (३।३०३।१-४) :—

विद्या कामदुघा धेनुर्विद्या चक्षुरनुत्तमम् ।
[9][विद्यादानात् परं दानं न भूतं न भविष्यति ॥५॥
विद्यावान् सर्वकामानां भाजनं पुरुषो भवेत् ।
तस्माद्विद्यां हि ददता किं न दत्तं भवेदिह ॥६॥
पराध्यापनतः क्लेशं पुरुषस्तु यदश्नुते ।
तपस्तत् परमं तस्य ब्रह्मलोकं परं स्मृतम् ॥७॥
दानानामुत्तमं ह्येतत्तपसश्च तथोत्तमम् । ]
विद्यादानं महाभागाः[10] सर्वकामफलप्रदम् ॥८॥

---

1 I, O. पवित्र
2 I. O. गो
3 A स्तथाकाञ्चनसर्पिषो
4 A सर्वदानामयं
5 A ०धिकन्तु तत्
6 A ऊर्ध्वलोकमवाप्नोति
7 A ०विच्युतं
8 I. O. तद्दानानि
9 A omits the bracketed portion
10 A महाभागग:

## अथ विद्यादानस्वरूपं तत्फलञ्च ।

नन्दिपुराणे :—

शास्त्रे यस्माज्जगत् सर्वं संश्रितञ्च शुभाशुभम् ।
तस्माच्छास्त्रं प्रयत्नेन दातव्यं पुण्यकर्मणा ॥१॥
विद्याश्चतुर्दश प्रोक्ताः क्रमेण तु यथास्थिति[1] ।
षडङ्गाश्चतुरो वेदा धर्मशास्त्रं पुरातनम् ॥२॥

पुरातनं पुराणम् ।

मीमांसातर्कमपि च एता विद्यास्तु कीर्त्तिताः ।
[2]आसामेवान्तरोत्पन्नाः परा विद्याः सहस्रशः ॥३॥
आयुर्वेदः [3]शस्यवेदो धनुर्वेदः प्रकीर्त्तितः ।
सर्वोत्तमा [4]चात्मविद्या संसारभयनाशिनी ॥४॥
[5]सर्वदुःखान्तकरणी [6]सर्वपापविनाशिनी ।
एता विद्याः समाख्याता बहुभेदोपभेदजाः ॥५॥
कला विद्या तथा [7]वार्त्ता शिल्पविद्या तथापरा ।
[8]सर्वा एव महाभागाः [9][सर्वाः सर्वार्थसाधिकाः ॥६॥
स्थिताश्च तारतम्येन] विशिष्टफलसाधिकाः ।
आत्मविद्या प्रधाना तु तथायुर्वेदसंहिता[10] ॥७॥
धर्माधर्मप्रणयिनी कला शिल्पानुसाधिका[11] ।
[12]सैषा विद्या च वितता एता विद्या महाफलाः ॥८॥
[13]ययैको जीवति प्राणी कयापि [14]किल कुत्रचित् ।
अप्रधानापि सा विद्या कुलानां शतमुद्धरेत् ॥९॥

1 A and I. O. यथास्थिति:
2 A यस्मात् सर्वान्तरोत्पन्ना:
3 I. O. सस्यवेदो, A शस्त्रवेदो
4 I. O. चात्मविद्या
5 A सर्वदु:खान्त:करणी
6 A ॰प्रणाशिनी
7 I. O. वाच्या:
8 A सर्वैव
9 A omits the bracketed portion
10 A ॰संज्ञिका
11 I. O. ॰गाधिका
12 A यस्य
13 I. O. यथैको
14 I. O. कृत

यापि [1]साप्यवरोधत्वाद्विद्या वै यत्र कुत्रचित् ।

प्रापयत्यत्नयाल्लोँकान् विधिना [2]वाविधानतः ॥१०॥

[3][विधिना वाविधानतः] वक्ष्यमाणविधिना [4]विधानमन्तरेणैव दद्यादित्यर्थः ।

[5]शिल्पविद्यां नरो दत्त्वा याति वै ब्रह्मणोऽन्तिकम् ।

[6]कलाविद्यां नरो दत्त्वा वैष्णवं लोकमाप्नुयात् ।

[7]कल्पमेकं न सन्देहः स्वर्गभोगसमन्वितः ॥११।

[8]शस्यविद्यां नरो दत्त्वा तृप्तिमान् कामसंयुतः ।

प्रजापतिपुरं गच्छेत् तारयन्नरकात् पितॄन् ॥१२॥

आयुर्वेदं नरो दत्त्वा लोकानाप्नोति निर्मलान् ।

[9]अश्विन्योर्दिव्यकामाढ्यं [10]मन्वन्तरशतं नरः ॥१३॥

तर्कविद्यां नरो दत्त्वा वारुणं लोकमाप्नुयात् ।

मीमांसान्तु बुधो दत्त्वा शास्त्रमिन्द्रपुरे[11]वसेत् ॥१४॥

धर्मशास्त्रं नरो दत्त्वा स्वर्गलोके महीयते ।

दशमन्वन्तरान् मर्त्यस्तारयेन्नरकात् पितॄन् ॥१५॥

[12]वेदविद्यां नरो दत्त्वा स्वर्गे कल्पत्रयं वसेत ।

आत्मविद्या-[न्तु यो दद्यात् ][13] तस्य संख्या न विद्यते ॥१६॥

[14]पुण्यश्चागदितं सम्यगपि वर्षशतायुतैः ।

एतावच्छक्यते वक्तुं यत् [15]कल्पायुतमुत्तमम् ।

सत्यलोके वसेन्मर्त्यो [16]यत्र ब्रह्म वसेत् प्रभुः ॥१७॥

अप्येवं [17]निरुजीकृत्य जन्तुं यादृशतादृशम् ।

आयुर्वेदप्रसादेन किं न दत्तं भवेद्भुवि ॥१८॥

---

1 A साध्यवरोधत्व
2 A omits वा
3 A इति for the bracketed portion.
4 A विधानमन्तरेणैव वा
5 I. O. शिल्पे for शिल्प
6 A reads कलाविद्यां नरो दत्त्वा याति वै ब्रह्मणोऽन्तिकं before this line
7 I. O. कालमेकं
8 A सस्य विद्यां, I. O. सस्य०
9 I. O. अश्विनोर्दिव्यकामाद्यं, A अश्विन्योर्दिव्यकामाढ्यं
10 I. O. दिव्यं मन्वन्तरं
11 I. O. ०पुरो
12 I. O. वेदविद्यां
13 I. O. न्तपोविद्या for the b. p.
14 A पुण्यश्चागपितं
15 A कल्पान्तममुत्तमं
16 A विष्णुर्यत्र
17 A नीरजीकृत्य

[1]शस्यवेदप्रसादेन सम्पन्ना यस्य[2] शालयः ।
किं नाम न कृतं [3]तत्र पुण्यं भवति शाश्वतम् ॥१६॥
मीमांसाशास्त्रमाहात्म्याद्बुद्ध्वा वै वेदनिर्णयम् ।
किं नाम न शुभं [4]दत्तं यज्ञकर्मप्रवर्तनात् ॥२०॥
आत्मविद्या च पौराणी धर्मशास्त्रात्मिका च या ।
एता विद्यास्तिस्रो मुख्याः सर्वदानक्रियाफलैः ॥२१॥
[5][धर्मशास्त्रं नरो बुद्ध्वा यत्किञ्चिद्धर्ममाश्रयेत् ।
तस्य धर्मं दशगुणं धर्मशास्त्रप्रदस्य वै ॥२२॥
पुराणाख्यानविद्वांसः पितृदेवार्चने रताः[6] । ]
लोकान् [7]सर्वान् कामपूर्णान् यान्ति सर्वशुभोदयान्[8] ॥२३॥
पुराणविद्यादातारस्त्वनन्तफलभागिनः ।
आत्मविद्याप्रदातारो नरा धर्मसमाश्रयाः ।
न पुनर्योनिनिरयं प्रविशन्ति दुरत्ययम् ॥२४॥
उत्तीर्णाः सर्वपापेभ्यः [9]सपुत्रपशुबान्धवाः ।
मुच्यन्ते निरयैर्घोरैर-[10]संख्यैर्यातनात्मकैः ॥२५॥

तथा :—

श्लोकं प्रहेलिकां [11]गाथामन्यद्वापि [12]सुभाषितम् ।
दत्वा प्रीतिकरं याति [13]लोकमप्सरसां शुभम् ॥२६॥
यदेतत् पुण्यमाख्यातं विद्यादानस्य साम्प्रतम् ।
देशकालविधिश्रद्धा-[14]पात्रयोगात्तथा बुधः ।
प्राप्नोति कोटिगुणितं फलं विद्याप्रदानतः ।२७॥
यस्तु पुण्यपरो मर्त्यो जिगीषुः कीर्तिसाधकः ।
स विधानेन वै विद्यां दद्याद् विविधकामदाम् ॥२८॥

---

1 I. O. सस्य०, A सम्यक०
2 I. O. पद्म
3 A तत्र
4 I. O. दात्त
5 A omits the bracketed portion
6 I. O. रत:
7 A सर्वा समान पूर्वान्
8 I. O. सर्वशुभोदय:
9 A नरा: सपशुबान्धवा:
10 I. O. ०संख्ये: पातनात्मके:
11 I. O. गाथा०
12 I. O. सुभाषिता
13 A लोकममाषिमं
14 A ०मात्र०

एवं विद्याप्रदानं वै सर्वकामगुणाधिकम् ।
[1]यत्तत् पात्रे तु संत्यक्तं रहस्यञ्चै तदुत्तमम् ॥२६॥
उद्दिश्य देवतां दातुं प्रधानां यत्र [2]कुत्रचित् ।
तस्य समाप्तपुण्यस्य केन पुण्यं निरूप्यते ॥३०॥

उद्दिश्य देवतां देवताप्रीतय इत्यर्थः ।

गुरुमाराध्य यत्नेन विद्याव्याख्यानपारगम् ।
[शक्त्या भक्त्या प्रणामेन][3] धनैः सर्वगुणैस्तथा ॥३१॥

## अथ गुरुप्रशंसा ।

यथा घटप्रतिच्छन्ना [4]रत्नराजमहाप्रभाः ।
अकिञ्चित्करतां [5]प्राप्तास्तथा विद्याश्चतुर्दश ॥१॥
विना तु गुरुणा [6]सम्यग्बोधनेन विपश्चिता ।
नैव विद्याफलप्राप्तिर्गुरुं तस्मात् प्रपूजयेत् ॥२॥
स्रग्वासोभूषणैर्नित्यं यथा देवं पिनाकिनम् ।
यो गुरुं पूजयेन्नित्यं स्थितं वा प्रस्थितञ्च वा ॥३॥
तत्प्रसादेन यस्मात् स प्राप्नुयात् सर्वसम्पदः ।
तस्माद् गुरुं प्रयत्नेन महादेववदर्चयेत् ॥४॥
भक्त्या प्रीत्या प्रयत्नेन श्रद्धया च सदैव हि ।
एष माता पिता ह्येष एष एव च बान्धवः ॥५॥
एष चिन्तामणिः स्फीत एष एव च मे सुहृत् ।
एवं श्रद्धापरो नित्यं गुरुमाराधयेद्बुधः ।
अज्ञानदुःखशमनं [7]नरकोद्धरणं तथा ॥६॥
कुतो माता पिता वापि बान्धवो वा महागुणः ।
तादृगभ्युदयं कुर्याद् यत् कुर्याच्च गुरुर्महान् ॥७॥
कोऽन्यो ज्ञानेन [8]दुःखौघादुद्धरेद्बहुबन्धनात् ।
सम्यक् शास्त्रार्थबोद्धारं महादेववदर्चयेत् ॥८॥

---

1 I. O. यतेत् पात्रं तु संत्यक्तुं
2 I. O. कुत्रचि
3 A सद्यो तत् प्रायमाणेन for the b. p.
4 A बहुराजमहाप्रभुः
5 A प्राप्त०
6 A सम्यकगोधिकेन विपश्चितः
7 A नरकोद्धारणं
8 A दुःखौघादुद्धरेदुर्गबन्धनात्, I. O. दुःखौघोदुद्धरेद्बहुबन्धनात्

[1]वस्तुमात्रेण यो ज्ञानं शास्त्ररूपमुपन्यसेत् ।
स तावच्छिववत्[2] पूज्यो भक्त्या[3] भवति पापहः ॥९॥
यः शास्त्रमविविक्तार्थं[4] विशेषार्थं प्रबोधयेत् ।
[5]पदवाक्यार्थबोधेन सम्यक् शास्त्रप्रवर्तनात् ॥१०॥
[6]पूर्वोत्तरार्थसङ्गत्या समुदायार्थनिश्चयः ।
[7]सुशास्त्राभिमता वाचः सम्यग् यो वेत्ति तत्त्वतः[8] ॥११॥
स तु साक्षान्महाबुद्धिर्भगवानिव शङ्करः ।
तं भजेत् सर्वभावेन भक्तियोगेन सर्वदा ॥१२॥
आदित्येन विना [9]यावज्जगदन्धं विभाव्यते ।
गुरुवाक्यैर्विना [10]सर्वं तथैव हि तमोमयम् ॥१३॥
तस्माद् यथा महादेवं [तद्वदेव गुरुं सदा ।][11]
यः पश्यति स पुरुषः [12]सर्वधर्मानवाप्नुयात् ॥१४॥

## अथ विद्यादानपात्राणि ।

विद्या च मुख्यं दानानां [13]गुरुतोऽस्य विधिं बुधः ।
श्रुत्वा विधेयं विधिवच्छ्रद्धया भावितात्मना ॥१॥
सत्पात्रेभ्यः [14]स्तुतां दद्याद् [15]विशेषाद् गुणशालिषु ।
उपयोज्यञ्च [16]यद् यस्य तत्तस्य प्रतिपादयेत् ॥२॥
सुरालयेषु सिद्धेषु यथा-[17]विभवविस्तरैः ।
दातव्यास्तु प्रयत्नेन [18]सदा पुण्यफलार्थिभिः ॥३॥

1 A वट मात्रेण
2 A भावच्छिवरत
3 A भक्तो
4 A ०विविक्तानां
5 I. O. तद्वाक्यादनुरोधेन
6 I. O. पूर्वोत्तरार्थसङ्गम्य, A पूर्वोत्तरत्नार्थसंगत्या
7 A सुशास्त्रविहिताचारं, I. O. स्वशास्त्रा०
8 I. O. तत्त्वतः
9 A यतजगदन्धं
10 A सर्वतंग्रेव हि तमामयं, I. O. ०तमोमयं
11 I. O. गुरुं यदा for the bracketed portion
12 I. O. adds सर्वकामान् after सर्वधर्मान्
13 A गुरु तस्य
14 I. O. स्तुतं विद्या
15 I. O. विशेषा
16 I. O. पदस्य
17 I. O. ०विस्तरविस्तरैः
18 A महापुण्यफलार्थिनः

### अथ पुस्तकलिखनारम्भः ।

शुभे नक्षत्रदिवसे [1]शुभे चापि[2] दिनग्रहे ।
लेखयेत् पूज्य देवेशान् रुद्रब्रह्मजनार्दनान् ॥४॥

### अथ सरयन्त्रविधिः ।

पूर्वदिग्वदनो भूत्वा लिपिज्ञो लेखकोत्तमः ।
विद्याधरं प्रकुर्वीत हेमरूप्यमयं शुभम् ॥५॥

विद्याधरं सरयन्त्रम् ।

नागदन्तमयं वापि सारदारुमयं तथा ।
मनोज्ञमगुरु रम्यं शुक्लपत्रप्रयोगजम् ॥६॥
[3]सङ्कोचयन्त्रसंयुक्तं [4]विकाशनसमन्वितम् ।
[5]पत्रविद्याविनिहतां कुर्य्यात् पुस्तकसंस्थिताम् ॥७॥

### अथ पत्रसञ्चयविधिः ।

कुर्य्यात्तु पुस्तकं यत्र लेख्याद्द्विगुण-[6]विस्तृतम् ।
[7]सुशुक्लं लघु रम्यञ्च कृष्णमेचकितं तथा ॥८॥

पुस्तकं पत्रसञ्चयं [8][लेख्याल्लिखनीयस्थानाद्द्विगुणविस्तृतं[9]] सुशुक्लं सुमर्दितं कृष्णमेचकितं मसीनिर्मितसमयज्ञादिलिखनानुगुण-[श्यामरेखम् ।

अथवा][10] रक्तवर्णाभं मेचकानं कृतं शुभम् ।
कार्पाससूत्रग्रथितं नानागन्धादिवासितम् ॥९॥

रक्तवर्णाभमिति कृतकृष्णलोहितरेखं नानागन्धादिवासितं नानाधूपधूपितम् ।

---

1 I. O. शुभवादि

2 Raghu reads in Div. T. (p. (588) रात्रि but चापि in Dik. T. (p. 650) and reads in the above two pages the following in the second line of V. 5:—निरीधो हस्तवाहोच मसीपत्रविधारणो

3 I. O. सङ्कोपत्रसंयुक्तं

4 I. O. विकासमसमन्वितम, A विकाशेन समन्वितम्

5 A यत्र विद्या च विहितं

6 I. O. and A ०विस्मृतं

7 A सुश्लक्ष्णञ्च (सुशुक्लञ्च ?) सुरम्यञ्च

8 I. O. लेख्यादादग्रनात् द्विगुणविस्तृतं बहुतरं for the bracketed portion

9 A प्रस्तारयुतं for विस्तृतम्

10 I. O. श्यामरेखा सुखवा for the b. p.

## अथ मसीनिर्माणम् ।

मसीभिश्चाप्यनेकाभिश्चतुर्वर्णाभिरेव च ।

दृढस्तम्भन[1]-युक्ताभिर्मेचकैश्चाप्यनेकशः ॥१०॥

[मसीभिश्चाप्यनेकाभिः प्रचुरभागकज्जलाभिः][2] चतुर्वर्णाभिः पीतरक्तहरितकृष्णवर्णद्रव्य-रसमयीभिः[3] दृढस्तम्भन[4]-युक्ताभिर्भद्र[5]-गन्धरसादिसहिताभिः । मेचकैश्चाप्यनेकश· इति [6]पीत × × नानाद्रव्ययुक्ताभिः ।

## अथ लेखनीयष्टिकानिर्माणम् ।

लेखनीभिश्च दिव्याभि[7]-र्हेमचित्राभिरेव च ।

बहिश्च वर्णं कुर्वीत पुस्तकस्य मनोरमम् ॥११॥

पीतरक्तकषायैर्वा सुनिबन्धं सुचित्रितम् ।

रम्यं लघु सुविस्तीर्णं निर्ग्रन्थि ग्रन्थिसंयुतम् ॥१२॥

बहिश्च पुस्तकस्य काष्ठपट्टिकादिकं पीतरक्तकषायैर्वेति पीतरक्तैः कषायैर्वा वर्णं[8] कुर्य्यादिति सम्बन्धः । निर्ग्रन्थि ग्रन्थिशून्यदारुमयं ग्रन्थिसंयुतं सूत्रग्रन्थिसहितम्[9] ।

## अथादर्शपुस्तकारोपणम्

विद्याधरे ततो यन्त्रे[10] संस्थितं पूर्वपुस्तकम् ।

गृहे मनोरमे गुप्ते सुधालेपितभित्तिके ॥१३॥

पूर्वपुस्तकमादर्शं कृत्वेति शेषः[11] ।

नानारागा[12]-ङ्कुरोपेते [13]सुरवृन्दमनोरमे ।

धूपामोदमनोज्ञे तु वितानकपरिष्कृते ॥१४॥

नानारागा[14]-ङ्कुरः नाना-[15]तरुपुष्पपल्लवः ।

---

1 A स्तम्भन for स्तम्भन

2 I. O. omits the bracketed portion

3 I. O. ०मयाभिः

4 A स्तम्भ for स्तम्भन

5 A omits भद्र

6 A पीतसामपानीयादिनानाद्रव्य-युक्ताभिः, I. O. प्रचुरभागकज्जलाभिः

7 A लेखनीतत द्रव्याभि०

8 I. O. omits वर्णं

9 A omits it

10 I. O. पात्रे

11 A विशेषः

12 I. O. ०रागा०

13 A सुरविस्वमनोरमे

14 I. O. ०रागा०

15 I. O. ०गुरु०

### अथ लेखकस्यालङ्कारादिदानपूर्वकलिखनारम्भः ।

लेखको बुद्धिमान् [1]स्नातः शुक्लपुष्पाम्बरो[2]-ज्ज्वलः ।
सुवर्णयुक्त[3]-केयूरमुद्रिकाशोभिताङ्गुलिः ॥१५॥
सुसमृद्धे[4] मसीभाण्डे लेखनीशस्त्रसंयुते ।
[5]प्रारभेत् तूर्य्यघोषेण पूज्य देवान् पितॄंस्तथा ॥१६॥

शस्त्रसंयुते नखरञ्जनीकर्त्तरीसहिते प्रारभेत् लेखकः प्रारभेदित्यर्थः ।

[6]ब्राह्मणान् स्वस्ति वाच्यादौ शास्त्रं सञ्चारयेद्बुधः ।
[7]श्लोकपञ्चकमादौ तु दशकं वापि लेखयेत् ॥१७॥

अयमर्थः—बुधो यजमानो देवान् पितॄंश्च[8] सम्पूज्य पत्रसञ्चये शास्त्रं लेखयेदिति ।

ततो नक्षत्रयोगेन द्वितीयेऽहनि तल्लिखेत् ।
तादृशेनैव विधिना पुण्याहैः शुभसंयुतैः ॥१८॥
ततः समाप्ते शास्त्रे तु[9] पुनः पुण्याहसंयुतम् ।
[10]कुर्य्यात्तदहरग्रयैश्च [11]पानभोजनवस्तुभिः ॥१९॥

### अथ शोधनविधिः ।

उभयत्रापि तल्लेख्यं मसी (?) कुर्य्याच्च वाचयेत् ।
[ऊनाधिकैश्च संयुक्तं वर्णैर्मात्रादिभिस्तथा ॥२०॥
अनुस्वारविसर्गैश्च युक्तायुक्तैर्विचारयेत् ।
शास्त्रप्रतिक्रियायुक्तया पुनरुक्त्या च शोधयेत् ॥२१॥ ][12]
जनार्थोक्त्या[13] प्रसङ्गस्य शब्दयोग्यतया तथा ।
[14]सूत्रान्तरानुरोधेन प्रश्नोत्तरविवेकतः ॥२२॥
असूत्रत्वाच्च शास्त्रस्य समुदायानु-[15]रोधतः ।
प्रक्रान्त-[16]सूचनोद्देशैर्गदितैश्चोदितैरपि ॥२३॥

---

1 A सुतः
2 A ०सुरो०
3 A omits युक्त
4 I. O. सुसमिद्ध
5 I. O. प्रारम्भे
6 A ब्राह्मणो
7 I. O. श्लोक०
8 A पितृन्
9 I. O. omits तु
10 A कुर्य्यादहरहं श्रेष्ठ
11 A पानभोजनमस्तुभिः
12 A omits the bracketed portion
13 A जनार्थोक्ता
14 I. O. सूत्रान्तरार्थबोधेन
15 I. O. ०बोधतः
16 A ०रचनो०

[1]बह्वर्थानाञ्च शब्दानां [2]योग्यमर्थं परीक्ष्य तु ।
सर्वशास्त्राविरोधेन[3] [कारकार्थैरविप्लुतैः ।
क्वचिच्च शब्दं चर्य्येव (?)][4]प्रकृतार्थं निरूपयेत् ॥२४॥
[छन्दसा वापि बुध्येत वृत्तसंयोगमीप्सितम्][5] ।
एवं विद्यात्तु मेधावी शास्त्रं सत्कृत्य कृत्स्नशः ॥२५॥

## अथ देवायतननिवेदनविधिः ।

प्रदद्याद्विभवैर्दिव्यैः पुरायतनवेश्मसु ।
व्यक्तदेशलिपिन्यासं मुख्यं [6]नापरमुच्यते ॥१॥
[7]आरोग्ययानरत्नाढ्ये शुभवस्त्रपरिष्कृते ।
घण्टाचामरशोभाढ्ये रत्नदण्डातपत्रिणि ॥२॥
गजवाजिरथस्थं वा महाशोभासमन्वितम् ।
पुरतो गीतनृत्येन नानावाद्यरवेण च ।
मङ्गलैर्वेदघोषैश्च देवाय विनिवेदयेत् ॥३॥
नानाधूपोपहारैश्च सम्पूज्य तु दिवौकसः ।
दत्त्वा तु पुस्तकं तत्र पितॄणां धर्ममुद्दिशेत् ।
बान्धवानाञ्च हृद्यानामनन्तफलमिच्छताम् ॥४॥

पितॄणां धर्ममुद्दिशेदित्यादेः पितॄन् [8]बान्धवानुद्दिश्य दद्यादिति सम्बन्धः[9] ।

ततो [10]दद्याद्विधानेन तां विद्यां शिवमन्दिरे ।
ततश्च दक्षयेद्विप्रान् शिवभक्तांश्च मानवान् ॥५॥

[11][दक्षयेत् कृतनिवेदनप्रतिष्ठार्थं दक्षिणादिभिः] पूजयेत् ।

1 I. O. बह्वार्थानाञ्च
2 I. O. योग्यामत्र
3 I. O. सर्व्वशास्त्राविरोधेन
4 A omits the bracketed portion
5 A चन्दसा कपिच्छकेतु इरे संयोगमाद्रितं for the b. p.
6 A नगर०
7 A आरोमार्गे तद्वाठ्ये
8 I. O. बान्धवाञ्चोद्दिश्य
9 A adds धर्मश्रद्धा...विशारदः of V. 10 below after this
10 A दत्त्वा for दद्याद्
11 A दक्षयेत् विद्याप्रतिष्ठार्थं दक्षिणैः for the b. p.

*यथाशक्ति च कर्त्तव्या [1][उत्सवा विष्णुवेश्मनि] ।*
*राज्ञा तु नगरे[2] कार्य्या ग्रामे ग्रामाधिपैस्तथा ॥६॥*
*गृहे गृहस्थैः कर्त्तव्यमुत्सवं बन्धुभिः सह[3] ।*
*स्नातैर्भुक्तैः समालब्धैः स्रग्विभिः सुसमाहितैः ॥७॥*

**अथ श्रोतृपाठक[4]-गुरुगुणसहितव्याख्यानविधिः ।**

प्रीतियुक्तैस्ततः[5] श्रव्यं शास्त्रं [6]श्रद्धासमन्वितैः ।
वाचकं दक्षयेत्तत्र यथाविभवविततः ।
गुरुश्च शक्तया मतिमान् यथाशक्ति त्वमायया ॥८॥

दक्षयेद्वस्त्रादिभिरर्च्चयेदित्यर्थः ।

ततः पुष्पैश्च धूपैश्च श्रावकं संप्रपूजयेत् ।
वाचको ब्राह्मणः प्राज्ञः श्रुतशास्त्रो महामनाः[7] ॥९॥

श्रावकं पाठकं पाठसमये पुष्पधूपादिभिरभ्यर्च्चयेदिति सम्बन्धः ।

अभ्यस्ताक्षरविन्यासो [8]वृत्तशास्त्रविशारदः ।
सूत्रार्थवित् प्रगल्भश्च विनीतो मेधया युतः ।
[9]नीतिज्ञो वाक्पटुः [10]अव्यस्वरो × × भाषकः ॥१०॥
गुरुश्च धर्म्मवान् प्राज्ञः श्रुतशास्त्रो विमत्सरः ।
विप्रः प्रकृतितः शुद्धः शुचिः स्मितमुखः सुधीः[11] ॥११॥
[सुव्रतो व्रतशास्त्रज्ञः सर्वशास्त्रविशारदः ।
अभ्यस्तशास्त्रसन्देहः प्रकृतार्थप्रवर्तकः ।
[12]सश्रद्धः सुकृतव्याख्यः पौर्वपर्यार्थवित् सुधीः ॥१२॥ ][13]
अध्याय-[14]सर्गविच्छेदविभक्तयर्थप्रयोजकः ।

---

1 I. O. तत्सेवाः स्वेषु वेश्मसु
2 A नसठये
3 A सदा
4 A श्रावक for श्रोतृपाठक
5 A श्रेष्ठं
6 A श्रुत्वा समन्वितः
7 I. O. महामहाः
8 A विद्वच्छास्त्र०
9 A गीतिज्ञो
10 A आठ्यसुरो
11 A सदा
12 A नाम्नवमकृतव्याख्यां
13 I. O. omits the bracketed portion
14 A शब्द for सर्ग

शास्त्रार्थ-[1]पदविद्धीमान् पदश्लोकार्थबोधकः ॥१३॥
समुदायप्रकीर्णार्थमुख्यशास्त्रानुसञ्जकः[2] ।
अनन्तरश्च हृद्वस्तु व्यपदिश्यार्थबोधकः ॥१४॥

अनन्तरमनुक्तं हृद्वस्तु परस्याशयस्थ[3] किमपि विवक्षितमित्यर्थः ।

प्रक्रान्तादिषु शास्त्रार्थविभागपरिनिष्ठितः ।
कथाभिधान-[गूढार्थभङ्गेन च विबोधकः][4] ॥१५॥
श्रद्धेयश्च गतालस्यः श्रौतचिन्तावबोधकः ।
संस्कृतैः संस्कृतां[5] विद्यां प्राकृतैः प्राकृतामपि ॥१६॥
आलापमात्रै[6]-र्व्याख्यानैर्यश्च शिष्यान् [7]प्रबोधयेत् ।
देशाभिधानविन्यासैर्बोधयेच्चापि[8] यो गुरुः ॥१७॥
स गुरुः स पिता माता[9] स तु चिन्तामणिः स्मृतः ।
स शास्त्रोपायमाहृत्य नरकेभ्यः समुद्धरेत् ॥१८॥
कस्तेन सदृशो लोके [बान्धवो भुवि][10] विद्यते ।
यस्य वाग्रश्मिचन्द्रेन [11]हृदयान्नश्यते तमः ।
महासंसाररजनीभवं सोऽर्को[12] महाद्युतिः ॥१९॥
नोद्विजेत्तस्य पारुष्ये[13] न च वैलोम्यमिच्छतः ।
न चास्य व्याधिदुःखेषु मलानां वाप्रियो[14] भवेत् ॥२०॥
[प्रसादयेच्च कुपितं][15] दुःखमग्न[16] समुद्धरेत् ।

---

1 I. O. ०पर०
2 A ०शास्त्रानुसंज्ञकः, I.O. ०शास्त्राग्र-सञ्जकः
3 I. O. परस्याशयस्तं, A परस्या-शयनस्थं
4 A भूमन्वभङ्गेषु स्वनिरोधकः for the bracketed portion
5 I. O. सत्कृतां
6 A शास्त्र for मात्रैर्
7 A सुबोधयेत्, I. O. प्रबोधकाम्
8 A ०ह्यापि
9 I. O. स गुरुः माता पिता, A च गुरुमपि कामक्ता
10 I. O. बान्धवोऽस्तु न for the bracketed portion
11 I. O. हृदयं पश्यते, A हृदयान्नश्यते
12 A लोके
13 A रूपस्य
14 A गोप्यो
15 A कस्तेन सदृशो लोके for the bracketed portion
16 I. O. दुःखमुग्धं

रोगेभ्यश्चापि यत्नेन[1] [परित्यागेन चोद्धरेत्][2] ॥२१॥

**अथ व्याख्यायां विधिनिषेधविधिः[3] ।**

[4]एवं व्याख्यां शुभां श्रुत्वा[5] गुरुवक्त्रान्नरोत्तमः ।
विधेयं चिन्तयेद् यत्नात्[6] परत्र हितकारणम्[7] ॥१॥
शृणुयात् श्रद्धया[8] युक्तः प्रणतोऽभिमुखो[9] गुरोः ।
[10]अनन्यसंकथाक्षेपी निष्प्रमादो ह्यतन्द्रितः ॥२॥
[11]सूत्रे च संशये जाते पृच्छेद्वाक्य[12]-मुदीरयेत् ।
[13][गुरुणा चोक्तमेकान्ते] श्रद्धावान् वाक्यमाश्रयेत् ॥३॥
न पुरो गुरुवाक्यानि गुरूक्तं परिपालयेत् ।
भिषजां वचनं कार्य्यं गुरूणाञ्च महात्मनाम् ॥४॥

गुरुवाक्यानीत्यत्र हन्यादिति शेषः ।

न तत्कृतं स्वयं कुर्यात्ते समिद्धानलार्चिषः[14] ।
अप्रस्तुतकथाक्षेपं यः कुर्य्यादग्रतो गुरोः ।
स ब्रह्महत्यामाप्नोति गुरुवाक्येषु निश्चयः ।।५॥
[यः श्रुत्वा अन्यतः][15] शास्त्रं संस्कारं प्राप्य वा शुभम् ।
अन्यस्य जनयेत् कीर्त्तिं गुरोः स ब्रह्महा भवेत् ॥६॥
विस्मरेच्चाथ वा मौग्ध्याद् योऽपि शास्त्रमनुत्तमम् ।
स याति नरकं घोरमक्षयं भीमदर्शनम् ॥७॥
यस्तु बुद्ध्वा नरः शास्त्रं[16] किञ्चित् कुर्य्याच्छुभाशुभम् ।
भवेच्छतगुणं तद्धि विज्ञानेभ्यो नरस्य[17] च ॥८॥

---

1 A यत्तेन
2 A परित्यागमतोद्धरेत् for the bracketed portion
3 A विवोधनिषेधः
4 A तुरं
5 I. O. श्रुत्वा
6 A यत्नत्
7 A हितकारकम्
8 I. O. श्रद्धया
9 A अभिमुख
10 A अन्योन्य॰
11 I. O. सूत्रस्य, सूत्रायां
12 A अर्थम् for वाक्यम्
13 A गुरुर्नैऽव्याचात्तरात्मे for the bracketed portion
14 I. O. समिद्धानलार्चिषः, A स समिद्धानलर्चिषः
15 A यश्च श्रुत्वान्यतः for the bracketed portion
16 A शास्त्रं
17 I. O. रयस्य

## अथ पाठक्रमः ।

एवं विधानतो [वाच्यं पाठकेन विपश्चिता][1] ।
तपःशमात्मकं स्वर्गधर्मादि[2]-फलसाधनम् ।
शनैर्विविच्य[3] तद्वाच्यमध्यात्मादि च यद्भवेत् ॥९॥

तपःशमात्मकं ग्रन्थमध्यात्मप्रतिपादकञ्च शनैर्विविच्य[4] पठेत् ।

क्रुद्धोक्तं युद्धसंक्षोभं त्वरायुक्तेन वाचयेत् ।
सरागं ललितैर्वाक्यै[5]-र्वाचयेद्हृदयङ्गमैः ।
नानाचिन्तार्थ[6]-रूपेण ललितेन [च वाचयेत्][7] ॥१०॥

सरागं शृङ्गारग्रन्थम् ।

सर्गाध्यायसमाप्त्यैव[8] कथापर्यन्तमेव च[9] ।
[10]प्रशस्तशब्दसंयोगे[11] कुर्यादिति विरामणम् ॥११॥

विरामणं पाठसमाप्तिः ।

समाप्ते वचनेऽभीष्टं कुर्यादेव विचक्षणः ।
अवधार्य जगच्छान्तिमन्ते[12] शान्त्युदकं सृजेत् ॥१२॥

शान्त्युदकं [13]शान्त्यर्थमुदकम् ।

सुश्रुतं [14]सुव्रतं ब्रूयादस्तु व्याख्या तु[15] नित्यदा ।
लोकः प्रवर्त्ततां धर्मे राजा चास्तु[16] सदा जयी[17] ॥१३॥
धर्मवान् धर्मसम्पन्नो गुरुश्चास्तु निरामयः ।
इति प्रोच्य यथायातं[18] गन्तव्यञ्च विभावितैः ॥१४॥

## अथ चिन्ताविधिः ।

शिष्टैः परस्परं शास्त्रं चिन्तनीयं विचक्षणैः ।
कथावस्तुप्रसङ्गेन नानाव्याख्यानभावनैः ॥१५॥

---

1 A वाक्यं वाचकेन परिस्थिता
2 I. O. सर्गस्वर्गादि०
3 I. O. ०विरोध्य
4 I. O. ०विपश्च
5 A वक्त्रैर् for वाक्यैर्
6 A इवात् for चिन्तार्थ
7 A तथाऽऽवर्धयेत
8 A ०समाप्तौ च
9 A वा
10 I. O. वायुभक्त for प्रशस्त
11 A ०प्रयोगात्
12 I. O. मन्त for मन्ते, A omits it
13 I. O. शान्तामुदकं, A शान्त्यन्नमुदकं
14 A सुष्टुतं
15 I. O. न
16 I. O. वस्तु
17 I. O. जपौ
18 I. O. यथाजातं

युक्तिभिश्च स्मरेद्व्याख्यां चिह्नैश्चापि स्वयं कृतैः ।
एवं दिने दिने व्याख्यां शृणुयान्नियतो नरः ॥१६॥

## अथ शास्त्रव्याख्यासमाप्तिकृत्यम् ।

समस्तशास्त्रश्रवणेन पुंसः[1] श्रद्धाप्रधानं भवतीह चेतः[2] ।
रागश्च [3]शास्त्वाच्छममभ्युपैति दोषाश्च नाशं [4]निखिलेन यान्ति ॥१७॥
[5]यथाकथञ्चिच्छृणुयान्न शास्त्रमश्रद्धया वर्जितधर्मसन्धः[6] ।
ततः समाप्तावथ शास्त्रमार्गकथोदये[7] चापि विनीतबुद्धिः ॥१८॥
शक्त्यार्चयेद्-[8][वाचकमग्र एव गुरुञ्च][9]भक्त्या पितृवन्निकामम् ॥१९॥
एष [विद्याप्रदानस्य प्रधानो][10]विधिरुच्यते ।

## अथ ब्राह्मणाय दानम् ।

अनेनैव विधानेन ब्राह्मणे शीलशालिनि ।
प्रबोधयति [11]धीयुक्ते विधिज्ञे[12] वेदवादिनि ।
प्रबोधयति व्याख्यातरि[13] ।
विन्यस्येत शुभं शास्त्रं महाभोगजिगीषया ॥२०॥

अनेनैव विधानेनेति यथा देवाय निवेदने विधिरुक्तस्तथैव ब्राह्मणायापि[14] गृहं नीत्वा विद्यां[15] दद्यादित्यर्थः ।

## अथ शास्त्रानुष्ठानम्[16] ।

धनैर्वा विपुलैर्वस्त्रै-[17]र्गुरुं कृत्वा सुतर्पितम् ।
अध्यापयेच्छुभान् शिष्यानभिजातान् सुमेधसः ॥२१॥

---

1 I. O. युक्तः
2 I. O. भवद्दीयचेतः
3 A शास्त्राग्रममन्यपैति, I. O. शास्त्राच्छतमभ्युपैति
4 A निखिला पुनन्ति
5 I. O. कथा
6 A ॰संघं
7 A ॰कावाद्ये
8 I. O. शक्त्यार्चयेद
9 A वाचकमभादिवं भाकच for the b. p.
10 I. O. विद्याप्रधानस्य प्रदाने for the b. p.
11 I. O. वायुक्त
12 A विविक्ते
13 A व्याख्याताभि
14 I. O. ब्राह्मणापि
15 A omits विद्यां
16 I. O. शस्त्रानुष्ठानं
17 A ॰गुरुः कृत्वा शुभार्पितं

एतेन यथाप्रसिद्ध-[1]शास्त्रानुष्ठानमुक्तम् । [तथा च शास्त्रदान][2]सङ्कल्पयेत् ।

## अथ विद्यादानफलम् ।

एवं विद्याप्रदानन्तु सर्वदानोत्तमं स्मृतम् ।
सर्वदा सर्वदानानां [3]नरकोत्प्लवमुत्तमम् ॥१॥
अनेन विधिना दत्त्वा विद्यां [4]धर्मपरो नरः ।
फलं दशाश्वमेधानां शतस्य सुकृतस्य च ॥२॥
राजसूयसहस्रस्य सम्यगिष्टस्य यत् फलम् ।
तत्फलं लभते मर्त्यो विद्यादानेन भाग्यवान्[5] ॥३॥
[सर्वशस्यसुसम्पूर्णां सर्वरत्नोपशोभिताम् ।
ब्राह्मणेभ्यो महीं दत्त्वा ग्रहणे चन्द्रसूर्ययोः ।
यत् फलं लभते मर्त्यो विद्यादानेन तत्फलम् ][6] ॥४॥
यावदक्षरसंख्यानं विद्यते शास्त्रशंसने ।
तावद्वर्षसहस्राणि स्वर्गे विद्याप्रदो वसेत्[7] ॥५॥
यावन्त्यः पङ्क्तयस्तत्र पुस्तकेऽक्षरसंश्रिताः ।
तावतो नरकात् [8]कुल्यानुद्धृत्य नयते दिवम् ॥६॥
यावच्च पत्रसंख्यानं पुस्तके विद्यते शुभम् ।
[9]तावद्युगसहस्राणि सकुलो[10] मोदते दिवि ॥७॥
यावच्च पातकं तेन कृतं जन्मशतैरपि ।
तत्सर्वं नश्यते तस्य विद्यादानेन देहिनः ॥८॥
स जातो मनुजो लोके स धन्यः स तु बुद्धिमान् ।
यो [11]विद्यादानसम्पर्कप्रसक्तः पुरुषोत्तमः ॥९॥

---

1 I. O. ०ष्ठवानु०, A ०मष्ठानु०
2 I. O. तदा च सर्वदानं, A तथा च सम्प्रदानं
3 I. O. नरकात्०
4 A पुण्यपरो
5 A केवलं
6 A omits the bracketed portion
7 A भवेत्
8 A वंश्यानुद्धृत्य
9 A तावद्वर्ष०
10 A सकुलं, I. O. स्वकुलो
11 A विद्यादानतः सम्यक्प्रसक्तः

यथाविभवतो दत्त्वा विद्यां शाठ्यविवर्जितः ।
याति पुण्यमयान्[1] लोकानक्षयान् [2]भोगभूषितान् ॥१०॥
[3]येऽपि एवं मसीपात्रलेखनी-[4]सम्पुटादिकम् ।
[5]दद्युः शास्त्राभियुक्ताय तेऽपि विद्याप्रदायिनाम् ।
यान्ति लोकान् शुभान् मर्त्याः पुण्यभाजो महाधियः[6] ॥११॥
इति विद्याप्रदानस्य माहात्म्यं प्रकीर्तितम् ।
श्रुत्वैतत् पातकैर्मुच्येन्नियतं[7] सप्तजन्मजैः ॥१२॥

अत्र वेदाश्चत्वारस्तदङ्गानि च शिक्षाकल्पनिरुक्तच्छन्दोज्योतिषव्याकरणानि धर्मशास्त्रं [8]मन्वादिस्मृतिसंहितारूपम् । पुराणानि [9]ब्राह्मादीनि कर्मब्रह्मात्मिका च मीमांसा न्यायश्चेति चतुर्दशविद्याः । उपविद्याश्च कृषिविद्या-शिल्पविद्या-[10]कलाविद्याप्रमुखविद्या यथायथमुन्नेयाः । तदासां विद्यानां मध्याद् यथेष्ट[11] विद्यामुक्त-[विधायतनं नीत्वा स्वेष्टदेवाय][12] निवेदयेत् । तद्यथा—यजमानः शुभनक्षत्रयुक्तं दिनमनुसन्धाय गृहं सुदृढं [13]सुस्तम्भं सुधालिप्तभित्तिकं निःसन्धि घटयित्वा तत्र यथेच्छदेवताप्रतिमां स्थापयित्वा लेखयित्वा वा नानापुष्प-[14]नानातरुपल्लवालङ्कृतं [15]सुधूपावासितम् [उपरिविततचन्द्रातपं च][16] तद्गृहं कृत्वा तत्र महेश्वरं ब्रह्माणं जनार्दनञ्च प्रतिमासु स्थण्डिले वा [17]आवाहनपूर्वकं सम्पूज्य यथाविधि वृद्धिश्राद्धं कृत्वा यथेष्टसंख्यान् ब्राह्मणानभ्यर्च्यास्मिन् विद्या[18]-लिखनारम्भे पुण्याहं भवन्तो ब्रुवन्त्विति वदेत् । पुण्याहमिति तैस्त्रिः प्रत्येकमुक्ते स्वस्ति भवन्तो ब्रुवन्त्विति वदेत् । [19][स्वस्तीति तैस्त्रिः प्रत्येकमुक्ते ऋद्धिं भवन्तो ब्रुवन्त्विति वदेत् ] । ते च ऋद्ध्यतामिति प्रत्येकं त्रिर्ब्रूयुः । ततो नागरलिपिज्ञं तदसम्भवे लिप्यन्तरज्ञमपि वा स्नातं लेखकं यथाशक्ति हैम-

1 A पुण्यसमा
2 A तोय०
3 A येऽपरं
4 I. O. ०संपदादिकं
5 I. O. दद्य:
6 I. O. महाधिप:
7 I. O. नियतं
8 I. O. सन्वादिस्मृति०
9 A ब्राह्मादीनि
10 A omits कलाविद्या
11 A यथेष्ट
12 A विधिना यत्नान्नीत्वा अष्टदेवाय देवान्तराय वा for the bracketed portion
13 I. O. गुप्तं
14 A omits नाना
15 I. O. सुधूपाधिवासितं
16 A उपरितचन्द्रातपां for the bracketed portion
17 A मन्त्रावाहनपूर्वकम्
18 A अस्मिन्नित्यादि for अस्मिन् विद्या
19 I. O. omits the bracketed portion

केयूराङ्गुरीयक[1]-शुक्लवस्त्रमाल्यादिभिरर्चयेत् । लेखकस्तु शुक्लमाल्याम्बरधरो[2]ऽलङ्कृतः प्राङ्मुखो यथोक्तं [3]सरयन्त्रमारोप्य तत्र लेख्यं शास्त्रं यथोक्तं पत्रसञ्चयञ्च स्थापयित्वोक्तविधिना मसीं कृत्वा तत्पूर्णभाण्डे यथोक्तलेखन्या मसीमादाय तूर्य्यघोषपूर्वकं लेखनीयशास्त्रस्यादौ पञ्चदश वा श्लोकान् लिखेत् । ततोऽपरस्मिन्नपि दिने शुभवेलायां पूर्ववत् पुण्याहवाचनतूर्य्यघोषपूर्वकं लिखेत् । एवञ्च क्रमेण शास्त्रं लेखयित्वा लिखनसमाप्तिदिने पुण्याहादिवाचनं ब्राह्मण-भोजनादिकञ्च कुर्यात्[4] । ततो यथोक्तक्रमेण [5]शोधयित्वा [6]शलाकाडोरपट्टिकादिना पुस्तकरूपं कृत्वा वस्त्रेणाच्छाद्य शक्तितश्चतुर्दोलं दोलायानं[7] गजमश्वं रथं वा [8]श्वेतवस्त्रादिशोभितं [9]मुकुटरत्नालङ्कृतं घण्टाचामरपताकाद्यन्वितं विधृत-[10]यथाशक्त्युपात्तरत्नमय-[11]दण्डातपत्रमुप-कल्प्य तत्र लिखितं पुस्तकमारोप्य नृत्यगीतवाद्यमङ्गलघोषवेदध्वनिभिर्देवायतनं नयेत् । तत्र [12]च तं देवं सम्पूज्य तदग्रतः पुस्तकं स्थापयित्वा देवाय निवेदयेत् । [13]तद् यथा—ॐ अद्य पुण्येऽहनि श्रीमदमुकभट्टारकाय मत्पितृ-[14]गत-नन्दिपुराणोक्तामुकविद्यादानफलप्राप्तिकामोऽह-मेतद्विद्याध्ययनसिद्ध्यर्थमेतां विद्यां ददानि । ततः शिवभक्तेभ्यो देवान्तरभक्तेभ्यश्च यथेच्छ-संख्यब्राह्मणेभ्योऽभीष्टसंख्यं सुवर्णं दद्यात् । तद् यथा—कृतैतद्दानप्रतिष्ठार्थं [15]युष्मभ्यमहं दक्षिणामेतत् काञ्चनं ददानि । स्वस्तीति ब्राह्मणा ब्रूयुः । बान्धवोद्देशदाने तु मत्पितृपद-स्थाने अमुक-[16]सद्बन्धुपदनिवेशो विशेषः । [17]स्वोद्देशेन दाने तु [18]मत्पितृपदं [19]सद्बन्धुपदञ्च पूर्वनिवेदन-[20]वाक्येनैव प्रयोज्यम् । ततो यथाशक्ति यथार्हं वाचकमुपाध्यायञ्च सुवर्णादिभिः परितोष्य गुरुवाचकयोर्निर्वाहाय वृत्तिमुपकल्प्य तदा तस्मिन्नायतने श्रोतॄन् पुराणानि शास्त्राणि च श्रावयेदध्यापयेच्च । पाठसमये पाठकं पुष्पधूपाभ्यां पूजयेत् । शास्त्रनिवेदनदिने यथायथं नृपत्यादयो यथाशक्ति पौरपरितोषणहट्टरथ्यादिशोभागीतनृत्यवाद्यादीन्नगरादिषु कारयेयुः । ततः श्रोतारो यथोक्तक्रमेण[21] श्रवणं कुर्युः । [22]चिन्तयेदनुदिनं पाठसमाप्तौ च[23] पाठको

1 A and I. O. अङ्गुलीयक
2 A माल्यावम्बरो
3 I. O. सरपत्र०, A शिरयन्त्र०
4 A कुर्युः
5 A लेखयित्वा
6 I. O. शलाकाडोरपट्टिकादिना
7 A चतुर्दोलकं दोलायां
8 A श्वेतवस्त्रादि०, I. O. नेत्रवस्त्रादि०
9 A बहुरत्नाशोभितं
10 A omits यथा
11 I. O. ०दण्डातपत्रमुपकल्प्य, A दण्डात्-पत्रमुपकल्प्य
12 I. O. omits च
13 I. O. omits तद् यथा
14 A ०गतनन्दिपुराणोक्ता०
15 A तुभ्यमहं
16 A मन्बन्ध for सद्बन्धु
17 A स्वदेय
18 I. O. पितृपदं, A मपितृपदं
19 A तद्बन्धुपदञ्च
20 I. O. omits वाक्येनैव
21 I. O. यथोक्तक्रमेण
22 A चिन्तयेद् यञ्च अनुदिनं
23 I. O. omits च

यथोक्तं [1]जगच्छान्त्याद्यवधारणं कुर्य्यात्। [2]शास्त्रपरिसमाप्तौ च श्रोतारोऽपि [3]वाचकपूजा-पूर्वकं गुरुमर्चयेयुः। अध्यापकत्वादिगुणयुक्तब्राह्मणाय दाने तु पूर्वोक्तक्रमेणैव[4] यथोक्त-ब्राह्मणगृहं नीत्वा तं ब्राह्मणमभ्यर्च्य तस्मै दद्यात्। तत्र दानवाक्ये श्रीमदमुकभट्टारकायेति स्थाने[5] अमुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यमिति देवतानिवेदन-[6]दान-वाक्याद्विशेषः। प्रतिग्रहीता च स्वस्तीत्युक्त्वा सावित्रीं पठित्वा विद्येयं ब्रह्मदैवतेत्युक्त्वा यथाशाखं कामस्तुतिं पठेत्। [7][ततो दक्षिणादानम्।] [8]ॐ अद्य कृतैतद्दान-प्रतिष्ठार्थं तुभ्यमहं दक्षिणामेतत् काञ्चनं ददानि। ब्राह्मणः स्वस्तीत्युक्त्वा पुस्तकं[9] स्पृशेत्। ब्राह्मणेभ्यश्च देवतानिवेदनवत् दक्षिणादानम्। ततः पूर्ववद् गुर्वादि-परितोषणवृत्त्युपकल्पनपूर्वकं तद्ब्राह्मणगृह एव [10]यथेच्छकालमध्यापनादि कारयेत्। [11]सत्र-दाने च यथाशक्तीष्टकादिना गृहं निर्माय यथाशक्ति बहुभिर्वस्त्रकाञ्चनादिभिरुपाध्यायम-भ्यर्च्य[12] [13]यथेच्छकालमभीष्टविद्याध्यापनं सङ्कल्पयेत्। तद् यथा—ॐ नन्दिपुराणोक्ता-मुकविद्यादानफलप्राप्तिकामोऽहमेतदमुकविद्याध्यापनं कारयिष्ये[14]। ततो [15]वृत्त्युपकल्पन-मुत्सवादिकरणञ्च पूर्ववत्। विद्यादानशक्तस्तु तत्तद्विद्यालिखनोचित-मसीपात्र-लेखनी-नख-रञ्जनीपुस्तकवाहनाय[16] संपुटादिकं नन्दिपुराणोक्तफलसिद्धिकामनया[17] तत्तद्विद्याभियुक्तेभ्यो यथा-शक्ति दद्यात्। एतच्च विद्यादानं यथोक्तपुस्तकलिखनादि[18]-क्रमव्यतिरेकेणापि यथाकथञ्चित् पुस्तकमुपादायाविधिनैव कुर्य्यात् पूर्वत्राविधानत इति श्रुतेः। विष्णुधर्मोत्तरेऽप्येतदुक्तम्।

तथा च विष्णुधर्मोत्तरम् (३।३०३।५-७) :—

वेददानादवाप्नोति सर्वयज्ञफलं नरः।
उपवेदप्रदानेन[19] गन्धर्वैः सह मोदते ॥१॥

---

1 I. O. गजच्छन्त्याद्यवधारणं
2 A शास्त्रसमाप्तौ
3 I. O. श्रोतारो
4 A पूर्वोक्तक्रमेण च
5 A omits स्थाने
6 A वाक्यं for दान।वाक्याद्
7 A reads the bracketed portion after दक्षिणादानम्, two lines below.
8 I. O. omits ॐ
9 A omits पुस्तकं
10 A यथाकाल०
11 I. O. सत्रदाने, A संप्रदाने
12 I. O. ०रुपाध्यायदभ्यर्च्य
13 A यथे०
14 A कारिष्ये
15 I. O. वृत्त्युपकल्पनमुत्सवादिकरणञ्च
16 I. O. वह्निर्भीतपत्र for वाहनाय
17 I. O. ०सिद्धिमभिधाय
18 I. O. ०लिखनादि०
19 I. O. ०प्रधानेन

[1]वेदाङ्गानां [2]प्रदानेन शक्रलोकमवाप्नुयात् ।
धर्मशास्त्रप्रदानेन धर्मेण सह मोदते ॥२॥
[3]सिद्धान्तानां प्रदानेन मोक्षमाप्नोत्यसंशयम् ।
[4]शास्त्राणि दत्त्वा चान्यानि[5] नरो [6]लोके महीयते ॥३॥

सिद्धान्ताश्च योगियाज्ञवल्क्येनोक्ताः । तथा च योगियाज्ञवल्क्यः :—

हैरण्यगर्भैः [7]कपिलैरपान्तरतमैस्तथा ।
सनत्कुमार-[8][ब्रह्मिष्ठैस्तथा पाशुपतैरपि] ।
[9]पञ्चरात्रैः सदोन्मुक्तैः सिद्धान्तैरत्र सप्तभिः ॥४॥ (२।६७क-६८क)

विद्यां यथेच्छं पुरुषस्य दत्त्वा
मन्त्रं शुभं [10][वाप्यथ वापि] शिल्पम् ।
[11]शिल्पस्य भाण्डं यदि वा द्विजेन्द्राः
प्राप्नोति [12]लोकान् मनसस्त्वभीष्टान् ॥५॥ (=वि, ध. ३।३०३।१५ )

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे विद्यादानावर्तः ।

1 A प्रसङ्गेन
2 I. O. प्रधानेन
3 A सिद्धान्तानां
4 I. O. शस्त्राणि
5 A नाना
6 V. D. नाके
7 A कापिलैरथान्तिवतयेस्तथा
8 A ब्रह्मादैस्तथा पाशुपतैरपि for the bracketed portion
9 A पञ्चरात्रैर्मदोयुक्तैः, Yogi-yāj. पाञ्चरात्रैः सदोद्युक्तैः
10 A वापि तथैव for the bracketed portion
11 I. O. मन्त्रस्य
12 A लोक मनसस्त्वभीष्टान

# अथ विष्णुदैवतकल्पदानावर्तः । (४४)

मत्स्यपुराणे ( २६०।२-८, ६ख-१२, १८-१६ ) :—

कल्पानुकीर्त्तनं वक्ष्ये [1]सर्वपापप्रणाशनम् ।
यस्यानुकीर्तनादेव[2] वेदपुण्येन युज्यते ॥१॥

वेदपुण्येन वेदपाठपुण्येन ।

प्रथमः श्वेतकल्पस्तु द्वितीयो नीललोहितः ।
[3]वामदेवस्तृतीयस्तु ततो [4]राथन्तरः स्मृतः ॥२॥
रौरवः पञ्चमः प्रोक्तः [5]षष्ठः [6]प्राण इति स्मृतः ।
सप्तमोऽथ बृहत्कल्पः कन्दर्पोऽष्टम उच्यते ॥३॥
सद्योऽथ नवमः [7]कल्प ईशानो दशमः स्मृतः ।
[8]तम एकादशः[9] प्रोक्तस्तथा सारस्वतोऽपरः ॥४॥
त्रयोदश उदानस्तु गारुडोऽथ[10] चतुर्दशः ।
कौर्मः [11]पञ्चदशो ज्ञेयः[12] [13]पौर्णमास्यामजायत ॥५॥
षोडशो नारसिंहस्तु [14]वामनस्तु ततोऽपरः[15] ।
आग्नेयोऽष्टादशः प्रोक्तः सोमकल्प-[16]स्ततः स्मृतः ॥६॥

1 M. P. महापातकनाशनं
2 A यस्यानुकीर्त्तमं वेद
3 Corrected from M. P. A वामदेवयस्तृतीयंस्तु, I. O. वाम-देवास्तृतीयस्तु
4 Corrected from M. P. A रथन्तरं, I. O. वाथन्तर.
5 Both I. O. and A षष्ठप्राण for षष्ठः प्राण
6 M. P. देव
7 M. P. प्रोक्त
8 Corrected from M. P. I. O. ध्यान, A ठ्यान
9 A एकादश
10 A गारुडस्तु
11 M. P. पञ्चदशः प्रोक्तः
12 A राजन
13 Corrected from M. P. Both I. O. and A पौर्णमासौ प्रजापतेः
14 M. P. समानस्तु
15 A ततः परः
16 M. P. ०स्तथापरः

मानवो विंशतिः प्रोक्तस्तत्पुमानिति चापरः ।
वैकुण्ठश्चापरस्तद्वल्लक्ष्मीकल्पस्तथापरः[1] ॥७॥
पञ्चविंश [स्ततो घोरो][2] वाराहस्तु ततोऽपरः ॥८॥
सप्तविंशोऽथ वैराजो[3] गौरीकल्पस्तथापरः ।
माहेश्वरस्ततः[4] प्रोक्तस्त्रिपुरं [5]यत्र घातितम् ॥९॥
पितृकल्पस्तथा-[6][न्ते तु या कुहू]र्ब्रह्मणः [7]पुरा ।
इत्येवं ब्रह्मणो मासः[8] सर्वपापप्रणाशनः[9] ॥१०॥
[10]आदावेव हि माहात्म्यं यस्मिन् [11]यस्य विधीयते ।
तस्य कल्पस्य तन्नाम विहितं ब्रह्मणा पुरा ॥११॥
यस्तु[12] दद्यादिमान् कृत्वा [13]हेमान् [14]पर्वणि पर्वणि ।
ब्रह्मविष्णुपुरे [15]कल्पं मुनिभिः पूज्यते दिवि ॥१२॥
सर्वपापक्षयकरं कल्पदानं यतो भवेत् ।
मुनिरूपांस्ततः कृत्वा दद्यात् कल्पान् विचक्षणः ॥१३॥

अत्र प्रथमं त्रिशतं कल्पान् सौवर्णमुनिप्रतिमारूपान् द्विजान् दक्षिणे अक्षसूत्रधरान् वामे कमण्डलुधरान् कृत्वा पौर्णमास्यमावास्याष्टमीद्वयचतुर्दशीद्वयरविसंक्रमणेषु क्रमेणैकैक-

1 M. P. adds the following after this :—चतुर्विंशतिमः प्रोक्तः सावित्रीकल्पसंज्ञकः, which portion was presumably wanting in the MS. of M. P., utilised by Ballāla Sena, as is evident from the last three lines of the accompanying prose comment on the next page.

2 Corrected from M. P. I. O. तिमो घोरे and A तिमोंशैमो for the b. p.

3 Corrected from M. P. I. O. सप्तविंशततो राजा and A सप्त... तो राजन्

4 M. P. ०स्तु स

5 I. O. यत्र

6 Corrected from M. P. Both I. O. and A न्यन्तु मामद्वद for the b. p.

7 Corrected from M. P. I. O. and A स्मृत:

8 A मार्गः

9 A प्रणशनः M. P. सर्वपातकनाशनः

10 A आचार्येण

11 I. O. पद्मय

12 A यस्य

13 I. O. चैमान्

14 A सुमोंच

15 M. P. वास

शोऽभ्यर्च्य यजमानः शुचिब्राह्मणायार्चिताय दद्यात्। तद् यथा—ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिने अमुकदेवशर्मणे तुभ्यं मत्स्यपुराणोक्त-कल्प-दानफलप्राप्तिकामोऽहमेतं सुवर्णघटितं श्वेतकल्पं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा कल्पोऽयं विष्णुदैवत इत्युक्त्वा यथाशाखं कामस्तुतिं पठेत्। ततः ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा कल्पं स्पृशेत्। एवं नीललोहितादिकल्पदानवाक्ये श्वेतकल्पपदस्थाने यथायथममुककल्पमिति विशेषः। वैकुण्ठश्चापरस्तद्वदिति वैकुण्ठनामैवापरोऽपरनामैव वेति [1]विनिगमनायां प्रमाणाभावात दानवाक्ये [2]वैकुण्ठानन्तरं [3]त्रयोविंशं कल्पं ददानीति विशेषः।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे कल्पदानावर्तः।

1 A निगमा
2 A वैकुण्ठनामान्तर
3 I. O. त्रयोविंशत्

# अथ प्रजापतिदैवत-प्रैष्यदानावर्तः । (४५)

महाभारते (अनु—२३।६८) :—

वैवाहिकानां द्रव्याणां [2]प्रैष्याणाञ्च युधिष्ठिर ।
दातारो वाससाञ्चैव पुरुषाः स्वर्गगामिनः ॥१॥

[3]प्रैष्याणामिति विशेषानुपादानाद्दासीदासमिथुनानामुपादानम् । [4]प्रैष्याणामिति बहुत्वं दातृबहुत्वापेक्षया । अत्र यजमानो ब्राह्मणायार्चिताय दासमर्चितं दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुक[5]-शाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं स्वर्गप्राप्तिकामोऽहमेतं दासं[6] ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा दासोऽयं प्रजापतिदैवत इत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । ततः ॐ अद्य कृतैतद्दासप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा दासं[7] हृदये स्पृशेत् । [8]दासीदासमिथुनदानवाक्ययोस्तु एतां दासीमेतद्दासमिथुनमिति विशेषः[9] ।

स्कन्दपुराणे :—

रथमश्वं गजं [दासीं कन्यां गृहं][10]-मथापि च ।
भूमिञ्च यः प्रयच्छेत[11] स राजा भुवि जायते ॥२॥

ब्राह्मणायार्चिताय दासीमर्चिताम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [12]भूमिराज्यप्राप्तिकामोऽहमेतां दासीं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । दासदाने तु एतं दासमिति विशेषः ।

आग्नेयपुराणे :—

एतद्विचार्य हृदये दासीं दद्याद् द्विजातये ।
स्थिरनक्षत्रसंयुक्ते [13]सोमे सौम्यग्रहान्विते ॥३॥

स्थिरनक्षत्रसंयुक्ते [रोहिण्यार्द्रयोरन्यतमनक्षत्रयुक्तेसोमे चन्द्रे][14] सौम्यग्रहान्विते × × ।

---

1, 2, 3 and 4 A प्रेष्य०, प्रष्याणाञ्च, प्रेष्याणामिति and प्रेष्याणामिति
5 A omits वेदामुक
6 A omits दासं
7 A omits दासं
8 A दासीदासदासयोस्तु वाक्यं
9 I. O. शेषः
10 A दासं दासीं कन्या for the bracketed portion
11 A प्रयच्छेत्
12 A omits भूमि
13 I. O. सोमं
14 I. O. रोहिण्युत्तरस्वामन्यतमनक्षत्रे for the b. p.

[1]दानकालं प्रशंसन्ति सन्तः पर्वणि वा पुनः ।
अलङ्कृत्य यथाशक्त्या वासोभिर्भूषणैस्तथा ॥४॥
इयं दासी मया तुभ्यं श्रीवत्स[2] प्रतिपादिता ।
सदा कर्मकरी [3][योज्या यथेच्छं] भद्रमस्तु ते ॥५॥
दत्त्वा क्षमापयेत् पश्चात् [4]ब्राह्मणं वस्त्रकाञ्चनैः ।
अनुगत्वा तु सीमायां विसर्जयेत्[5] द्विजं ततः ॥६॥

सीमायां गृहसीमायां गृहद्वार इत्यर्थः ।

एवं दत्त्वा महाराज कृतकृत्यो भवेत् पुमान् ।
इहलोके परे चैव सप्तजन्मान्यखण्डितः ॥७॥

उक्तानामन्यतमे समये वस्त्रैर्भूषणैश्चालङ्कृतां दासीमर्चितामर्चिताय ब्राह्मणाय इयं दासी [6]मयेति मन्त्रं पठित्वा ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । आग्नेयपुराणोक्त[7]-नियतसमयविहित-दासीदानफलप्राप्तिकामोऽहमेतां वस्त्रैर्भूषणैरलङ्कृतां दासीं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । ततो यजमानो ब्राह्मणं पुनर्वस्त्रैः काञ्चनैश्चाभ्यर्च्य क्षमस्वेत्युक्त्वा [8]सीमामनुगम्य विसर्जयेत् ।

[9][वामनपुराणे (६५।४०) ब्राह्मणाय दानानुवृत्तौ :—

दासीं दासमलङ्कार-[मन्नं षड्रस][10]-संयुतम् ।
[11]पुरुषोत्तमप्रीत्यर्थं प्रदेयं[12] सर्वकालिकम् ॥८॥

ब्राह्मणायार्चिताय दासीमर्चिताम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । पुरुषोत्तमप्रीतय एतां दासीं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्व्ववत् । ]

तथा :—

गृहकर्मकरीं दद्यात्तरुणीं रूपशालिनीम्[13] ।
बहुद्रव्योपसंयुक्तां ग्रामवेश्मसमन्विताम् ॥६॥

---

1 A reads the entire line as शुभाशुभाविभेदेन कालं प्रशंसन्ति सन्तः पर्वणिव पुरा
2 Both I. O. and A श्रीवत्स
3 A तोष्या यथेष्टं for the b. p.
4 I. O. ब्राह्मणैर्वस्त्रकाञ्चनैः
5 I. O. वर्जयेत
6 A ममेति
7 I. O. आग्नेयपुराणो
8 A सीमान्तमनु॰
9 A reads the bracketed portion between पूर्ववत् and दास दाने, two lines above आग्नेय, पुराणे on the previous page
10 A omits the bracketed portion
11 I. O. and A पुरुषोत्तमस्य प्रीत्यर्थं Vāmana P. पुरुषोत्तमतुष्ट्यर्थं
12 A देयं
13 A omits रूपशालिनीम्

[1]बहुद्रव्योपसंयुक्तां [2]पानीयपात्र शय्यामुषलोदूखल-वस्त्रालङ्कार-रन्धनसामग्री[3]-गृहवासोचितद्रव्यसहितामित्यर्थः ।

दासीं समीक्ष्य बहुशो गृहकर्मदक्षां यो ब्राह्मणाय कुलशीलवते ददाति ।

विद्याधराधिपतिभिः[4] प्रतिपूजितोऽसौ मर्त्यः प्रयाति [5]ससुरैः सह मर्त्यलोकम् ॥१०॥

ब्राह्मणाय कुलशीलवतेऽर्चिताय उत्कृष्टरूपां गृहवासोचितद्रव्यसहितां गृहयुतां ग्रामसहितां दासीमर्चिताम् ॐ अद्यादि[6] तुभ्यमन्तमुक्त्वा दद्यात् । आग्नेयपुराणोक्त-ग्रामादियुक्त-दासीदानफलप्राप्तिकामोऽहमेतां बहुद्रव्योपसंयुक्तां ग्रामवेश्मसमन्वितां दासीं ददानि । स्वस्त्यादि-स्वीकारान्तं पूर्ववत् ।

विष्णुधर्मोत्तरे (३।३१२।२ख) :—

दासं कर्मकरं दत्त्वा गोसवस्य फलं लभेत ।

अर्चिताय ब्राह्मणाय कर्मकरणक्षमं दासमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । गोसवफलप्राप्तिकामोऽहमेतं दासं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा दासदानानुवृत्तौ (३।३१२।३क) :—

स याति शक्रसालोक्यं[7] यस्तु योग्यं[8] प्रयच्छति ॥११॥

[9]योग्यं कर्मकुशलम् । अर्चिताय ब्राह्मणाय [10]कर्मकुशलं दासमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [11]शक्रसालोक्यप्राप्तिकामोऽहमेतं दासं ददानि । स्वस्त्यादि-स्वीकारान्तं पूर्ववत् ।

तथा (३।३१२।३ख-४क):—

यस्तु कर्मकरीं दासीं ब्राह्मणाय प्रयच्छति ।

लोकास्तु सुलभास्तस्य वसूनां समुदाहृताः ॥१२॥

ब्राह्मणायार्चिताय कर्मकरणक्षमां दासीमर्चिताम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [वसुलोकप्राप्तिकामोऽहमेतां दासीं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।][12]

1 I. O. यज्ञद्रव्योपसंयुक्ता
2 A पानीयपात्र पत्नि शय्यामलोदूखल
3 I. O. ०सामग्रिकादि०
4 I. O. विद्याधराधिपतिभि:
5 A सरिरैः मत्स्यलोके
6 A omits अद्यादि
7 A स जाति सक्रसायुज्यं
8 I. O. and V. D. योग्य
9 I. O. योग्यं युक्तकुशलं
10 I. O. युक्तकुशलं
11 A शक्रसायुज्यप्राप्तिकामो०
12 A omits the bracketed portion

तथा (३।३१२।४ख-५क) :—

[[1]तरुणीं रूपसम्पन्नां दासीं यस्तु प्रयच्छति ।
[2](सोऽप्सरोभिर्मुदा युक्तः क्रीडते नन्दने) वने ॥१३॥][3]

*ब्राह्मणायार्चिताय तरुणीं रूपसम्पन्नां[1] दासीमर्चिताम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा ददात् । विष्णुधर्मोत्तरोक्त-तरुणीदासीदानफलप्राप्तिकामोऽहमेतां दासीं ददानि । स्वस्त्यादि-स्वीकारान्तं पूर्व्ववत् ।*

इति महाराजाधिराजनिःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे [5]प्रैष्यदानावर्त्तः ।

---

1 A तरुणीं
2 A अप्सरोभिर्युतः क्रीडते नन्दने for the bracketed portion
3 A reads the bracketed portion just before यस्तु कर्मकरीं दासीं, six lines above
4 A रूपवतीं
5 A प्रेष्य०

# अथ प्रजापतिदैवतशस्य[1]-दानावर्तः । (४६)

मनुः (४।२३२) :—

धान्यदः शाश्वतं सौख्यम् ॥१॥

आप्नोतीति सम्बन्धः । अत्र यजमानोऽर्चिताय ब्राह्मणायार्चितं यथेच्छसंख्यं धान्यं दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं शाश्वतसौख्यप्राप्तिकामोऽहमेतद्धान्यं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा धान्यमिदं प्रजापतिदैवतमित्युक्त्वा[यथाशाखं कामस्तुतिं[2](पठेत् । ततः ॐ) अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा][3]धान्यमुष्टिं गृह्णीयात् ।

महाभारते (अनु—२३।१०१) :—

रसानामथ बीजानां धान्यानां [4]च युधिष्ठिर ।

स्वयमुत्पाद्य[5]दातारः पुरुषाः स्वर्गगामिनः ॥२॥

बीजानां शाककुष्माण्डादिबीजानां कलमादीनां स्वयमुत्पाद्य [6]कृष्यादिना अर्चिताय ब्राह्मणायार्चितानि यथोक्तबीजानि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । स्वर्गप्राप्तिकामोऽहमेतानि बीजानि ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । एवं धान्यदाने[धान्यं ददानीति][7] वाक्ये विशेषः ।

तथा :—

धान्यं[8]श्रमेणार्जितवित्तसञ्चितं [9]विप्रे सुशीले प्रतियच्छते यः ।

वसुन्धरा तस्य भवेत् [10]सुतुष्टा धारा वसूनां प्रतिमुञ्चतीति ॥३॥

श्रमेणार्जितवित्तसञ्चितं स्वयं वाणिज्यादिलब्धधनेन क्रीतम् । अर्चिताय ब्राह्मणायार्चितं

---

1 A ०सम्य०
2 A पठित्वा for the bracketed portion
3 I. O. omits the bracketed portion
4 A च युधिष्ठिर:
5 A नेतार:
6 A नै कृष्यादिना
7 A धान्यदानेति for the bracketed portion
8 A क्रमे०
9 A विप्रेषु शालि
10 A सुतस्राववो

यथोक्तधान्यम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्त-श्रमार्जित-वित्तसञ्चित-धान्यदानफल[1]-प्राप्तिकामोऽहमेतद्धान्यं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

स्कन्दपुराणे :—

[2]ओषधीर्यः प्रयच्छेत धान्यानि विविधानि च।
स [3]सर्वकामसंयुक्तः सोमलोकं समश्नुते ॥४॥
तत्र वर्षसहस्राणि सप्त स्थित्वा[4] पुनर्नरः।
[5]इह सर्वधनोपेतो [6]भोगवानभिजायते ॥५॥

ओषधयो [7]प्राद्याः परिभाषोक्ताः। धान्यानि विविधानि कलमादीनि। अर्चिताय [8]ब्राह्मणायार्चिता यथेच्छमोषधीः ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। स्कन्दपुराणोक्तौषधी-दानफलप्राप्तिकामोऽहमेता ओषधीर्ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। धान्यदाने[9] तु वाक्ये[10] ओषधीपदस्थाने धान्यपदनिवेशो विशेषः।

विष्णुधर्मोत्तरे (३।३१४।१) :—

धान्यानामुत्तमं दानं कथितं द्विजपुङ्गवाः[11]।
धान्येभ्योऽपि परं धान्यं रक्तशालिः प्रकीर्तितः ॥६॥

द्विजपुङ्गवा[12] इति सम्बोधनम्।

रक्तशालिं नरो दत्त्वा सूर्यलोके महीयते। (३।३१४।२क)

[13]अर्चिताय ब्राह्मणायार्चितं यथेच्छपरिमाणं रक्तशालिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सोत्कर्ष-सूर्यलोकप्राप्तिकामोऽहमेतं रक्तशालिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३१४।२ख) :—

दत्त्वा तथा सुगन्धांश्च गन्धर्वैः सह मोदते ॥७॥

अत्र धान्यप्रकरणात् सुगन्धानिति सुगन्धिशालयो बोद्धव्याः। अर्चिताय ब्राह्मणाया-र्चितान् यथेच्छसंख्यान् गन्धशालीन्[14] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सोत्कर्ष-गन्धर्वलोकप्राप्तिकामोऽहमेतान् गन्धशालीन् ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

---

1 I. O. omits फल
2 A ओषधिर्यस्य यच्छेत
3 I. O. सर्वकालसंस्थः
4 A स्थित्वा गत्वा for सप्त स्थित्वा
5 A तत्
6 A भोगवानिति जायते
7 I. O. युक्ताद्याः
8 A ब्राह्मणाचिता
9 I. O. धान्यधाने
10 A वाक्यं
11 A द्विजपुङ्गव:
12 A द्विजपुङ्गव
13 A omits अर्चिताय ब्राह्मणाय
14 I. O. गन्धशालान्

तथा (३।३१४।३क) :—

कलमानां प्रदानेन सोमलोके महीयते ।

अर्चिताय ब्राह्मणायार्चितान्[1] कलमान् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । सोत्कर्ष सोमलोकप्राप्तिकामोऽहमेतान् कलमान् ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

[2]महाशालेः प्रदानेन [3]वसूनां लोकमाप्नुयात् ॥८॥ (३।३१४।३ख)

महाशालिः स्वनामप्रसिद्धः । अर्चिताय ब्राह्मणायार्चितं महाशालिधान्यं यथेच्छ-परिमाणम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । वसुलोकप्राप्तिकामोऽहमेतं [4]महाशालि-धान्यं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (३।३ ४।४क) :—

काष्ठशालिं नरो दत्त्वा अलकायां प्रमोदते ।

काष्ठशालिर्गन्धहीनशालिः । अर्चिताय ब्राह्मणायार्चितं यथेच्छपरिमाणं काष्ठशालिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [5]अलकावस्थानपूर्वकप्रमोदप्राप्तिकामोऽहमेतं काष्ठशालिं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (३।३१४।४ख) :—

व्रीहीणामाढ्यमानानां[6] दानात् स्वर्गमवाप्नुयात् ॥६॥

[व्रीहीणां षष्टिकेतर][7]-शरत्पक्वधान्यानाम् [8]आढ्यमानानां [9]बहुपरिमाणानाम् । अर्चिताय ब्राह्मणायार्चितं यथेच्छपरिमाण[10] व्रीहिम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [11]स्वर्ग-प्राप्तिकामोऽहमेतान् व्रीहीन् ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (३।३१४।५क) :—

यवप्रदानेन नरः [12]शक्रलोके महीयते ।

अर्चिताय [13]ब्राह्मणायार्चितं यथेच्छपरिमाणं [14]यवम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । सोत्कर्षशक्रलोकप्राप्तिकामोऽहमेतं यवं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

1 A omits अर्चितान्
2 A महाशालि प्रदानेन
3 A वसुलोकमवाप्नुयात्
4 A महाशालिं
5 A अलंकारान for अलकावस्थान
6 I. O. व्रीहीनामाढ्यमानानां
7 A व्रीहिशालि ॐ अद्यादित्तानां for the b. p.
8 I. O. आढ्यमानानां
9 A बहुपरिमाणानाम
10 Both I. O. and A यथेच्छबहु-परिमाणं
11 A स्वर्गलोक for स्वर्ग
12 I. O. स्वर्गलोके
13 A omits ब्राह्मणाय
14 A omits यवम

तथा (३।३१४।५ख) :—

तथा गोधूमदानेन वसूनां लोकमाप्नुयात् ॥१०॥

अर्चिताय ब्राह्मणायार्चितं यथेच्छपरिमाणं गोधूमम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। वसुलोकप्राप्तिकामोऽहमेतं गोधूमं[1] ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३१४।६क) :—

प्रियो भवति लोकस्य प्रियङ्गुं यः प्रयच्छति।

[2]प्रियङ्गु कामनीति प्रसिद्धा। अर्चिताय ब्राह्मणायार्चितां यथेच्छपरिमाणां प्रियङ्गुम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। लोकप्रियत्वप्राप्तिकामोऽहमेतां प्रियङ्गुं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

[तथा (३।३१४।६ख) :—

ददाति यस्तु श्यामाकं तस्य प्रीयन्ति देवताः ॥११॥

अर्चिताय ब्राह्मणायार्चितं यथेच्छपरिमाणं श्यामाकम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। देवताप्रीतिप्राप्ति[3]-कामोऽहमेतच्छ्यामाकं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।][4]

तथा (३।३१४।७) :—

अन्येषां शूकधान्यानां प्रदाननिरतो नरः।
स्वर्गलोकमवाप्नोति नात्र कार्य्या विचारणा ॥१२॥

अन्येषां शूकधान्यानामिति पूर्वोक्त-[5]शूकसहित-रक्तशालि-गन्धशालि-[6]काष्ठशालि-यव-गोधूमेभ्य इतरेषां प्रकृष्टशूकयुक्तानां नीवारादीनां [7]ते च लोकत एवानुसन्धेयाः। अर्चिताय ब्राह्मणायार्चितं[8] यथेच्छपरिमाणं शूकधान्यम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। स्वर्गलोकप्राप्तिकामोऽहमेतच्छूकधान्यं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३१४।८क) :—

[9][मुद्गदः शक्रलोकन्तु।

लभत इति सम्बन्धः। अर्चिताय ब्राह्मणायार्चितं यथेच्छपरिमाणं मुद्गम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। शक्रलोकप्राप्तिकामोऽहमेतं मुद्गं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

1 A एतद्गोधूमं for एतं गोधूमं
2 A प्रियङ्गुकामिनी प्रसिद्धा
3 A omits प्राप्ति
4 A reads the bracketed portion twice
5 A ०शुक्त०
6 A omits काष्ठशालि
7 A तेन
8 A omits अर्चितं
9 A reads the following for the bracketed portion :— माषदः शक्रलोकन्तु लभतेति सम्बन्धः

तथा ( ३।३१४।८ क) :—

यमलोकन्तु माषदः ॥१३॥

[1]लभत इति सम्बन्धः । ] अर्चिताय ब्राह्मणायार्चितं यथेच्छपरिमाणं माषम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्त-माषदानफलप्राप्तिकामोऽहमेतं माषं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (३।३१४।९क) :—

पट्टिकानां प्रदानेन लोकं नैर्ऋतकं [2]लभेत् ।

पट्टिकाः [3]माठिया इति प्रसिद्धाः । अर्चिताय ब्राह्मणायार्चितान् यथेच्छपरिमाणान् पट्टिकान् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । नैर्ऋतलोकप्राप्तिकामोऽहमेतान् पट्टिकान् ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (३।३१४।९ख) :—

[4]सतीनचणके दत्त्वा लोकं वारुणमाप्नुयात् ॥१४॥

[5]सतीनः कलायः । अर्चिताय ब्राह्मणायार्चितं[6] यथेच्छपरिमाणं कलायम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । वारुणलोकप्राप्तिकामोऽहमेतं [7]सतीनं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । चणकदाने तु एतं चणकमिति [8]वाक्ये विशेषः ।

तथा (३।३१४।१०क) :—

वायव्यञ्च मसूराणि राजमाषाणि धानदम् ।

[9]दत्त्वाप्नुयादिति सम्बन्धः । वायव्यं वायुलोकं धानदं धनदलोकम् । अर्चिताय ब्राह्मणायार्चितं यथेच्छपरिमाणं मसूरम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । वायव्यलोक-प्राप्तिकामोऽहमेतान् मसूरान् ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । राजमाषदाने तु धानदलोकप्राप्तिकामोऽहमेतानि [10]राजमाषाणीति वाक्ये विशेषः ।

तथा (३।३१४।१० ख) :—

अन्येषां [11]शिम्बिधान्यानां दानात् स्वर्गमवाप्नुयात्[12] ॥१५॥

---

1 I. O. लभतेति
2 A भवेत्
3 A माठेया: इति प्रसिद्ध:
4 A षष्ठीनचनके
5 A षठीन:
6 A omits अर्चितं
7 A षठीनं
8 A वाक्यविशेष:
9 A दानाप्नुयादिति
10 A राजमाषाणि वाक्यविशेष:
11 A शिबधान्यानां, I. O. शिम्बिका-धान्यानां
12 I. O. स्वर्गमाप्नुयात्

अन्येषामिति [ विष्णुधर्मोत्तरोक्त-मुद्ग ]-[1]माष-तिल-कलाय-चणक मसूर-राजमाषेभ्यो व्यतिरिक्तानां सर्षपादीनाम् । ते च लोकत एव प्रसिद्धाः । अर्च्चिताय ब्राह्मणायार्च्चितं यथेच्छपरिमाणं शिम्बिधान्यम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [2]स्वर्गप्राप्तिकामोऽहमेतानि [3]शिम्बिधान्यानि ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे शस्यदानावर्तः ।

1 A विष्णुधर्मोत्तर for the bracketed portion
2 A स्वर्गलोक for स्वर्ग
3 A सिध्यशिम्बि for शिम्बि

# अथ प्रजापतिदैवततिलदानावर्तः । (४७)

## तत्र तिलदानप्रशंसा ।

महाभारते (अनु-६६।१०-११) :—

महर्षेः कश्यपस्यैते गात्रेभ्यः प्रसृतास्तिलाः ।
ततो दिव्यं गता भावं प्रदानेषु तिला[1] विभो[2] ॥१॥
पौष्टिका रूपदाश्चैव तथा पापविनाशनाः ।
तस्मात् सर्वप्रदानेभ्यस्तिलदानं विशिष्यते ॥२॥

## अथ दानम् ।

याज्ञवल्क्यः (१।२१०) :—

[3]भूदीपाश्चान्नवस्त्राम्भस्तिलसर्पिःप्रतिश्रयान् ।
नैवेशिकस्वर्णधुर्यान् दत्त्वा स्वर्गे महीयते ॥३॥

अथ यजमानोऽर्चिताय ब्राह्मणायार्चितान् यथेच्छपरिमाणान् तिलान् [4]दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुक[5]-शाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं सोत्कर्षस्वर्गप्राप्तिकामोऽहमेतांस्तिलान् ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा तिला एते प्रजापतिदैवता इत्युक्त्वा यथाशास्त्रं कामस्तुतिं पठेत् । [तत ॐ अद्य][6] कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा तिलमुष्टिं गृह्णीयात ।

यमः :—

तिलप्रदः प्रजामिष्टां पुरुषः खलु विन्दति ।
माघे मासि विशेषेण[शुक्ले कृष्णे][7] विशेषतः ॥४॥

[यत्र कुत्रापि][8]दिनेऽर्चिताय ब्राह्मणायार्चितान् तिलान् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । अभिमतप्रजाप्राप्ति[9]-कामोऽहमेतान् तिलान् ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

---

1 I. O. तिलां
2 A प्रभो
3 I. O. भूदीपश्चान्न०, A भूदीप वस्त्रान्नतिलसर्पिष, प्रतिश्रयान्
4 I. O. omits दद्यात्
5 A omits वेदामुक
6 A तत्र for the bracketed portion
7 I. O. तत्र पित्र्ये for the bracketed portion
8 I. O. यत्र क्वापि for the bracketed portion
9 A प्राप्ति and I. O. प्रजा for प्रजाप्राप्ति

एषामेव माघे मासि शुक्लपक्षतिथौ दाने फलविशेषः। [1]तत्कृष्णपक्षतिथौ च ततोऽपि विशेषः। तत्र माघे मासि तिलदाने यथोक्तमाघमास[2]-विहिततिलदानफलप्राप्तिकामोऽहमिति वाक्ये विशेषः। [3]कृष्णपक्षतिलदाने तु [4]माघमासिककृष्णपक्षविहिततिलदानफलप्राप्ति-कामोऽहमिति वाक्ये विशेषः।

[5]तथा :—

सर्वपातकसंघातः कामतो वाप्यकामतः।
शुद्धिं तस्य प्रवक्ष्यामि[6] [स्वर्गसाधनमेव च ॥५॥
शुक्लैः कृष्णैः समैः स्निग्धैर्द्वात्रिंशदङ्गुलोच्छ्रितः।
राशिस्तिलैः समे देशे कर्तव्यः पुरुषायतः ॥६॥

समैरिति तुल्यभागैः शुक्लैः कृष्णैस्तिलैर्मिलितैरित्यर्थः। स्निग्धैर्मनोहरैः पुरुषायतः [7]सम्प्रदातृपुरुषायतः।

प्रतिमाष्टाङ्गुलो दातुः सौवर्णा विभवे सति।
क्षौद्रेण पयसा दध्ना घृतेनापूरयेद् घटान् ॥७॥

प्रतिमा दातृप्रकृति[8]-रूपा दातुः सन्निहितत्वात् विभवे सतीति श्रवणादशक्तावन्येनापि तैजसेन प्रतिमा कार्य्या।

यथाविभवविस्तारं ब्राह्मणे श्रोत्रियार्थिनि।
दद्यान्माघेऽथ वैशाखे विषुवे चोत्तरायणे।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥८॥

माघवैशाखयोरभीष्टदिने [9]विषुवोत्तरायणयोर्वान्यतरस्मिन् दिने यजमानः सुपरिमाणायतं द्वात्रिंशदङ्गुलोच्छ्रितं मधुदुग्धदधिघृतपूर्णघटचतुष्टयसहितमुपरिविन्यस्त-सौवर्णाष्टाङ्गुलात्म[10]-कृतिप्रतिमं पानीयशकटसमीकृतभूभागे समभागमिलित-शुक्लकृष्णतिलराशिमर्चितं कृत्वा अर्चिताय ब्राह्मणायार्थिने विद्यातपःशालिने ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। यमोक्त-द्वात्रिंशदङ्गुलोच्छ्रित-तिलराशिदानफलप्राप्तिकामोऽहमतं द्वात्रिंशदङ्गुलोच्छ्रितं पुरुषायत-

---

1 A[1] omits तत्
2 A[1] omits माघमास
3 I. O. तत्तुमिश्र for कृष्णपक्ष
4 A माघे मासि for माघमासिक
5 A reads तत्र माघे मासि before तथा
6 A omits the bracketed portion
7 I. O. सम्प्रदातु०
8 I. O. ०प्रकृति०
9 I. O. विषवे चोत्तरायणोर्वा०
10 I. O. ०त्माला०

मुपरिविन्यस्ताङ्गुलसुवर्णप्रतिमं क्षौद्रपयोदधिघृतपूर्णघटचतुष्टयसहितं तिलराशिं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्व्ववत्।

महाभारते :—

श्रूयतां वायवो धर्मः सरहस्यो महाफलः।
इमं कलियुगं प्राप्य मानवानां सुखावहम् ॥९॥
कल्यमुत्थाय यो मर्त्यः स्नातः शुक्लेन वाससा।
तिलपात्रं प्रयच्छेत ब्राह्मणेभ्यः समाहितः ॥१०॥
तिलपात्रे फलं प्राह भगवान् पाकशासनः।
गोप्रदानञ्च यः कुर्य्याद्भूमिदानञ्च शाश्वतम् ॥११॥
अग्निष्टोमञ्च यो यज्ञं यजेत बहुदक्षिणम्।
तिलपात्रं सहैतेन समं मन्यन्ति देवताः ॥१२॥

शुक्लेन वाससा तिलपात्रमाच्छाद्येत्यर्थः। ब्राह्मणेभ्य इति प्रयोगबहुत्वापेक्षम्। ततश्च प्रत्यहमिदं दातव्यम्। एवञ्च चिरामुमस्य (?) विप्रफलत्वमुपपन्नं कल्यमुत्थायेत्यपि प्रत्यहकर्तव्यत्वार्थमुक्तं न तु प्रातःकाल एव कर्तव्यत्वार्थम्। अर्चिताय ब्राह्मणायार्चितं शुक्लवस्त्राच्छादितं तिलपूर्णपात्रम् ॐ अद्यादि तुभ्यमहमुक्त्वा दद्यात्। महाभारतोक्ततिलपात्रदानफलप्राप्तिकामोऽहमेतत् शुक्लवस्त्राच्छादितं तिलपात्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्व्ववत्।

[1]ब्रह्मपुराणे :—

ये तिलांस्तिलधेनुञ्च घृतधेनुमथापि वा।
विप्रेभ्यः श्रोत्रियेभ्यश्च ददाति श्रद्धयान्विताः ॥१३॥
सोममण्डलसङ्काशैर्यानैस्ते यान्ति निर्मलैः।
गन्धर्वैरुपगायन्तः पुरं वैवस्वतस्य च ॥१४॥

विप्रेभ्य इति बहुवचनं दातृबहुत्वापेक्षया। अर्चिताय विद्यासंस्कारशालिने ब्राह्मणायार्चितान् तिलान् ॐ अद्यादि तुभ्यमहमुक्त्वा दद्यात्। यमगृहानुमर्पणकामोऽहमेतान् तिलान् ददानि। स्वस्त्यादिस्वीकारान्तं पूर्व्ववत्।

आग्नेयपुराणे :—

पुष्ये वा जन्मनक्षत्रे अयने विषुवेषु च।
ग्रहणे च व्यतीपाते संक्रान्तौ च दिनक्षये।
यानमश्वमनड्वाहं हैमरूप्यमणीं स्तिलान् ॥१५॥

1 I. O. ब्राह्मपुराणे

ये प्रयच्छन्ति पापेषु निरताः सर्वदा मुने ।

न तेषां भैरवः पन्था दत्त्वैषां दानमित्युत ॥१६॥

उक्तदिनानामन्यतमेऽर्चिताय] ब्राह्मणायार्चितान् तिलान् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । आग्नेयपुराणोक्त-नियतसमयविहित-तिलदान-फलप्राप्तिकामोऽहमेतान् तिलान् ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा :—

तिला नित्यं प्रदातव्या यथाशक्ति द्विजातये[1] ।

नित्यदानात सर्वकामा[2] भवन्ति स्वर्णसंयुताः ॥१७॥

अर्चिताय ब्राह्मणाय यथेच्छपरिमाणकाञ्चन-[3]युक्तानर्चितान् तिलान् प्रत्यहं[4] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । अमुककामोऽहमेतान् स्वर्णसंयुतान् तिलान् ददानि । स्वस्त्यादिस्वीकारान्तं पूर्व्ववत् ।

[5][विष्णुधर्मोत्तरे[6] :—

लवणस्य प्रदातारस्तिलानां सर्पिषान्तथा ।

ओजस्विनोऽभिजायन्ते भोगिनश्चिरजीविनः ॥१८॥

अर्चिताय ब्राह्मणायार्चितान् तिलान् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्त[7]-तिलदानफलप्राप्तिकामोऽहमेतान् तिलान् ददानि । स्वस्त्यादिस्वीकारान्तं पूर्व्ववत् ।]

विष्णुधर्मोत्तरे[8] (३।३१४।८ख) :—

यथेच्छं[9] लोकमाप्नोति [10]तथा विप्रास्तिलप्रदः ॥१६॥

विप्रा इति सम्बोधनम् । अर्चिताय ब्राह्मणायार्चितान् तिलान् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । अमुक-[11]देवलोकप्राप्तिकामोऽहमेतान् तिलान् ददानि । स्वस्त्यादिस्वीकारान्तं पूर्व्ववत् ।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते श्रीदानसागरे तिलदानावर्तः ।

1 I. O. द्विजर्षभ
2 A सर्वकामान्
3 I. O. ॰युक्तामर्चिताम्
4 A omits प्रत्यहं
5 A reads the bracketed portion just above the colophon of this section
6 I. O. विष्णुधर्मे
7 I. O. विष्णुधर्मोक्त॰
8 I. O. विष्णुधर्मे
9 A and V. D. यथेष्ट
10 A यथा
11 I. O. omits देव

# अथ वनस्पतिदैवतारामदानावर्तः । (४८)

नन्दिपुराणे :—

क्रीडारामन्तु यो दद्यादुद्यानं[1] पुष्पसङ्कुलम्[2] ।
सकल्पतरुखण्डेषु[3] महेन्द्रोद्यानवेश्मसु ।
विनोद्यतेऽप्सरोवृन्दैर्देवसेव्यात्र युगं बुधः ॥१॥

अत्र यजमानः क्रीडोचितवापी[4] गृहादिसहितं[पुष्पितं वकुलचम्पकादिपादपोपेत][5]-मुद्यान-मर्चित[6]-मर्चिताय ब्राह्मणाय दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुक-देवशर्मणे तुभ्यं नन्दिपुराणोक्तोद्यानदानफलप्राप्तिकामोऽहमेतत् क्रीडारामोद्यानं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा उद्यानमिदं वनस्पतिदैवतमित्युक्त्वा यथाशास्त्रं कामस्तुतिं पठेत् । [तत ॐ अद्य][7] कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं[8] काञ्चनं ददानि । प्रतिगृहीता स्वस्तीत्युक्त्वा यथेच्छं वृक्षमूलानि स्पृशेत् ।

महाभारते[9] (अनु—२३।९६) :—

विहारावसथोद्यान-[कूपाराममभाप्रदाः][10] ।
विप्राणाञ्चोपकर्तारः[11] पुरुषाः[12] स्वर्गगामिनः ॥२॥

उद्यानं सर्वजनोपभोग्यं नानाजातीयतरु[13]-वनम् । आरामो ग्रामसमीपस्थसजातीयतरु-वनम् । उद्यानमारामं वा कारयित्वा सकलसत्त्वेभ्य[14] उत्सृज्य दद्यात् । ॐ[15] स्वर्गप्राप्ति-कामोऽहं नानासत्त्वेभ्यो यथासम्भवफल-[पुष्पाद्युपभोगार्थं][16]-मेतदुद्यानमुत्सृजे । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामेतत् काञ्चनं ददानीति कस्मैचिद्[17]ब्राह्मणाय दक्षिणादानम् । एवमारामदाने एतमाराममिति [18]वाक्ये विशेषः ।

---

1 A सगरह
2 A पष्पसङ्कुल
3 A ०सत्वेभ्य
4 A omits वापी
5 A वकुलचम्पकादिसपुष्पकल्पतरुपादप for the bracketed portion
6 A omits अर्चितम
7 A ॐ for the b. p.
8 A एतत् for इदं
9 A omits महाभारते
10 I. O. सकूपारामसम्पदा: for the bracketed portion
11 I. O. विप्राणाभेव कर्त्तार:
12 A पुरुष:
13 A omits तरु
14 A सभ्या
15 A omits ॐ
16 A पुष्पोपयोग्य for the bracketed portion
17 A एकस्मै after कस्मैचिद
18 A वाक्यविशेष:

विष्णुधर्मोत्तरे यममार्गानुवृत्तौ :—

आराम-[दानात् संयान्ति][1] तथैव द्रुमरोपकाः ।
शीतलेन तु मार्गेण फलपुष्पवता सुखम् ॥३॥

यथाशक्त्यारामपुपकल्प्यार्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्त[2]-केवलारामदानफलप्राप्तिकामोऽहमेतमारामं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्व्ववत् ।

तथा :—

[3]आराममथ सोद्यानं नन्दने क्रीडते वने ॥४॥

दत्त्वेति [4]शेषः । अर्चिताय ब्राह्मणायार्चितमाराममुद्यानञ्च ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । नन्दनवनक्रीडा[5]-प्राप्तिकामोऽहमेतं[6] [7]सोद्यानमारामं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्व्ववत् ।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे आरामदानावर्तः ।

1 I. O. द्वाराम यन्ति for the bracketed portion
3 A विष्णुधर्मोक्त
4 A मालाराममथ
4 A विशेष:
5 A नन्दनक्रीड़ावन॰
6 A एतत् for एतं
7 I. O. सोद्यामारामं

# अथ वनस्पतिदैवतवृक्षदानावर्तः । (४९)

महाभारते (अनु—५७।३६) :—

[1]पुष्पोपगं वाथ फलोपगं वा यः पादपं स्पर्शयते द्विजाय ।

[2][स स्त्रीसमृद्धं]बहुरत्नपूर्णं लभत्ययत्नोपगतं[3] गृहं वै ॥१॥

पुष्पोपगं पुष्पप्रदं[4] फलोपगं फलप्रदम् । अत्र यजमानोऽर्चिताय ब्राह्मणायार्चितं पुष्पोपगं वृक्षं दद्यात् । ॐ [5]अद्यामुकसगोत्रायामुकवेदामुक[6]-शाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं महाभारतोक्त-पुष्पोपगपादपदानफलप्राप्तिकामोऽहमेतं पादपं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा पादपोऽयं वनस्पतिदैवत[7] इत्युक्त्वा यथाशास्त्रं कामस्तुतिं पठेत् । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा [8][वृक्षं मूलदेशे] स्पृशेत । [9]फलोपगवृक्षदाने तु [10]वाक्ये पुष्पोपगपद[11]-स्थाने फलोपगपद[12]-[निवेशो विशेषः][13] ।

आदित्यपुराणे :—

स्कन्धेन [14]तारयेद् यस्तु [15]तृषार्तानां जलप्रदः ।

[16]पक्वान् ददाति [17]केदारान् [18]सफलांश्चैव पादपान् ॥२॥

षष्टि[19] कोटसहस्राणि अर्बुदानाञ्च वै [20]तथा ।

क्रीडन्ति [21]ते श्वेतपुरे एतदुक्तं द्विजोत्तम[22] ॥३॥

---

1 A reads the entire line as follows :—पुष्पोपगवाथ फलोपगन्धयः पादपस्प्रशयते द्विजाय

2 A स स्त्रीसमृद्धं, M. bh. सत्रीकमद्धं

3 Corrected from M. bh. A नभस्तपस्तावमतं, I. O. नभस्य-यत्तोयवभं

4 I. O. पुष्पदं

5 A अद्यादि अमुकगोत्रायामुक॰

6 A omits वेदामुक

7 I. O. ०दैवतम

8 A वृक्षमूलदेश for the bracketed portion

9 A फलोपवृक्षदाने

10 A वाक्येष,

11 I. O. omits पद

12 I. O. omits पद

13 A निवेश: for the bracketed portion

14 A भारयेद

15 I. O. तृषार्त्तानां

16 A पक्वान

17 A केदाराम

18 A सफला चैव

19 A षष्टि

20 A वयं

21 A omits ते

22 I. O. द्विजोत्तमः

अर्च्चिताय ब्राह्मणायार्च्चितान्[1] यथेच्छसंख्यान् [2]सफलपादपान् ॐ अद्यादि तुभ्यमन्त-मुक्त्वा दद्यात्। आदित्यपुराणोक्त-पादपदानफलप्राप्तिकामोऽहमेतान् पादपान् ददानि। स्वस्त्यादिस्वीकारान्तं पूर्व्ववत्।

नन्दिपुराणे :—

फलवृक्षन्तु[3] यो दद्याद् धर्ममुद्दिश्य मानवः।
स सर्वकामतृप्तात्मा गच्छेद्वरुणमन्दिरम्।
[4][वसेच्च तत्र] पुरुषो युगं कामफलान्वितः ॥४॥

अर्च्चिताय भगवते धर्मायार्च्चितं फलसहितं[5] वृक्षमाम्रादीना[6]-मन्यतमं दद्यात्। ॐ अद्य नन्दिपुराणोक्त-वृक्षदानफलप्राप्तिकामोऽहं भगवते धर्मायैतं फलवृक्षं ददानि। तत ॐ [7]अद्य कृतैतद्दानप्रतिष्ठार्थं धर्मायाहं दक्षिणामेतत्[8] काञ्चनं ददानि।

विष्णुधर्मोत्तरे (३।२६७।११क) :—

आम्राक्षोड[9]-प्रदानेन [10]सर्वान् कामानवाप्नुयात्।

अक्षोडः[11] स्वनामप्रसिद्धः। [12][आम्राक्षोडेत्यत्र द्वन्द्वनिर्देशो यद्यप्युभयोः] क्रियासम्बन्ध-मात्रेणैव उपपद्यते [13]तथाप्याम्रस्योत्तरत्रापि श्रवणादत्र च [14]फलभूयस्त्वान्मिलितयोरेव दानम्। अर्च्चिताय [15]ब्राह्मणायार्च्चितावाम्राक्षोडवृक्षौ [16]ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। अमुक-प्राप्तिकामोऽहमेतावाम्राक्षोडौ[17] ददानि। स्वस्त्यादिस्वीकारान्तं पूर्व्ववत्।

[18][तथा (३।२६७।१०ख) :—

दत्त्वा पालीवताम्रौ तु तृप्तिमाप्नोत्यनुत्तमाम् ॥५॥

पालीवतः पारेवत इति प्रसिद्धः। अर्च्चिताय ब्राह्मणायार्च्चितं पालीवतवृक्षम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। अत्र तु तृप्तिकामोऽहमेतं पालीवतं ददानि। स्वस्त्यादि-स्वीकारान्तं पूर्व्ववत्। आम्रवृक्षदाने तु वाक्ये पालीवतपदस्थाने आम्रपदनिवेशो विशेषः।]

---

1 A यथेष्टसंख्यान्
2 A फलपादपान
3 I. O. फलवृक्षस्तु
4 A omits the bracketed portion
5 A omits फलसहितं
6 A आम्रमादीनाम् for आम्रादीनाम
7 A omits अद्य
8 A omits एतत्
9 I. O. आम्राक्षोट॰
10 A सर्वं
11 I. O. आक्षोटः
12 A आक्षोडेत्यत्र निर्देशो यद्यप्युभय for the bracketed portion
13 A तथाप्यस्योत्तरत्रापि
14 A फलभूतद for फलभूयस्त्वान्
15 A ब्राह्मणायार्च्चितो आक्षोडवृक्षौ
16 I. O. omits ॐ
17 A ॰क्षोडौ
18 A omits the bracketed portion

तथा [1]वृक्षदानप्रकरणे (३।२६७।६ख) :—

[2]नागरङ्गदानाद्भवति [3]नरो रूपसमन्वितः ।

अर्चिताय ब्राह्मणायार्चितं नागरङ्ग वृक्षम्[4] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [5][उत्कृष्टरूपप्राप्तिकामोऽहमेतं नागरङ्ग ददानि । स्वस्त्यादिस्वीकारान्तं पूर्व्ववत् ।

तथा (३।२६७।१०क) :—

बीजपूरकदानेन सौभाग्यं महदाप्नुयात् ॥६॥

अर्चिताय ब्राह्मणायार्चितं बीजपूरकं वृक्षम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् ।] महासौभाग्यप्राप्तिकामोऽहमेतं बीजपूरकं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्व्ववत् ।

तथा :—

पुष्पदं फलदं वृक्षं दत्त्वा विप्राय भक्तितः ।

स्वर्गलोकपरिभ्रष्टो [6]नगराधिपतिर्भवेत् ॥७॥

पुष्पदं नागकेशरादिकं फलदं [7]कण्टकिफलादिकम् । अर्चिताय ब्राह्मणायार्चितं पुष्पदं वृक्षम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्त-पुष्पदवृक्ष[8]-दानफल-प्राप्तिकामोऽहमेतं वृक्षं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्व्ववत् । फलदवृक्षदाने तु वाक्ये पुष्पद[9]-पदस्थाने फलदपदनिवेशो विशेषः ।

तथा (३।२६७।७ख-८क) :—

चम्पकं मल्लिकाजाती-[10][श्रेष्ठाः पुष्पाकरा मताः] ।

[11]अन्येभ्योऽधिकमाप्नोति दत्त्वैतान्नात्र संशयः ॥८॥

अर्चिताय ब्राह्मणायार्चितं चम्पकतरुम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णु-धर्मोत्तरोक्त-चम्पकतरुदानफलप्राप्तिकामोऽहमेतं चम्पकं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्व्ववत् ।

---

1 I. O. omits वृक्ष
2 A नाना॰
3 A नाना
4 A वृक्षान्तरं
5 A omits the bracketed portion but reads instead महासौभाग्यमाप्नोति बीजपूरस्य दानतः which is a paraphrase of the line viz. बीज...प्नुयात्, quoted within this bracketed portion
6 I. O. नागराधिपति॰
7 A नारि for कण्टकि
8 I. O. omits वृक्ष
9 I. O. पुष्प for पुष्पद
10 A श्रेष्ठ पुष्पकरा मता for the b. p.
11 A अन्येभ्योऽप्यधिकमेव

मल्लिकाजातीदानयोर्वाक्ये तु चम्पकपदस्थाने यथायथं मल्लिकापदनिवेशो जातीपदनिवेशश्च[1] विशेषः ।

तथा :—

गुल्मं [2]पुष्पप्रदं यस्तु [3]लतावासं प्रयच्छति ।
विमाने नन्दने सोऽथ क्रीडत्यप्सरसां गणैः ॥६॥

गुल्मोऽभिमुक्तादिः[4] लता नवमल्लिकादिः[5] । अर्च्चिताय ब्राह्मणायार्च्चितं पुष्पितं गुल्मम् ॐ अद्यादि तुभ्यमहन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्तगुल्मदानफलप्राप्ति-कामोऽहमेतं गुल्मं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्व्ववत् । एवं पुष्पितनवमल्लिकादि[6]-दाने लतादानफलप्राप्तिकामोऽहमेतां[7] लतामिति वाक्ये विशेषः ।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे वृक्षदानावर्तः ।

---

1 A °निवेशो
2 A पुष्पं ददे
3 A लतां वासं
4 I. O. गुल्मोतिमुक्तादि
5 I. O. नवमालिकादिः
6 I. O. °मालिकादि°
7 I. O. एतं

# अथ विष्णुदैवतसम्भारदानावर्तः । (५०)

यमः :—

यस्तु सम्भृत्य सम्भारं ब्राह्मणेभ्यः प्रयच्छति ।

तस्य पुण्यकृतो[1] लोका न तस्य [2]प्रभवाम्यहम् ॥१॥

सम्भारो विवाहोपनयन-[3]यज्ञाद्युपकरणसामग्री । ब्राह्मणेभ्य इति बहुवचनं जात्यपेक्षत्वादविवक्षितम्[4] । अत एकस्मै द्वाभ्यां बहुभ्यो वा दानम् । अत्र यजमानोऽर्चिताय [5]ब्राह्मणायार्चितं यमोक्तसम्भारं दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं [6]यमोक्तसम्भारदानफलप्राप्तिकामोऽहमेतं सम्भारं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा सम्भारोऽयं विष्णुदैवत[7] इत्युक्त्वा यथाशास्त्रं कामस्तुतिं पठेत् । [ततः ॐ][8] अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामेतत् काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सम्भारं[9] स्पृशेत् । द्वाभ्यां सम्भारद्वयदाने बहुभ्यो वा बहुसम्भारदाने [10]देयसम्प्रदानयोर्द्विवचनं बहुवचनमूहनीयम् ।

महाभारते (अनु—२३।६८):—

वैवाहिकानां द्रव्याणां प्रेष्याणाञ्च[11] युधिष्ठिर ।

दातारो वाससाञ्चैव पुरुषाः स्वर्गगामिनः ॥२॥

अर्चिताय ब्राह्मणायार्चितं विवाहोपकरणद्रव्यम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । स्वर्गप्राप्तिकामोऽहमेतानि वैवाहिकानि द्रव्याणि ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (अनु—५७।३३) :—

नैवेशिकं [12]सर्वगुणोपपन्नं ददाति वै यस्तु नरो द्विजाय ।

स्वाध्यायचारित्रगुणान्विताय तस्यापि लोकाः[13] कुरुषूत्तरेषु[14] ॥३॥

---

1 A पुण्यकृता
2 A प्रभवाम्यहं
3 A यज्ञयज्ञ० for यज्ञाद्युप०
4 A जात्यपेक्षयादविवक्षित, I. O. जात्यपेक्षत्वाद्विवक्षितं
5 A omits ब्राह्मणाय
6 A यथोक्त
7 A and I. O. विष्णुदैवतं
8 A omits the bracketed portion
9 I. O. सम्भारं
10 I. O. देयसम्भारयोर्द्विवचनबहुवचनमूहनीयं, A देयसंप्रदानयोर्द्विवचनबहुवचन चोदाहरणीये
11 A प्रेष्याणाञ्च
12 I. O. सर्वगुणोपपन्नं
13 A लोकाश्च
14 A कुरुषूत्तरेषु

नैवेशिकं विवाहादिक्रियासिद्ध्यर्चित[1]-मुपकरणम्। अर्चिताय विद्यातपःशीलशालिने ब्राह्मणाय तदभिमतविवाहयज्ञाद्युचितोपकरणं यथाशक्त्युपकल्प्यार्चितम् ॐ अद्यादि तुभ्यमन्त-मुक्त्वा दद्यात्। [2]उत्तरकुरुलोकप्राप्तिकामोऽहमेतन्नैवेशिकं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

विष्णुधर्मोत्तरे (३।३१६।२०ख-२१क) :—

विवाहादिक्रियाकाले तत्क्रियासिद्धिकारकम्[3]।
यः प्रयच्छति धर्मज्ञः सोऽश्वमेधफलं लभेत ॥४॥

तत्क्रियासिद्धिकारकम् [4]तदुपयोग्यद्रव्यम्। आदिशब्देन [5]यज्ञोपनयनप्रतिष्ठाग्रहणम्। अर्चिताय ब्राह्मणाया[6]-र्चितामुक्तामन्यतमां[7] सामग्रीम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। अश्वमेधफलप्राप्तिकामोऽहमेताममुकक्रियोचितसामग्रीं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे सम्भारदानावर्तः।

---

1 A °र्चित° for °सिद्ध्यर्चित°
2 A उत्तरगुरुलोक°
3 A तत्क्रियाकारकं
4 I. O. omits this
5 A यज्ञायतन° for यज्ञोपनयन°
6 A omits अर्चिताय ब्राह्मणाय
7 I. O. अन्यततां

# अथ तानादैवतपशुदानावर्तः । (५१)

विष्णुधर्मोत्तरे ( ३।३०६।५६ख—६०क )—

अजामलङ्कृतां दत्त्वा वह्निलोके महीयते ।

तमेव लोकमाप्नोति दत्त्वाज[1] विधिवन्नरः ॥१॥

तमेव लोकं वह्निलोकं[2] विधिवदलङ्कारादिना । अत्र यजमानोऽर्चिताय ब्राह्मणाय छागीं सौवर्णतिलकादिभिरलङ्कृत्यार्चितां[3] दद्यात् । ॐ [4]अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं सोत्कर्षवह्निलोकप्राप्तिकामोऽहमेतामलङ्कृतां छागीं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा [5]छागीयमग्निदैवतेत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं[6] काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा छागीं कर्णे स्पृशेत्[7] । [एवमलङ्कृतछागदान[8]-वाक्ये एतमलङ्कृतं][9] छागमिति विशेषः ।

तथा ( ३।३०६।६१ख—६२क ) :—

[10]वारुणं लोकमाप्नोति दत्त्वा वस्तं[11] नरोत्तमः[12] ।

अविप्रदाता च तथा तदेव फलमश्नुते ॥२॥

[13]वस्तं छागं तदेव फलं [14]वारुणलोकप्राप्तिरूपमित्यर्थः । अर्चिताय ब्राह्मणायार्चितं वस्तम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [15]वारुणलोकप्राप्तिकामोऽहमेतं [16]वस्तं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । अविदाने तु वाक्ये [17]वस्तपदस्थाने अविपद-[18][निवेशो विशेषः ] । स्वस्तिसावित्रीपाठानन्तरम् अविरयं वरुणदैवत इति प्रतिग्रहीतृवाक्यम्[19] । [20][कामस्तुत्यादि पूर्ववत् । ] पुच्छग्रहणञ्च स्वीकारः ।

---

1 A दत्त्वायो
2 A omits this
3 A अलङ्कृतां for अलङ्कृत्यार्चितां
4 A omits अद्य
5 I. O. छागोयमग्नि०
6 A एतत् for इदं
7 A गृह्णीयात्
8 I. O. ०छागे०
9 A एवंमलङ्कृत for the bracketed portion
10 I. O. वरुणं
11 A छाग
12 I. O. नरोत्तम:
13 A omits it
14 A and I. O. वरुण०
15 A and I. O. वरुण०
16 A वस्त्रं
17 A वस्त्र०
18 A निवेश: for the bracketed portion
19 A प्रतिग्रहं गृह्णीतृवाक्यं
20 A and I. O. पूर्ववत् कामस्तुत्यादि

तथा (३।३०६।६२ख) :—

आरण्यपशुदानेन वायुलोके महीयते ॥३॥

आरण्यपशवो हरिणशशकादयः। अर्चिताय ब्राह्मणाय हरिणादीनामन्यतम[1]-मर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सोत्कर्षवायुलोकप्राप्तिकामोऽहमेतमारण्यकपशुं ददानि। [2]स्वस्तिसावित्रीपाठानन्तरम् आरण्यपशुरयं वायुदैवत इति प्रतिग्रहीतृवाक्यम्[3]। कामस्तुत्यादि पूर्ववत्। पुच्छग्रहणञ्च स्वीकारः।

तथा (३।३१२।५ख-६क) :—

[उष्ट्रं वा गर्दभं वापि][4] खरं वा यः प्रयच्छति।

अलकां स समासाद्य[5] यक्षेन्द्रैः [6]सह मोदते ॥४॥

खरोऽश्वतरः। अर्चिताय ब्राह्मणायार्चितमुष्ट्रम्[7] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोत्तरोक्तोष्ट्र[8]-दानफलप्राप्तिकामोऽहमेतमुष्ट्रं[9] ददानि। स्वस्तिसावित्रीपाठानन्तरम् [10]उष्ट्रोऽयं निर्ऋतिदैवत इति प्रतिग्रहीतृवाक्यम्[11]। कामस्तुत्यादि पूर्ववत्। [उष्ट्रस्यारोहणं स्वीकारः। एवं गर्दभदानवाक्ये तु विष्णुधर्मोत्तरोक्तगर्दभदानफलप्राप्तिकामोऽहमेतं गर्दभमिति विशेषः। स्वस्तिसावित्रीपाठानन्तरं गर्दभोऽयं यमदैवत इति प्रतिग्रहीतृवाक्यम्[12]। कर्णग्रहणं स्वीकारः।][13] अश्वतरदानवाक्ये हि विष्णुधर्मोत्तरोक्तखरदानफलप्राप्तिकामोऽहमेतं खरमिति विशेषः। स्वस्तिसावित्रीपाठानन्तरं खरोऽयं यमदैवत इति प्रतिग्रहीतृवाक्यम्[14]। कामस्तुत्यादि पूर्ववत। कर्णग्रहणं स्वीकारः।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते श्रीदानसागरे पशुदानावर्तः।

---

1 I. O. अन्यं
2 A स्वस्त्यादिस्वीकारान्तं पूर्ववत्
3 I. O. प्रतिग्रहीतृवाक्यं
4 A स्वर्गमार्गगर्दभस्यपि for the bracketed portion
5 A समनासाद्य
6 A सह
7 A खरं for उष्ट्रम्
8 A खड्ग for उष्ट्र
9 A खड्गं for उष्ट्रं
10 A खड्गोऽयं
11, 12 and 14 I. O. ०वाक्यम्
13 A omits the bracketed portion

## अथ प्रजापतिदैवत-कृष्णाजिन-दानाव्रतः। (५२)

मत्स्यपुराणे (२०६।१।२१क, २२ख-३०) :—

कृष्णाजिनप्रदानस्य [1]विधिं कालं ममानघ।

ब्राह्मणश्च [2]समाचक्ष्व [तत्र मे संशयो महान्][3] ॥

मत्स्य उवाच :—

वैशाखी पौर्णमासी च[4] ग्रहणं[5] शशिसूर्ययोः।

पौर्णमासी [6]तथा माघी[7] [आषाढी[8] कार्त्तिकी तथा ॥२॥

[9]उत्तरायणे द्वादश्यां][10] तस्यां दत्तं महाफलम्[11]।

आहिताग्निर्द्विजो यस्तु[12] यद्देयं[13] तस्य पार्थिव ॥३॥

[14]तथा येन विधानेन तन्मे निगदतः शृणु।

गोमयेनोपलिप्ते तु शुचौ देशे नराधिप।

आदावेव समास्तीर्य शोभनं [15]वस्त्रमाविकम् ॥४॥

गोमयोपलेपादेव [16]शुचित्वप्राप्ते पुनः [17]शुचाविति पदं गोमयोपलेपे[18] कृते पुनः केश कीटादिवारणार्थम्।

ततः सशृङ्ग[19] सखुरमास्तरेत्[20] कृष्णमार्गकम्[21]।

[22]कर्तव्यं रुक्मशृङ्गन्तद्[23] रुक्मदन्तं[24] तथैव च ॥५॥

---

1 M. P. विधिकालौ
2 M. P. तथाचक्ष्व
3 A यथा मे तत्र संशयः महान् for the bracketed portion
4 A तु
5 M. P. ग्रहणे
6 M. P. तु या
7 I. O. and M. P. माघं
8 I. O. आषाढं, M. P. आषाढो
9 M. P. उत्तरायणद्वादश्योरेवा
10 A omits the bracketed portion
11 I. O. महाफलं
12 A यश्च
13 I. O. तद्देयं
14 A and M. P. यथा
15 Corrected from M. P. A वस्त्र. माविकं. I. O. परममाविकम
16 A शुचित्त
17 A शुभाविति, I. O. शुचानेति
18 I. O. गोमयोपलेपेति
19 A शृङ्ग
20 A सखुरास्तरेच
21 Corrected from M. P. I. O. and A ॰मार्गकम्
22 A कर्त्तव्यवाक्यं शृङ्गन्तु
23 Corrected from M. P. I. O. and A तु for तद
24 M. P. रौप्यदन्तं

रुक्मदन्तं [1]सौवर्णदन्तपङ्क्तिद्वययुतमित्यर्थः ।

[[2]लाङ्गूले विद्रुमञ्चैव नेत्रयोर्मौक्तिकं न्यसेत् ।
[3]तिलैरात्मसमं कृत्वा वाससाच्छादयेद्बुधः][4] ॥६॥

आत्मसमं कृत्वा सर्वतः कृष्णाजिनाच्छादकं तिलं दत्त्वेत्यर्थः[5] ।

[6]सुवर्णनाभं तत् कुर्यादलङ्कुर्याद्विशेषतः ।
[7]रत्नैर्गन्धैर्यथाशक्त्या तस्य दिक्षु च विन्यसेत् ॥७॥

[8]रत्नैः परिभाषोक्तनवरत्नत्रयेण । [9]गन्धैः प्रसिद्धचन्दनादिभिः ।

कांस्यपात्राणि चत्वारि [10]तेषां दद्याद् यथाक्रमम् ।
मृन्मयेषु च पात्रेषु पूर्वादिषु [11]क्रमेण तु ॥८॥
[12]घृतं क्षीरं दधि क्षौद्रमेवं [13]दद्याद् यथाविधि ।
चम्पकस्य तथा शाखामव्रणं कुम्भमेव च ॥९॥
बाह्योपस्थानकं कृत्वा शुभचित्तो[14] निवेशयेत् ।
[15]जीर्णवस्त्रेण पीतेन सर्वाङ्गाणि च मार्जयेत् ॥१०॥

तच्च चम्पकशाखान्वितस्य कुम्भस्य [16]बहिःस्थापनं पीतवाससा दानोत्तर-[17]स्नानानन्तरमङ्ग-मार्जनञ्च यजमानेन कर्तव्यम्, तस्यैव [18]सुकृतत्वात् ।

धातुमयानि पात्राणि पादेष्वस्य प्रदापयेत् ।
यानि काम्यानि[19] पापानि मया [20]लोभात् कृतानि तु[21] ॥११॥

---

1 A सौवर्णशृङ्गं खुरञ्चेत्यर्थः

2 I. O. लाङ्गूलो

3 A तिलैवत्मैसमं

4 M. P. reads the b. p. as लाङ्गूलं मौक्तिकेयुक्तं तिलच्छन्नं तथैव च । तिलैश्च खिखितं कृत्वा वाससाच्छादयेच्छुचिः ॥

5 A दद्यात्

6 A स्वर्णनाभिं ततः कुर्याद्विशेषतः for the entire line

7 A वस्त्रैर्गन्धै०

8 A वस्त्रैः परिभाषोक्तैर्नवद्रमुच्यते

9 A यथाशक्त्यै गन्धैः

10 M. P. तेषु

11 A क्रमान्न्यसेत, M. P. यथाक्रमम्

12 A reads घृतं after दधि

13 Corrected from M. P. I. O. and A कुर्याद्

14 M. P. शुभचित्ता

15 M. P. सूक्ष्म०

16 A रक्षितस्थापनम्

17 A स्थापनान्तरमङ्गसमार्जनञ्च

18 I. O. प्रहृतत्वात्

19 M. P. कानि च

20 I. O. लोकात्

21 M. P. वै

लोहपात्रप्रदानेन [प्रणश्यन्तु ममाशु वै][1] ।
तिलपूर्णन्तु तत् कृत्वा वामपादे निवेशयेत् ॥१२॥
यानि [पापान्यकामानि कर्मोत्थानि कृतानि तु][2] ।
कांस्यपात्रप्रदानेन तानि नश्यन्तु मे सदा ॥१३॥
मधुपूर्णन्तु तत् कृत्वा पादे वै दक्षिणे न्यसेत् ।
परापवादपैशुन्याद्[3] [4]वृथा मांसस्य भक्षणात् ।
[5]तत्रोत्थितञ्च [6]पापं मे ताम्रपात्रात् प्रणश्यतु ॥१४॥
[7][कन्याया दूषणञ्चैव] परदारप्रधर्षणम्[8] ।
रूप्यपात्रप्रदानाद्धि क्षिप्रं नाशं प्रयातु मे ।
[9][ऊर्द्ध्वपादे त्विमे कार्ये ताम्रस्य रजतस्य च] ॥१५॥

[10]ऊर्द्ध्वपादयग्रपादे तयोश्च वामक्रमेणैव[11] पात्रारोपणम् पश्चात् पादयोस्तथाग्रतेः ।

जन्मजन्मसहस्रेषु कृतं पापं कुबुद्धिना[12] ।
सुवर्णपात्रदानात्तु [नाशयाशु जनार्दन][13] ॥१६॥
हेममुक्ताविद्रुमञ्च दाडिमं बीजपूरकम् ।
[14]प्रशस्ते पात्रश्रवणे [15]क्षुरैः शृङ्गाटकानि च ॥१७॥

अत्राग्रपादद्वयस्थ-[16]पात्रद्वयस्यानुपदिष्टस्थानक-सौवर्णपात्रस्य श्रवणे इति कर्णस्थानद्वयस्येति पञ्चानामाधारतया-[17]वगतेराधारद्रव्याणामन्येषां वा अतेर्हेममुक्तादीनां[18] पञ्चानां तत्रा-

1 A क्षिप्रं नश्यन्तु तानि मे for the bracketed portion
2 M. P. reads the b. p. as कानि च पापानि कर्मोत्थानि कृतानि च
3 A परापवादपैसुन्या
4 Corrected from M. P. I. O. पृष्ठमांसस्य, A प्रोष्ठमासंसस्य
5 I. O. ततोत्थितच
6 A पापच
7 I. O. कन्यागवाश्चैव तथा and M. P. कन्यामृताश्वाश्चैव for the b. p.
8 A परदारप्रसेवनं, M. P. परदाराभिमर्षणात्
9 I. O. omits the bracketed portion, A ऊर्द्ध्वपादौ त्विमौ कार्यौ०, M. P. ऊर्द्ध्वपादे त्विमे कार्यं०
10 I. O. and A ऊर्द्ध्वपादाग्रपादौ
11 A वामक्रमेणैव, I. O. रामक्रमयैव
12 A कुमतिना
13 A नाशयाशु जनार्दनः for the bracketed portion
14 I. O. and A प्रशस्तपात्रश्रवणे, M. P. प्रशस्तपात्रे श्रवणे
15 M. P. क्षुरे
16 I. O. पाद for पात्र
17 A ०रमनेनार्थं द्रव्याणामन्ये वाच
18 A ०हेतुमुक्तादीनां

धेयत्वं [1]यथासंख्यमुन्नेयम्। [2]पात्रस्य श्रवणे इति पात्रश्रवणे अनिर्दिष्टस्थानस्य[3] सौवर्ण-पात्रस्य मध्यस्थान एव निवेशः। 'सुवर्णनाभिकं दद्यात् प्रीयतां वृषभध्वज' इति पुनः सुवर्ण-[4]नाभिकत्वश्रुतेः। एवञ्च 'सुवर्णनाभं तत् कुर्यादि'त्युपरिग्रन्थेन[5] मध्ये सुवर्णपात्रं [6]स्थाप्यमिति सिद्धम्। अनेन च पात्रं सौवर्णं मध्ये [7]स्थाप्यमिति [8]द्विधा सुवर्णनाभि-कत्वम्। खुरैः शृङ्गाटकानि [9]सिङ्घान इति प्रसिद्धानि फलानि[10] खुरेषु देयानीत्यर्थः।

एवं कृत्वा यथोक्तेन सर्वशाकफलानि च।
तत्प्रतिग्रह-[विद्विद्वाना][11]-हिताग्निर्द्विजोत्तमः ॥१८॥

एवं कृत्वेति खुरेष्वेव नानाजातीयशाकानि फलानि च नानाजातीयानि देयानीत्यर्थः।

[12]स्नातो वस्त्रयुगच्छन्नः स्वशक्त्या [13]चाप्यलङ्कृतः।
प्रतिग्रहश्च तस्योक्तः पुच्छदेशे महीपते ॥१९॥
सुवर्णनाभिकं दद्यात् प्रीयतां वृषभध्वजः।
अनेन विधिना [14]दत्त्वा [यथावत् कृष्णमार्गकम्][15] ॥२०॥
न [16]स्पृश्यः स द्विजो राजंश्चितियूप-[समो हि सः][17]।
[18][दाने च] श्राद्धकाले च दूरतः परिवर्जयेत् ॥२१॥
स्वगृहात् प्रेष्य[19] तं विप्रं मण्डले[20] स्नानमाचरेत्।
पूर्णकुम्भेन राजेन्द्र [शाखया चम्पकस्य च][21] ॥२२॥

---

1 I. O. समुन्नेयं
2 I. O. and A पात्रस्य
3 A adds च after this
4 A नाभिकत्व श्रुते:
5 A एवञ्च सुवर्णनाभिं कुर्यादित्युपरि-ग्रन्थे
6 A संस्थाप्य०
7 I. O. स्थापनमिति
8 A द्विरासुवर्णनाभिकद्वयं
9 A सिंघ
10 I. O. adds योज्यानि here
11 Corrected from M. P. I. O. विद्विद्वाना and A नाग्नीय त्रा for the bracketed portion
12 Corrected from M. P. A स्नातो वस्त्रयुगाच्छन्न and I. O. प्रवितवस्त्रयुगाच्छन्न:
13 A वाप्यलङ्कृत:
14 Corrected from M. P. I. O. and A दद्याद्
15 A मन्त्रपुमान्त्वम for the bracketed portion
16 M. P. स्पृष्टोऽसौ
17 A समा हि ता for the bracketed portion
18 M. P. तं दानि for the b. p.
19 Corrected from M. P. I. O. and A प्रेष्य
20 I. O. and A मण्डले, M. P. मञ्जुल
21 A शाखाया यस्य कस्य च for the b. p.

[1]कृत्वाचार्यश्च कलसं मन्त्रेणानेन मूर्द्धनि ।
आप्यायतां समुद्रस्य [2]द्वयोर्जप्यास्तु षोडश ॥२३॥
[आप्यायतामित्येकः समुद्रस्य त्वेति][3] पञ्चदश । एवं षोडश भवन्ति[4] ।
[5][आहृते वाससी वीत आचान्तः शुचितामियात् ]
[6]तद्वस्त्रसहितं कुम्भं नीत्वा [7]क्षेप्यं चतुष्पथे ॥२४॥
[8]कृतेनानेन या तुष्टिर्न शक्याब्दशतैरपि ।
[9][वक्तुं हि] नृपतिश्रेष्ठ तथाप्युद्देशतः शृणु ॥२५॥
समग्रभूमिदानस्य फलं प्राप्नोत्यसंशयम् ।
सर्वांश्च[10] लोकान् जयति[11] [कामचारी विहङ्गवत्][12] ॥२६॥
आभूतसंप्लवं यावत् स्वर्गं प्राप्नोत्यसंशयम् ।
न पितुः पुत्रमरणं वियोगो[13] भार्यया सह ।
धनदेशपरित्यागं [नैव चेहाप्नुयात्][14] क्वचित् ॥२७॥

अत्र यजमान उक्तानां समयानामिच्छयान्यतमे स्नातः शुचि-[र्गोमयोपलिप्ते अ][15]-पनीतशर्कराटादौ भूमिभागे स्वल्पं यथाशक्ति कम्बलमास्तार्य तत्र सखुरं सशृङ्गं[16] कृष्णाजिनमास्तीर्य [17]सौवर्णदन्तपङ्क्तिद्वयं विद्रुमलाङ्गूलं मुक्तानेत्रयुगं मध्यस्थानार्पितसुवर्णं कृत्वा सर्वतस्तिलैराच्छाद्य वाससाच्छादयेत् । ततः पूर्वस्यां दिशि घृतपूर्णं कांस्यपात्रं [मृन्मयञ्च पात्रं][18] दक्षिणस्यां क्षीरपूर्णं [19]तत्पात्रयुगं पश्चिमायां दधिपूर्णं तत्पात्रद्वयम् उत्तरस्यां मधुपूर्णं

---

1 Corrected from M. P. A कृत्वा चार्यैश्च, I. O. कृत्वा चाचार्यं
2 A द्वार्भ्यां जप्यास्तु
3 A आप्यायतामिति एकाश्चकसमुद्रस्य द्वाविकायेति and I. O. आप्यायतामित्यैकसमुद्रस्य वाचकयेति for the b. p.
4 I. O. तरन्ति
5 Supplied from M. P. I. O. and A omit it
6 A तद्दत् वस्त्रसहितं
7 Corrected from M. P. A क्षेप्तुचतुष्पथे, I. O. चतुष्पथे only
8 Corrected from M. P. I. O. and A क्षेपे for कृते॰
9 Corrected from M. P. I. O. and A वक्ष for the b. p.
10 A सर्वांश्च
11 I. O. यजति
12 A कामतारीद् ब्रुम: for the b. p.
13 I. O. वियोगं
14 A नैवात्र प्राप्नुयात् for the bracketed portion
15 A र्गोमयोपलिप्ता, for the bracketed portion
16 A मृङ्गं
17 A सौवर्णभृङ्गं पङ्क्तिद्वयं
18 A omits the bracketed portion
19 A तत्पात्रद्वयं

तत्पात्रद्वयम् एवमष्टौ पात्राण्यारोप्य ॐ यानि काम्यानीति मन्त्रेण[1] तिलपूर्णं लोहपात्रं पश्चात् [2]वामपाद आरोपयेत्। [ॐ यानि पापान्यकामानीति][3] मन्त्रेण मधुपूर्णं कांस्यपात्रं पश्चाद्दक्षिणपाद आरोपयेत्। ॐ [परापवादेत्यादि][4]-मन्त्रेणोत्कृष्टसुवर्णसहितं ताम्रपात्रमग्रपाद[5] आरोपयेत्। ॐ [कन्याया वृषणमित्यादि][6]-मन्त्रेण उत्कृष्टमुक्तासहितं रौप्यपात्रमग्रदक्षिणपाद आरोपयेत्। ॐ [7]जन्म जन्म सहस्रेष्विति मन्त्रेणोत्कृष्टविद्रुमसहितं सौवर्णपात्रं मध्यस्थान आरोपयेत्। वामकर्णस्थाने [चोत्कृष्टदाडिमफलं दक्षिणकर्णस्थाने][8] चोत्कृष्टं वीजपूरफलमारोपयेत्। खुरचतुष्टयं शृङ्गाटक-सर्वशाक[9]-सर्वफलयुतं कृत्वा ततः कृष्णाजिनं परिभाषोक्त-[नवरत्नगणमध्यादिच्छया यैः][10] कैश्चित्तिभिर्यथाशक्ति[11][रत्नैश्चन्दनादिगन्धैश्चालङ्कुर्यात्। एवं कृष्णाजिनमारोप्य चम्पकशाखासहितजलपूर्णकुम्भ-दानानन्तरं स्नानार्थं गात्रमार्जनार्थञ्च जीर्णवस्त्रं दानस्थानबहिः स्थापयित्वा ब्राह्मणमग्निहोत्रिणं गन्धमाल्यादिभिरभ्यर्च्य वस्त्रयुगेनाच्छाद्य] [12]हेमाङ्गुरीयकादिभिरलङ्कृत्य कृष्णाजिन-[पुच्छदेश उपविश्योक्त][13]-संस्थानं कृष्णाजिनमर्च्चितं तस्मै दद्यात्। ॐ[14] अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं मत्स्यपुराणोक्त-कृष्णाजिन-दानफलप्राप्तिकामोऽहमेतत् कम्बलस्थं रुक्मशृङ्गं रुक्मदन्तं[15] [16]प्रवालभूषितलाङ्गूलं मुक्तानेत्रं तिलपूर्णं सर्वतो वस्त्राच्छादितं सुवर्णनाभिकं [17]रत्नगन्धालङ्कृतं [घृतदुग्धदधिमधुपूर्णकांस्यपात्रचतुष्टयसहितं][18] घृतदुग्धदधिमधुपूर्णमृन्मयपात्र-चतुष्टययुतं तिलपूर्ण-लोहपात्र-मधुपूर्णकांस्यपात्र-हेमसहितताम्रपात्र--मुक्तासहितरूप्यपात्र--प्रवालसहितसुवर्णपात्र[19]--दाडिमफलवीजपूरफलशृङ्गाटक-सर्वशाक[20]-

---

1 A omits मन्त्रेण
2 I. O. वामपादमारोपयेत्, A वामपादे प्ररोपयेत्
3 A यानि पापान्यनेकानि इति for the bracketed portion
4 I. O. पराय वेत्यादि for the bracketed portion
5 A ताम्रपात्रञ्च वामपादे
6 A कांश्यां सुतमित्यादि and I. O. कन्यामृतमित्यादि for the b. p.
7 A जन्मसहस्रेष्विति
8 I. O. omits the bracketed portion
9 A शृङ्गाटकं सर्व्वशाखं
10 A नरवत्नं पदैः for the bracketed portion
11 A omits the bracketed portion
12 I. O. होमाङ्गुलीयष्टिकादिभिरलङ्कृत्य, A हेमाङ्गुरीयकादीभिरलङ्कृत्य
13 I. O. पुच्छदेशे उपवेश्योक्त and A पुच्छदेश उपविश्योक्तं for the bracketed portion
14 A omits ॐ
15 I. O. omits रुक्मदन्तं
16 I. O. प्रवालभूतिलाङ्गूलं
17 A मन्त्रगन्धालङ्कृतं
18 A omits the bracketed portion
19 A omits पात्र
20 A ॰सर्व्वशाख॰

सर्वफलान्वितं कृष्णाजिनं ददानि। प्रीयतां वृषभध्वजः। प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा कृष्णाजिनमिदं प्रजापतिदैवतमित्युक्त्वा यथाशास्त्रं कामस्तुतिं पठेत्। तत अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा कृष्णाजिनं पुच्छे गृह्णीयात। ततस्तं ब्राह्मणं विसृज्य मण्डलं कृत्वा पूर्वस्थापितजलकुम्भेन चम्पकशाखान्तरितमुखेन स्नात्वा जीर्णपीतवस्त्रेणाङ्गानि मार्जयित्वाऽऽहते[1] वाससी परिधाया-चम्याङ्गमार्जनवस्त्रसहितं कुम्भं चतुष्पथे क्षेपयेत। अथवा [2]वेदविदं ब्राह्मणमाहूय तद्द्वारा[3] ॐ आप्यायेतामिति मन्त्रेण [4]समुद्रस्य त्वेति मन्त्रैश्चाभिमन्त्र्य चम्पक-[5]शाखोद्धृतजलेन [6]शिरःस्नानं कुर्यात्। अङ्गमार्जनादिकं समानम्।

आग्नेयपुराणे :—

[7]ग्रहणे अयने चैव संक्रान्तौ [8]विषुवद्वये।
युगादिषु युगान्तेषु द्वादश्यां नियतः शुचिः ॥१॥
समुपोष्य समभ्यर्च्य केशवं कल्मषापहम्।
द्वादश्यान्तु चतुर्दश्यां कृष्णायां नियतः शुचिः ॥२॥

अत्र कृष्णायामिति [विशेषणं द्वादश्यान्त्वित्यत्रापि सम्बन्धः][9] [द्वादश्यां पुनः-कीर्तनात][10]। एवञ्च द्वादशीचतुर्दश्यौ कृष्णे एव प्राह्ये।

संलिप्य गोमयेनाथ चतुर्हस्तप्रमाणतः।
वस्त्राणि [प्रस्तरे भूम्यामजिनं][11] तत्र विन्यसेत् ॥३॥
कृष्णतिलैस्तु संछन्न[12] कृत्वा तत्रोपरि न्यसेत।
मधुसर्पिर्युतं[13] पात्रं हैमं चौडुम्बरं तथा ॥४॥

औडुम्बरं ताम्रमयम्।

सुवर्णं प्रक्षिपेत्तत्र [14][पलं वा त्रिपलं] शतम्।
शक्तितो दानमेवं हि भक्तिरेवात्र कारणम् ॥५॥

---

1 A धौते for आहते
2 I. O. वेदज्ञाब्राह्मण०
3 A तद्दान
4 A समुद्रस्येति
5 A ०शाखाकृतजलेन
6 I. O. शिवः स्ना
7 A omits ग्रहणे
8 A विषुवे पर्वसन्धिने
9 I. O. विशेषणार्थं for the bracketed portion
10 A omits the bracketed portion
11 A प्रस्तरे कृष्णमजिनकं for the bracketed portion
12 I. O. संक्रान्तं, A संच्छन्न
13 A मधुसर्पिर्युतं
14 I. O. फलं वा त्रिफलं for the bracketed portion

संछाद्य [1]तच्छुभैर्वस्त्रैः पात्रं यज्ञोपवीतिनम् ।
कलसाष्टौ तथा दिक्षु सवस्त्राः पात्रसंयुताः ॥६॥
तान् स्थाप्याहवनं कृत्वा विधिवत् पूज्य केशवम् ।
कृष्णाजिनं समभ्यर्च्य ब्राह्मणायोपपादयेत् ॥७॥

आहवनमाहुतिं कृत्वा होमं कृत्वेत्यर्थः ।

[2]कृष्णोऽसि कर्मणा कृष्ण कृष्णाजिनमतस्तिलैः[3] ।
[4][कृष्णैर्युतं प्रतीच्छस्व कृष्णः] संप्रीयतामिति ॥८॥
एवं दत्त्वा द्विजेभ्यस्तु [5]पश्चाद्दद्यात् सुदक्षिणाम् ।
तिलाहारो [6]भवेत्तत्र ब्राह्मणान् भोजयेत्ततः ॥९॥

द्विजेभ्य इति बहुवचनं [7]जात्याख्यायामेकस्मिन्नेव । एवञ्च प्रतिग्रहीतृब्राह्मणाय च यथाशक्ति बहुदक्षिणादानम् । तिलाहारो भवेद् ब्राह्मणान् भोजयेदिति च ब्राह्मणान् भोजयित्वा [8]स्वयं तिलाहारो भवेदिति बोद्धव्यम् ।

एतं कृष्णाजिनं दत्त्वा नरो विगतकल्मषः ।
पितामहान् समुद्धृत्य स्वर्गं याति न संशयः ॥१०॥
तत्र भोगांश्चिरं भुक्त्वा पितृ-[9]पितामहैर्वृतः ।
स नरोऽस्य प्रभावाद्धि याति विष्णोः परं पदम् ॥११॥

उक्तसमयानामन्यतमस्य पूर्वतरदिने यजमानः कृतनित्यो घटिकाधिकप्रहरत्रये[10] हविष्यं भुक्त्वाचम्य शुचौ देश उपविश्य पादौ प्रक्षाल्याचम्य प्राङ्मुख उदङ्मुखो[11] वा कृताञ्जलिः ॐ सूर्यः सोमो यमः[12] कालः [महाभूतानि पञ्च च इति][13] आग्नेयपुराणोक्त-सोपवासकृष्णाजिनदानकर्म मया कर्तव्यमित्युक्त्वा गृहीतोदपूर्णताम्रपात्र[14] उदङ्मुखः सङ्कल्पयेत् । [ॐ उपोष्य][15] परदिने

1 I. O. तच्छतैर्वस्त्रैः, A तच्छुभैर्वस्त्रैः
2 I. O. कृष्णो
3 A कृष्णाजिनं शुभैस्तिलैः
4 A कृष्णैः प्रतीच्छ श्रीकृष्ण for the bracketed portion
5 A पश्चाद्दद्यात् दक्षिणां
6 A भवेद्व
7 A जात्यापेक्षया एकस्मिन्नेव
8 A omits स्वयं
9 I. O. ०पैतामहैर्वृतः
10 A घटिकाधिकप्रहरत्रये, I. O. घटिकाधिकप्रहरत्रये
11 A omits उदङ्मुखो
12 I. O. omits यमः
13 I. O. पञ्चमहाभूतानि for the bracketed portion
14 A गृहीतोदकपूर्णताम्र
15 I. O. omits the bracketed portion

आग्नेयपुराणोक्त-तिलाहार-रूपोदीच्या[1]-व्रतसहित-सोपवासकृष्णाजिन-दानकर्माहं करिष्ये। ततो नियमेन सुप्त्वा [2]परदिने उपोष्यापरदिने प्रातः स्नात्वा गोमयोपलिप्तभूमौ वस्त्रत्रयञ्च[3] चतुर्हस्त-प्रमाणमास्तीर्य तत्रोपरि [4][कृष्णमृगाजिनं तिलाच्छादितं] स्थापयित्वा तदुपरि [5]हैमं ताम्रं वा पात्रं शक्तित आरोप्य मधुघृतपूर्णं कृत्वा तत्र सुवर्णस्य [6]पलं पलत्रयं पलशतं वा शक्तितो निक्षिप्य[7] [ततपात्रमुत्कृष्ट][8]-वस्त्रैराच्छाद्य यज्ञोपवीतिनं[9] कृत्वा पूर्वादिदिक्क्रमेणाष्टौ कलसान् शरावपिहितमुखान् सवस्त्रानारोपयेत्। ततो ब्राह्मणः [10]स्वशाखोक्तक्रमेणाग्निमुप-समाधाय[11] ॐ [केशवाय स्वाहेत्याद्यैर्हुत्वा][12] शूद्रो ब्राह्मणद्वारा होमं कारयित्वा ॐ केशवाय नम इति यथाविधि वासुदेवप्रतिमां[13] सम्पूज्य कृष्णाजिनमर्चयित्वा अर्चिताय ब्राह्मणाय ॐ कृष्णोऽसीत्यादि[14] पठित्वा ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। आग्नेय-पुराणोक्त-कृष्णाजिनदानफलप्राप्तिकामोऽहमेतद्वस्त्रत्रयोपरिस्थापित-[15][कृष्णतिलसंछन्नं] मधु-घृतपूर्ण-[हैमपात्र-तन्निहित][16]-काञ्चन-शुभवस्त्राच्छन्नयज्ञोपवीत्यमुकपात्रसहितं [17]पात्रपिहितमुखं सवस्त्रकुम्भाष्टकयुतमर्चितं कृष्णाजिनं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। ततः [18]प्राह्णे [19]ब्राह्मणेभ्यो भोजनं दत्त्वा स्वयं तिलाहारो भवेत्।

कालिकापुराणे :—

[20]येऽपि रुक्मादिपात्रेषु हुत्वा वह्निं [21]ददन्ति वै।
तिलद्रोणसमायुक्तं [22]वस्त्रयुगाभिवेष्टितम् ॥१॥

---

1 A and I. O. ०दिच्या०
2 A omits परदिने
3 A वस्त्रत्रयं
4 A कृष्णाजिनाच्छादितं for the bracketed portion
5 A हेमं
6 A omits पलं
7 A omits निक्षिप्य
8 A वितततपात्रयुक्तं च, for the bracketed portion
9 A यज्ञोपवीति, I. O. यज्ञोपवीतं
10 A सुखाध्यायी०
11 I. O. उपसमाधाय
12 A केशवायेति स्वाहेत्याद्यं हुत्वा for the bracketed portion
13 A ०प्रतिमायां
14 I. O. कृष्णोसीति
15 A omits the bracketed portion
16 A पत्रस्थित for the bracketed portion
17 A मुखं
18 I. O. प्रत्विषे
19 A ब्राह्मणं
20 A योपिहेमादि०
21 A ददाति
22 A वस्त्रयुग्मेन वेष्टितं

पलार्द्धमथवाऽदुष्टं[1] विभवाद्धेमसंयुतम् ।
[3]सूक्ष्मयुग्मेन वस्त्रेण अनेनाच्छादयेद्विजाः[3] ॥२॥

[4][पलार्द्धमथवाऽदुष्टमिति]पलं सुवर्णचतुष्टयं [5][तदर्द्धं वा अर्द्धष्टकाय(?)]कृष्णाजिनार्द्धभागे देयं[6] विभवात् । विभवशून्यस्तु हेमसंयुतमित्यल्प-[7]स्वर्णसंयोगमयं मध्ये कुर्यादिति श्लोकार्थः ।

[सोदकञ्चापरं रुक्मं][8] सतिलं [9]न्यस्य तत्करे ।
ततः कृष्णाजिनं दद्यात्तिलद्रोणान्वितञ्च यत् ।
दत्त्वा च भोजयेत्तत नत्वा[10] चैव विसर्जयेत ॥३॥

दत्त्वा च भोजयेदिति तमेव ब्राह्मणं[11] भोजयेत् । [पश्चात् प्रणम्य][12] विसर्जयेत् ।

अयने विषुवे चैव ग्रहणे शशिसूर्ययोः ।
युगादौ ये प्रयच्छन्ति [विधिना ये तु वै][13] द्विजे ॥४॥
तेऽपि तत्पद[14]-मासाद्य दशांशं [ब्रह्म आयुषः][15] ।
क्रीडन्ते विविधैर्भोगैः कलारूपगुणान्विताः[16] ॥५॥
अनेनैव विधानेन दशद्रोणप्रदायकः ।
आब्रह्माण्डभवं कालं मोदते स पुरोत्तमे ॥६॥

उक्तसमयानामन्यतमे कृष्णाजिनं तिलद्रोणाच्छादितमुक्तोपकरणसहितं कृत्वा यथाशक्ति सुवर्णरूप्यताम्राणामन्यतमे पात्रे अग्निं यथाविध्युपसमाधाय ॐ प्रजापतये स्वाहेत्याहुतिं दत्त्वा शूद्रो ब्राह्मणद्वारा होमं कारयित्वा ब्राह्मणायार्चिताय [17]सूक्ष्मवस्त्रयुगाच्छादिताय करे तिलोदकसहितमग्रे[18] काञ्चनमन्यद्दत्त्वा[19] कृष्णाजिनमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् ।

---

1 A °चेष्टं
2 A युग्म°
3 A °द्विजं
4 A पलार्द्धार्द्धमर्थाद्दष्टमिति for the bracketed portion
5 A तदर्द्धत्वार्द्धमष्टकार्यं for the bracketed portion
6 I. O. देयम
7 I. O. °मिति
8 A सोदकं वासवकं वा for the bracketed portion
9 A न्यस्य
10 I. O. नत्वा
11 A omits ब्राह्मणं
12 A नत्वा तमेव for the bracketed portion
13 A विधिनानेन वा for the bracketed portion
14 A सम for पद
15 A चेत्रह्मणः पुरा for the bracketed portion
16 A °गुणान्वितैः
17 A युग्म°
18 A omits अग्र
19 A काञ्चनमान्यं दत्त्वा

[1] [कालिकापुराणोक्ततिलद्रोणाच्छादित-कृष्णाजिनदानफलप्राप्तिकामोऽहमेतत्तिलद्रोणाच्छादितं वस्त्रयुगाभिवेष्टितं मध्यस्थनष्टकाञ्चनं कृष्णा]-जिनं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। ततस्तं ब्राह्मणं भोजयित्वा प्रणम्य विसर्जयेत्। अनेनैव विधानेन तिलद्रोणदशकाच्छादित-[2][कृष्णाजिनदानमपि। तत्र दानवाक्ये कालिकापुराणोक्ततिलद्रोणदशकाच्छादितकृष्णा-जिनदानफलप्राप्तिकामोऽमेतद्दशद्रोणाच्छादितमिति] विशेषः। [अन्यत् सर्वं तु तुल्यम् ][3]।

स्कन्दपुराणे :—

कृष्णाजिनन्तु यो दद्याद्व्रतिने ब्रह्मचारिणे।
पृथिवीफलमाप्नोति योगश्चास्य प्रवर्त्तते ॥७॥
ससमुद्रगुहा तेन[4] सशैलवनकानना।
चतुरन्ता भवेद्दत्ता पृथिवी नात्र संशयः ॥८॥

व्रतस्थाय ब्रह्मचारिणेऽर्चिताय कृष्णाजिनमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। स्कन्दपुराणोक्त-कृष्णाजिनदानफलप्राप्तिकामोऽहमेतत् कृष्णाजिनं ददानि। स्वस्त्यादि-स्वीकारान्तं पूर्ववत्। [5]एतत् फलबाहुल्याद्बहुदक्षिणम्।

[6]पुलस्त्यः :—

अथातः कृष्णाजिनदानविधिं वक्ष्यामः। कार्त्तिक्यां पौर्णमास्यां वैशाख्यां वा चन्द्र-सूर्यग्रहे[7] विषुव अयनयोर्वा कृष्णमृगाजिनं सखुरं सशृङ्गमव्रणं मनोहरं[8] हिरण्यशृङ्गं[9] रूप्यखुरं मुक्तालाङ्गूलभूषितं[10] बहिर्लोमं प्राग्ग्रीवं स्यात्। गोमयोपलिप्तायां भुवि कुतपं[11] विस्तीर्य[12] तस्मिन्नाविकं वस्त्रं प्रसारयेत्। तस्मिन्नजिनं हिरण्यनाभं कृत्वा [13]तिलैराच्छाद्य तद्रूपं कृत्वा वस्त्रयुगेन तिलान् प्रच्छादयेत्। चतसृषु दिक्षु चत्वारि पात्राणि ताम्ररौप्यसौवर्णानि शक्तितः[14] पूर्वस्यां दिशि [क्षीरपूर्णं दक्षिणस्यां दिशि][15]दधिपूर्णं पश्चिमायां[16] दिशि[17]

1 A omits the bracketed portion and reads भोजयेत्तत्र...... ग्रहणं of p. 528 again here with the word ब्राह्मणाम् prefixed to it.
2 I. O. omits the bracketed portion
3 I. O. omits the bracketed portion
4 I. O. omits तेन
5 A तत्फलबाहुल्याद्बहुदक्षिणा
6 A omits पुलस्त्यः
7 A चन्द्रसूर्ययो ग्रहण
8 I. O. मधुरं
9 A omits this
10 A भूमिष्ठं मांसं for भूषितं
11 A कशं
12 A प्रस्तीर्य
13 A तिलैराच्छाद्य:
14 I. O. यथाशक्तितः
15 A omits the bracketed portion
16 I. O. पश्चिमस्यां
17 A omits it

घृतपूर्णम् उत्तरस्यां दिशि क्षौद्रपूर्णं निदध्यात्[1]। [पश्चिमभागेषु समिद्धमग्निं कृत्वा परिसमूह्य पर्य्युक्ष्य परोस्तीर्य भागाग्रैर्देर्भैर्महाव्याहृतिभिस्तिलान् घृताक्तान् जुहुयात् ][2]। तत आहिताग्नये[3] ब्राह्मणाय [4]सर्वाङ्गसम्पूर्णाय संयुगाय विदुषे वस्त्रयुगप्रच्छन्नायालङ्कृताय दद्यात् [सर्वगुणविशिष्टं कृष्णाजिनं ददानीति। नाभिं स्पृशन् कृष्णाजिनं प्रतिगृह्णीयात् प्रतिवाचयिता][5]।

[अत्र यमगीतागाथा भवति][6]।

[7][गोभूहिरण्यसंयुक्तं मार्गमेकं] ददाति यः।
सर्वदुष्कृतकर्मापि सायुज्यं[8] ब्रह्मणो व्रजेत्[9] ॥६॥

उक्तसमयानामिच्छयान्यतमे यजमानः शुचिर्यथोक्तं कृष्णाजिनं भूमिञ्च यथेच्छोत्पत्तियोग्यामुपकल्प्य कृष्णाजिनपश्चिमदेशे उक्तविधिना अग्निमुपसमाधाय ॐ भूर्भुवः स्वाहेति घृताक्तांस्तिलान्[10] यथेष्टसंख्यान् हुत्वा शूद्रो ब्राह्मणद्वारा होमं कारयित्वा ब्राह्मणमुक्तरूपं वस्त्रयुगाच्छादितमलङ्कृतं पुच्छदेशे कृष्णाजि-[नमाधार][11]-कम्बल उपवेश्यार्चिताय तस्मै कृष्णाजिनमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। पुलस्त्योक्तकृष्णाजिनदानफलप्राप्तिकामोऽहमेतत् कम्बलोपरि प्रसारितं हिरण्यशृङ्गं रूप्यखुरं मुक्तालाङ्गूलभूषितं हिरण्यनाभं तिलप्रच्छादितं वस्त्रप्रच्छादित[12]-क्षीरदधिघृतक्षौद्रपूर्णमृत्पात्रचतुष्टययुतं [13]गृष्टिचतुष्टयसहितमुप[14]-[कल्पित-समुत्पत्तियोग्यभूमिकं][15] सर्वगुणविशिष्टं कृष्णाजिनं[16] ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। नाभिस्पर्शः स्वीकारः। कुतपं [17]विस्तीर्येति कुतपः कुशः[18]। तद्रूपं कृत्वेति [यथा कृष्णाजिनसन्निवेश][19]-स्तथा तिलैराच्छादनं कृत्वेत्यर्थः। चतसृषु दिक्षु

---

1 A दद्यात्
2 I. O. omits the bracketed portion
3 A ततस्त्वाहिताय
4 A सर्वाङ्गसंपूर्णाय and omits संयुगाय
5 A omits the bracketed portion
6 A अत्र यमीयो गाथा भवन्ति for the bracketed portion
7 A यस्तैर्हिरण्यसंयुक्तामार्गमेकं for the bracketed portion
8 I. O. सायोज्यं
9 I. O. भवेत्
10 I. O. कृताक्तान्
11 A माधाय for the bracketed portion
12 A omits this word
13 A वृष्टि॰
14 A युग for मुप
15 I. O. कल्पिते यदुत्पत्तियोग्यभूमिकं for the bracketed portion
16 A कृष्णाजिनं
17 I. O. प्रस्तार्य्येति, A प्रस्तीर्य्येति
18 A कुश
19 A यथा कृष्णाजिनं तस्य सन्निवेश for the bracketed portion

चत्वारि पात्राणि ताम्ररौप्यसुवर्णानीत्यत्र द्रव्यत्रयेण चतसृणां दिशां चतुर्णां क्षीरादीनां यथासंख्यसम्बन्धासम्भवात् ताम्ररूप्यसुवर्णानामन्यतमद्रव्यपात्रचतुष्टयस्य ग्रहणम्। अतएव [1]शक्तित इति मुनिराह। गृष्टीर्निदध्यादिति गृष्टिरेकवारप्रसूता गौः। अत्र यमगाथायाः पुलस्त्येनैकवाक्यतयोक्तत्वाद्भूमिसहितस्य दानम्[2]।

विष्णुधर्मोत्तरे :—

वैशाखी पौर्णमासी च ग्रहणे शशिसूर्ययोः।
पौर्णमासी तथा माघी तस्य दाने महाफला[3] ॥१॥
गोमयेनोपलिप्ते तु शुचौ देशे नराधिप।
आदावेव समास्तीर्य शोभनं वस्त्रमाविकम् ॥२॥
ततः सशृङ्गं सखुरमास्तरेत् कृष्णमार्गणम्।
कर्तव्यं रुक्मशृङ्गं तद्रूप्यपादं तथैव च ॥३॥
लाङ्गूलं मुक्तिसंयुक्तं [4]तिलच्छन्नं तथैव च।
तिलैः [5]सुशिखरं कृत्वा वाससाच्छादयेद्बुधः ॥४॥

[6]सुशिखरं कृत्वेत्याच्छादकतिल-[7]राश्यग्रभागं शोभनं कृत्वेत्यर्थः।

[8]सुवर्णनाभं तत्कुर्यादलङ्कुर्याद्विशेषतः।
[9]रत्नैर्गन्धैर्यथाशक्त्या[10] तस्य दिक्षु च विन्यसेत् ॥५॥

[11]रत्नैः परिभाषोक्त-[12]रत्नमध्ये यैः कैश्चित्त्रिभिः[13]। गन्धैः प्रसिद्धचन्दनादिभिः। अलङ्कुर्यादिति सम्बन्धः।

कांस्यपात्राणि चत्वारि तेषां दद्याद्यथाक्रमम्।
[14]घृतक्षीरं दधिक्षौद्रमेवं दत्वा यथाविधि ॥६॥

यथाक्रममिति पूर्वादिक्रमेण।

---

1 I. O. यथाशक्तित
2 A omits दानम्
3 I. O. महाफलं
4 A तिलकाद्यं
5 A सुखिरं, I. O. सुशिखरं
6 I. O. सुशिखरं
7 I. O. °राशाग्रभागं, A कृत्वेत्याच्छादकराश्यग्रभागं
8 A reads the entire line as सुवर्णनाभः ततः कुर्याद्विशेषः
9 A वर्णै°
10 I. O. °यथा तस्य
11 A वर्णैः
12 A °वर्णमध्ये
13 A कैश्चिच्चिभिः
14 I. O. घृतं क्षौद्रं

तत्प्रतिग्राहयेद्विद्वानाहिताग्निं द्विजोत्तमम्[1] ।
[2]श्वेतवस्त्रयुगच्छन्नं स्वशक्त्या [3]वाप्यलङ्कृतम् ॥७॥
प्रतिग्रहस्ततश्चोक्तः पुच्छदेशे महीपते ।
अनेन विधिना दत्त्वा यथावत् कृष्णमार्गणम् ॥८॥
समग्रभूमिदानस्य फलमाप्नोत्यसंशयम् ।
सर्वांश्च लोकांश्चरति कामयानस्य जीवितम् ॥९॥

कामयानस्य [4]जीवितमिच्छतो [5]भोगार्थिन इत्यर्थः ।

[6]एतत्तु सर्वमाख्यातं[7] मार्गमाप्नोत्यसंशयम् ।
[8]कृष्णेप्सितं कृष्णमृगस्य चर्म दत्त्वा द्विजेन्द्राय समाहितात्मा[9] ।
यथोक्तमेतन्मरणं न शोचेत् प्राप्नोत्यभीष्टान् मनसः स लोकान् ॥१०॥

[उक्तसमयानामन्यतमे स्वेच्छया][10] भगवद्वासुदेवाग्रतो गोमयोपलिप्तापनीतकेशकीटादिभूमौ शोभनं कम्बलमास्तीर्य तत्रोपरि [11]कृष्णमृगाजिन-[मुक्तरूप][12]-मुक्तोपकरणमर्चितं ब्राह्मणायाग्निहोत्रिणे स्नाताय [13]वस्त्रयुगाच्छादिताय यथाशक्त्यलङ्कृतायार्चिताय [14]कृष्णाजिनपुच्छस्थाय[15] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्त-कृष्णाजिनदानफलप्राप्तिकामोऽहमेतदाविकवस्त्रोपरिप्रसारितं रुक्मशृङ्गं रूप्यपादं[16] मुक्तायुक्तलाङ्गूलं[17] तिलराशिसंच्छन्नं[18] वस्त्राच्छादितं सुवर्णनाभं [19]रत्नगन्धालङ्कृतं घृतक्षीरदधिमधुपूर्ण-[20]ताम्रकांस्यपात्रचतुष्टययुतं कृष्णाजिनं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

इति महाराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते श्रीदानसागरे कृष्णाजिनदानावर्तः ।

---

1 A reads the following additional line after this, viz. जीवितं कामयानस्य जीविताग्निं योत्तमं
2 A स्नातं वस्त्रयुगाच्छन्नं
3 I. O. माप्यलङ्कृतं
4 A वितमिच्छतो
5 A भागार्थिन, I. O. भोगा
6 A एतते
7 I. O. सर्वमाख्यात
8 I. O. कृष्णेप्सितं
9 A समाहितधी
10 A उक्तसमयानामिच्छयान्यतमे for the bracketed portion
11 A omits कृष्ण
12 A omits the bracketed portion
13 A वस्त्राच्छादिताय
14 A कृष्णाज
15 I. O. ०पुच्छाय
16 A रूप्यदानं
17 A मुक्ताढ्यलाङ्गूलं
18 A तिलराशिच्छन्नं
19 A' वसुगन्धालङ्कृतं
20 A omits ताम्र

## अथ प्रजापतिदैवतच्छत्रदानावर्तः । (५३)

**तत्र छत्रदानप्रशंसा ।**

महाभारते (अनु—९६।१४-१७) :—

सूर्य्य उवाच ।

महर्षे शिरसस्त्राणं [1]छत्रमातपवारणम् ।
प्रतिगृह्णीष्व पद्भ्यां च त्राणार्थं चर्मपादुके ॥१॥
अद्यप्रभृति चैवैतल्लोके [2]संप्रचरिष्यति ।
पुण्यदानेषु सर्वेषु [3]परमं कृत्यमेव च ॥२॥

भीष्म उवाच ।

छत्रोपानहमेतत्त[4] सूर्येणैव प्रवर्तितम् ।
पुण्यमेतदभिख्यातं[5] त्रिषु लोकेषु भारत ॥३॥
[6]तस्मात् प्रयच्छ विप्रेषु छत्रोपानहमेव च ।
[7]धर्मस्ते सुमहद्भावी [8]न मेऽत्रास्ति विचारणा ॥४॥

**अथ दानम् ।**

*याज्ञवल्क्यः* (१।२११) :—

[9]गृहधान्याभयोपानच्छत्रमाल्यानुलेपनम् ।
यानं वृक्षं प्रियं शय्यां दत्त्वात्यन्तं सुखी भवेत् ॥५॥

*अत्र यजमानोऽर्चिताय ब्राह्मणायार्चितं छत्रं दद्यात् ।* ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यमत्यन्त[10]-सुखप्राप्तिकामोऽहमेतच्छत्रं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा छत्रमिदं प्रजापतिदैवतमित्युक्त्वा यथाशाखं कामस्तुतिं

---

1 A छत्रं मस्तकवारणं
2 I. O. समुच्चरिष्यति, A सं -प्रचरिष्यति
3 A परमाक्षय्यमेव च
4 A ॰मेतत्तं
5 A ॰तिख्यातं
6 A reads the entire line as तस्माद्यं च विप्रस्य छत्रोपानहमुत्तमं
7 A धर्मस्तेषु महद्भावी
8 A नामत्रास्ति
9 A गृहधान्यतयोपान॰
10 A omits अत्यन्त

पठेत्। [1]तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं दक्षिणामिदं काञ्चनं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा छत्रं[2] गृह्णीयात्।

महाभारते[3] :—

न तं त्यजन्ति पशवः संग्रामे च [4]जयत्यपि।
पुत्रान् श्रियञ्च लभते [5]यश्छत्रं संप्रयच्छति।
न च क्षुद्व्याधिं लभते यज्ञभागमथाश्नुते ॥६॥

अर्चिताय ब्राह्मणायार्चितं छत्रम् [ॐ अद्यादि तुभ्यमन्तमुक्त्वा][6] दद्यात्। महाभारतोक्तानेककालस्थायि[7]-पशुशालित्व-[8]जयत्व--[9]जनकत्वोपलक्षितच्छत्रदानफलप्राप्तिकामोऽहमेतच्छत्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। [अत्र च फलभूयस्त्वेनोत्कृष्टच्छत्रदानम्।][10]

[11]तथा (अनु—९६।१८-१९) :—

छत्रं हि भरतश्रेष्ठ यः प्रदद्याद्द्विजातये।
शुभ्रं शतशलाकं वै स प्रेत्य सुखमश्नुते ॥७॥

[12]शतशलाकं [शतशलाकानिर्मितं वातिच्छत्रमिति][13] प्रसिद्धम्।

स शक्रलोके वसति पूज्यमानो द्विजातिभिः।
अप्सरोभिश्च सततं देवैश्च भरतर्षभ ॥८॥

अर्चिताय ब्राह्मणायार्चितं [14]शतशलाकम् [शुक्लं छत्रम्][15] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्त--शतशलाक-च्छत्रदान--[16]फलप्राप्तिकामोऽहमेतच्छतशलाक[17]-च्छत्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

---

1 A omits तत
2 I. O. छत्रदानं
3 I. O. महाभारते twice
4 A यजत्यपि
5 A यश्चत्रं, I. O. यश्छत्रं
6 A दद्यात्। ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिने अमुकदेवशर्मणे तुभ्यमहमुत्सृजे for the bracketed portion
7 I. O. •स्थापि•
8 I. O. omits जयत्व
9 A omits जनकत्व
10 I. O. omits the bracketed portion
11 A यथा
12 A omits it
13 I. O. शतशलाकनिर्मितं इति for the bracketed portion
14 A शलाकं
15 I. O. omits the bracketed portion
16 A omits फल
17 I. O. omits च्छतशलाक, A reads तशलाक

[1]तथा (अनु—१३०।३३ख) :—

[2]छत्रदाने सुखच्छायां लभते परलोकगः ॥९॥

अर्चिताय ब्राह्मणायार्चितं छत्रम् ॐ अद्यादि तुभ्यमहंसम्प्रददे इत्युक्त्वा दद्यात्। परलोकसुखच्छायाप्राप्तिकामोऽहमेतच्छत्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा :—

निदाघकाले वर्षे वा [3]यश्छत्रं संप्रयच्छति।

नास्य [4]कश्चिन्मनोदाहः कदाचिदपि जायते।

कृच्छ्रात् स विषमाच्चैव [5]क्षिप्रं मोक्षमवाप्नुयात् ॥१०॥

ग्रीष्मे वर्षासु वाऽर्चिताय ब्राह्मणायार्चितमुत्कृष्टं दृढं छत्रम् ॐ अद्यादि तुभ्यमहंसम्प्रददे इत्युक्त्वा दद्यात्। महाभारतोक्त-[6]वर्षानिदाघकालविहित-च्छत्रदानफलप्राप्तिकामोऽहमेतच्छत्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

वराहपुराणे (२०६।१४ख-१५क) चित्रगुप्तवाक्ये :—

[उपानहौ[7] महच्छत्रं][8] जलभाजनमेव[9] च।

असकृद् येन दत्तानि [10]तस्मै पूजां प्रयच्छथ ॥११॥

असकृदित्यावृत्त्या दानद्वयापनार्थम्। अर्चिताय ब्राह्मणायार्चितं बृहच्छत्रम् ॐ अद्यादि तुभ्यमहंसम्प्रददे इत्युक्त्वा दद्यात्। वराहपुराणोक्त-च्छत्रदानफलप्राप्तिकामोऽहमेतच्छत्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

---

1 A omits it
2 A छत्रदानात्
3 I. O. यच्छत्रं, A यश्वत्रं
4 A कान्तं मनोदाहः
5 A क्षौमं
6 A सर्वं for वर्षा
7 Varāha P. च छत्रं च
8 A उपानहमहं छत्रं for the bracketed portion
9 Corrected from Varāha P. I. O. and A जलं भोजनमेव
10 Corrected from Varāha P. I. O. and A तस्मिन्

आग्नेयपुराणे :—

घर्मवर्षा-[1]तपत्राणं छत्रं दद्याद्द्विजातये ।
सर्वव्याधिविनिर्मुक्तः श्रियं [2]पुत्रांश्च विन्दति ॥१२॥

घर्मवर्षातपत्राणमिति ग्रीष्म-वर्षा-[शरत्सु तदु][3]-पद्रवस्य[4] [5]वारकमित्यर्थः ।

विमानेन च दिव्येन किङ्किणीजालमालिना ।
महेन्द्रभवनं याति सेव्यमानोऽप्सरोगणैः ॥१३॥

अर्चिताय ब्राह्मणायार्चितं[6] वर्षातपवारणक्षमं[7] छत्रम् ॐ[8] अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । आग्नेयपुराणोक्त-च्छत्रदानफलप्राप्तिकामोऽहमेतच्छत्रं ददानि । स्वस्त्यादि-स्वीकारान्तं पूर्ववत् ।

[9]ब्रह्मपुराणे :—

[10]उपानद्युगलं छत्रं शय्यासनमथापि वा[11] ।
ये प्रयच्छन्ति वस्त्राणि तथैवाभरणानि च ॥१४॥
ते यान्त्यश्वै रथैश्चैव कुञ्जरैश्चाभ्यलङ्कृताः ।
धर्मराजपुरं दिव्यं[12] छत्रैः सौवर्णराजतैः ॥१५॥

अर्चिताय ब्राह्मणायार्चितं छत्रम्[13] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [14]ब्रह्म-पुराणोक्त-च्छत्रदानफलप्राप्तिकामोऽहमेतच्छत्रं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

नन्दिपुराणे :—

आतपत्रन्तु यो दद्याद्ब्राह्मणाय तपस्विने ।
स कल्पवृक्षच्छायासु[15] विश्रान्तो गच्छते सुखम् ।
[16][दूर्वावनैः ससलिलैर्दिव्यैः] पुष्पमनोरमैः ॥१६॥

---

1 A ०तपत्राणं
2 A पूर्वेश्च
3 A तपोभवो for the bracketed portion
4 I. O. ०द्रव्यस्य
5 A वाकमित्यर्थः
6 A omits अर्चित
7 I. O. omits क्षमं
8 A omits ॐ
9 I. O. ब्राह्मपुराणे
10 A उपानद्युगलं
11 A च
12 A omits it
13 A omits it
14 I. O. ब्राह्मपुराणोक्त
15 A ०च्छायायां
16 A दूर्वादानः सलिलो दिव्ये for the bracketed portion

तपस्विने [1]व्रतोपवासशीलाय अर्चिताय ब्राह्मणाय[2] अर्चितं छत्रम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। नन्दिपुराणोक्त-तपस्विब्राह्मण-सम्प्रदानकातपत्रदानफलप्राप्तिकामोऽहमेतदातपत्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा :—

वस्त्रं यश्चार्थिने दद्याच्छत्रं वापि यदृच्छया।

स भवेद्धनवान् श्रीमान् बृहस्पतिपुरे वसेत् ॥१७॥

[3]यदृच्छया [4]स्वच्छन्दतया व्रतशीलादिविशेषमनपेक्ष्यार्थिने ब्राह्मणायेत्यर्थः। अर्चिताय ब्राह्मणाय छत्रार्थिने[5]ऽर्चितं छत्रम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। नन्दिपुराणोक्त-यदृच्छाच्छत्रदानफलप्राप्तिकामोऽहमेतच्छत्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

आदित्यपुराणे :—

छत्रं ये तु प्रयच्छन्ति [विप्राय गुरवे गृहम्][6]।

न तेषां पतते घोरम् अग्निवर्षं सुदारुणम् ॥१८॥

अर्चिताय ब्राह्मणाय गुरवे वा छत्रमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। आदित्यपुराणोक्त-च्छत्रदानफलप्राप्तिकामोऽहमेतच्छत्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

शाम्बपुराणे :—

छत्रं द्विजाय यो दद्यात् स प्रेत्य सुखमेधते[7] ॥१९॥

अर्चिताय ब्राह्मणायार्चितं छत्रम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। शाम्बपुराणोक्त-[8]छत्रदानफलप्राप्तिकामोऽहमेतच्छत्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

विष्णुधर्मोत्तरे (३।३११।५-६क) :—

छत्रं शतशलाकन्तु दत्त्वैवातपवारणम्।

सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते।

याम्यं मार्गं तता[9] याति सुखेन द्विजसत्तमाः ॥२०॥

अर्चिताय ब्राह्मणायार्चितम् [आतपवारणोचितवस्त्रमय][10]-शतशलाकच्छत्रम् ॐ अद्यादि

---

1 I. O. व्रतोपवासशीलाय, A व्रतोवासशीलाय

2 I. O. तपःशालिने after ब्राह्मणाय

3 I. O. यदृच्छय

4 A च्छन्दतया

5 A छत्रार्थिने ब्राह्मणाय

6 I. O. गुरुष्वपि सुरेषु, च for the bracketed portion

7 A सुखमोदते

8 A उत्कृष्ट before छत्र

9 V. D. तथा

10 A आतपोनिवारणोचित for the b. p.

तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोत्तरोक्त-शतशलाक-[1]च्छत्रदानफलप्राप्तिकामोऽहमेतच्छत्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३११।४):—

वितानकप्रदानेन सर्वपापैः प्रमुच्यते।
छत्रदश्च तथा विप्रा नात्र कार्या विचारणा ॥२१॥

अर्चिताय ब्राह्मणायार्चितं छत्रम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सर्वपाप-प्रमोचकत्व[2]-प्राप्तिकामोऽहमेतच्छत्रं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे छत्रदानावर्तः।

1 A omits फल

2 I. O. सर्वपापप्रमोचक, A ०प्रमथन

## अथोत्तानाङ्गिरोदैवतोपानद्दानावर्तः। (५४)

याज्ञवल्क्यः (१।२११) :—

[1]गृहधान्याभयो-[2]पानच्छत्रमाल्यानुलेपनम्।

यानं वृक्षं प्रियं शय्यां दत्त्वात्यन्तं सुखी भवेत्॥१॥

अत्र यजमानोऽर्चिताय ब्राह्मणायार्चितउपानहौ दद्यात्। ॐ [3]अद्यामुकसगोत्रायामुक-वेदा[4]-मुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यमत्यन्त[5]-सुखप्राप्तिकामोऽहमेते उपानहौ ददानि। प्रतिग्रहीता[6] स्वस्तीत्युक्त्वा सावित्रीं पठित्वा उपानहावेते उत्तानाङ्गिरोदैवते इत्युक्त्वा यथाशाखं कामस्तुतिं पठेत्। ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं[7] काञ्चनं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा उपानहावारोहेत[8]।

विष्णुः :—

उपानत्प्रदानेनाश्वतरीयुत[9]-रथम्॥२॥

प्राप्नोतीति शेषः। अर्चिताय ब्राह्मणायार्चितउपानहौ[10] ॐ अद्यादि तुभ्यमन्त-मुक्त्वा दद्यात्। अश्वतरीयुतरथप्राप्तिकामोऽहमेतउपानहौ ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

बृहस्पतिः :—

असिपत्रवनं मार्गं क्षुरधारा[11]-समन्वितम्।

तीक्ष्णातपञ्च तरति छत्रोपानत्प्रदो नरः॥३॥

छत्रोपानत्प्रद इत्यत्र द्वन्द्वनिर्देशो यद्यप्युभयोः क्रियासम्बन्धमात्रेणैवोपपद्यते, तथापि चण्डातपजन्यक्लेशस्य [12]छत्रोपानद्युगाभ्यामेव वारयितुं शक्यत्वात् सहितयोरेव दानम्। अर्चिताय ब्राह्मणायार्चितं छत्रमुपानद्युगञ्च ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। बृहस्पत्युक्त-

---

1 A गृहधान्यमु यो
2 I. O. ०पन०
3 A अद्यादि अमुक०
4 A दाय for वेदा
5 A अन्तमुक्त्वा दद्यात् for अत्यन्त
6 A इति गृहीता
7 A दक्षिणामि
8 A उपानहावारोहयेत
9 A omits युत
10 I. O. ०उपानहौ, A ०र्चितायवो पानहौ
11 A ०धार०
12 A छत्रोपानहौ युगलदानेन

छत्रोपानद्दानफलप्राप्तिकामोऽहमेतच्छत्रोपानहौ ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा छत्रोपानहावेते प्रजापत्युत्तानाङ्गिरोदैवते इत्युक्त्वा यथाशाखं कामस्तुतिं पठेत्। छत्रस्य दण्डग्रहणमुपानहारोपणञ्च स्वीकारः[1]।

महाभारते (अनु—६६।२०-२१) :—

दह्यमानाय विप्राय यः प्रयच्छत्युपानहौ।
स्नातकाय महाबाहो संश्रिताय द्विजातये ॥४॥

स्नातकाय गुरुकुलान्निवृत्ताय। संश्रितायोपस्थिताय।

सोऽपि लोकानवाप्नोति दैवतैरपि पूजितान्।
गोलोके च मुदा युक्तो वसति प्रेत्य मानद ॥५॥

अर्चिताय यथोक्तरूपाय ब्राह्मणायार्चितमुपानद्युगम् ॐ अद्यादि तुभ्यमहमुक्त्वा दद्यात्। महाभारतोक्त-दह्यमान-सम्प्रदानकोपानद्दान-फलप्राप्तिकामोऽहमेते उपानहौ ददानि। स्वस्त्यादि-स्वीकारान्तं पूर्ववत्।

तथा (Cf. अनु—६६।३ख) :—

यानं [2]रथोपानह्-सम्प्रदानात् ॥६॥

प्राप्नोतीति शेषः। अर्चिताय ब्राह्मणायार्चितमुपानद्युगम् ॐ अद्यादि तुभ्यमहमुक्त्वा दद्यात्। यानप्राप्तिकामोऽहमेते उपानहौ ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

नरसिंहपुराणे :—

छत्रोपानद्दाता(?) च स्वर्गं यात्युपशोभनम् ॥७॥

अर्चिताय ब्राह्मणायार्चितं छत्रमुपानद्युगञ्च ॐ अद्यादि तुभ्यमहमुक्त्वा दद्यात्। उपशोभनाख्यस्वर्गप्राप्तिकामोऽहमेतच्छत्रोपानहौ ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा छत्रोपानहावेते प्रजापत्युत्तानाङ्गिरोदैवते इत्युक्त्वा यथाशाखं कामस्तुतिं पठेत्। दक्षिणा पूर्ववत्। छत्रस्य दण्डग्रहणमुपानहोरारोहणञ्च स्वीकारः[3]।

वराहपुराणे (२०६।१४ख-१५क) चित्रगुप्तवाक्ये :—

उपानहौ महच्छत्रं[4] जलभाजनमेव[5] च।
असकृद् येन दत्तानि तस्मै[6] पूजां प्रयच्छथ ॥८॥

---

1 Supplied to complete the sense. I. O. and A omit it.

2 I. O. रथोपानह

3 Supplied. I. O. and A omit it.

4 Varāha P. च छत्रं च

5 Corrected from Varāha P. I. O. and A जलं भोजनमेव

6 Corrected from Varāha P. I. O. and A तस्मिम्

अर्चिताय ब्राह्मणायार्चितमुपानद्युगलम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। वराह-पुराणोक्तोपानद्दानफलप्राप्तिकामोऽहमेते उपानहौ ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। असकृदिति पदश्रवणा-[1]देतद्दानमावृत्त्या देयम्।

[2]ब्रह्मपुराणे :—

उपानद्युगलं छत्रं शय्यासनमथापि वा।
ये प्रयच्छन्ति वस्त्राणि तथैवाभरणानि च ॥९॥
ते यान्त्यश्वै रथैश्चैव कुञ्जरैश्चाभ्यलङ्कृताः।
धर्मराजपुरं दिव्यं छत्रैः सौवर्णराजतैः ॥१०॥

[3]ब्रह्मपुराण एव दारुमयपादुकादानस्य भेदेनोपादानादत्र चर्मोपानद्दानमपेक्षितम्। अर्चिताय ब्राह्मणायार्चितमुपानद्युगलम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [4]ब्रह्मपुराणोक्त-चर्मोपानद्युगलदानफलप्राप्तिकामोऽहमेतच्चर्मोपानद्युगलं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा :—

काष्ठपादुका[5]-यानानि पीठका[6]-न्यासनानि च।
यैर्दत्तानि द्विजातिभ्यस्तेऽध्वानं यान्ति वै सुखम् ॥११॥
सुवर्णमणिपीठेषु पादौ कृत्वोत्तमेषु च ॥
ते प्रयान्ति विमानैस्तु अप्सरोगणमण्डितैः ॥१२॥

द्विजातिभ्य इति बहुवचनं दातृबहुत्वापेक्षम्। अर्चिताय ब्राह्मणायार्चितं काष्ठघटित-पादुकायुगम्[7] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [8]ब्रह्मपुराणोक्त-काष्ठमयपादुकादानफल-प्राप्तिकामोऽहमेतत् काष्ठपादुकायुग[9] ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

आग्नेयपुराणे :—

दह्यमानाय विप्राय यः प्रयच्छत्युपानहौ।
न तस्य [10]मनसो दाहः कदाचिदपि जायते ॥१३॥

---

1 I. O. °मेत°
2 I. O. ब्राह्मपुराणे
3 I. O. ब्राह्मपुराणे
4 I. O. ब्राह्मपुराणोक्त°
5 I. O. पादुका
6 I. O. पीठका
7 A काष्ठघटितकापादुकायुगलं
8 I. O. ब्राह्मपुराणोक्त°
9 I. O. काष्ठमयपादुकायुगं
10 A मानसो

[1]रथश्चाश्वतरीयुक्तं तस्य हेममयं शुभम् ।
उपतिष्ठति [2]विप्रर्षे सर्वरत्नविभूषितम् ॥१४॥

दह्यमानाय [3]सन्तप्तभूमिभ्रमणजातचरणदाहाय । अर्चिताय ब्राह्मणाय उक्तरूपाया- [4]र्चितमुपानद्युगम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात । आग्नेयपुराणोक्तोपानद्दानफलप्राप्ति- कामोऽहमेते उपानहौ ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

[नन्दिपुराणे :—

उपानहौ च यो दद्याद्ब्राह्मणाय प्रवासिने[5] ।
सगजैस्तु रथैर्याति याम्ये पथि महासुखम् ॥१५॥

अर्चिताय ब्राह्मणाय प्रवासिनेऽर्चिते उपानहौ ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । नन्दि- पुराणोक्तोपानद्दानफलप्राप्तिकामोऽहमेते उपानहौ ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । ][6]

आदित्यपुराणे:—

अश्वं वा यदि वा युग्मं[7] शोभने वाथ पादुके ।
ददते याचमानेभ्यो ब्राह्मणेभ्यः सुसंयुताः ॥१६॥

ब्राह्मणेभ्य इति बहुवचनं दातृबहुत्वापेक्षम् ।

तेषां दिव्यानि यानानि [8]रथा ध्वजपताकिनः ।
दुष्टः पन्था न चैवेह भविष्यति कथञ्चन ॥१७॥

अर्चितायार्थिने[9] [10]ब्राह्मणायार्चितमुपानद्युगम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । आदित्यपुराणोक्तपादुकादानफलप्राप्तिकामोऽहमेते पादुके[11] ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

शाम्बपुराणे :—

उपानहौ च यो दद्याच्छूद्रणे[12] [13]स्नेहसमन्विते ।
गोलोके स मुदा युक्तो वसति प्रेत्य मानवः[14] ॥१८॥

---

1 A यानश्चाश्वतरैर्युक्तं
2 I. O. विप्रश्च
3 I. O. सतप्त०, A विप्राग्र भूमिभ्रमण-जातचरणजातदाहाय
4 A ०र्चितामुपानद्युग:
5 I. O. तपस्विने
6 A omits the bracketed portion
7 A योग्यं
8 A रथध्वज०
9 A अर्चिताय तपस्विने
10 A ब्राह्मणायार्चितायमुपानद्युगं
11 A पादुका
12 A दद्यात शूद्रश्च
13 A स्नेहसमन्विते
14 I. O. मानवैः

अर्चिताय ब्राह्मणायार्चितं तैलाभिषिक्तं[1] श्लक्ष्णमुपानद्युगलम्[2] ॐ अद्यादि तुभ्य-मन्तमुक्त्वा दद्यात्। [3]शाम्बपुराणोक्तोपानद्दानफलप्राप्तिकामोऽहमेते[4] उपानहौ ददानि। स्वस्त्यादिस्त्रीकारान्तं पूर्ववत्।

विष्णुधर्मोत्तरे (३।३११।६ख—७):—

उपानहौ तथा दत्त्वा श्लक्ष्णे स्नेहसमन्विते[5]।
रथमश्वतरीयुक्तं त्रिदिवे प्रतिपद्यते।
सर्वपापविनिर्मुक्तो याम्यं[6] मार्गं सुखं व्रजेत ॥१६॥

अर्चिताय ब्राह्मणायार्चितं सुकुमारं घृतनवनीताद्यनुलिप्तं [7]चर्मपादुकायुगलम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोत्तरोक्त-सर्वं होपानद्दान[8]-फलप्राप्तिकामोऽहमेते उपानहौ ददानि। स्वस्त्यादिस्त्रीकारान्तं पूर्ववत्।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते [श्रीदानसागरे उपानहानावर्तः][9]।

1 A तैलाद्ययुक्तं
2 A •युगं
3 I. O. मन्त्रि•
4 A •मेतत्
5 A •समन्वितः
6 I. O. and V. D. याम्यमार्गं
7 A चर्म•
8 I. O. omits दान
9 A श्रीदानं देयं for the bracketed portion

## [1][अथ नानादैवतयानदानावर्तः । (५५)

आग्नेयपुराणे :—

पुष्ये वा जन्मनक्षत्रे अयने विषुवेषु च ।
ग्रहणे च व्यतीपाते संक्रान्तौ च दिनक्षये ॥१॥
यानमश्वमनड्वाह' हेम' रूप्यं मणींस्तिलान् ।
ये प्रयच्छन्ति पापेषु निरताः सर्वदा मुने ।
न तेषां भैरवः पन्था दत्त्वैषां दानमित्युत ॥२॥

पापेषु निरताः सर्वदेति वचनादतिप्रचुरपापक्षयार्थमिद' देयम् । उक्तदिनानामन्यतमेऽर्चिताय ब्राह्मणाय प्रसिद्धानामन्यतममर्चित' यान' दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यमाग्नेयपुराणोक्त-यान-दानफलप्राप्तिकामोऽहमेतद्यानं ददानि । प्रतिग्रहीता स्वस्त्योत्युक्त्वा सावित्रीं पठित्वा यानमिद' विष्णुदैवतमित्युक्त्वा यथाशाखं कामस्तुति' पठेत् । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमह' दक्षिणामिद' काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा यानमारोहेत ।

आदित्यपुराणे :—

तीर्थे तडागकूपादिनौकासेतुप्रदाश्च ये । ]
स्कन्धेन तारयेद् यस्तु तृषार्तानां[2] जलप्रदः ॥३॥
षष्टिकोटिसहस्राणि [3]अर्बुदानाञ्च वै त्रयम् ।
क्रीडन्ति ते श्वेतपुरे एतदुक्त'[4] द्विजोत्तम ॥४॥

[ अत्र सोपकरणां ][5] नौकामुपकल्प्य[6] [7]नानासत्त्वेभ्यो जलदुर्ग[8]-सन्तरणायोत्सृज्य दद्यात् । ॐ [9]आदित्यपुराणोक्त-नौकादान[10]-फलप्राप्तिकामोऽह' नानासत्त्वेभ्यो[11] जलदुर्ग[12]-सन्तरणाय नौकां दास्ये ।

---

1 A omits the bracketed portion
2 A तृषार्त्तां मा
3 A चाब्रदानघ
4 A एतदुक्त
5 A काष्ठाभाभैर् for the bracketed portion
6 A ०कल्प
7 I. O. मानां for नाना
8 A ०दुग्ध
9 I. O. मद्यादित्य०
10 I. O. नौकादव
11 A नानासत्वे
12 A जलदुग्ध

[तथा :—

अश्वं वा यदि वा युग्मं शोभने वाथ पादुके ।
[ददते याचमानेभ्यो][1] ब्राह्मणेभ्यः सुसंयताः[2] ॥५॥
तेषां दिव्यानि यानानि रथा ध्वजपताकिनः ।
दुष्टः पन्था न चैवेह भविष्यति कदाचन ॥६॥

ब्राह्मणेभ्य इति बहुवचनं दातृबहुत्वापेक्षम् । [रथो गोयानम्][3] । [4]अस्तोकरूपमर्चितं यानमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । आदित्यपुराणोक्त-युग्मदान-फलप्राप्तिकामोऽहमेतद्युग्मं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । ][5]

नन्दिपुराणे :—

[योऽश्वं गजं रथञ्चापि][6] ब्राह्मणे प्रतिपादयेत् ।
स शक्रस्य वसेल्लोके[7] यथा शक्रो युगान् दश ।
प्राप्यान्ते[8] [चाथ मानुष्यं][9] राजा भवति ऋद्धिमान्[10] ॥७॥

अर्चिताय ब्राह्मणायार्चितं रथम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । नन्दिपुराणोक्त-रथदानफलप्राप्तिकामोऽहमेतं रथं ददानि । स्वस्तिमाविलोपाठान्ते[11] रथोऽयं प्रजापति-दैवत इति प्रतिग्रहीतृवाक्यम् । कामस्तुत्यादिकं पूर्ववत् । इशाग्रहणं स्वीकारः ।

विष्णुधर्मोत्तरे (३।३०६।३५-३६क) ।—

गोभिश्चतुर्भिः संयुक्तं रथं दत्त्वा द्विजातये ।
धान्यैर्वस्त्रैर्युतं शक्त्या शक्रलोकं व्रजन्ति ते ।
मानुष्यमासाद्य तथा भवन्ति वसुधाधिपाः ॥८॥

अर्चिताय ब्राह्मणायार्चितं यथाशक्ति धान्यवस्त्रसहितं वृषभचतुष्टययुक्तं रथम् ॐ

---

1 A ददाति यः प्रदानभ्वा for the bracketed portion
2 A सुसंयत:
3 A रथद्गोयानं for the bracketed portion
4 A reads बद्वोक• and adds the following line just above it, स्वर्ग प्रत्येनृतभाषवचाच्छाबायामा-परिच्छिन्न:
5 I. O. omits the bracketed portion
6 I. O. योऽश्वराजं रथञ्चापि for the bracketed portion
7 A वसेल्लोके
8 I. O. प्राप्यान्त
9 A मानुषं लोकं for the b. p.
10 A निश्चितं
11 A पाठान्तरं

अथादि तुभ्यमन्तमुक्ता दद्यात्। विष्णुधर्मोत्तरोक्तगोचतुष्टययुक्त-रथदानफलप्राप्ति-[कामोऽ][1]-हमे-[तं धान्य][2]-वस्त्रसहितं गोचतुष्टययुक्तं रथं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३१२।१०ख-११क) :—

चतुर्भि-[3]स्तुरगैर्युक्तं सर्वोपकरणैर्युतम्।
रथं द्विजातये दत्त्वा[4] राजसूयफलं लभेत ॥९॥

अर्चिताय ब्राह्मणायार्चितं प्रसिद्धपताकाध्वजेशायुगरज्वादि[5]-रथोपकरणसहितमश्वचतुष्टय-युक्तं रथम् ॐ अथादि तुभ्यमन्तमुक्ता दद्यात्। राजसूयफलप्राप्तिकामोऽहमेतं तुरगचतुष्टय-युक्तं सर्वोपकरणयुतं रथं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३१२।१४-१५) :—

चतुर्भिः कुञ्जरैर्युक्तं रथं दत्त्वा द्विजातये।
समग्रभूमिदानस्य फलं प्राप्नोत्यसंशयम् ॥१०॥
भूमिः [सशैला सवना][6] सतोया दत्ता हि लोके भवतीह तेन।
इष्टांश्च लोकान् पुरुषः प्रयाति [7]सम्पूज्यमानस्त्रिदशैर्महात्मा[8] ॥११॥

अर्चिताय ब्राह्मणायार्चितं कुञ्जरचतुष्टययुक्तं रथम् ॐ अथादि तुभ्यमन्तमुक्ता दद्यात्। विष्णुधर्मोत्तरोक्त-रथदानफलप्राप्तिकामोऽहमेतं कुञ्जरचतुष्टययुक्तं रथं ददानि। स्वस्त्यादि-स्वीकारान्तं पूर्ववत्।

तथा (३।३०६।३६ख-३७क) :—

शकटस्य प्रदानन्तु विना गोभिर्महाफलम्।
विशेषेण [9]महाभागास्तस्य गोभिर्युतस्य च ॥१२॥

गोभिर्युतस्येति बहुवचनाद्वृषचतुष्टययुक्तस्येत्यर्थः। अर्चिताय ब्राह्मणायार्चितं [10]गो-रहितं शकटम् ॐ अथादि तुभ्यमन्तमुक्ता दद्यात्। विष्णुधर्मोत्तरोक्त-स्वरूपशकटदानफल-प्राप्तिकामोऽहमेतं शकटं[11] ददानि। स्वस्तिसावित्रीपाठानन्तरं शकटोऽयमुत्तानाङ्गिरोदैवत

---

1 A omits the bracketed portion
2 A तथान्यं for the bracketed portion
3 A omits स्तु
4 A द्विजाय दत्त्वा च
5 A युगन्धरादि॰
6 A ससैन्यवनवथा for the bracketed portion
7 I. O. सपूज्यमान॰
8 A. ॰महात्मभि:
9 A महाभाग तस्य
10 I. O. गोविहितं, A गोरहित
11 A एतच्छकटं

इति प्रतिग्रहीतृवाक्यम् । कामस्तुत्यादि पूर्ववत् । गोचतुष्टययुक्तशकटदाने तु विष्णुधर्मोत्तरोक्त-गोयुक्तशकटदान-[1]फलप्राप्तिकामोऽहमेतं गोचतुष्टययुक्तं शकटमिति दानवाक्ये विशेषः ।

तथा (३।३०६।३७ख) :—

सशस्यं शकटं दत्त्वा नाकलोके महीयते ॥१३॥

अर्चिताय ब्राह्मणायार्चितं धान्यादिशस्यसहितं शकटम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । सोत्कर्षनाकलोकप्राप्तिकामोऽहमेतं[2] सशस्यं शकटं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा (३।३१२।१) :—

नृवाह्यं पुरुषो यस्तु द्विजे सम्यक् प्रयच्छति ।

अश्वमेधफलं तस्य कथितं द्विजसत्तमाः ॥१४॥

द्विजसत्तमा इति सम्बोधनम् । नृवाह्यं दोलां सम्यगित्युपधानादिसहितामित्यर्थः । अर्चिताय ब्राह्मणायार्चितामुक्तरूपां दोलाम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । अश्वमेधफलप्राप्तिकामोऽहमेतत् [सोपधानं नृवाह्यं][3] ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत्[4] ।

तथा (३।३३१२।२क) :—

शिविकायाः प्रदानेन वह्निष्टोमफलं तथा ॥१५॥

कथितमिति सम्बन्धः । शिविका चतुर्दोलकम् । अर्चिताय ब्राह्मणायार्चितां शिविकाम्[5] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [6]वह्निष्टोमफलप्राप्तिकामोऽहमेतां शिविकां ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते श्रीदानसागरे यानदानावर्तः ।

1 A omits फल
2 I. O. °मेतत्
3 A नृवाह्यमुपधानादिसहितं for the bracketed portion
4 A adds शकटदानमिति यत् after this
5 A अर्चितमुक्तरूपां for अर्चितां शिविकाम
6 A अग्नि°

## अथ प्रजापतिदैवतगजदानावर्तः। (५६)

नन्दिपुराणे :—

योऽश्वं गजं रथं वापि [1]ब्राह्मणे प्रतिपादयेत्।
[स शक्रस्य वसेल्लोके][2] यथा शक्रो[3] युगान् दश।
[4]प्राप्यान्ते चाथ मानुष्यं[5] राजा भवति ऋद्धिमान्[6] ॥१॥

अत्र यजमानोऽर्चिताय ब्राह्मणायार्चितं गजं दद्यात्। ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं नन्दिपुराणोक्त-गजदानफलप्राप्तिकामोऽहमेतं गजं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा गजोऽयं प्रजापतिदैवत इत्युक्त्वा यथाशाखं कामस्तुतिं पठेत्। तत ॐ अद्य[7]कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामेतत् काञ्चनं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा गजमारोहेत्[8]।

विष्णुधर्मोत्तरे (३।३१२।१३) :—

सुवर्णकम्बु[9] मातङ्गं दत्त्वा विप्राय वै द्विजाः।
राजसूयाश्वमेधाभ्यां फलं विन्दत्यसंशयम् ॥२॥

[द्विजा इति सम्बोधनम्।][10] स्वर्णमयकम्बुसहितं[11] गजमर्चितं[12]-मर्चिताय [13]ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [विष्णुधर्मोत्तरोक्त-सुवर्णकम्बु-मातङ्गदानफलप्राप्तिकामोऽहमेतं सुवर्णकम्बुं मातङ्गं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३१२।१२) :—

कुञ्जरस्य प्रदानेन मनुष्यः स्वर्गविच्युतः।
राजा भवति लोकेऽस्मिन् यशोविक्रमसंयुतः ॥३॥

---

1 A ब्राह्मणेभ्यः प्रदापयेत्
2 A शक्रलोके वर्तते स for the bracketed portion
3 I. O. यथाशक्ति
4 A सम्प्राप्य चात्र, I. O. प्राप्यान्ते चाथ
5 I. O. मनिष्ठयं
6 A सागरमान
7 A omits अद्य
8 A °रोहयेत्
9 A °कक्षं
10 A omits the bracketed portion
11 A °कक्षासहितं
12 A omits अर्चितम्
13 A adds जन्मसंस्कारविधा before ब्राह्मणाय

ब्राह्मणायार्चितायार्चितं कुञ्जरम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। ][1] विष्णुधर्मोत्तरोक्त-[2]स्वरूपकुञ्जरदानफलप्राप्तिकामोऽहमेतं कुञ्जरं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३१२।११ख) :—

प्रदाय करिणीं[3] [4]सम्यगेतदेव फलं लभेत ॥४॥

[5]एतदेव फलमिति पूर्वोक्तं राजसूयफलम्।

तद् यथा (३।३१२।१०ख-११क) :—

चतुर्भिस्तुरगैर्युक्तं सर्वोपकरणैर्युतम्।
[6]रथं द्विजातये दत्त्वा राजसूयफलं लभेत ॥५॥

[7]सम्यग् विधिना प्रदायेति पृष्ठास्तीर्णपटी-कम्बल-घण्टा-[8]कम्बूपकरणसहितां दत्त्वेत्यर्थः। तदेवं करिणीमुक्तरूपामर्चिता[9]-मर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। राजसूयफल[10]-प्राप्तिकामोऽहमेतामलङ्कृतां करिणीं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते श्रीदानसागरे गजदानावर्तः।

1 A omits the bracketed portion
2 A सुरूप०
3 I. O. करिणां
4 I. O. सम्यमेतदेव
5 A तदेव
6 A कथं
7 I. O. सम्यं
8 A कम्बामुपकरण०
9 A omits मर्चिताम
10 A फ for फल

## अथ यमदैवताश्वदानावर्तः । (५७)

मनुः (४।२३१) :—

अश्विसालोक्यमश्वदः ॥१॥

[1]प्राप्नोतीत्यनुषज्यते । अत्र यजमानोऽर्चिताय ब्राह्मणायार्चितमश्वं दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यमश्विसालोक्यप्राप्तिकामोऽहमेतमश्वं ददानि । [2]अत्र प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वाऽश्वोऽयं यमदैवत इत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं[3] काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वाऽश्वं [4]कर्णे गृह्णीयात् ।

याज्ञवल्क्यः (१।२१०) :—

भूदीपाश्वान्नवस्त्राम्भस्तिलसर्पिःप्रतिश्रयान् ।

नैवेशिकस्वर्णरूप्यान्[5] दत्त्वा स्वर्गे महीयते ॥२॥

अर्चिताय ब्राह्मणायार्चितमश्वम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । सोत्कर्षस्वर्गप्राप्तिकामोऽहमेतमश्वं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

महाभारते :—

यावन्ति [6]रोमाणि हये भवन्तीह [7]नरेश्वर ।

तावतो वाजिदा[8] लोकान् प्राप्नुवन्ति महीपते ॥३॥

लोकान् देवलोकान् । अत्र [9]फलोत्कर्षादुत्कृष्टाश्वदानम् । [10]तदलार्चितमुत्कृष्टमश्वमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात । महाभारतोक्त-वाजिदानफलप्राप्तिकामोऽहमेतं वाजिनं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

स्कन्दपुराणे :—

[रथमश्वं गजं दासीं][11] कन्यां गृहमथापि वा ।

भूमिञ्च यः प्रयच्छेत्तु[12] स राजा भुवि जायते ॥४॥

1 A प्राप्नोत्यनुसज्यते, I. O. प्राप्नोतीत्यनुयुज्यते

2 A omits अत्र

3 A एतत् for इदं

4 A omits कर्णे

5 A नैवेसिकनंसयानद्‌दान, Yāj. ०भुर्य्यान्

6 A हयरोमाणि

7 A नरेश्वरा:

8 I. O. वाजिनो

9 A फलोत्कर्षमितत्कृष्टाश्वदानं

10 A omits तद

11 I. O. रथमश्वराजं दासीं वा for the bracketed portion

12 A प्रयच्छेत

अर्चिताय ब्राह्मणायार्चितमश्वम् ॐ अद्यादि तुभ्यमन्तमुच्चार्य दद्यात्। भूमिराज्यप्राप्तिकामोऽहमेतमश्वं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा :—

अश्वं [यस्तु प्रयच्छेत]¹ हेमचित्रं सुलक्षणम्।
स तेन कर्मणा [देवि गान्धर्वं]² लोकमश्नुते ॥५॥

अर्चिताय ब्राह्मणायार्चितं³ सौवर्णाभरणभूषितं शोभनलक्षणयुक्त⁴-मश्वमर्चितम् ॐ अद्यादि तुभ्यमन्तमुच्चार्य दद्यात्। गान्धर्वलोकप्राप्तिकामोऽहमेतं हेमचित्रमश्वं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

आदित्यपुराणे :—

अश्वं वा यदि वा युग्मं⁵ शोभने ⁶चाथ पादुके।
ददाति [यो वसेत् स्वर्गं]⁷ ब्राह्मणेभ्यः सुसंयतः⁸ ॥६॥
तेषां दिव्यानि यानानि ⁹रथा ध्वजपताकिनः।
दुष्टः पन्था न चैवेह भविष्यति कथञ्चन ॥७॥

ब्राह्मणेभ्य इति बहुवचनमश्वादिदेयबहुत्वापेक्षम् ¹⁰एकस्याश्वस्य बहुभ्यो दानप्रतिषेधात्। सुसंयतोऽनृतभाषण-पतित-¹¹[चाण्डालादिभाषण]-वर्जितः। तदत्रोक्तरूपो यजमानोऽर्चिताय ब्राह्मणायार्चितमश्वम् ॐ अद्यादि तुभ्यमन्तमुच्चार्य दद्यात्। आदित्यपुराणोक्ताश्वदानफलप्राप्तिकामोऽहमेतमश्वं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

नन्दिपुराणे :—

योऽश्वं रथं गजं वापि ब्राह्मणे प्रतिपादयेत्।
स शक्रस्य वसेल्लोके यथा शक्रो युगान् दश।
प्राप्यान्ते चाथ मानुष्यं ¹²राजते धरणीतले ॥८॥

अर्चिताय ब्राह्मणायार्चितं यथाशक्त्युत्कृष्टमश्वम् ॐ अद्यादि तुभ्यमन्तमुच्चार्य दद्यात्।

1 I. O. यस्य प्रयच्छेत् for the bracketed portion
2 A देवि गान्धर्व and I. O. देवो गान्धर्वं for the bracketed portion
3 A omits अर्चितं
4 A omits युक्त
5 A अश्वं
6 A वाथ
7 I. O. यत्प्रदानं वै for the bracketed portion
8 I. O. सुसंयताः
9 A रथ
10 A एकस्य only
11 I. O. चाण्डालाप for the bracketed portion
12 A वर्तते धरणितले, I. O. राजा भवति ऋद्धिमान्

नन्दिपुराणोक्ताश्वदानफलप्राप्तिकामोऽहमेतमश्वं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

आग्नेयपुराणे :—

पुष्ये वा जन्मनक्षत्रे अयने विषुवेषु च ।
ग्रहणे च व्यतीपाते संक्रान्तौ च दिनक्षये ॥९॥
[1]यानमश्वमनड्वाहं हेमरूप्यमणींस्तिलान् ।
ये प्रयच्छन्ति [2]पापेषु निरताः सर्वदा मुने ।
न तेषां भैरवः पन्था दत्वैषां [3]दानमित्युत ॥१०॥

पापेषु निरताः सर्वदेत्यभिधानात् [4]बहुतरपापक्षयार्थमिदं [5]देयम् । तथा च गौतमेनाश्वस्य [6]पापनिष्क्रयणद्रव्यत्वमुक्तम् । उक्तसमयानामन्यतमेऽर्चिताय ब्राह्मणायार्चितमश्वम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । आग्नेयपुराणोक्ताश्वदानफलप्राप्तिकामोऽहमेतमश्वं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

विष्णुधर्मोत्तरे (३।३१२।६ख-८क) :—

दानानामुत्तमं दानं प्रदानं तुरगस्य तु[7] ।
[8]वडवायाः प्रदानञ्च तथा बहुफलं स्मृतम् ॥११॥
तुरगं ये प्रयच्छन्ति सूर्यलोकं व्रजन्ति ते ।
यावन्ति [9]तस्य रोमाणि तावद्वर्षशतानि च ॥१२॥

[10][विष्णुधर्मोत्तर एव] शुक्लतुरङ्गदाने फलविशेष-[11]श्रवणादयं शुक्लेतरस्तुरङ्गः । अर्चिताय ब्राह्मणायार्चितं शुक्लेतरमश्वम्[12] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्तानन्तलङ्कृत-[13]श्वेतेतरतुरगदानफलप्राप्तिकामोऽहमेतं तुरङ्गमं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । [14][वडवादानवाक्ये तु विष्णुधर्मोत्तरोक्त]-वडवादानफलप्राप्तिकामोऽह-[15][मेतां वडवामिति विशेषः] । [स्वस्त्यादिस्वीकारान्तं पूर्ववत् । ][16]

---

1 A यानमश्वम गाश्चेव
2 A पापेभ्यो
3 A दानमित्युता
4 A बहुतरपापानां पापक्षयार्थमिदं
5 A omits देयम्
6 I. O. पापनिःक्रमेपनद्रव्यमुक्तं
7 A च
8 A उत्तरायाः
9 A यस्य
10 A विष्णुधर्मोत्तर विष्णुधर्मोत्तरोक्त for the bracketed portion
11 I. O. श्रवणाद्देयं
12 A शुक्लेतरवर्णमश्वम
13 A श्वेत for श्वेतेतर
14 A omits the bracketed portion
15 I. O. मेतं तुरगं ददानि for the bracketed portion
16 A omits the bracketed portion

[1][तथा (३।३१२।८ख-९क) :—

शुक्लं तुरङ्गमं दत्त्वा फलं दशगुणं भवेत् ।
गौर्यथा कपिला श्रेष्ठा तथैव तुरगः स तु ॥१३॥

दशगुणं शुक्लेतरप्रदानफलं प्राप्नोतीत्यर्थः । अर्चिताय ब्राह्मणायार्चितं शुक्लमश्वम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्त-शुक्लतुरङ्गदानफलप्राप्तिकामोऽहमेतं तुरङ्गं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । ]

तथा (३।३१२।९ख-१०क) :—

तुरङ्गमं सपर्याणं सालङ्कारं प्रयच्छतः ।
पुण्डरीकफलं प्रोक्तं नात्र कार्या विचारणा ॥१४॥

अर्चिताय ब्राह्मणाय घण्टिका-[चामरशंख][2]-मालिकासुवर्ण-[3]रचित-ग्रैवेयकतिलकान्वितं पर्याणादिना सज्जीकृतमर्चितमश्वम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । पुण्डरीकफलप्राप्तिकामोऽहमेतं सपर्याणं सालङ्कारं तुरङ्गमं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे अश्वदानावर्तः ।

---

1 I. O. omits the bracketed portion

2 A चामरशंख्या for the bracketed porion

3 I. O. •खचित•

# अथ [1]यमदैवतमहिषदानावर्तः । (५८)

आग्नेयपुराणे :—

[2]महिषीदानमाहात्म्यं कथयामि नृपोत्तम ।
पुण्यं पवित्रमायुष्यं सर्वकामफलप्रदम् ॥१॥
सूर्यचन्द्रग्रहे पुण्ये कार्तिक्यामयने तथा ।
शुक्लपक्षे चतुर्दश्यां सूर्यसंक्रान्तिवासरे ॥२॥
यदा वा[3] जीवितं वित्तं चित्तञ्च कुरुनन्दन ।
तदैव[4] देया महिषी संसारभयभीरुणा[5] ॥३॥
[6]सुपयोधरा सुश्रृङ्गी सुखुरा सुकटिस्तथा ।
प्रथमा तरुणी धेनुः सुशीला दोषवर्जिता ॥४॥

प्रथमा तरुणी धेनुः प्रथमप्रसूता धेनुरित्यर्थः । दोषवर्जिताऽव्यङ्गा ।

सुवर्णश्रृङ्गतिलका घण्टाभरणभूषिता ।
रक्तवस्त्रावृता[7] देया ताम्रदोहनकान्विता ॥५॥

सुवर्णश्रृङ्गतिलकेति[8] [9]सुवर्णश्रृङ्गी सुवर्णतिलका चेत्यर्थः । [10]घण्टाभरणभूषितेति घण्टया सौवर्णग्रैवेयकाभरणेन [11]च भूषितेत्यर्थः ।

पिण्याकपिटकोपेता सहिरण्या च शक्तितः ।
सप्तधान्ययुता [12]देया ब्राह्मणे वेदपारगे ॥६॥

पिण्याकपिटकोपेता [13]तिलखलीपूर्णपिटकयुता । सप्तधान्यानि परिभाषोक्तानि ।

पुराणपाठके तद्वत् सकुटुम्बे [14]सुखिदति ।
सहिरण्यां सवस्त्राञ्च [15]पुण्येऽह्नि विधिपूर्वकम् ॥७॥

---

1 A अथयमदैवतमहीषदानावर्तः
2 I. O. महिष०
3 A च
4 A तदेव
5 A संसारभयमोचनी
6 A स्वपयोधार
7 A रक्तवस्त्रवृता
8 A सुवर्णशृङ्गतिलक इति
9 A omits सुवर्णशृङ्गी
10 A घण्टाभूषितेति
11 I.O. न च
12 A येता
13 I. O. तिलखलीपूर्णपूकण्ठोलयुता
14 I. O. सुखीदति, A सुदीदति
15 A पुण्याह्

सहिरण्यां सवस्त्रामिति पुनरभिधान[1] वेदपारगव्यतिरेकेण सकुटुम्बदरिद्रपुराण-[2]पाठक-ब्राह्मणदानपक्षेऽपि हिरण्यवस्त्रयोरवश्य-[3]देयत्वार्थम् ।

दद्यान्मन्त्रेण राजेन्द्र पुराणविहितेन च ।
इन्द्रादिलोकपालानां [या राजन् [4]महिषी शुभा] ।
[5]तस्या दानं महाराज सास्तु मे सर्वकामदा ॥८॥
धर्मराजस्य [6][साहाय्ये यस्य पुत्रः प्रतिष्ठितः] ।
महिषासुरस्य जननी या सास्तु वरदा मम ॥९॥
दद्यात् सुदक्षिणां[7] तत्र ब्राह्मणाय पयस्विनीम् ।
प्रतिग्रहः स्मृतस्तस्याः पुच्छदेशे स्वयम्भुवा ॥१०॥

सुदक्षिणां[8] बहुदक्षिणाम् ।

एवं दत्त्वा विधानेन ब्राह्मणस्य गृहं नयेत् ।
क्षमापयेत्ततो विप्रं येन सन्तुष्टिमेष्यिवान् ॥११॥
अनेन विधिना दत्त्वा महिषीं[9] द्विजपुङ्गवे ।
सर्वकामानवाप्नोति इह लोके परत्र च ॥१२॥
[या स्त्री ददाति महिषीं सा राजमहिषी भवेत । ][10]
यज्ञयाजी भवेद्विप्रः क्षत्रियो विजयी भवेत् ।
धनाधिपो भवेद्वैश्यः शूद्रः सर्वार्थसंयुतः[11] ॥१३॥
तस्मान्नरेण दातव्या महिषी विभवे सति ।
पितृणां तारणार्थाय आत्मनः शुभमिच्छता ॥१४॥
[12]दशधेनुसमां राजन् महिषीं नारदोऽब्रवीत् ।
विंशत्समां तथा व्यासः सर्वदानोत्तमां कविः ॥१५॥
सगरेण ककुत्स्थेन धुन्धुमारेण गाधिना ।
दत्त्वाश्विननवम्यान्तु समुपोष्य जगत्पते ।

---

1 A पुनरभिधानात्
2 A पठनकारक०
3 A देयत्वं
4 A मातामहम महीतले for the b. p.
5 A तस्य
6 A देवस्य महिषी या प्रतिष्ठिता for the bracketed portion
7 and 8 I. O. प्रदक्षिणां
9 I. O. महिषा
10 I. O. omits the bracketed portion and A adds the following meaningless line after this, viz. तस्यो सह सुखं लिभे इहलोके परत्र च
11 A सर्वार्थसम्पत:
12 A दशवत्ससमा

[1]दत्ताः सतकृत्य विप्रेभ्यो महिष्यः सर्वकामदाः ॥१६॥
महिषीदानमाहात्म्यं यः शृणोति सदा नरः ।
सर्वपापविनिर्मुक्तः शिवलोके महीयते ॥१७॥

दुग्धाधिकान्तु महिषीं नवमेघवर्णां [2]संपुष्टपुत्रकवतीं [3]जघनाभिरामाम् ।
दत्त्वा सुवर्णतिलकां द्विजपुङ्गवाय लोकद्वयं विजयतीह किमत्र चित्रम् ॥१८॥

अत्रोक्तसमयानामन्यतमे यजमानो मन्त्रब्राह्मणयोरध्येतारं[4] ब्राह्मणं सकुटुम्बं [5]दरिद्रं [6]पुराणस्य पाठकं वा ब्राह्मणं वस्त्र-[7]गन्धादिभिरभ्यर्च्य [8]तस्मै यथोक्तरूपामुक्तालङ्कारोपकरणयुतां महिषीमर्चिताम् इन्द्रादीत्युक्तमन्त्रद्वयं पठित्वा दद्यात् । ॐ [9]अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यमाग्नेयपुराणोक्त-नियतकालिक-महिषीदानफलप्राप्तिकामोऽहमेतां सुवर्णशृङ्गीं सुवर्णतिलकां घण्टाभरणभूषितां [10]रक्तवस्त्रावृतां ताम्रदोहनकान्वितां पिण्याकपिटकोपेतां सकाञ्चनां सप्तधान्ययुतां पुत्रकवतीं महिषीं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा [11]महिषीयं यमदैवतेत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामेतत् काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा महिषीं पुच्छे गृह्णीयात् । आश्विनशुक्लनवम्यान्तु [12]नवमीपूर्वतरदिने प्रातः कृतनित्यो घटिकाधिक-[13]प्रहरत्रये हविष्यं भुक्त्वाऽऽचम्य शुचौ देश [14]उपविश्य पादौ प्रक्षाल्याचम्य[15] प्राङ्मुख उदङ्मुखो वा कृताञ्जलिः ॐ सूर्यः सोमः यमः कालः पञ्च महाभूतानि [16]आग्नेयपुराणोक्तसोपवासमहिषीदानकर्म मया कर्तव्यमित्युक्त्वा उदङ्मुखो[17] गृहीतजलपूर्णताम्रपात्रः सङ्कल्पं कुर्यात् । [ॐ श्व][18]उपोष्यापरदिने [आग्नेयपुराणोक्त-महिषीदानकर्माहं करिष्ये । ततो नियमेन सुप्त्वा अपरदिने कृतनित्य उपोष्यापरदिने ][19] नवम्यां कृतनित्यो

---

1 A दत्वा
2 I. O. संयुष्टपुत्रकवतीं, A सं'पुष्ट. पुत्रकवतीं
3 I. O. जघनाभिरामं, A जघनाभीरामां
4 I. O. ०रध्येतारं०, A adds तारं after this
5 I. O. दारिद्र्यं
6 A पुराणपाठकं
7 I. O. ०गन्धाभिरभ्यर्च्य
8 A omits तस्मै
9 A omits अद्य
10 A रक्तावस्त्रावृतां
11 I. O. महिषीं
12 A नवमीपूर्वतरदिने
13 A ०प्रहरत्रये
14 I. O. उपवेश्य
15 A प्रक्षाल्य
16 I. O. आग्नेयपुराणोक्तं सोपवासं महिषीदानकर्म
17 A adds वा after this
18 A श्व for the bracketed portion
19 I. O. omits the b. p.

महिषीं पूर्ववद्दद्यात्। दानवाक्ये आग्नेयपुराणोक्ताश्विनवमीविहितमहिषदानफलप्राप्तिकामो-ऽहमिति विशेषः।

विष्णुधर्मोत्तरे (३।३०६।६०ख) :—

वारुणं लोकमाप्नोति दत्त्वा च महिषीं [1]ततः ॥१६॥

[2]एतदनलङ्कृतमहिषीदानमग्रेऽलङ्कृतमहिषीदानश्रुतेः। अर्चिताय ब्राह्मणायार्चितां महिषीम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। वारुणलोकप्राप्तिकामोऽहमेतां महिषीं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३०६।५६क) :—

अलङ्कृतान्तु तां दत्त्वा गोदानफलमाप्नुयात् ॥२०॥

तां महिषीमलङ्कृतां यथाशक्ति हेमतिलकादिभिः। अर्चिताय ब्राह्मणायार्चितामलङ्कृतां महिषीम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। गोदानफलप्राप्तिकामोऽहमेतामलङ्कृतां[3] महिषीं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३०६।६१क) :—

महिषस्य प्रदानेन [4]याम्ये लोके महीयते ॥२१॥

ब्राह्मणायार्चिताय [5]महिषमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। गोतकर्ष-याम्यलोकप्राप्तिकामोऽहमेतं महिषं[6] ददानि। स्वस्त्यादिस्वीकारान्तं[7] पूर्ववत्।

इति महाराजाधिराज निःशङ्क शङ्कर-श्रीमद्बल्लालसेनदेव-विरचिते
श्रीदानसागरे महिषदानावर्तः।

---

1 V. D. नरः
2 A एतदलङ्कृत॰
3 A omits अलङ्कृतां
4 A याम्यलोके
5 A महिषीमर्चितं
6 A महिषीं
7 A ॰स्वीकारान्तं

# अथारोग्यदानावर्तः । (५९)

नन्दिपुराणे :—

धर्मार्थकाममोक्षाणामारोग्यं साधनं यतः ।
अतस्त्वारोग्यदानेन नरो भवति सर्वदः[1] ॥१॥
आरोग्यशालां कुर्वीत [2]महौषधिपरिच्छदाम् ।
[3]विदग्धवैद्यसंयुक्तां [4]भृत्यावसथसंयुताम् ॥२॥
वैद्यस्तु शास्त्रवित् प्राज्ञो दृष्टौषधपराक्रमः ।
औषधिमूलतत्त्वज्ञः[5] समुद्धरणकालवित् ॥३॥
[6][समुद्धरणकालवित् ] औषधोत्पादन[7]-समयज्ञः ।
[8]रसवीर्यविपाकज्ञः [9]शालिमानौषधिगणे ।
योगिवद्देहिनां देहं यो [10]धिया प्रविशेद्बुधः ॥४॥
[11]धातुपथ्याशयज्ञश्च निदानविदतन्द्रितः[12] ।
व्याधीनां [13]पूर्वलिङ्गज्ञस्तदुत्तरविधानवित्[14] ॥५॥
देशकालविधानज्ञश्चिकित्सा-[15]शयवित्तथा ।
अष्टाङ्गायुर्वेदवेत्ता मुष्टियोगविधानवित् ॥६॥
एवंविधः [16]शुभो वैद्यो भवेद् यत्नाभियोजितः ।
आरोग्यशालामेवन्तु कुर्याद् यो धर्मसंश्रयः[17] ।

---

1 I. O. सर्व्वतः
2 A महौषधपरिच्छदाम्
3 I. O. विद्धं०
4 I. O. भृत्यावसथ०
5 I. O. औषधीमूलतत्त्वज्ञः, A औषधीमूलपत्त्रज्ञः
6 A adds समुद्धरणं after the bracketed portion
7 A औषधोत्पादन०
8 A बल for रस
9 A शालिमामांसौषधीगणे
10 A यद् प्रेविशेद् बुधः
11 A धातुपथ्यामयज्ञश्च
12 I. O. ०तन्त्रितः
13 I. O. सर्व्व for पूर्व
14 A ०विधानविधावित्
15 A ०मयवित्तथा
16 A शुभे
17 A धर्मसंश्रयः

[1]स पुमान् धार्मिको लोके स कृतार्थः स बुद्धिमान् ॥७॥
सम्यगारोग्यशालायामौषधैः स्नेहपावनैः[2] ।
व्याधितं निरुजीकृत्य अप्येकं[3] करुणायुतः ॥८॥
प्रयाति ब्रह्मसदनं कुलसप्तकसंयुतः ।
[4]आत्मवित्तानुसारेण दरिद्रः [5]फलभाग् भवेत् ॥९॥
दरिद्रस्य कुतः शाला आरोग्याय भिषक् तथा ।
अपि मूलेन केनापि मर्दनाद्यैरथापि वा ।
स्वस्थीकृत्य[6] लभेन्मर्त्यः पूर्वोक्तं लोकमव्ययम् ॥१०॥
[वातपित्तकफानाञ्च चयापचयभेदिनाम् । ][7]
यस्तु [8]स्वल्पाभ्युपायेन मोक्षयेद् व्याधिपीडितान् ।
सोऽपि याति शुभान् लोकानवाप्यान् यज्ञयाजिभिः ॥११॥

अत्र यजमानो यथाशक्ति इष्टकादिरचितां शालामौषधपावनादिशालाञ्च तदुपकरणताम्र-कटाह-कलसादिपात्र-परिच्छद- नानाविधव्याधि-शान्त्युचितौषधगण--यथोक्तलक्षणवैद्यनानाविध-[9]परिचारकयुतां विश्रामगृहसहितामारोग्यायोपकल्प्य[10] ब्राह्मणप्रमुखनानासत्त्वव्याधिशान्त्यर्थ-मुत्सृज्य दद्यात् । तद् यथा—नन्दिपुराणोक्तारोग्यशालादानफलप्राप्तिकामोऽहं[11] ब्राह्मण-प्रमुखनानासत्त्वेभ्यो व्याधिप्रतीकारार्थमेतां महौषधिपरिच्छदां नियुक्तवैद्यां भृत्यावसथसंयुक्ता-मारोग्यशालामुत्सृजे । ततस्तन्निर्वाहाय[12] धनं ताम्रपट्टादिलिखितां[13] वा भूमिं दद्यात् । आरोग्यशालाकरणासमर्थस्तु स्वल्पौषधदानमात्र[14]-मन्त्रमर्दनादिभिश्च रोगिस्वस्थीकरणानुष्ठानमात्रं कुर्यात् ।

तथा च सम्वर्तः :—

ओषधस्नेहमाहारं रोगिणां रोगशान्तये ।
[ ददानो रोगरहितः][15] सुखी दीर्घायुरेव[16] च ॥१२॥

---

1 A स्वश्रेयान्
2 A स्नेहपारगैः
3 A मप्येक
4 I. O. आद्य०
5 A फलवान्
6 I. O. स्वस्तीकृते
7 A reads the bracketed portion as वातपित्तकफान्यानां च या पचयनेदिनाम्
8 A स्वप्राभ्युपायेन
9 I. O. ०परिचारयुतां
10 A ०आरोग्यशालामुपकल्प्य
11 I. O. adds एतं after this
12 A reads ततस्तन्निर्वाह and omits धनं
13 I. O. ०लिखितां
14 A मात्रदान for दानमात्र
15 A ददानो रोगविरहितः for the b. p.
16 A दीर्घारेव

तथा च महाभारते :—

[1]अकल्पप्रतिचर्या च अङ्गसंवाहनादि[2] च ।
अत्रैकैकं नृपश्रेष्ठ गोशताद्व्यतिरिच्यते ॥१३॥

[3]अकल्पो रोगी ।

तथा स्कन्दपुराणे :—

व्याधितं यस्तु विप्रर्षे [दीनं मूढ][4]-मचेतनम् ।
उद्धरेच्च यथाशक्त्या स मुच्येद्ब्रह्महत्यया ॥१४॥

तथा च नन्दिपुराणे :—

अञ्जनं यो नरो दद्याद्दृणां व्याधिनिवृत्तये ।
विप्राय सुमना याति [सूर्यलोकं महाद्युतिम्][5] ॥१५॥
तत्रासौ युगसृष्ट्यन्ते[6] तुष्टो[7] जयति[8] भूतले ।
[9]अरोगनयनो दिव्यो [10]भवते सुभगो नरः ॥१६॥

तथा विष्णुधर्मोत्तरे (३।३०२।२६, ३।३११।१३क) :—

[11]व्याधितस्यौषधं दत्त्वा प्राणदानफलं लभेत् ।
[12][रोगार्तं परिचर्याथ प्राणदानफलं लभेत् ] ॥१७॥
[13]तथौषधप्रदानेन रोगनाशमुपाश्नुते ॥१८॥

[14]तदेवं यथालाभं रोगिपरिचर्या तदङ्गमर्दनादिकम् । [15]चक्षूरोगिब्राह्मणेभ्यश्च यथालाभमञ्जनदानम् । रोगिभ्यश्च यथायथमौषधतैलघृतादिदानमाहारदानं[16] [17][प्रत्यासन्नमृत्युव्याधिविद्यातपःसम्पन्नब्राह्मणस्य च] यथाशक्ति प्रतीकारकरणञ्चानुष्ठानमात्रम् । तत्तत्फलार्थी यथेष्टकालं यथालाभं[18] कुर्यात् ।

1 I. O. अकल्प०
2 I. O. अङ्गसम्वाहनादि, A अङ्ग-सम्वाहनानि
3 I. O. अकल्पो
4 I. O. दीनमूढ for the bracketed portion
5 I. O. सूर्यलोके महामति: for the bracketed portion
6 I. O. युगसृष्यन्ते, A युगषष्टान्ते
7 A तृप्तो
8 I. O. जायति
9 A आरोगोनयनो
10 A भवति
11 A व्याधितस्यौषधं
12 I. O. omits the bracketed portion
13 I. O. तथैवौषधदानेन
14 A तदेव च
15 A चक्षू only, I. O. चक्षुरोगि०
16 A वदानं for दानं
17 I. O. प्रत्यासन्नमृत्युव्याधितविद्यातपः सम्पन्नब्राह्मणस्य च and A प्रत्यासन्न-व्याधिता--विद्यातपः-सम्पन्न--ब्राह्मणस्य for the bracketed portion
18 A यथालिखितं

विष्णुधर्मोत्तरे (३।३१६।२१ख) :—

आतुरेभ्यो धनं दत्त्वा दानं बहुफलं भवेत् ॥१६॥

[1]रोगिप्रतीकारार्थं [2]धनमुत्सृज्य दद्यात्। [3]ॐ विष्णुधर्मोत्तरोक्तातुर[4]-प्रतीकारार्थं धनदानफलप्राप्तिकामोऽहमातुरेभ्यो दातुं[5] धनमेतदुत्सृजे[6]। ततो यथेच्छं[7]-कालं यथाशक्ति रोगिभ्यो धनं दद्यात्।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे आरोग्यदानावर्तः।

1 A गोरिप्र॰ for रोगि॰
2 A धनमुत्सृजेत्। दद्यात
3 A omits ॐ
4 A omits आतुर
5 A omits दातुं
6 A ॰सृजे१
7 A यथेष्ट॰

## [1]अथाभयदानावर्तः । (६०)

विष्णुः :—

सर्वदानाधिकमभयप्रदानं[2] [तत्प्रदानेनाभीष्टं लोकमाप्नोति][3] ॥१॥

सम्वर्त :—

भूताभयप्रदानेन सर्वकामानवाप्नुयात् ।

दीर्घमायुश्च लभते सदा च सुसुखी[4] भवेत् ॥२॥

[5]मनुः (४।२३२) :—

[6]ऐश्वर्यमभयप्रदः ॥३॥

याज्ञवल्क्यः (१।२११) :—

गृहधान्याभयोपानच्छत्रमाल्यानुलेपनम् ।

यानं वृक्षं प्रियं शय्यां दत्त्वात्यन्तं[7] सुखी भवेत् ॥४॥

यमः :—

दत्त्वा [8]प्रतिश्रयं लोके तथा दत्त्वैव चाभयम् ।

तथा दत्त्वा क्षितिं [9]विप्रे ब्रह्मलोके महीयते ॥५॥

महाभारते :—

[10]लोभाद्द्वेषाद्भयाद्वापि यस्त्यजेच्छरणागतम् ।

ब्रह्महत्यासमं तस्य पापमाहुर्मनीषिणः ॥६॥

प्राणिनं वध्यमानं हि यः शक्तः समुपेक्षते[11] ।

स याति नरकं घोरमिदमाहुर्मनीषिणः ॥७॥

चतुःसागरपर्यन्तां यो दद्यात् पृथिवीमिमाम् ।

सत्त्वेभ्यो ह्यभयं दत्ते[12] तयोरभयदोऽधिकः[13] ॥८॥

1 A omits it

2 A reads दानं for प्रदानं and सर्व......दानं twice

3 A तत्प्रदानेनाभीष्टलोकप्राप्नोतीत्यर्थः

4 I. O. सुखिनो

5 A omits it

6 I. O. तस्पर्थं for ऐश्वर्य

7 A दत्त्वा चैवं

8 A परिश्रमं, I. O. प्रतिभयं

9 A लोके

10 A लोभान्मोहाद० I. O. लोभाद्द्वेषाद०

11 A समुपेक्षते

12 A दत्त्वा

13 A वराभयप्रदोऽधिकः

रामायणे (V. 93. 11 and 13, N. W.) :—

विनष्टः[1] पश्यतो यस्य रक्षितुः शरणागतः ।
आदाय सुकृतं तस्मात् सर्वं गच्छत्यरक्षितः ॥९॥
सुपर्याप्तविसृष्टस्य[2] नाश्वमेधस्य तत्फलम् ।
यत्फलं [3]जातसन्त्रासे रक्षिते शरणागते ॥१०॥

नन्दिपुराणे :—

महतां सूक्ष्मदेहानां[4] तथा च व्याधितात्मनाम् ।
[हिंस्राणां सौम्यमूर्त्तीणां][5] सर्वथा ह्यभवत् फलम् ॥११॥
वरमेकस्य सत्त्वस्य जीविताभयदक्षिणा ।
न तु विप्रसहस्रस्य गोसहस्रं सदक्षिणम्[6] ॥१२॥

तथा :—

अभयं पुरुषो[7] दत्त्वा [8]रक्षामन्विष्य देहिनः ।
[9]प्रयाति शक्रसालोक्यं [10]निश्चयात्मा नरोत्तमः ॥१३॥
न दानं तादृशं लोके विद्यते ह्यपरं भुवि ।
यादृशं ह्यभयं दानं सर्वभूतेषु गीयते ॥१४॥
न तपोभिर्महाघोरै-[र्न यज्ञैर्बहुदक्षिणैः][11] ।
प्राप्यन्ते गतयो दिव्या यथाभयभृतव्रतैः ॥१५॥

तथा :—

आत्मानं [दुःखितं दृष्ट्वा][12] तृणमात्रे चलत्यपि ।
मृत्युतश्च भयं घोरमभयं दानमाश्रयेत् ॥१६॥
तस्मादभयमेवादौ दद्याद् भूतेषु[13] सर्वदा ।
परलोकगतावास्तामभयेन[14] शुभोदयः ।
इहैव प्राप्यते सर्वमभयेन विपश्चितैः ॥१७॥

---

1 I. O. विनंष्टः
2 A सपर्य्यापरिसृष्टस्य
3 A यातसन्त्रासे
4 A महता सूक्ष्मदेहानां
5 A विश्वासोत्थ सुहृत्तीनां for the bracketed portion
6 A सदक्षिणां
7 I. O. वपुषो
8 A रक्षां मानुष्यदेहिनः
9 I. O. स याति
10 A विश्वपात् स
11 A यज्ञैर्बहुसुदक्षिणैः for the bracketed portion
12 A हि क्षितं मत्वा
13 I. O. दत्तेषु
14 I. O. ०मभयेन

तथा :—

*यस्मादभ्युदयावाप्तिर्यस्माद्धर्मस्य[1] साधनम् ।*

आश्रयेत् सर्वभूतानां दानं तदभयस्य तु ॥१८॥

सम्बाध्य तु पथि श्रान्तं[2] भीतं संरक्ष्य मानवम् ।

धर्मस्य पुरमायाति सर्वकामगुणोज्ज्वलम् ॥१९॥

नरसिंहपुराणे :—

निर्मलं [3]स्वर्गमाप्नोति तथा[4] भूतहिते रतः ॥२०॥

वराहपुराणे (२०६।१३-१४क) :—

भूतानुकम्पको[5] [6]ह्येष क्रियतामस्य चार्चनम् ।

वर्षाणामयुतं [7]चाद्धं [8]दिवि [9]तिष्ठेत [10]देववत् ।

[11][जायते च ततः] पश्चान्मानुषः सर्वपूजितः[12] ॥२१॥

तथा :—

अभयस्य प्रदानेन [13]सर्वकामानवाप्नुयात् ॥२२॥

विष्णुधर्मोत्तरे (३।३०२।६-१६, २१-२८) :—

अभयस्य प्रदानेन नरः स्यात् सर्वकामदः ।

अश्वमेधफलं तस्य यो रक्षेच्छरणागतम् ॥२३॥

शरणागतन्तु संत्यज्य नृशंसः पुरुषाधमः ।

बहून्यब्दसहस्राणि नरकं प्रतिपद्यते ॥२४॥

[14][नरकाच्च तथा मुक्त]-स्तिर्यग्योनिषु जायते ।

तत्रापि च तथाप्नोति [15]वधं बन्धाननेकशः ॥२५॥

[16]दैवान्मानुष्यमासाद्य चण्डालत्वमवाप्नुयात् ।

व्याधिदन्धवधैर्घोरैस्तत्रापि च स [17]युज्यते ॥२६॥

---

1 I. O. ०धर्म्मोऽस्य, A ग्रस्मद्धर्म्मस्य
2 I. O. श्रान्तं
3 A लोक०
4 A सर्व्व
5 I. O. भूतानुकर्म्मको
6 A ह्येतत्
7 A चार्थं, Varāha P. चार्यं
8 Varāha P. तत्र
9 I. O. and Varāha P. तिष्ठतु
10 Corrected from Varāha P. A वेरितः, I. O. वेदवित्
11 A यायते च ततः and Varāha P. जायते तु ततः for the bracketed portion
12 Varāha P. पश्चात् सर्व्वमानुषपूजितः
13 A सर्व्वान कामानवाप्नुयात्
14 A नरकाच्च्युत मुक्ता for the bracketed portion
15 A and V. D. वध
16 A देवान्मानुषसङ्गं च
17 A युज्यते

परित्राणन्तु यः कुर्याद् भीतस्य शरणैषिणः ।
स एकः पुरुषो लोके सर्वधर्मभृतां वरः ॥२७॥
वधभीतस्य यः कुर्यात् परित्राणं नरोत्तमः ।
शक्रलोकः स्मृतस्तस्य यावदिन्द्राश्चतुर्दश ॥२८॥
तमःप्रवेशभीतस्य परित्राणेन मानवः ।
ब्रह्मलोकमवाप्नोति नात्र कार्या विचारणा ॥२९॥
वधादपि परं पापं [1]चक्षुषा तु वियोजनम् ।
पार्थिवेन न तत् कार्यं कदाचिदपि कस्यचित्[2] ॥३०॥
तमःप्रवेशनं कृत्वा परेषां पुरुषाधमः ।
[3][अन्धत्वं ध्रुवमाप्नोति कल्पशेषमिति श्रुतिः] ।
अपि कल्पसहस्राणि तमसा न वियुज्यते[4] ॥३१॥
अङ्गच्छेदनभीतस्य कृत्वा त्राणमनिन्दिताः[5] ।
रुद्रलोकमवाप्नोति कल्पशेषमिति श्रुतिः ।
[6][कल्पादिसर्गे भवति ज्ञानयुक्तो] नरस्ततः ॥३२॥
कृत्वा बन्धनभीतस्य परित्राणं नरोत्तमः ।
सर्वबन्धविनिर्मुक्तो भृगूणां लोकमश्नुते ॥३३॥
विवासनाच्च भीतस्य कृत्वा त्राणं तथा नरः ।
सर्वदुःखविनिर्मुक्तः साध्यानां लोकमाप्नुयात् ॥३४॥
ताडनाद् यस्तु भीतस्य[7] परित्राणं समाचरेत् ।
[8][सर्वदुःखविनिर्मुक्तः साध्यानां लोकमाप्नुयात्][9] ॥३५॥
धनापहारभीतस्य त्राणं कृत्वा नरोत्तमः ।
[10]दानपुण्यमवाप्नोति लोकं धानदमेव च ॥३६॥

---

1 Corrected from V. D. I. O. चक्षुषा प्रविनियोजनं, A चक्षुषा त्रिजागनं
2 A कस्य च
3 A गान्धर्वं ध्रुवमाप्नोति यत्र यत्राभिजायते for the bracketed portion
4 A विपद्यते
5 A ०निन्दित:
6 A कल्पादिमत-ज्ञतयातथा for the bracketed portion
7 A भीतस्तु
8 A omits the bracketed portion
9 I. O. reads the present line and the preceding one twice
10 The present line and the following one are not found in V. D.

अवमानाच्च भीतस्य त्राणं कृत्वा नरोत्तमः ।
स्वर्गलोकमवाप्नोति पूजां देवगणात्तथा ॥३७॥
नरः कृतपरित्राणः पुण्यं किञ्चिद् यदाचरेत् । ]
[1]भागी तस्य [2]परित्राता नरः पुण्यस्य कर्मणः ॥३८॥
पशूनाञ्च मृगाणाञ्च पक्षिणाञ्च तथा द्विजाः ।
तृणद्रुमलतानाञ्च त्राणाद्भवति नाकभाक् ॥३९॥
बधकस्य गतं हस्ते [पशुं क्रीत्वा][3] नरोत्तमः ।
नाकलोकमवाप्नोति सुखी सर्वत्र जायते ॥४०॥
यावन्ति [4]पशुरोमाणि तावद्वर्षाणि मानवः ।
स्वर्गलोकमवाप्नोति यस्य त्राणं[5] करोत्यसौ ॥४१॥
अपि कीटपतङ्गस्य त्राणात् स्वर्गमुपाश्नुते[6] ।
बहून्यब्दसहस्राणि नात्र कार्या विचारणा ॥४२॥
चौरग्रस्तं [7][नृपग्रस्तं रिपुग्रस्तं] विमोक्षयेत् ।
[8]व्यालग्रस्तं तथा विप्राः सोऽश्वमेधफलं लभेत् ॥४३॥
विषमे तु तथा दुर्गे [9]सलिले वा हुताशने ।
निमग्नं यः परित्रायेत् सोऽश्वमेधफलं लभेत् ॥४४॥

सुव्यक्त एवायं ग्रन्थः । [10]सर्वथाऽविहितप्राणिवधो न कर्त्तव्यः । परेभ्यो वध-बन्धन-ताडन-[11]वित्रासनाङ्गच्छेदन-[12]धनापहारावमानादिभीताः प्रथमं [13]वाचा [14]समाश्वस्य यथाशक्ति

1 I. O. भावी
2 A त्राता
3 I. O. गच्छं कृत्वा for the b. p.
4 A पशुलोमानि
5 I. O. त्राणो
6 A स्वर्गमुपस्थितं
7 A नृपग्रस्तं विप्रग्रस्तं for the bracketed portion
8 I. O. व्याडग्रस्तं
9 A सवि
10 A सर्व्वथाविहितः, I. O. सर्व्वथा-विहित॰
11 A विभाङ्गच्छेदन
12 A धनापहारवादिभीता
13 A वा
14 I. O. समाश्वास्य

[1]तत्तदुक्तापद्भ्यो रक्षणीयाः। [2]पशुपक्ष्यादयश्च वधहस्तगताः क्रीत्वा मोचनीयाः। तस्मान्नेदं दानमनुष्ठानमात्रम्[3]। ततश्च सर्वदैवत्यमभयं महाभ्युदयहेतुरिति[4] बुद्धिस्थीकृत्याभयं दातव्यम्।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरेऽभयदानावर्तः।

1 I. O. तत्तद्दुर्गापद्भ्यो
2 I. O. and A पशुपक्ष्यादयश्च
3 A ॰दानं मनुष्याणां मात्रमिदं
4 A ॰हेतुरितीति

## [1][अथ वारदानावर्तः। (६१)

यमः :— ]

आदित्यवारे विप्राय सहिरण्यं सदैव तु।

यः [2]प्रयच्छत्यपूपन्तु तस्य तुष्यति वै [3]यमः ॥१॥

अत्र यजमानो ब्राह्मणायार्चिताय[4] सुवर्णसहितमपूपमर्चितं दद्यात्। ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं यमोक्तापूपदानफलप्राप्तिकामोऽहमेतं [5]सहिरण्यमपूपं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वाऽपूपोऽयं प्रजापतिदैवत इत्युक्त्वा यथाशाखं कामस्तुतिं पठेत्। तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वाऽपूपं स्पृशेत्। अत्र सदेति पदश्रवणाद् यथेच्छमावृत्त्या[6] दानम्।

विष्णुधर्मोत्तरे व्याधिनाशकदानानुवृत्तौ :—

[7]शरीररोगनाशाय सततं [8]सूर्यवासरे।

गुडाज्यलवणोपेतं सहिरण्यं द्विजातये ॥२॥

दद्यादपूपं [9][धर्मेण प्रीणयेच्च] दिवाकरम्।

आरोग्यमेतेनाप्नोति कामं वा [10]मनसेप्सितम् ॥३॥

ब्राह्मणायार्चिताय गुडघृतलवणसुवर्णसहितमपूपमर्चितम् ॐ अद्यादि तुभ्यमन्त[11]-मुक्त्वा दद्यात्। अमुककामोऽहमेतं गुडाज्यलवणहिरण्य[12]-सहितमपूपं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। अत्र सततमिति श्रवणाद् यथेच्छमावृत्त्या दानम्।

तथा (३।३१७।१६) :—

लवणाज्यगुडोपेतमपूपं सूर्यवासरे।

सहिरण्यं नरो दत्त्वा न रोगं स्त्वभिभूयते[13] ॥४॥

1 A omits the bracketed portion, I. O. तथा for अथ
2 I. O. प्रयच्छेत्यपूपन्तु
3 I. O. यम:
4 A अर्चिताय ब्राह्मणाय
5 A हिरण्यं
6 A ०वृत्त्य, I. O. ०वृत्तो
7 I. O. शारीरारोगस्तु नाशाय
8 A सूर्यवत्सरे
9 A धर्मश्च प्रणमेच for the bracketed portion
10 I. O. मनसे स्थितं
11 I. O. मन्त twice
12 I. O. omits हिरण्य
13 A रोगैर्नभिभूयते

सूर्यवारे ब्राह्मणायार्चिताय [1]लवणाज्यगुडसुवर्णयुक्तमपूपमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। रोगानभिभवप्राप्तिकामोऽहमेतं लवणाज्यगुडहिरण्यसहितमपूपं ददानि। स्वस्त्यादिस्त्रीकारान्तं पूर्ववत्।

[2]तथा (३।३१७।१७क) :—

एवंविधं चेन्दुदिने दत्त्वा सौभाग्यमाप्नुयात् ॥५॥

एवंविधं पूर्वोक्तमपूपम्। अत्र दानवाक्ये सौभाग्यप्राप्तिकामोऽहमिति विशेषः। अपरं समानम्।

तथा :—

सर्वतो दिवसे चान्द्रे स्नानमभ्यङ्गपूर्वकम्।
यः प्रयच्छति विप्राय सोऽपि रोगैर्विमुच्यते ॥६॥

विद्यातपःशालिने ब्राह्मणायार्चि-[तायाभ्यङ्गार्थं तैलं स्नानार्थं माषचूर्णादिकं चार्चितम्][3] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। रोगविमुक्तिकामोऽहमेतदभ्यङ्गसहितं स्नानं ददानि। प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते[4] स्नानमिदं विष्णुदैवतमिति वदेत्। कामस्तुत्यादि पूर्ववत्। अत्र सर्वत[5] इति पदश्रवणाद् यथेच्छमावृत्त्या[6] दानम्।

तथा (३।३१७।१७ख) :—

[7]काष्ठदानाद् भौमदिने शत्रुनाशमवाप्नुयात् ॥७॥

अत्र शत्रुनाशप्राप्तिकामोऽहमेतानि काष्ठानीति दानवाक्ये काष्ठानीमानि विष्णुदैवतानीति प्रतिग्रहीतृवचने च[8] विशेषः। सर्वमपरं तुल्यम्।

तथा (३।३१७।१८क) :—

बौधे क्रीडनकानाञ्च दानं बाले प्रशस्यते ॥८॥

क्रीडनकानां बालक्रीडोचितकन्दुकादीनाम्। अत्र बहुभ्यो दानम्। दानवाक्ये ॐ अद्यामुकामुकगोत्रेभ्योऽमुकामुकवेदामुकामुकशाखाध्यायिभ्योऽमुकामुकदेवशर्मभ्यो युष्मभ्यं बुधवारविहित-क्रीडनकदानफलप्राप्तिकामोऽहमेतानि क्रीडनकानि प्रतिग्रहीतृवचने क्रीडनकान्येतानि विष्णुदैवतानि दक्षिणावाक्ये च सम्प्रदानबहुत्वं विशेषः। अपरं तुल्यम्[9]।

---

1 I.O. लवणाघृत and A लवणगुडघृतं for लवणाज्यगुड
2 A omits तथा
3 A तमभ्यङ्गतैलस्नानं माषपूर्वादिकं मर्चितं for the bracketed portion
4 A स्वस्तीत्युक्त्वा सावित्रीपाठानन्तरं
5 I. O. सर्वत्र
6 I. O. and A ०वृत्त
7 A काष्ठदानात, I. O. काष्ठदाना
8 A omits च
9 A प्रथमदानसमानं

तथा (३।३१७।१८ख ) :—

जीवाद्धि वस्त्रदानेन परां पुष्टिमुपाश्नुते[1] ॥६॥

अत्र दानवाक्ये परमपुष्टिप्राप्तिकामोऽहमेतद्वस्त्रं प्रतिग्रहोतृवाक्ये वस्त्रमिदं बृहस्पतिदैवतमिति वस्त्रस्य दशाग्रहणपूर्वकं परिधानं स्वीकरणमिति विशेषः। [2]अपरं प्रथमदानतुल्यम्।

तथा (३।३१७।१६क) :—

सर्वत्र रतिमाप्नोति [3]शुक्रे दत्त्वा रतिं स्त्रियः[4] ॥१०॥

रतिं स्त्रिय[5] इति स्त्रीरत्युचितसुगन्धिताम्बूलवस्त्रादि। अत्र दानवाक्ये सर्वतोरतिप्राप्तिकामोऽहमेतानि रत्युचितद्रव्याणि [ प्रतिग्रहीतृवाक्ये च रत्युचितद्रव्याणि][6] एतानि विष्णुदैवतानि इति विशेषः। अपरं प्रथमदानवत्।

तथा (३।३१७।१६ख) :—

अभ्यङ्गं[7] सौरिदिवसे दत्त्वा जीवितमाप्नुयात् ॥११॥

अभ्यङ्गमभ्यङ्गार्थं [ तैलं घृतादि ][8]। अत्र दानवाक्ये दीर्घायुःप्राप्तिकामोऽहमेतमभ्यङ्गं[9] प्रतिग्रहीतृवाक्ये अभ्यङ्गोऽयं विष्णुदैवत इति[10] विशेषः।

तथा :—

शनैश्चरदिने दत्त्वा तैलं विप्रेषु शक्तितः।

नित्यमेव महाभाग रोगनाशमवाप्नुयात् ॥१२॥

यथेष्टसंख्यब्राह्मणेभ्योऽर्चितेभ्यस्तैलमर्चितम् ॐ अद्यादि [11]युष्मभ्यमन्तमुक्त्वा दद्यात्। रोगनाशप्राप्तिकामोऽहमेतत्तैलं ददानि। प्रतिग्रहीतारः स्वस्तिसावित्रीपाठान्ते तैलमिदं विष्णुदैवतमिति वदेयुः। कामस्तुत्यादि पूर्ववत्। अत्र नित्यमिति पद[12]-श्रवणाद् यथेच्छमावृत्त्या[13] दानम्।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते श्रीदानसागरे [14]वारदानावर्तः।

---

1 I. O. पुष्टिमुपश्नुते, A पृष्टिमुपापुते
2 I. O. अयम
3 A शक्रे
4 A स्त्रियाः
5 A स्त्रिया
6 A omits the bracketed protion
7 I. O. भङ्ग
8 A घृततैलादि for the b. p.
9 A ०मेतदभ्यङ्गं
10 I. O. विष्णुदैवतमिति
11 A तुभ्य०
12 A and I. O. omit पद
13 A ०वृत्त
14 A omits वार

# अथ नानादैवत-मासोप-[लक्षित-नियतदिनदानावर्तः][1] । (६२)

वामनपुराणे (६४।२३ख-२४क) :—

माघे मासि तिलाः शस्तास्तिलधेनुश्च दानव ।
[इध्मेन्धनादयश्चान्ये माधवप्रीणनाय तु][2] ॥१॥

[3]इध्मं होमोपयोगि दारु । इन्धनमग्निज्वलनोचितम् । आदिशब्देन शीतहरतैलतूल-पटीकम्बलाः[4] परिगृहीताः । अत्र [5]माघमासिकयथेष्टदिने यजमानोऽर्चिताय ब्राह्मणायार्चितान्[6] तिलान् दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुक[7]-शाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं माधवप्रीतये एतांस्तिलान् ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा तिला एते प्रजापतिदैवता इत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । तत ॐ अद्य कृतैतद्दान-प्रतिष्ठार्थं तुभ्यमहं दक्षिणामेतत् काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा तिलमुष्टिं[8] गृह्णीयात् । तिलधेनुर्धेनुदानावर्तस्थ[9]-मत्स्यपुराणोक्त-तिलधेनुदानविधिना[10] देया । अत्र कामनायां माधवप्रीतय इति विशेषः । इध्मादिदाने तु वाक्ये तिलपदस्थाने इध्मादीना-मन्यतमपदस्य [निवेशो विशेषः][11] । एतानि विष्णुदैवतानीन्धनानि एष बृहस्पतिदैवतः कम्बलः एषा[12] बृहस्पतिदैवता तूलपटी एतद्विष्णुदैवतं तैलमिति स्वस्तिसावित्रीपाठान्ते प्रतिग्रहीता ब्रूयात् । कामस्तुत्यादि पूर्ववत् । धेनोः पुच्छग्रहणमिध्मेन्धनयोः स्पर्शः कम्बलतूलपट्योर्दशाग्रहणपूर्वकं परिधानं [13]तैलस्य स्पर्शनञ्च स्वीकारः । एतानि चैकै-कदिने प्रत्येकमेकैकस्मै[14] देयानि । एकस्मिन्नेव वा दिने प्रतिद्रव्यं वाक्यं कृत्वा बहुभ्यो दद्यात् । एकैकस्मै वा समुदितानि । तत्र च दानवाक्ये एतांस्तिलान् एतां तिलधेनु-मेतानीध्मानि एतानीन्धनानि एतं कम्बलमेतां तूलपटीमेतत्तैलमिति निवेशो विशेषः[15] ।

---

1 A रक्षितनियतदानावर्त: for the bracketed portion
2 Vāmana P. reads the b. p. as इन्धनानि च देयानि माधवः प्रीयतामिति
3 A इध्म होमोपयोगी
4 A क for कम्बला:
5 A omits माघ
6 A ब्राह्मणाय
7 A omits वेदामुक
8 A तिलानमुष्टीं
9 A तिलधनुदानावर्त्तेषु for तिल... वर्तस्थ
10 I. O. विटपा for विधिना
11 A निवेश: for the bracketed portion
12 A एष
13 I. O. तैलस्पर्शनञ्च
14 A •कस्मिन
15 A adds विप्रो before विशेष:

प्रतिग्रहीतृवाक्यं पूर्ववत्। एवं वक्ष्यमाणमासोप-[1]लक्षितेषु मुद्गादिदानेष्वपि बोद्धव्यम्। [2]अशक्त उक्तानामेकमपि दद्यात्।

तथा (६५।२४ख-२५क) :—

फाल्गुने व्रीहयो मुद्गा[3] वस्त्रं कृष्णाजिनादिकम्।
गोविन्दप्रीणनार्थाय[4] दातव्यं पुरुषर्षभ[5] ॥२॥

आदिशब्देन कृष्णेतरमृगचर्मग्रहणम्। फाल्गुनमासिकाभीष्ट[6]-दिने अर्चिताय ब्राह्मणायार्चितानि षष्टिकादिधान्यानि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। गोविन्दप्रीतये एतान् व्रीहीन् ददानि। [स्वस्तिसावित्रीपाठान्ते व्रीहय एते प्रजापतिदैवता इति प्रतिग्रहीतृवाक्यम्][7]। कामस्तुत्यादि पूर्ववत्।

[8]व्रीहीणां [मुष्टिग्रहणञ्च स्वीकारः। मुद्गादिदानवाक्ये व्रीहिपदस्थाने मुद्गादीनामन्यतम-पदस्य निवेशो विशेषः। एते प्रजापतिदैवता मुद्गा एतद् बृहस्पतिदैवतं वस्त्रमेतत् प्रजापति-दैवतं कृष्णाजिनमेतद्विष्णुदैवतं मृगाजिनमिति [9]स्वस्तिसावित्रीपाठान्ते प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्][10]।

मुद्गानां मुष्टिग्रहणं वस्त्रस्य दशाग्रहणपूर्वकं परिधानं शेषयोः पुच्छग्रहणं स्वीकरणम्।

तथा (६५।२५ख-२६क) :—

चैत्रे [11]चित्राणि वस्त्राणि शयनान्यासनानि च।
विष्णोः प्रीत्यर्थमेतानि देयानि ब्राह्मणेष्वथ[12] ॥३॥

ब्राह्मणेष्विति बहुवचनं देयबहुत्वापेक्षम्। चैत्राभीष्टदिने अर्चिताय ब्राह्मणायार्चितानि [13]विचित्रवस्त्राणि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुप्रीतये एतानि विचित्र-वस्त्राणि ददानि। [14]स्वस्तिसावित्रीपाठान्ते वस्त्राण्येतानि बृहस्पतिदैवतानि इति

---

1 A ०लक्षितो मुद्गादि०, I. O. ०लक्षितेष्वेकादश्यमु
2 A अशक्तानामेकमपि देयं
3 A स्वद्ग, I. O. मद्गा, Vāmana P. वस्त्रं तथा for मुद्गा वस्त्रं
4 A ०प्रीणनयैव, Vāmana P. ०प्रीणनार्थम्
5 Vāmana P. पुरुषर्षभैः
6 A omits ष्ट
7 I. O. स्वस्तिसावित्रीपाठान्त प्रति-ग्रहीतृवाक्यं for the bracketed portion
8 Supplied by conjecture
9 A omits स्वस्ति
10 I. O. omits the bracketed portion
11 Vāmana P. विचित्र
12 Vāmana P. ब्राह्मणेषु च
13 I. O. चित्र०
14 A स्वस्त्यादि for स्वस्ति

प्रतिग्रहीतृवाक्यम्[1]। कामस्तुल्यादि पूर्ववत्। [दशाग्रहणपूर्वकं परिधानञ्च स्वीकारः। शयनादिदानवाक्ये [2]विचित्रवस्त्रपदस्थाने [3]शयनासनयोरन्यतरपदस्य निवेशो विशेषः। एतानि प्रजापतिदैवतानि शयनानि स्वस्तिसावित्रीपाठानन्तरं प्रतिग्रहीतृवाक्यम्[4]। कामस्तुल्यादि पूर्ववत्।][5] शयनासनयोः[6] स्पर्शः स्वीकारः।

तथा (६५।२६ख-२७क) :—

[गन्धानि माल्यानि [7]तथा][8] वैशाखे सुरभीनि च।
देयानि द्विजमुख्येभ्यो मधुसूदनतुष्टये ॥४॥

द्विजमुख्येभ्यो [9]विद्यातपःसम्पन्नेभ्यः। [10]वैशाखाभीष्टदिने ब्राह्मणेभ्योऽर्चितेभ्यश्चन्दनागुरुकुङ्कुम-[11][कर्पूरकस्तूरिका]-काकलीयकानामन्यतममर्चितं दद्यात्। ॐ अद्यामुकामुकसगोत्रेभ्योऽमुकामुकवेदामुकामुक[12]-शाखाध्यायिभ्योऽमुकामुकदेवशर्मभ्यो[13] युष्मभ्यं मधुसूदनतुष्टये एतान् गन्धान् ददानि। स्वस्तिसावित्रीपाठान्ते गन्धा एते गन्धर्वदैवता इति प्रतिग्रहीतृवाक्यम्[14]। कामस्तुल्यादि पूर्ववत्। स्पर्शश्च स्वीकारः। माल्यदाने गन्धपदस्थाने एतानि माल्यानीति निवेशो विशेषः। स्वस्तिसावित्रीपाठान्ते एतानि माल्यानि विष्णुदैवतानीति प्रतिग्रहीतृवाक्यम्[15]। कामस्तुल्यादि पूर्ववत्। स्पर्शश्च स्वीकारः।

तथा (६५।२७ख-ग)

[[16]उदकुम्भश्च [17]धेनुश्च][18]तालवृन्तं सचन्दनम्।
त्रिविक्रमस्य प्रीत्यर्थं दातव्यं साधुभिः सदा ॥५॥

सदेति [संवत्सरापेक्षं प्रति][19]-संवत्सरं जैष्ठे देयमित्यर्थः। अत्र वैशाखानन्तरोक्तत्वात्ति-

---

1 I. O. ०वाक्यं
2 I. O. चित्र०
3 I. O. शयनासनयो०
4 I. O. ०वाक्यं
5 A omits the bracketed portion
6 A शयनासनयो
7 A omits तथा
8 Vāmana P. गन्धमाल्यानि वस्तूनि for the b. p.
9 A विद्याने for विद्या
10 I. O. वैशाखेऽभीष्टदिने
11 A कपूर and I. O. कस्तूरिका for the bracketed portion
12 A वेदामुक for वेदामुकामुक
13 A ०मुकदेवशर्मभ्यो, I. O. ०मुकामुकशर्मभ्यो
14 I. O ०वाक्यं, A प्रतिग्रहीतृवाक्यं
15 I. O. ०वाक्यं
16 A उदककुम्भाश्च
17 A and I. O. धेनुश्च
18 Vāmana P. उदकुम्भाटाचनं च for the b. p.
19 I. O. omits the bracketed portion

विक्रमनामकत्वाच्चानुक्तज्यैष्ठग्रहणम् । अर्चिताय ब्राह्मणायार्चितानुदकुम्भान्[1] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [2]त्रिविक्रमप्रीत्यर्थमेतानुदकुम्भान्[3] ददानि । स्वस्तिसावित्रीपाठान्ते [उदकुम्भा एते वरुणदैवता इति][4] प्रतिग्रहीतृवाक्यम्[5] । कामस्तुत्यादि पूर्ववत् । स्पर्शनञ्च स्वीकारः । इतरदानवाक्ये [6]उदकुम्भपदस्थाने धेनु-सचन्दनतालवृन्तपदयोरन्यतरस्य निवेशो विशेषः । एषा रुद्रदैवता धेनुः एतद्विष्णुदैवतं सचन्दनं तालवृन्तमिति प्रतिगृहीतृवाक्यम्[7] । कामस्तुत्यादि पूर्ववत् । पुच्छग्रहणं स्पर्शनञ्च यथाक्रमं स्वीकारः ।

तथा (९५।३८) :—

उपानद्युगलं छत्रं [8][नवकम्बलकानि च] ।
आषाढे वामनप्रीत्यै दातव्यानि [9][तु भक्तितः] ॥६॥

नवकम्बलकानि तु[10] नूतनकम्बलाः । [11]आषाढाभीष्टदिने ब्राह्मणायार्चिताय उपानद्युगलमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । वामन-[प्रीत्यै एतदुपानद्युगलं ददानि । स्वस्तिसावित्रीपाठान्ते उपानद्युगलमिदमुत्तानाङ्गिरोदैवतमिति प्रतिग्रहीतृवाक्यम् । कामस्तुत्यादि पूर्ववत् । आरोहणञ्च स्वीकारः । छत्रादिदानवाक्ये उपानद्युगलपदस्थाने छत्र-नवकम्बलपदयोरन्यतरस्य निवेशो विशेषः । एतत् प्रजापति][12]-दैवतं छत्रमेते बृहस्पति-दैवता [13]नवकम्बला इति प्रतिग्रहीतृवाक्यम्[14] । कामस्तुत्यादिकञ्च पूर्ववत् । दण्डग्रहणं [15]दशाग्रहणपूर्वकाङ्गस्पर्शनञ्च यथाक्रमं[16] स्वीकारः ।

तथा :—

घृतञ्च क्षीरकुम्भाश्च घृतधेनुः फलानि च ।
श्रावणे श्रीधरप्रीत्यै दातव्यानि विपश्चितैः[17] ॥७॥

1 A °दककुम्भान्
2 A त्रिविक्रमस्य for त्रिविक्रम
3 A °दककुम्भान्
4 A वरुणदैवत इति for the bracketed portion
5 I. O. °वाक्यं
6 A उदककुम्भ°
7 I. O. °वाक्यं
8 Vāmana P. नवचामलकादिकम् for the b. p.
9 Vāmana P. विपश्चिता for the b. p.
10 I. O. omits तु
11 A आषाढेभीष्टदिने
12 A omits the bracketed portion
13 A कम्बला
14 I. O. °वाक्यं
15 A दशाग्रहणं पूर्वमङ्गस्पर्शनञ्च
16 I. O. omits it
17 I. O. विनिश्चितैः

[1]श्रावणाभीष्टदिने अर्चिताय ब्राह्मणायार्चितं घृतम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। श्रीधरप्रीत्यै एतद्घृतं ददानि। स्वस्तिसाविर्त्रीपाठान्ते घृतमिदं विष्णुदैवतमिति प्रतिग्रहीतृवाक्यम्[2]। कामस्तुल्यादि पूर्ववत्। स्पर्शनञ्च स्वीकारः। [3]अपरदानवाक्ये घृतपदस्थाने क्षीरकुम्भादिपदाना[4]-मन्यतमस्य [5]निवेशो विशेषः। एते विष्णुदैवताः क्षीरकुम्भाः एषा विष्णुदैवता घृतधेनुः एतानि[6] वनस्पतिदैवतानि फलानि इति प्रतिग्रहीतृवाक्यम्[7]। कामस्तुल्यादि पूर्ववत्। [स्पर्शनं पुच्छग्रहणं स्पर्शनञ्च यथाक्रमं][8] स्वीकारः। घृतधेनुदानं मत्स्यपुराणोक्तविधिना।

तथा (६५।३६) :—

मासि भाद्रपदे दद्यात् पायसं मधुसर्पिषा[9]।
हृषीकेशप्रीणनार्थं लवणं [10]सगुडौदनम् ॥८॥

[11]भाद्रपदाभिमतदिने ब्राह्मणायार्चिताय घृतमधुयुक्तं पायसमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। हृषीकेशप्रीणनार्थमेतत्सर्पिर्मधुसहितं पायसं ददानि। स्वस्तिसाविर्त्रीपाठान्ते [12]पायसमिदं प्रजापतिदैवतमिति प्रतिग्रहीतृवाक्यम्[13]। कामस्तुल्यादि पूर्ववत्। [स्पर्शनञ्च स्वीकारः।][14] [15]सगुडौदनलवणदानवाक्ये [16]एतत् गुडौदनसहितलवण-[मिति व्यूहनीयम्][17]। स्वस्तिसाविर्त्रीपाठानन्तरं लवणमिदं सोमदैवतमिति प्रतिग्रहीतृवाक्यम्[18]। [19][पूर्ववत् कामस्तुल्यादिकम्]। [20]स्पर्शनञ्च स्वीकारः।

---

1 A श्रावणभीष्टदिने
2 I. O. ०वाक्यं
3 A क्षीर for अपर
4 I. O. दानानाम् for पदानाम्
5 A निवेशन
6 A एता
7 I. O. ०वाक्यं
8 I. O. स्पर्शनपुच्छग्रहणं for the bracketed portion
9 Vāmana P. ०सर्पिषो
10 A सगुडौदनम्
11 I. O. भाद्रपदाद्यभिमतदिने, A भाद्रपदान्यतमदिने
12 I. O. पायसं प्रजा...मिति, A पायसोऽयं प्रजापतिदैवत इति
13 I. O. ०वाक्यं
14 A omits the bracketed portion
15 A सगुडौदन०
16 I. O. एतत् सगुडौदन०, A सगुडौदनसहितं
17 A मित्यूहनीयं for the b. p.
18 I. O. ०वाक्यं
19 A कामस्तुल्यादि पूर्ववत् for the bracketed portion
20 A पूर्ववत् before स्पर्शनञ्च

तथा (६२।४०) :—

[1]तिलांस्तुरङ्गं वृषभं दधिताम्रायसादिकम् ।
प्रीत्यर्थं पद्मनाभस्य [देयमाश्वयुजे नरैः][2] ॥९॥

आदिशब्देन पित्तलकांस्ययोर्ग्रहणम् । आश्विनाभिमतदिने ब्राह्मणायार्चिताय तिलानर्चितान् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । पद्मनाभप्रीत्यर्थमेतांस्तिलान् ददानि । स्वस्तिसावित्रीपाठान्ते तिला एते प्रजापतिदैवता इति प्रतिग्रहीतृवाक्यम्[3] । कामस्तुतिर्दक्षिणा च पूर्ववत् । [4]मुष्टिग्रहणञ्च स्वीकारः । अपरदानवाक्ये तिलपदस्थाने तेषामन्यतमपदस्य [5][निवेशो विशेषः] । एष यमदैवतस्तुरङ्गः एष विष्णुदैवतो वृषभः एतद्विष्णुदैवतं [दधि एतदग्निदैवतं][6] ताम्रं अयः पित्तलं[7] कांस्यं वेति स्वस्तिसावित्रीपाठान्ते[8] यथायथं [9]प्रतिग्रहीतृवाक्यम् । कामस्तुत्यादि पूर्ववत् । अश्वस्य [10]कर्णग्रहणं [11]वृषभस्य [12]पुच्छग्रहणं स्पर्शन[13]ञ्चेतरद्रव्याणां स्वीकारः ।

तथा (६५।४१) :—

रजतं कनकं [14]दीपं मणिमुक्ताफलादिकम् ।
दामोदरस्य प्रत्यर्थं दद्याद्वै[15] कार्त्तिके नरः ॥१०॥

आदिशब्देन प्रवालराजपट्टयोर्ग्रहणम् । कार्त्तिकाभिमतदिने ब्राह्मणायार्चिताय रजतमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । दामोदरप्रीत्यर्थमेतद्रजतं[16] ददानि । स्वस्तिसावित्रीपाठान्ते [17]रजतमिदमग्निदैवतमिति प्रतिग्रहीतृवाक्यम् । कामस्तुत्यादि पूर्ववत् ।

---

1 Vāmana P. नील तुरङ्गं
2 Corrected from Vāmana P. I. O. देयान्यश्वमनोजवैः and A देयाश्विमदिने नरैः for the bracketed portion
3 I. O. ०वाक्यं
4 A मुष्टिग्रहणं
5 A निवेश: for the bracketed portion
6 A omits the bracketed portion
7 A पित्तलि
8 I. O. स्वस्तिसावित्रीपाठान्ते, A स्वस्तिसावित्रीपाठे तु
9 I. O. ०वाक्यं
10 A कर्णं ग्रहणं
11 I. O. वृषस्य
12 A पुच्छे ग्रहणं
13 A ०ञ्चेति०
14 A दीप, I. O. दीपा, Vāmana P. दीपान्
15 A दद्यात्, Vāmana P. प्रदद्यात्
16 A ०द्रतं
17 I. O. रजतमिति अग्नि०

स्पर्शनञ्च स्वीकारः। अपरदानवाक्ये रजतपदस्थाने तेषामन्यतमपदस्य निवेशो विशेषः। [एतदग्निदैवतं कनकमेते विष्णुदैवता[1] दीपा एतद्विष्णुदैवतं [2]मुक्ताफलमेष विष्णुदैवतो राजपट्ट एतद्विष्णुदैवतं प्रवालमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। सर्वेषां स्पर्शनं स्वीकारः।

तथा (६५।४२) :—

खरोष्ट्राश्वतराश्वागाश्शकटाद्यमजाविकम्[3]।
दातव्यं केशवप्रीत्यै मासि मार्गशिरे[4] नरैः ॥११॥

खरो गर्दभः अश्वतरोऽइति प्रसिद्ध.। मार्गशीर्षेऽभिमतदिने ब्राह्मणायार्चिताय खरमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। केशवप्रीत्यै एतं खरं ददानि। स्वस्तिसावित्रीपाठान्ते खर एष यमदैवत इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। कर्णग्रहणं स्वीकारः। अपरदानवाक्ये खरपदस्थाने तेषामन्यतमपदस्य निवेशो विशेषः।][5] एष निरृतिदैवत उष्ट्रः एष विष्णुदैवतोऽश्वतरः एष प्रजापतिदैवतो गज एष उत्तानाङ्गिरोदैवतः शकटः एषप्रजापतिदैवतो रथः[6] एषोऽग्निदैवतोऽजः एष वरुणदैवतोऽ[7]विरिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। उष्ट्रारोहणम् अश्वतरपुच्छग्रहणं गजारोहणं[8] शकटारोहणं रथस्येशाग्रहणम् अजस्य कर्णग्रहणमवेः[9] पुच्छग्रहणं स्वीकारः।

तथा (६५।४३) :—

प्रासादनगरादीनि गृहप्रावरणादिकम्।
[10]नारायणस्य तुष्ट्यर्थं पौषे देयानि [11]शक्तितः ॥१२॥

प्रथमेनादिशब्देन [12]ग्रामखर्वटयोर्ग्रहणम्। द्वितीयेन शय्यायाः प्रावरणमुत्तरीयवस्त्रम्। पौषाभीष्टदिने[13] ब्राह्मणायार्चिताय प्रासादमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। नारायणतुष्ट्यर्थमेतं[14] प्रासादं ददानि। स्वस्तिसावित्रीपाठान्ते प्रासादोऽयं विष्णुदैवत

1 A विष्णुदैवतं
2 A मुक्ताफल
3 The entire line corrected from Vāmana P. I. O. and A have lacunæ here
4 Corrected from Vāmana P. I. O. and A ॰शीर्षे
5 I. O. omits the bracketed portion
6 A वृषभः
7 I. O. भविरिति
8 A omits it
9 I. O. ॰ग्रहणं वरे
10 Vāmana P. वामनस्य च
11 Vāmana P. भक्तितः
12 I. O. ग्रामकर्बटयोर्ग्रहणं, A ग्रामकर्वटग्रहणं
13 A पौषाभीष्टदिने
14 A तुष्ट्यर्थं again after this

इति प्रतिग्रहीतृवाक्यम्। कामस्तुल्यादि पूर्ववत्। प्रवेशश्च स्वीकारः। अपरदानवाक्ये प्रासादपद[1]-स्थाने [2]तेषामन्यतमपदस्य निवेशो विशेषः। [एतद्विष्णुदैवतं नगरम्][3] एष विष्णुदैवतो ग्रामः एष विष्णुदेवतः खर्वटः[4] एतद्विष्णुदैवतं गृहम् [5]एतद्बृहस्पतिदैवतं प्रावरणम् [6]एषा प्रजापतिदैवता शय्येति स्वस्तिसावित्रीपाठान्ते प्रतिग्रहीतृवाक्यम्। कामस्तुल्यादि पूर्ववत्। नगरग्रामखर्वटानां[7] [8]प्रदक्षिणकरणं गृहस्य प्रवेशो वस्त्रस्य दशाग्रहणपूर्वकं परिधानं [शय्यायाः स्पर्शनं स्वीकरणम्][9]।

महाभारते (अनु—६६।८) :—

माघे मासि तिलान् यस्तु ब्राह्मणेभ्यः प्रयच्छति।
सर्वसत्त्व[10]-समाकीर्णं नरकं स न पश्यति[11] ॥१३॥

[12]माघे मास्यभिमतदिने ब्राह्मणेभ्योऽर्चितांस्तिलान् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्त-माघमासिकतिलदानफलप्राप्तिकामोऽहमेतांस्तिलान् ददानि। स्वस्त्यादि-स्वीकारान्तं पूर्वोक्ततिलदानवत्।

तथा (अनु—६६।६२) :—

कौमुदे शुक्लपक्षे तु योऽन्नदानं करोति हि।
स सन्तरति दुर्गाणि [13]प्रेत्य चानन्त्यमश्नुते ॥१४॥

कौमुदे कार्तिके कार्तिकाभिमतशुक्लतिथौ अन्नमर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्त-कौमुदविहितान्नदानफलप्राप्तिकामोऽहमेतदन्नं ददानि। स्वस्तिसावित्रीपाठान्ते अन्नमिदं प्रजापतिदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुल्यादि पूर्ववत्। [14]स्पर्शश्च स्वीकारः।

पद्मपुराणे :—

रसधेनुं तथा दत्त्वा कार्तिके मासि पार्थिव।
सर्वान् कामानवाप्नोति नित्यं सुगतिभाग् भवेत् ॥१५॥

---

1 I. O. omits पद
2 A प्रासादमन्यतरपदस्य
3 A omits the bracketed portion
4 I. O. कर्व्वटः, A शकटः
5 A एतद्विष्णुदैवतं
6 A एष प्रजापतिदैवत॰
7 I. O. ॰कर्व्वटानां, A ॰कवटानां
8 I. O. पदक्षिण॰
9 A शय्यास्पर्शनं स्वीकारः for the bracketed portion
10 I. O. and A ॰सत्व
11 A गच्छति
12 A माघ
13 A लोकधामगत्व॰
14 A स्पर्शनच

[1]पार्थिवेति सम्बोधनम्। तथा दत्त्वेति पद्मपुराणोक्तरसधेनुपरिग्रहः। [2]कार्तिकमासिकाभिमतदिने धेनुदानविधिना[3] रसधेनुं दद्यात् मत्स्यपुराणपद्मपुराणयोर्विधानसाम्यात्। दानवाक्ये तु कामनायाममुककामोऽहमिति विशेषः।

विष्णुधर्मोत्तरे (३।३१७।६ख) :—

तिलप्रदानान्माघे तु याम्यं लोकं न गच्छति।

[4]माघमासिकाभीष्टदिने [5]ब्राह्मणायार्चिताय तिलानर्चितान् ॐ अद्यादि तुभ्यमन्तमुच्चार्य दद्यात्। यमलोकानुपसर्पणप्राप्तिकामोऽहमेतान् तिलान् ददानि। स्वस्तिसावित्रीपाठान्ते तिला एते प्रजापतिदैवता इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। मुष्टिग्रहणञ्च स्वीकारः।

तथा (३।३१७।१०क) :—

प्रियङ्गुं [6]फाल्गुने दत्त्वा प्रियो भवति भूतले ॥१६॥

[ प्रियङ्गुः काउनीति ][7]। [8]फाल्गुनमासिकाभिमतदिने अर्चिताय ब्राह्मणायार्चितां प्रियङ्गुम् ॐ अद्यादि तुभ्यमन्तमुच्चार्य दद्यात्। विष्णुधर्मोत्तरोक्तफाल्गुनविहितप्रियङ्गुदानफलप्राप्तिकामोऽहमेतां प्रियङ्गुं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३१७।१०ख) :—

चैत्रे चित्राणि वस्त्राणि [सौभाग्यं महदश्नुते][9]।

दत्त्वेति सम्बन्धः। चैत्रमासिकाभिमतदिने अर्चिताय ब्राह्मणायार्चितानि [10]विचित्रवस्त्राणि ॐ [अद्यादि तुभ्यमन्तमुच्चार्य दद्यात्][11]। महासौभाग्य-[12]प्राप्तिकामोऽहमेतानि [13]विचित्रवस्त्राणि ददानि। स्वस्तिसावित्रीपाठान्ते वस्त्राणीमानि बृहस्पतिदैवतानि इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। दशाग्रहणपूर्वकपरिधानं[14] स्वीकारः।

तथा (३।३१७।११क) :—

अपूपानां प्रदानेन वैशाखे स्वर्गमश्नुते ॥१७॥

---

1 A प्रार्थितेति
2 I. O. कार्त्तिके०
3 I. O. धेनुदानविषया
4 A माघे०
5 A ब्राह्मणायार्चिताय तिलान्
6 I. O. भाल्गुने
7 A कामानां for the bracketed portion
8 A फाल्गुने मासिकाभिमतं दिनं
9 A सौभाग्यमहमश्नुते for the bracketed portion
10 I. O. चित्र०
11 A स्वस्त्यादिस्वीकारान्तं पूर्ववत् for bracketed portion
12 A ०फलप्राप्तिकामो
13 I. O. omits विचित्र
14 I. O. ०पूर्वकं परिधानं

अपूपा पूया[1] इति प्रसिद्धाः । [2]वैशाखमासिकाभीष्टदिने [3]ब्राह्मणायार्चितायापूपानर्चितान् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । स्वर्गप्राप्तिकामोऽहमेतानपूपान् ददानि । स्वस्तिसावित्रीपाठान्ते अपूपा एते प्रजापतिदेवता इति[4] प्रतिग्रहीतृवाक्यम् । कामस्तुल्यादि पूर्ववत् । स्पर्शनञ्च स्वीकारः ।

तथा (३।३१७।११ख) :—

छत्रदानात्तथा ज्यैष्ठे सर्वकामानुपाश्नुते[5] ।

[6]ज्यैष्ठमासिकाभीष्टदिने [ ब्राह्मणायार्चिताय छत्रमर्चितम् ][7] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [8]अमुकप्राप्तिकामोऽहमेतच्छत्रं ददानि । स्वस्तिसावित्रीपाठान्ते छत्रमिदं प्रजापतिदैवतमिति प्रतिग्रहीतृवाक्यम् । कामस्तुल्यादि पूर्ववत् । दण्डग्रहणञ्च स्वीकारः ।

तथा (३।३१७।१२ग) :—

दत्त्वा चोपानहौ [9]स्वर्गमाषाढे ध्रुवमश्नुते ॥१८॥

आषाढमासिकाभिमतदिने ब्राह्मणायार्चितायार्चिते उपानहौ[10] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [ विष्णुधर्मोत्तरोक्ताषाढविहितोपान-][11]द्दानफलप्राप्तिकामोऽहमेते उपानहौ ददानि । स्वस्तिसावित्रीपाठान्ते उपानहावेत उत्तानाङ्गिरोदैवत इति[12] प्रतिग्रहीतृवाक्यम् । कामस्तुल्यादि पूर्ववत् । आरोहणं[13] स्वीकारः ।

तथा (३।३१७।१२क) :—

श्रावणे वस्त्रदानस्य कीर्तितं सुमहत् फलम् ।

[14]श्रावणमासिकाभिमतदिने [15]ब्राह्मणायार्चितायार्चितं वस्त्रम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्तश्रावणविहितवस्त्रदानफलप्राप्तिकामोऽहमेतद्वस्त्रं ददानि । स्वस्तिसावित्रीपाठान्ते वस्त्रमिदं बृहस्पतिदैवतमिति प्रतिग्रहीतृवाक्यम् । कामस्तुल्यादि पूर्ववत् । दशाग्रहणपूर्वकञ्च [16]परिधानं स्वीकारः ।

---

1 A पूपा
2 A वैशाखे मासि अभीष्टदिने, I. O. वैशाखे मासिकाभीष्टदिने
3 A ब्राह्मणायार्चितानपूपान्
4 A देवतानि for देवता इति
5 A सर्वकामसुपाश्नुते, I. O. सर्वकामानपाश्नुते
6 I. O. and A ज्येष्ठे for ज्यैष्ठ
7 A ब्राह्मणायार्चितं for the bracketed portion
8 A adds ॐ here
9 A स्वर्गं आषाढे ध्रुवमश्नुते
10 I. O. adds ददानि after उपानहौ
11 I. O. विष्णुधर्मोक्ताषाढविहितो for the bracketed portion
12 I. O. देवते for दैवत इति
13 A आरोहणञ्च
14 A and I. O. श्रावणे for श्रावण
15 A ब्राह्मणायातार्चिते
16 I. O. omits it

तथा (३।३१७।१२ख) :—

प्रोष्ठपदे [ तथा मासि ][1] प्रदानात् फाणितस्य तु[2] ॥१९॥

कीर्तितं सुमहत्फलमित्येतेन सम्बन्धः। फाणितं [खण्डशालुकमिति प्रसिद्धम् ][3]। [4]भाद्रमासिकाभिमतदिने ब्राह्मणायार्चितायार्चितं फाणितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोत्तरोक्तप्रोष्ठपदविहितफाणितदानफलप्राप्तिकामोऽहमेतत् फाणितं ददानि। स्वस्तिसावित्रीपाठान्ते फाणितमिदं [5]सोमदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। स्पर्शनञ्च स्वीकारः।

तथा (३।३१७।१३क) :—

आश्विने घृतदानेन रूपवानभिजायते ॥२०॥

[6]आश्विनमासिकाभिमतदिने [7]ब्राह्मणायार्चितायार्चितं घृतम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [8]उत्कृष्टरूपप्राप्तिकामोऽहमेतद्घृतं ददानि। स्वस्तिसावित्रीपाठान्ते घृतमिदं विष्णुदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। स्पर्शनञ्च स्वीकारः।

तथा (३।३०६।६४ख-६५क) :—

तक्रमाश्वयुजे मासि यस्तु दद्याद्द्विजातिषु।

आरोग्यं महदाप्नोति यत्र यत्राभिजायते ॥२१॥

[9]तक्रं चतुर्थभागजलप्रक्षेपमथितं दधि। आश्विनमासिकाभिमतदिने ब्राह्मणेभ्योऽर्चितेभ्यस्तक्रमर्चितम् ॐ[10]अद्यादि तुभ्यमन्तमुक्त्वा दद्यात। विष्णुधर्मोत्तरोक्ताश्विनविहिततक्रदानफलप्राप्तिकामोऽहमेतत्तक्रं ददानि। स्वस्तिसावित्रीपाठान्ते[11] तक्रमिदं विष्णुदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। तक्रस्पर्शनञ्च स्वीकारः।

तथा (३।३१७।१३ख) :—

कार्तिके दीपदानेन सर्वतोज्ज्वल्यमाप्नुयात्।

1 I. O. मासे for the bracketed portion
2 A and V. D. च
3 A खण्डशालुकेति प्रसिद्धं and I. O. खण्डशालुकं for the bracketed portion
4 A भाद्रपद for भाद्र
5 A विष्णु for सोम
6 I. O. आश्विने मासिका...दिने, A आश्विनमासिकाभीष्टदिने
7 A ब्राह्मणार्चितं
8 A ॐ ततः क्रमात् for उत्कृष्ट
9 A तक्रञ्च त्रिभाग॰
10 A omits ॐ
11 A adds तु here

कर्तिकमासाभिमतदिने अर्चिताय ब्राह्मणायार्चितं दीपं यथाशक्ति पित्तलताम्रलोहकाष्ठ-[1]मृत्तिकायष्टीनामन्यतमयष्टिस्थं[2] ज्वालयित्वा [3]ॐ अद्यादि तुभ्यमहन्तमुक्त्वा दद्यात्। [4]सर्व-त्रोज्ज्वल्यप्राप्तिकामोऽहमेतं दीपं ददानि। प्रतिग्रहीता [5]स्वस्तिसावित्रीपाठान्ते दीपोऽयं विष्णुदैवत इति वदेत्। कामस्तुत्यादि पूर्ववत्। स्पर्शनञ्च स्वीकारः। अत्रानुक्रमपि पित्तलयष्ट्यादिकं फलबाहुल्याद् यथाशक्ति ग्रहीतव्यम्।

तथा (३।३१७।१४क) :—

लवणं मार्गशीर्षे तु दत्त्वा सौभाग्यमश्नुते[6]।

मार्गशीर्षाभिमतदिने अर्चिताय ब्राह्मणायार्चितं लवणम् ॐ अद्यादि तुभ्यमहन्तमुक्त्वा दद्यात्। सौभाग्यप्राप्तिकामोऽहमेतल्लवणं[7] ददानि। [8]स्वस्तिसावित्रीपाठान्ते लवणमिदं सामदैवतमिति प्रतिग्रहीतृवाक्यम्। [9]कामस्तुत्यादि पूर्ववत्। स्पर्शनञ्च स्वीकारः।

तथा (३।३१७।१४ख) :—

पौषे कनकदानेन परां पुष्टिं तथैव च ॥२२॥

[10]अश्नुत इत्यनुवर्तते। पौषमासिकाभिमतदिने ब्राह्मणायार्चितायाभिमतपरिमाण-मर्चितं कनकम् ॐ अद्यादि [तुभ्यमहन्तमुक्त्वा दद्यात्। अतिशयितपुष्टिकामोऽहमेतत् कनकं ददानि। स्वस्तिसावित्रीपाठान्ते [11]कनकमिदमग्निदैवतमिति प्रतिग्रहीतृवाक्यम्। काम-स्तुत्यादि][12]पूर्ववत्। स्पर्शनञ्च स्वीकारः।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
दानसागरे [13]मासोपलक्षितनियतदिनदानावर्तः।

1 I. O. मृत्तिकायस for मृत्तिका
2 A ०यष्टिना
3 A omits ॐ
4 A सर्व्वत्रोज्ज्वल्यप्राप्तिकामो
5 A स्वस्त्येत्युक्त्वा for स्वस्ति
6 A सौभाग्यमाप्नुयात्
7 I. O. ०मेतं लवणं
8 A स्वस्त्यादि for स्वस्ति
9 A कामस्तुत्यादिकं
10 A प्राप्नुत
11 A कनकमग्निदैवतमिति
12 A repeats the bracketed portion
13 I. O. मासोपलक्षिताभियतदिन-दानावर्त्तः, A मासोपलक्षितनियत-दानावर्त्तः

## [1][अथ नानादैवतानियतमासिक[2]-तिथिदानावर्तः] । (६३)

विष्णुधर्मोत्तरे ( ३।३१७।२७ख—३१क ) :—

प्रतिपद्यथ पुष्पाणां द्वितीयायां घृतस्य च ।
तृतीयायान्तु वस्त्राणां चतुर्थ्यां कनकस्य तु ।
पञ्चम्यान्तु फलानां वै षष्ठ्यां स्नानस्य मानदाः[3] ॥१॥

स्नानस्य स्नानीयतैलामलकादेः[4] ।

[5]सप्तम्याञ्च सुपूपानामष्टम्याञ्च गुडस्य च ।
कुन्माषस्य नवम्यान्तु दशम्यां रजतस्य च ॥२॥

कुन्माषो राजमाषः[6] ।

एकादश्यां सुवर्णस्य द्वादश्यां वसनस्य च ।
त्रयोदश्यां सुगन्धानां सितायास्तदनन्तरम् ॥३॥

सुगन्धाश्चन्दनादयः[7] [8]सिता शर्करा ।

दानञ्च परमान्नस्य पञ्चदश्यां महाफलम् ॥४॥

परमान्नं पायसम्[9] । दानं[10] महाफलमिति सर्वत्रानुषङ्गो बोद्धव्यः । अत्र विशेषा-श्रवणादिच्छया[11] शुक्ले कृष्णे वा[12] पक्षे दानम् । तदत्र यजमानः प्रतिपदि[13] पुष्पाद्यर्-चितान्यर्चिताय[14] ब्राह्मणाय दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुक[15]-शाखाध्यायिनेऽ-मुकदेवशर्मणे तुभ्यं विष्णुधर्मोत्तरोक्त-[ प्रतिपद्विहित-पुष्प ][16]-दानफलप्राप्तिकामोऽहमेतानि

1 A omits the bracketed portion
2 I. O. ०मासक०
3 A मानद:
4 A स्नानीयतैलामलकादेः
5 A सप्तम्याञ्चापूपानां, I. O. सप्तम्याञ्च अपूपानाम्
6 A पश्चिमदेशे राजमाषप्रसिद्धो व्रीहि-विशेषः
7 A देवा: for दय:
8 A सित
9 A पायसः, I. O. पायस
10 A omits it
11 A विशेषभावादिच्छया
12 A च
13 I. O. प्रदिपदि
14 A पुष्पाद्यर्चिताय
15 A omits वेदामुक
16 A प्रतिपद्विविहितपुष्प and I. O. पद्विहित for the bracketed portion

पुष्पाणि ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा पुष्पाण्येतानि वनस्पति-दैवतानीत्युक्त्वा यथाशाखं कामस्तुतिं पठेत्। तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा पुष्पाणि स्पृशेत्। तथा द्वितीयायां घृतदानवाक्ये विष्णुधर्मोत्तरोक्तद्वितीयाविहित-घृतदानफलप्राप्तिकामोऽहमेतद्घृत-मिति निवेशनीयम्। स्वस्तिसावित्रीपाठानन्तरं घृतमिदं विष्णुदैवतमिति प्रतिग्रहीतृ-वाक्यम्। कामस्तुत्यादि पूर्ववत्। तृतीयायां वस्त्रदानवाक्ये विष्णुधर्मोत्तरोक्ततृतीया-विहित-वस्त्रदानफलप्राप्तिकामोऽहमेतानि वस्त्राणीति निवेशनीयम्। स्वस्तिसावित्रीपाठा-नन्तरं वस्त्राणीमानि बृहस्पतिदैवतानीति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। दशाग्रहणपूर्वकं परिधानं स्वीकारः। चतुर्थ्यां कनकदानवाक्ये विष्णुधर्मोत्तरोक्त-चतुर्थी-विहित-कनकदानफलप्राप्तिकामोऽहमेतत् [1]कनकमिति निवेशनीयम्। [स्वस्तिसावित्रीपाठा-नन्तरं कनकमिदमग्निदैवतमिति प्रतिग्रहीतृवाक्यम्][2]। [कामस्तुत्यादि पूर्ववत्।][3] पञ्चम्यां फलदानवाक्ये[4] विष्णुधर्मोत्तरोक्त-पञ्चमीविहित-फलदान[5]-फलप्राप्तिकामोऽहमेतानि फलानीति[6] निवेशनीयम्। स्वस्तिसावित्रीपाठानन्तरं[7] फलानीमानि[8] वनस्पतिदैवतानीति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। षष्ठ्यां स्नानीयद्रव्यदानवाक्ये विष्णुधर्मोत्त-रोक्त-षष्ठीविहित-[9]स्नानीयद्रव्यदानफलप्राप्तिकामोऽहमेतत् [10]स्नानीयद्रव्यमिति [11]निवेशनीयम्। स्वस्तिसावित्रीपाठानन्तरं [12]स्नानीयमिदं विष्णुदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। सप्तम्यामपूपदानवाक्ये विष्णुधर्मोत्तरोक्त-सप्तमीविहितापूपदानफलप्राप्तिकामोऽहमेतान-पूपानिति[13] निवेशनीयम्। स्वस्तिसावित्रीपाठानन्तरमपूपा एते प्रजापतिदैवता इति प्रति ग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। अष्टम्यां गुडदानवाक्ये विष्णुधर्मोत्तरोक्ताष्टमी-विहित[14]-गुडदानफलप्राप्तिकामोऽहमेतं[15] गुडमिति निवेशनीयम्। स्वस्तिसावित्रीपाठानन्तरं गुडोऽयं सोमदैवत इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। नवम्यां राजमाषदानवाक्ये

1 A काञ्चनं इति
2 A काञ्चनमिदं अग्निदैवतमिति स्वस्तिसावित्रीपाठान्ते प्रतिग्रहीता वदेत् for the bracketed portion
3 A omits the bracketed portion
4 I. O. कनकादिफलदानादिवाक्ये
5 A omits फलदान
6 A एतत् फलमीति for एतानि फलानीति
7 A ०पाठानन्त
8 A फलानीमा
9 I. O. स्नान for स्नानीयद्रव्य
10 I. O. स्नान for स्नानीयद्रव्य
11 I. O. निवेश्यं
12 I. O. स्नान for स्नानीय
13 I. O. एतान्यपूपानीति
14 A विष्णुधर्मोत्तरोक्त अष्टमीविहित
15 A ०मेतां

विष्णुधर्मोत्तरोक्तनवमीविहित कुल्माषदानफलप्राप्तिकामोऽहमेतं कुल्माषमिति निवेशनीयम्। स्वस्तिसावित्रीपाठानन्तरं कुल्माषोऽयं प्रजापतिदैवत इति प्रतिग्रहीतृवाक्यम्। कामस्तु-त्यादि पूर्ववत्। [1]मुष्टिग्रहणञ्च स्वीकारः। दशम्यां रजतदानवाक्ये विष्णुधर्मोत्तरोक्त-दशमीविहित-रजतदानफल[2]-प्राप्तिकामोऽहमेतद्रजतमिति निवेशनीयम्[3]। स्वस्तिसावित्री-पाठानन्तरं[4] [5]रजतमिदमग्निदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। एकादश्यां सुवर्णदानवाक्ये विष्णुधर्मोत्तरोक्तैकादशीविहितसुवर्णदानफलप्राप्तिकामोऽहमेतत् सुवर्णमिति निवेशनीयम्। स्वस्तिसावित्रीपाठानन्तरं सुवर्णमिदमग्निदैवतमिति प्रतिग्रहीतृ-वाक्यम्। कामस्तुत्यादि पूर्ववत्। द्वादश्यां वस्त्रदानवाक्ये विष्णुधर्मोत्तरोक्तद्वादशी-विहित-वसनदानफलप्राप्तिकामोऽहमेतद्वसनमिति निवेशनीयम्। स्वस्तिसावित्रीपाठानन्तरं वसनमिदं बृहस्पतिदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। दशाग्रहण-[6]पूर्वकं परिधानं स्वीकारः। त्रयोदश्यां चन्दनादीनामन्यतमसुगन्धद्रव्यस्य दानवाक्ये विष्णुधर्मोत्तरोक्तत्रयोदशीविहितसुगन्धदानफलप्राप्तिकामोऽहमेतान् सुगन्धानिति निवेश-नीयम्। स्वस्तिसावित्रीपाठानन्तरं सुगन्धा इमे गन्धर्वदैवता इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। चतुर्दश्यां शर्करादानवाक्ये विष्णुधर्मोत्तरोक्तचतुर्दशीविहित[7] सितादानफलप्राप्तिकामोऽहमेतां[8] सितामिति निवेशनीयम्। स्वस्तिसावित्रीपठानन्तरं सितेयं सोमदैवतेति प्रतिग्रहीतृवाक्यम्। [9]कामस्तुत्यादि पूर्ववत्। पञ्चदश्यां पायसदानवाक्ये विष्णुधर्मोत्तरोक्तपञ्चदशीविहितपरमान्नदानफल[10]-प्राप्तिकामोऽहमेतत् [11]परमान्नमिति निवेशनी-यम्। स्वस्तिसावित्रीपाठानन्तरं परमान्नमिदं प्रजापतिदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्।

कूर्मपुराणे (२।२६।२६-३०) :—

कृष्णाष्टम्यां विशेषेण धार्मिकाय द्विजातये।
स्नात्वाभ्यर्च्य यथान्यायं [12]पादप्रक्षालनादिभिः ॥४॥

1 A स्वस्तीयदन्तञ्च
2 A omits फल
3 I. O. निवेश्यं
4 A ०पाठानन्तं
5 A रजतमिदं चन्द्रदैवतमिति
6 A ०पूर्वकपरिधानं
7 I. O. ०विहि०
8 A ०मेतं
9 A कामस्तुत्वा
10 A omits फल
11 I. O परमान्नं
12 I. O. पादप्रक्षालनादिभिः

प्रीयतां मे महादेवो दद्याद्द्रव्यं स्वकीयकम् ।
सर्वपापविनिर्मुक्तः प्राप्नोति परमां गतिम् ॥६॥

स्वकीयमिति [1]सद्वृत्त्यार्जितं न रणादिना [2]परस्यापकृतमित्यर्थः । कृष्णाष्टम्यां शङ्करमुद्दिश्य पादप्रक्षालन-सुखोपवेशन-गन्धपुष्पधूपवस्त्रादिभिः [3]शिववत्तपःशालिनं ब्राह्मणमभ्यर्च्य तस्मै न्यायार्जितं द्रव्यम् ॐ अद्यादि तुभ्यमहंसम्प्रददे इत्युक्त्वा दद्यात् । सर्वपापविनिर्मुक्ति-[4]पूर्वक-[5]परमगतिप्राप्तिकामोऽहमेतदमुकं ददानि । [6]प्रीयतां मे महादेवः । ततः स्वस्तिसावित्रीपाठानन्तरम् [7]अमुकमिदम् अमुकदैवतमिति प्रतिग्रहीतृवाक्यम् । कामस्तुत्यादि पूर्ववत् । [8]प्रतिग्रहविध्युक्तश्च स्वीकारः ।

तथा :—

यस्तु कृष्णचतुर्दश्यां स्नात्वा देवं पिनाकिनम् ।
[9]आराधयेद्द्विजमुखं न तस्यास्ति पुनर्भवः ॥७॥

आराधयेद्द्विजमुखमिति[10] ब्राह्मणं शिवरूपं ध्यायन् [11]पाद्यार्घ्य-सुखोपवेशन-गन्धमाल्यधूपदीप[12]-वस्त्रादिभिः शिववत् पूजयित्वा तस्मै [13]स्वेष्टद्रव्यं [14]दद्यादित्यर्थः अष्टमीदाने[15] तथा श्रवणात् । स्नातः शिवमुद्दिश्य पाद्यादिभिरर्चिताय ब्राह्मणायार्चितमभिमतद्रव्यम्[16] ॐ अद्यादि तुभ्यमहंसम्प्रददे इत्युक्त्वा दद्यात् । अपुनर्भवप्राप्तिकामोऽहमेतदमुकं ददानि । पिनाकी प्रीयताम् । स्वस्तिसावित्रीपाठानन्तरम् [17]अमुकमिदममुकदैवतमिति प्रतिग्रहीतृवाक्यम् । कामस्तुत्यादि पूर्ववत् । [18]प्रतिग्रहविध्युक्तश्च स्वीकारः ।

तथा :—

अमावास्यामनुप्राप्तां[19] ब्राह्मणाय तपस्विने ।
यत्किञ्चिद्देवदेवेशं दद्यादुद्दिश्य शङ्करम् ॥८॥

1 A स्ववृत्त्यार्जितं
2 I. O. परस्याकृतमिति
3 I. O. शिववते य: शालिनं
4 A सर्वपापविमुक्ति०
5 A परमा०
6 A प्रीयतामिहादेव:
7 I. O. परमान्नमिदं
8 I. O. प्रतिग्रहविधुक्तश्च, A प्रतिग्रहश्च
9 I. O. omits the entire line
10 I. O. ०मुखेति
11 I. O. पाद्यार्घ०
12 A ०द्दीपा०
13 A इष्टद्रव्यं
14 I. O. पद्यादित्यर्थ:
15 A adds तु here
16 A ब्राह्मणायार्चितमेतद्द्रव्यं
17 A omits अमुकमिदं
18 A प्रतिग्रहविध्युक्त:
19 A ०प्राप्तं

ज्ञात्वेति शेषः ।

प्रीयतामीश्वरः सोमो महादेवः सनातनः ।
ममजन्मकृतं पापं तत्क्षणादेव नश्यति ॥६॥

शङ्करमुद्दिश्य तपःशालिने अर्चिताय ब्राह्मणायाभिमतं यत्किञ्चिद्द्रव्यमर्चितम ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । ममजन्मकृतपापक्षयकामोऽहमेतदमुकं ददानि । [1][प्रीयतामीश्वरः सोमो महादेवः सनातनः । स्वस्तिसावित्रीपाठानन्तरममुकमिदममुकदैवतमिति प्रतिग्रहीतृवाक्यम् । काममस्तुत्यादि पूर्ववत । ] प्रतिग्रहविध्युक्तश्च स्वीकारः ।

स्कन्दपुराणे :—

तिलपात्राणि यो दद्याद्विप्रेभ्यः शुद्धमानसः ।
अमावास्यां समासाद्य कृष्णानां सुसमाहितः ॥१०॥

कृष्णानामिति तिलविशेषणम् ।

स्वपितॄंस्तर्पयित्वा तु अक्षयं नरपुङ्गवः ।
पितृलोकं समाप्नोति चिरञ्च सुखमेधते ॥११॥

[2]यथेष्टामावास्यायामर्चितेभ्यो [3]ब्राह्मणेभ्यस्त्रीणि कृष्णतिलपूर्णान्यर्चितानि पात्राणि दद्यात् । ॐ [4]अद्यामुकसगोत्रेभ्योऽमुकामुकवेदामुकामुकशाखाध्यायिभ्योऽमुकामुकदेवशर्मभ्यो युष्मभ्यं स्कन्दपुराणोक्ततिलपात्रदानफलप्राप्तिकामोऽहमेतानि तिलपात्राणि ददानि । स्वस्तिसावित्रीपाठानन्तरं तिलपात्राणीमानि [5]विष्णुदैवतानीति [6]प्रतिग्रहीतृवाक्यम् । काममस्तुत्यादि पूर्ववत ।

महाभारते :—

द्वादश्यां पौर्णमास्यांश्च[7] मासि मासि [8]घृताक्षतम ।
ब्राह्मणेभ्यः प्रयच्छेद्यस्तस्य [9]धर्मं निबोधत ॥१२॥
सोमश्च वर्धते तेन समुद्रश्च महोदधिः ।
अश्वमेधचतुर्भागं फलं सृजति वासवः ॥१३॥

1 A omits the bracketed portion
2 A यथेष्टामावास्यायमर्चितेभ्यो
3 I. O. ब्राह्मणेभ्यः स्त्री
4 A omits अमुकसगोत्रेभ्यो
5 A विष्णुदैवतानि
6 I. O. प्रतिग्रहीतृवाक्यं
7 A पौर्णमास्यास्या
8 A घृताक्तं
9 A धर्मांश्च बोधत, I. O. धर्मंनिबोधित

ब्राह्मणेभ्य इति बहुवचनं मासि मासीति श्रवणात् [1]प्रयोगबहुत्वापेक्षम्। पौर्णमास्युप-[2]संहारात् द्वादश्यपि[3] शुक्ला ग्राह्या। यथेच्छकालं प्रतिमासिकशुक्लद्वादशीपञ्चदश्योरर्चिताय ब्राह्मणायार्चितान् यवान् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [महाभारतोक्तघृताक्षतदानफलप्राप्तिकामोऽहमेतं घृताक्षतं ददानि। स्वस्तिसावित्रीपाठानन्तरं घृताक्षतमिदं विष्णुदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्।][4] [5]मुष्टिग्रहणाश्च स्वीकारः।

इति महाराजाधिराजनिःशङ्कशङ्कर-श्रीमद्बल्लालसेनदेवविरचिते दानसागरेऽनियत-[6]मासिकतिथिदानावर्तः।

1 A बहुत्वापेक्षं
2 I. O. ॰सम्पादनात्
3 A द्वादश्य
4 A omits the bracketed portion
5 I. O. मुष्टिग्रहणञ्च
6 A and I. O. ॰मासक॰

# अथ नानादैवत-मासनियत-तिथिदानावर्तः । (६४)

आग्नेयपुराणे :—

यो ददाति द्विजेभ्यस्तु[1] तृतीयायामुपानहौ ।
वैशाखशुक्लपक्षे तु सच्छत्रकरकान्विते ॥१॥

द्विजेभ्य इति बहुवचनं प्रयोगबहुत्वापेक्षम् ।

न तस्य मनसो [दाहो मर्त्ये][2]-लोके हि जायते ।
सर्वव्याधिविनिर्मुक्तः श्रियं पुत्रांश्च विन्दति ॥२॥
कालादिह [3]यदा याति [4]यमलोकाद्द्विजोत्तमः ।
यानञ्चाश्वतरीयुक्तं सर्वहेमविभूषितम्[5] ॥३॥
दिव्याङ्गनाभिराकीर्णं [6]सर्वरत्नमयं शुभम् ।
उपतिष्ठति विप्रेन्द्र सर्वकामफलप्रदम् ॥४॥

अत्र यजमानो वैशाखशुक्लतृतीयायां ब्राह्मणायार्चिताय छत्रकमण्डलुसहितमुपानद्युग[7]-मर्चितम् [8]दद्यात् । [9]ॐ अद्यामुकसगोत्रायामुकवेदामुक[10]-शाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यमाग्नेयपुराणोक्त-छत्र-[11]करकान्वितोपानद्युगदानफल[12]-प्राप्तिकामोऽहमेतच्छत्रकरकान्वित-मुपानद्युगं[13] ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा उपानद्युग[14]-मिदमुत्ता-नाङ्गिरोदैवतमित्युक्त्वा यथाशास्त्रं कामस्तुतिं पठेत् । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा [सावित्रीं पठित्वा][15] उपानद्युगं[16] परिदध्यात् ।

---

1 A द्विजेभ्यश्च
2 I. O. देहो मर्त्य for the bracketed portion
3 A यमायाति
4 A यमलोका
5 A सर्वहैममयं शुभं
6 A सर्वरत्नविभूषितं
7 A •उपानद्युगञ्च॰
8 I. O. omits it
9 A omits ॐ
10 A omits वेदामुक
11 I. O. •करकान्वितो॰
12 A omits फल
13 A •करकान्वित उपानद्युगञ्चं
14 A उपानद्युगञ्च•
15 A omits the bracketed portion
16 A उपानद्युगञ्चं

विष्णुः :—

वैशाखे मासि तृतीयायामुपोषितोऽक्षतैर्वासुदेव-[1][मभ्यर्च्य तानेव हुत्वा दत्त्वा च] पापेभ्यः पूतो भवति । [2]यच्च तस्मिन्नहनि प्रयच्छति [3]तदक्षय्यमवाप्नोति ॥५॥

वैशाखशुक्लप्रतिपदि[4] कृतनित्यो घटिकाधिकप्रहरत्रयोपरि हविष्यं भुक्त्वाऽऽचम्य शुचौ देश उपविश्य पादौ प्रक्षाल्याऽऽचम्य प्राङ्मुख उदङ्मुखो वा कृताञ्जलिः ॐ सूर्य्यः सोमो यमः कालः पञ्च महाभूतानि [5]विष्णूक्त-वैशाखशुक्लतृतीयाविहित-सोपवासवासुदेवार्चन-होमयवदानकर्म मया कर्तव्यमित्युक्त्वा गृहीतोदकपूर्णताम्रपात्र[6] उदङ्मुखः सङ्कल्पयेत् । ॐ [7]श्व उपोष्या-परदिने[8] विष्णूक्त-शुक्लतृतीयाविहित वासुदेवार्चन-होमयवदान-कर्माहं करिष्ये । ततो नियमेन सुप्त्वा [9]द्वितीयायामुपोष्य तृतीयायां[10] प्रातः स्नात्वा यवैर्भगवन्तं वासुदेवं पूजयित्वा यवानेव वासुदेवाय स्वाहेत्यग्नौ[11] हुत्वा शूद्रो ब्राह्मणद्वारा होमं कारयित्वा ब्राह्मणायार्चितायार्चितान् यवान् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णूक्ताक्षतदानफलप्राप्तिकामोऽहमेतानक्षतान् ददानि । स्वस्तिमाविलीपाठान्तेऽक्षता एते प्रजापतिदैवता इति प्रतिग्रहीतृवाक्यम् । कामस्तुल्यादि पूर्ववत् । [12]मुष्टिग्रहणञ्च स्वीकारः । वस्त्वन्तरदाने [13]तु[14]तत्तद्वस्तुनाम तत्तद्देवतोत्कीर्त्तनं [15]स्वाकारश्चोन्नेयः । अक्षयतृतीया चैषा ।

विष्णुधर्मोत्तरे (३।३१७।३१ख-३२क) :—

[16]वैशाखे शुक्लपक्षे तु तृतीयायां द्विजोत्तमाः[17] ।
[18]यद्ददाति [19]नरश्रेष्ठास्तत्तदक्षयमुच्यते ॥६॥

अतएवाक्षयतृतीयेयं प्रसिद्धा ।

विशेषेण तथा [20]दानमक्षतानां महाफलम् ॥७॥ (३।३१७।३२ख)

[21]ब्राह्मणायार्चितायार्चितानक्षतान् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्त

---

1 A भ्यच्य न् व हुत्वा च for the b. p.
2 A यच्च तस्मिन्नहनि, I. O. तृतीयास्मिन्नहनि
3 A तदक्षयमवाप्नोति, I. O. तदकृष्यमाप्नोति
4 I. O. ०प्रद्दिपदि, A वैशाखशुक्ल-तृतीयापूर्वतरद्दिने
5 A विष्णुधर्मोत्तरोक्त०
6 A and I. O. ०पात्रं
7 A स्वः, I. O. श्व
8 A उपोष्य परेद्दनि
9 A तृतीयायाम्०
10 A adds तिथौ here
11 I. O. स्वाहुत्यग्नौ
12 A मुष्टिग्रहणं
13 I. O. omits तु
14 I. O. तद्दद्वस्तुनाम, A तद्वस्तुनाम
15 A स्वीकारस्वोन्नेयः, I. O. स्वीकारस्तून्नेयः
16 A वैशाख
17 A द्विजोत्तम
18 I. O. यद्ददानि
19 I. O. नरश्रेष्ठस्तत्तदक्षयमश्नुते, A नरश्रेष्ठास्तदक्षयमुच्यते
20 A दान
21 A ब्राह्मणायार्चितायाक्षतान्

शुक्लतृतीयाविहिताच्चतदानफलप्राप्तिकामोऽहमेतानच्चतान् ददानि। स्वस्त्यादिस्वीकारान्तं [1]पूर्ववत्। वस्त्वन्तरदाने तु [2]तत्तद्व्यनाम तत्तद्देवतोत्कीर्त्तनं [3]स्वीकारश्चोन्नेयः।

तथा (३।३१७।३४) :—

मासि भाद्रपदे शुक्लनवम्यां द्विजपुङ्गवाः।

[4]गोधूमभक्तान् सगुडान् दत्त्वा पुण्यमवाप्नुयात् ॥८॥

अर्चिताय ब्राह्मणायार्चितं[5] सगुडं गोधूमभक्तम्[6] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। पुण्यप्राप्तिकामोऽहमेतत्[7] सगुडं गोधूमभक्तं ददानि। प्रतिग्रहीता स्वस्तिमाविसापाठान्ते गोधमभक्तमिदं प्रजापतिदैवतमिति वदेत्। कामस्तुत्यादि पूर्ववत्। [8]स्पर्शनं स्वोकारः।

[9]यमः :—

कार्त्तिकस्य तमिस्रे तु [10]माघस्य नवमीतिथौ।

अहोरात्रोपितः स्नात्वा धर्मराजाय भोजयेत्।

विधिवद् ब्राह्मणान् शक्त्या [11]स्वर्गलोके महीयते ॥९॥

शक्त्येत्यभिधानाद् यथेष्टं [ब्राह्मणानां बहुत्वमत्र][12] विवक्षितम्। कार्त्तिककृष्णनवम्यां माघकृष्णनवम्यां वा दानम्। [13]तत्र दानदिनपूर्वतरदिने [14]पूर्ववद्धविष्यभोजनादि कृत्वा सूर्यादिदेवताभ्य उपवासपूर्वकयमोक्त-कार्त्तिककृष्णनवमीविहित ब्राह्मणभोजनकर्म मया कर्तव्यमिति निवेद्य ॐ श्व उपोष्योपरदिने धर्मराजोद्देशेन ब्राह्मणान् भोजयिष्यामीति सङ्कल्पयाष्टम्यामुपोष्य नवम्या धर्मराजोद्देशेन यथाशक्त्युपस्थापितब्राह्मणेभ्योऽर्चितेभ्या[15]ऽर्चितानि भोजनानि दद्यात्। ॐ [16]अद्यामुकसगोत्रेभ्याऽमुकवेदामुकशाखाध्यायिभ्योऽ[17]मुकदेवशर्मभ्याऽर्चितेभ्यो[18] युष्मभ्यं सोत्कर्षस्वर्गप्राप्तिकामोऽहमेतान्युपकरणसहितानि भोजनानि

1 I. O. अनन्तरोक्तदानवत्

2 A तद्वस्तुनाम तत्तद्दवताकीर्तनं

3 I. O. स्वीकारश्चोन्नेयाः, A स्वीकारश्चोन्नेयः

4 I. O. गोधूमभक्तान्

5 A ब्राह्मणाय

6 A adds अर्चितं here

7 A ॰मेतं

8 A स्पर्शनम

9 I. O. omits this

10 I. O. माघादि

11 A स्वर्गलोक

12 A ब्राह्मणानामत्वमत्र for the bracketed portion

13 I. O. तत्र दानपूर्वतरदिने, A तत्रानं दिनपूर्वतरदिने

14 A हविष्यभोजनादि

15 A omits अर्चितेभ्यो

16 A अद्यामुकामुकसगोत्रेभ्योऽमुकामुकवेदा॰

17 A ॰मुकामुकदेवशर्मभ्यो

18 A omits अर्चितेभ्यो

ददानि। धर्मराजः प्रीयताम्। प्रतिग्रहीतारः स्वस्तिसावित्रीपाठान्ते [1]भोजनानीमानि प्रजापतिदैवतानीत्युक्त्वा यथाशाखं कामस्तुतिं पठेयुः। [सम्प्रदानबहुत्वञ्च बहुवचनोहेन][2]। दक्षिणा पूर्ववत्। [3]स्पर्शः स्वीकारः। एवं माघ-[4]कृष्णनवम्यामपि दद्यात्। तत्र च निवेदनवाक्ये कार्त्तिकपदस्थाने माघपदनिवेशो विशेषः।

विष्णुः :—

पौष्यां समतीतायां कृष्णपक्षद्वादश्यां सोपवासस्तिलैः [5][स्नातः तिलोदकं] दत्त्वा[6] तिलैर्वासुदेवमभ्यर्च्य [7]तानेव हुत्वा दत्त्वा [8]भुक्त्वा च सर्वपापेभ्यः पूतो भवति ।१०॥

पौषपौर्णमासीमतिक्रम्य या कृष्णद्वादशी तस्याः पूर्वतरदिने पूर्ववद्धविष्यभोजनादि कृत्वा सूर्य्यादिदेवताभ्यो [9]विष्णूक्तसोपवास-[10]कृष्णद्वादशीविहिततिलस्नानतिलतर्पण-तिलद्रव्यकवासुदेवार्चन[11]-तिलहोम[12]-[तिलदानतिलभोजनकर्म मया कर्त्तव्यमिति निवेद्य श्व उपोष्यापरदिने तिलस्नान-तिलतर्पण-तिलद्रव्यकवासुदेवार्चन-तिलहोम-तिलदान][13]-तिलभोजनान्यहं करिष्ये इति सङ्कल्पं कुर्यात्। ततो नियमेन सुप्त्वा [14]एकादशीदिन उपोष्य द्वादश्यां प्रातस्तिलैः स्नात्वा पितॄंस्तिलैस्तर्पयित्वा तिलैर्वासुदेवमर्चयित्वा वासुदेवाय स्वाहेति तिलानग्नौ हुत्वा [शूद्रो ब्राह्मणद्वारा कारयित्वा][15] अर्चिताय ब्राह्मणायार्चितान् तिलान् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [16][सर्वपापपूतत्वप्राप्तिकामोऽहमेतांस्तिलान् ददानि। प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते तिला एते प्रजापतिदैवता इति वदेत।] कामस्तुत्यादि पूर्ववत्। [17]मुष्टिग्रहणञ्च स्वीकारः। ततो भोजनं तिलैः कुर्य्यात्।

यमः :—

माघान्धकारद्वादश्यां तिलैर्हुत्वा हुताशनम्।
तिलान् दत्त्वा च विप्रेभ्यः सर्वपापैः प्रमुच्यते ॥११॥

1 A भोजमानी
2 I. O. संप्रदानबहुवचनोहेन for the bracketed portion
3 A स्पर्शनञ्च
4 A omits कृष्ण
5 A स्नातत्तिलोदकं for the bracketed portion
6 I. O. हुत्वा
7 A तानव
8 A omits भुक्त्वा
9 A विष्णुविष्णु॰
10 A omits कृष्ण
11 A ॰वासुदेवपूजा
12 A तिलहोम twice
13 A omits the bracketed portion
14 A एकादशीदिनम्
15 A ब्राह्मणद्वारा for the bracketed portion
16 I. O. omits the bracketed portion
17 A स्वस्तिपाठश्च

माघकृष्णद्वादश्यां [1]कृतनित्यो [2]यथाविध्यग्निमुपसमाधाय [3]ॐ प्रजापतये स्वाहेति तिलान् हुत्वा शूद्रो ब्राह्मणद्वारा होमं कारयित्वा[ऽर्चितेभ्यो यथेष्टसंख्यब्राह्मणेभ्य][4]-स्तिलानर्चितान् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [5][सर्वपापप्रमोचकत्व]-प्राप्तिकामोऽहमेतान् तिलान् ददानि। स्वस्त्यादि-[स्वीकारान्तमनन्तरोक्त][6]-तिलदानवत्।

[7][ कूर्मपुराणे (२।२६।२५) :—

माघमासे[8] [तमिस्रे तु][9] द्वादश्यां समुपोषितः।
शुक्लाम्बरधरः कृष्णैस्तिलैर्हुत्वा हुताशनम् ॥१२॥
[प्रदद्याद् ब्राह्मणेभ्यस्तु [10]तिलानेव समाहितः।][11]
जन्मप्रभृति यत् पापं सर्वं तरति वै द्विजः॥१३॥

माघकृष्णद्वादश्याः पूर्वतरदिने [12]पूर्ववद्धविष्यभोजनादि[13] कृत्वा सूर्यादिदेवताभ्यः कूर्मपुराणोक्तमापवास-तिलदानकर्म मया कर्तव्यमिति निवेद्य ॐ[14] श्व उपोष्य द्वादश्यां तिलहोमपूर्वकतिलदानकर्माहं करिष्य इति सङ्कल्प्य नियमेन सुप्त्वा [15]परदिने कृतनित्य [16]उपोष्यापरदिने तथाविध्यग्निमुपसमाधाय प्रजापतये स्वाहेति तिलान् हुत्वा शूद्रो ब्राह्मणद्वारा होमं कारयित्वा यथेष्टसंख्यब्राह्मणेभ्योऽर्चितेभ्यस्तिलानर्चितान् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। जन्मप्रभृतिकृतपापतरणकामोऽहमेतान् तिलान् ददानि। स्वस्त्यादिस्वीकारान्तं पूर्वतिलदानवत्[17]।]

1 A कृतकृत्यो
2 A अग्निमुपसमाधाय
3 I. O. omits ॐ
4 A ऽर्चिताय ब्राह्मणाभ्यो for the bracketed portion
5 A यमः। सर्वपापप्रगमन for the bracketed portion
6 A स्वीकारान्तं मयनन्तरोक्त for the bracketed portion
7 I. O. reads the bracketed portion twice
8 A माघे मासि
9 K. P. तु विप्रस्तु for the b. p.
10 A तिलानेव
11 I. O. omits this line in the second and more correct reading of the previously indicated bracketed portion but reads it in the first and less correct reading of the same.
12 A omits पूर्ववत्
13 I. O. ०भोजनादिप
14 I. O. omits ॐ in both the readings
15 A अपरदिने
16 A उपोष्य परदिने
17 A पूर्ववत्

आग्नेयपुराणे :—

जलधेनुं प्रवक्ष्यामि सर्वकिल्विषनाशिनीम्[1] ।
[2]दत्ता या प्रीतये राजन् जलशायिजगत्पतेः[3] ॥१४॥
जलकुम्भं सभृङ्गारं सुवर्णरूप्यसंयुतम् ।
गर्भस्थानानि [4]रत्नानि दत्त्वा च सप्त मुख्यतः[5] ॥१५॥

सप्तरत्नानीति परिभाषोक्त-[नवरत्नमध्ये बहुमूल्यसप्तरत्नग्रहणम् ।

सप्तधान्ययुतं तद्वद् गुडधेनुर्यथा पुरा ।
सितवस्त्रयुगच्छन्नं [7]दूर्वापल्लवशोभितम् ॥१६॥

सप्तधान्यानि परिभाषोक्तानि ।][8] गुडधेनुर्यथा पुरेति आग्नेयपुराणोक्त-गुडधेन्वलङ्कारोपकरणग्रहणम्[9] ।

गन्धपात्रैर्युतं [10][दिक्षु सित]-यज्ञोपवीतिनम् ।
सच्छत्रं [11]सहोपानतकं विप्रैः परिवारितम् ॥१७॥

गन्धपात्रैर्गन्धयुतैः[12] पात्रैश्चतुर्भिः ।

चत्वारि तिलपात्राणि [13]खदिरोदुम्बराणि च ।
[14]दधिपात्रेण संयुक्तं [15]घृतक्षीरवता मुखे ॥१८॥

औदुम्बराणि ताम्रमयानि ।

द्वादश्यां शुक्लपक्षे तु आषाढस्य नृपोत्तम ।
उपोषितः समभ्यर्च्य केशवं जलशायिनम् ॥१९॥
गन्धपुष्पोपहारैश्च यथाविभवविस्तरात् ।
सङ्कल्प्य जलधेनुञ्च पूजयेद्वत्सकं तथा[16] ॥२०॥

---

1 A ०नाशिनी, I. O. ०नाशनम्
2 I. O. and A दत्तया
3 I. O. जलशायीजगत्पतिः, A जलसायीजगत्पतिः
4 A पात्राणि
5 I. O. सप्तमुखतः, A सप्तमुख्यातः
6 A सप्तपात्राणीति
7 I. O. पूर्व्वा०
8 A omits the bracketed portion
9 I. O. ०गुडधेन्वलङ्कारोपग्रहणं, A ०गुडधेनोरलङ्कारोपकरणं
10 A दिक्षयित for the bracketed portion
11 I. O. सोपानत्कं, A स उपानत्व
12 I. O. गन्धयुक्तैर्गन्ध for गन्धयुतैः
13 I. O. स्वदिरोदुम्बराणि
14 A दोषपात्रे
15 A घृतक्षीरतात्मने
16 I. O. omits it

[1]वत्सकं [2]जलकुम्भचतुर्थभागनिर्मितं गुडधेनौ तथा दर्शनात् ।
सितवस्त्रधरः शान्तो वीरो विगतमत्सरः ।
दद्यादनेन मन्त्रेण प्रीतये जलशायिनः ॥२१॥
जलशायी जगद्योनिः प्रीयतां मम केशवः ।
[3]पयोमेधी [4]पयोवासो पयसा शयनं हरेः ॥२२॥
पयोधरासि मे देवि इह लोके परत्र च ।
[5][इति मत्वा] जगन्नाथं विप्राय प्रतिपादयेत् ।
[6][अपक्कान्नेन तिष्ठेत] अहोरात्रमतः परम् ॥२३॥
अनेन विधिना दत्त्वा जलधेनुं [7]यतव्रतः ।
सर्वान् कामानवाप्नोति ये दिव्या ये च मानुषाः ॥२४॥
कदा शरीरे [8][न व्याधिमाप्नोति] [9]पुरुषो नृप ।
[10]दत्त्वा [11]जलमयीं धेनुं [12]विष्णुलोकञ्च गच्छति ॥२५॥

आषाढे शुक्लद्वादश्याः पूर्वतरदिने पूर्ववद्धविष्यभोजनादि कृत्वा सूर्य्यादिदेवताभ्य आषाढ-शुक्लद्वादशीविहित-[13]जलशायिपूजापूर्वक-जलधेनुदानकर्म[14] मया कर्तव्यमिति निवेद्य सङ्कल्पयेत् । [15]ॐ श्व उपोष्यापरदिने [16]जलशायिपूजापूर्वकजलधेनु-[17][दानकर्माहं करिष्ये] । ततो नियमेन सुप्त्वा [18]परदिन उपोष्य द्वादश्यां यथाशक्ति गन्धमाल्योपहारैः[19] केशवाय जलशायिने नम इति मन्त्रेण केशवं[20] जलशायिनं सम्पूज्य गोमयोपलिप्तभूभागे कुशानास्तीर्य्य तत्रोपरि कृष्णाजिनमास्तीर्य्य तथैव स्वल्पकृष्णाजिनं प्रमार्ज्य चतुर्हस्ताजिने जलशायिने[21]

1 I. O. and A omit it
2 I. O. जल । कुम्भ०
3 A पयोमधी, I. O. पयोमया
4 I. O. पयोवर्त्ती
5 A omits the bracketed portion
6 A अपक्कान्नवर्तितिष्ठेत् for the bracketed portion
7 A यतः व्रतः
8 I. O. नोपाधामाप्नोति and A नोवाधामाप्नोति for the bracketed portion
9 I. O. पुरुषोत्तम
10 A जत्वा
11 I. O. and A जलमयी
12 A विष्णुलोकं स
13 I. O. and A जलशायी०
14 A omits कर्म
15 I. O. omits ॐ
16 A जलशायी०
17 A दानमहं करिष्यामि for the bracketed portion
18 I. O. परदिने, A अपरदिन
19 A पुष्पोपहारैः
20 A केशव
21 I. O. omits it

जलकुम्भमयी[1]-[2]मत्र यथोक्तोपकरणयुतां [3]धेनुदानावर्तस्याग्नेयपुराणोक्त-गुडधेन्ववयवालङ्कारोपकरणयुतां धेनुचतुर्थभागजलनिर्मितैवंरूपवत्स[4]-सहितां जलधेनुमर्चिता[5]-मर्चिताय ब्राह्मणाय जलशायी जगद्योनिरित्यादि सार्द्धश्लोकं पठित्वा ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। आग्नेयपुराणोक्ताषाढ--शुक्लद्वादशीविहितजलधेनुदान[6]--फलप्राप्तिकामोऽहमेतां[7] लघ्वेण--काजिनस्थापितकुम्भस्थधेनुचतुर्थांशजलमय--सभृङ्गार--सुवर्णरौप्य--सप्त--[रत्न-सप्त][8]-- धान्ययुत-शुक्तिकर्णेक्षुपाद-[9]शुचिमुक्ताफलेक्षणसितसूत्रसिराल[10]-सितकम्बल-ताम्रपात्र[11]--पृष्ठ--सितचामर-रोमकविद्रुमौष्ठयुगल[12]-नवनीतस्तनक्षौमपुच्छकांस्योपदोहेन्द्रनीलतारक-नानाफलसमायुक्त-[13]गन्ध-करण्डकघ्राण सितवस्त्रयुगच्छन्न[14]--[15]दूर्वापल्लवशोभित-गन्धपात्रसहित-सितयज्ञोपवीति-[16]सच्छ-त्रोपानत्क---विष्टर---तिलपूर्णताम्रपात्रचतुष्टययुत---घृतक्षीरदधिपूर्णपात्रयुत--[17]मुखवत्ससहितां कृष्णाजिनस्थजलकुम्भमयीं भृङ्गारसुवर्णरौप्य-सप्त-[18]रत्न-सप्तधान्ययुतां शुक्तिकर्णामिक्षुपादां मुक्ताफलेक्षणां सितसूत्रसिरालां सितकम्बलगलकम्बलां[19] ताम्रपात्रपृष्ठां[20] सितचामररोमिकां विद्रुमौष्ठयुगां[21] नवनीतस्तनीं क्षौमपुच्छां कांस्योपदोहामिन्द्रनीलतारकां नानाफलसमायुक्तां गन्धकरण्डघ्राणां सितवस्त्रयुगच्छन्नां [22]दूर्वापल्लवशोभितां [23]गन्धपात्रचतुष्टययुतां सितयज्ञो-पवीतिनीं [24]सच्छत्रोपानत्कां [25]विष्टरतिलपूर्णताम्रपात्रचतुष्टययुतां दधिघृतक्षीरपूर्णपात्र-[26]संयुक्तमुखीं जलधेनुं ददानि। स्वस्तिसावित्रीपाठान्ते जलधेनुरियं विष्णुदैवतेति

---

1 A जलकुम्भं मयं
2 A मत्र यथोक्तोपकरणमुद्रां, I. O. मत्रत्यक्तोपकरणयुतां
3 A धेनुदानावर्त्तपि पुराणोक्त०
4 A ०निर्मितवत्स०
5 A omits अर्चिताम्
6 A ०दाना०
7 A ०मेत
8 A रत्न for the bracketed portion
9 I. O. चि for शुचि
10 A सितराल for सिराल
11 A omits पात्र
12 I. O. ०विद्रूमौष्ठयुग
13 A गन्धकघ्राण, I. O. गन्धकरण्डक-घ्रध
14 A ०च्छत
15 A दूर्व्वा०
16 A छत्रोपानह०
17 A मुखवत्सासहित
18 A रस०
19 I. O. सितकम्बलगलकम्बल
20 I. O. ताम्रकपात्रपृष्ठा, A ताम्रपात्र-कपृष्ठां
21 A विद्रमौष्ठयुतां
22 A सर्व्वा०
23 A omits it
24 A छत्रोपानत्क
25 I. O. विष्टरतिलपूर्णा०, A reads विष्टतिलकपूर्ण० and omits ताम्र
26 I. O. ०समायुक्तमुखीं

प्रतिग्रहीता वदेत्। कामस्तुतिर्दक्षिणा च पूर्ववत्। पुच्छग्रहणं स्वीकारः। [ततो दान-दिने अपक्वाशी[1] भवेत्।][2]

विष्णुधर्मे[3] :—

श्रावणे शुक्लपक्षे तु द्वादश्यां प्रीयते नृप।

गोप्रदानेन देवेशो[4] यत् पूर्वं कथितं तव ॥२६॥

यत् पूर्वं कथितमिति विष्णुधर्मोक्तालङ्कृतगवोदानग्रहणम्। ब्राह्मणायार्चितायालङ्कृत-गवीदानावर्तस्थ[5] विष्णुधर्मोक्त-गोविन्दस्नपनपूर्वकगोदानविधिना गामर्चितां दद्यात्। .

तथा :—

पौषशुक्ले तु तद्वच्च द्वादश्यां घृतधेनुकाम्।

घृतार्चिः-प्रीणनार्थाय[6] प्रदद्यात् फलदायिनीम् ॥२७॥

तद्वच्चेति विष्णुधर्मोक्त-घृतधेनुपरिग्रहः। ब्राह्मणायार्चिताय धेनुदानावर्तस्थ[7]-विष्णु-धर्मोक्त[8]-घृत[9]-धेनुदानविधिना[10] घृतधेनुमर्चितां दद्यात्।

[तथा :—

तथैव माघद्वादश्यां प्रदत्ता तिलगौर्नृप।

केशवं प्रीणयत्याशु सर्वकामांश्च[11] यच्छति ॥२८॥

अत्रापि तथैवेति विष्णुधर्मोक्ततिलधेनुग्रहणम्। ब्राह्मणायार्चिताय धेनुदानावर्तस्थ-विष्णुधर्मोक्ततिलधेनुदानविधिना तिलधेनुमर्चितां दद्यात्।][12] दानवाक्ये अमुककामोऽहमिति विशेषः।

तथा :—

ज्यैष्ठे मासि सिते पक्षे द्वादश्यां जलधेनुकाम्[13]।

[14]दत्त्वा यथावद्विधिना प्रीणयत्यम्बुशायिनम्[15] ॥२९॥

---

1 A अपक्वान्नाशी
2 I. O. omits bracketed portion
3 A adds तु after this
4 A देवेशो
5 A omits स्थ
6 A घृतार्चिप्रीणनायेम
7 A omits स्थ
8 A विष्णुधर्मोत्तरोक्त
9 I. O. omits घृत
10 I. O. विधया, A विधाय
11 I. O सर्वकामा
12 A omits the bracketed portion
13 I. O. जलधेनुदः
14 I. O. दत्ता
15 A •शायिनीं

*यथावद्विधिनेति विष्णुधर्मोक्त*[1]*-जलधेनुविधि*[2]*-ग्रहणम् । ब्राह्मणायार्चिताय धेनु-दानावर्तस्थ*[3]*-विष्णुधर्मोक्त जलधेनुमर्चितां दद्यात् ।*

*विष्णुधर्मोत्तरे (३।३१६।२६-३१) :—*

द्वादश्यां चैत्रशुक्लस्य चित्रवस्त्रप्रदो नरः ।
अक्षय्यं फलमाप्नोति नाकलोकञ्च गच्छति ॥३०॥
वैशाखमासद्वादश्यां [4]रुक्मदानात्तथैव च ।
छत्रोपानहयोर्दानाज्ज्यैष्ठे मासि द्विजोत्तमाः ॥३१॥

तथैव चेति प्रथममासोक्त-फलानुषङ्गः[5] ।

[6][आस्तीर्णं शयनं दत्त्वा प्रीणयेद्भोगिशायिनम् ।]
आषाढशुक्लद्वादश्यां श्वेतद्वीपे महीयते ॥३२॥

[7][आस्तीर्णं शयनं दत्त्वा श्वेतद्वीपे महीयते] [इति सम्बन्धः ।][8]

श्रावणे वस्त्रदानेन विष्णुलोके महीयते ।
गोदः प्रयाति गोलोकं मासि[9] भाद्रपदे द्विजाः ॥३३॥
प्रीणयेदश्वशिरसमश्वं[10] दत्त्वा तथाश्विने ।
विष्णुलोकमवाप्नोति कुलमुद्धरति स्वकम् ॥३४॥
सरोमवस्त्रदानेन कार्त्तिके दिवमाप्नुयात् ।
प्रदानं लवणानान्तु मार्गशीर्षे महाफलम्[11] ॥३५॥

[सरोमवस्त्रमित्यनेन तूलपटीकानां ग्रहणम्[12] ।][13]

तथा (३।३१६।३२) :—

[14][धान्यानाञ्च तथा] पौषे [15]दारूणां चाप्यनन्तरे ।
फाल्गुने सर्वगन्धानां नात्र कार्य्या विचारणा ॥३६॥

1 A विष्णुधर्मोत्तरोक्त
2 A जलधेधि०
3 A omits स्थ
4 A धूपदानात्तथैव
5 A फलानुषङ्गः, I. O. फलानुकर्षः
6 A reads the bracketed portion as स्वास्तीर्णशयनं दत्वा प्रीणयेज्जलशायिनं
7 A omits the bracketed portion
8 I. O. omits the bracketed portion
9 I. O. मासे
10 A श्वञ्जं for श्वं
11 A शुभच्युते
12 I. O. तूलपटीकाग्यानाञ्च
13 A omits the bracketed portion
14 Supplied from V. D. I. O. and A omit it
15 I. O. and A दारुवां

[1][अनन्तरे माघे] दानं महाफलमित्यनुषज्यते[2]। अत्र यत्रापि द्वादश्युल्लेखो नास्ति तत्रापि समभिव्याहारात् द्वादश्योन्नेया[3]।

चैत्रशुक्लद्वादश्यां यथाशक्ति नानावर्णवस्त्रमर्चित[4]-मर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोत्तरोक्त-द्वादशोविहितचित्र[5]-वस्त्रदानफलप्राप्तिकामोऽहमेतच्चित्र[6]-वस्त्रं ददानि। प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते वस्त्रमिदं बृहस्पतिदैवतमिति वदेत्। कामस्तुत्यादि पूर्ववत्। दशाग्रहणपूर्वकं परिधानञ्च[7] स्वीकारः। वैशाखशुक्लद्वादश्यां काञ्चनदानवाक्ये विष्णुधर्मोत्तरोक्त-द्वादशोविहित-रुक्मदानफलप्राप्तिकामोऽहमेतद्रुक्ममिति निवेश्यम्[8]। स्वस्तिसावित्रीपाठानन्तरं [9]रुक्ममिदमग्निदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। स्पर्शश्च स्वीकारः। [10]ज्येष्ठशुक्लद्वादश्यां छत्रोपानद्युग[11]-दानवाक्ये विष्णुधर्मोत्तरोक्त-द्वादशोविहित छत्रोपानद्युग[12] दानफलप्राप्तिकामोऽहमेतच्छत्रोपानद्युगमिति[13] निवेशनीयम्। स्वस्तिसावित्रीपाठानन्तरमेतच्छत्रोपानद्युगे प्रजापत्युत्तानाङ्गिरोदैवते[14] इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। छत्रदण्डग्रहणमुपानद्युगारोहणञ्च[15] स्वीकारः। आषाढशुक्लद्वादश्यां खट्वोपरि-तूलिकादिविरचित[16]-शयनीयदानवाक्ये सोत्कर्षश्वेतद्वीपप्राप्तिकामोऽहमेतच्छयनीयमिति[17] निवेश्यम्[18]। वाक्यानन्तरं प्रीयतां भोगिशायीति वदेत्। स्वस्तिसावित्रीपाठानन्तरम् एतच्छयनं प्रजापतिदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। स्पर्शश्च[19] स्वीकारः। श्रावणशुक्लद्वादश्यां वस्त्रदानवाक्ये सोत्कर्षविष्णुलोकप्राप्ति-[20]कामोऽहमेतद्वस्त्रमिति [21]निवेश्यम्। स्वस्तिसावित्री-

---

1 A अनन्तमाघे for the b. p.

2 A दानं महाफलमित्यनुसज्यते, I. O. omits महाफलम्

3 A अत यत्रापि .. तत्रापि स before पौषे in the 1st line of V. 36 above and अत्र यत्रापि द समभि...न्नेया here, the two together making up the present sentence.

4 A omits अर्चितम्

5 A ०विचित्र

6 A ०चित्रं

7 A ०पूर्वकः परिधानं

8 A निवेशनीयं

9 I. O. कर्म for रुक्म

10 A ज्यैष्ठे

11 A युगल for युग

12 A युगल for युग

13 A ०पानद्दयुगे इति

14 A उत्तानाङ्गीरसोदैवते

15 A छत्रोपानद्युगारोहणञ्च for उपानद्...णञ्च

16 A ०विरचित

17 A ०च्छयनमिति

18 I. O. reads निवेश्य and omits वाक्यानन्तर...वदेत्, A निवेशनीयम्

19 A स्पर्शनञ्च

20 A काममया for कामोऽहम

21 A निवेशनीयम्

पाठानन्तरं वस्त्रमेतद्बृहस्पतिदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। [1][दशाग्रहणपूर्वकं परिधानं] स्वीकारः। [2][भाद्रपदशुक्लद्वादश्यां गोदानवाक्ये गोलोकप्राप्तिकामोऽहमेतां गामिति निवेश्यम्[3]। स्वस्तिसावित्रीपाठानन्तरं गौरियं[4] रुद्रदैवतेति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। पुच्छग्रहणं स्वीकारः।] आश्विनशुक्लद्वादश्यामश्वदानवाक्ये विष्णुधर्मोत्तरोक्त-द्वादशीविहिताश्वदानफलप्राप्तिकामोऽह-[5]मेतमश्वमिति निवेश्यम्[6]। वाक्यानन्तरञ्च[7] प्रीयतामश्वशिरा इति[8] वदेत्। स्वस्तिसावित्रीपाठानन्तरमश्वोऽयं यमदैवत इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। कर्णग्रहणं[9] स्वीकारः। कार्त्तिकशुक्लद्वादश्यां तूलपटी[10]-दानवाक्ये स्वर्गप्राप्तिकामोऽहमेतत्सरोमवस्त्रमिति[11] निवेश्यम्[12]। स्वस्तिसावित्रीपाठानन्तरं वस्त्रमिदं बृहस्पतिदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। [दशाग्रहणपूर्वकं परिधानं][13] स्वीकारः। [मार्गशीर्ष[14]-शुक्लद्वादश्यां सैन्धव-साम्भरि-कर्कचाख्यलवणानामन्यतमदानवाक्ये विष्णुधर्मोत्तरोक्त-द्वादशीविहितान्येतानि[15] लवणान्यहं ददानि। स्वस्तिसावित्रीपाठान्ते लवणान्येतानि समुद्रदैवतानीति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्।][16] [17]पौषशुक्लद्वादश्यां धान्यदानवाक्ये विष्णुधर्मोत्तरोक्त-द्वादशीविहित-धान्यदानफलप्राप्तिकामोऽहमेतद्धान्यमिति[18] निवेश्यम्। स्वस्तिसावित्रीपाठानन्तरं[19] धान्यमिदं[20] प्रजापतिदैवतमिति[21] प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। [22][मुष्टिग्रहणं[23]स्वीकारः।] माघशुक्लद्वादश्यां दारुदानवाक्ये विष्णुधर्मोत्तरोक्त-द्वादशीविहित-

---

1 I. O. स्पर्शं and A दशाग्रहणपूर्वकम् for the bracketed portion
2 I. O. omits the bracketed portion
3 A निवेश्य
4 A गौरीयं
5 I. O. ०मेतदश्वमिति
6 A निवेशनीयम्
7 A वाक्यान्तरञ्च
8 I. O. शिरामिति
9 A कर्णग्रहणञ्च
10 A तूलपट्टी०
11 I. O. ०सरोममिति, A ०सरोमवस्त्रं
12 A निवेशनीयं
13 A omits परिधानं, I. O. स्पर्शनं for the b. p.
14 A मार्गशुक्ल०
15 A ०विहितमेतानि
16 I. O omits the bracketed portion
17 A पौषधान्यदान्यदानवाक्यं
18 A एतानि धान्यानीति for एतद्धान्यमिति
19 A ०पाठान्ते
20 A एतानि धान्यानि
21 A वामदेवत्यानि इति
22 A omits the bracketed portion
23 I. O. स्वस्तिग्रहणं

दारुदानफलप्राप्तिकामोऽहमेतानि दारूणीति निवेश्यम्[1]। स्वस्तिसावित्रीपाठानन्तरं दारूण्येतानि विष्णुदैवतानीति प्रतिग्रहीतृवाक्यम्। कामस्तुल्यादि पूर्ववत्। स्पर्शनं[2] स्वीकारः। फाल्गुनशुक्लद्वादश्यां परिभाषोक्त-[सर्वगन्धदानवाक्ये विष्णुधर्मोत्तरोक्त-द्वादशीविहित ][3]-सर्वगन्धदानफलप्राप्तिकामोऽह-[ मेतानि सर्वगन्धानीति निवेश्यम्। स्वस्तिसावित्रीपाठानन्तरं सर्वगन्धा एते गन्धर्वदैवता इति प्रतिग्रहीतृवाक्यम्। कामस्तुल्यादि पूर्ववत्। स्पर्शनं स्वीकारः। सर्वत्रैतन्निवेशनं विष्णुधर्मोत्तरोक्त-द्वादशीविहित-चित्रवस्त्रदानफलप्राप्तिकामोऽह]‍[4] मेतच्चित्रवस्त्रमिति स्थाने कार्य्यम्। एतास्वेव द्वादशीषु[5] तत्तदुक्त-[6]नक्षत्रयुक्तासु तत्तदुक्तद्रव्यदाने[7] फलाधिक्यम्।

तथा हि[8] (३।३१६।३३-३७) :—

[9]भाग्यर्क्षसंयुता चैत्रे द्वादशी स्यान्महाफला।

[10]भाग्यर्क्षं पूर्वफल्गुनी। महाफलेत्यनन्तरोक्त-द्वादशीविहित-[11][तत्तद्दानफलान्येवात्र] महान्ति भवन्तीत्यर्थः[12]।

हस्तयुक्ता च वैशाखे जैष्ठे च स्वातिना[13] तथा।
[प्रौष्ठपदे तथाषाढे][14] मूलोपेता च वैष्णवे ॥३७॥

वैष्णवे[15] श्रावण इत्यर्थः।

तथा भाद्रपदे मासि[16] [17]श्रवणेन च संयुता।
[18][आश्विने द्वादशी पुण्या भवत्याजर्क्षसंयुता ॥३८॥

आजर्क्षं पूर्वभाद्रपदा।

कार्त्तिके रेवतीयुक्ता सौम्ये कृत्तिकया तथा।

---

1 A निवेशनीयं
2 A स्पर्शनञ्च
3 A omits the bracketed portion
4 A मेतं सर्व्वगन्ध for the bracketed portion
5 A द्वादशीयुत
6 A ०नक्षत्रयुक्तास्वतदुक्तद्रव्य०
7 I. O. दान
8 A तथा च
9 A भाग्याख्यसंयुता
10 A भाग्यं
11 A तद्दानफलप्राप्तिकामोऽहं एतानि for the bracketed portion
12 I. O. भवन्तीत्यर्थ:
13 A स्वाति
14 A पौष्ठपदे तथाषाढे and I. O. आषाढे for the bracketed portion
15 A omits it
16 A मासे
17 A श्रावणेन तु
18 A omits the bracketed portion

सोम्यो मार्गशीर्षः ।

पौषे मृगशिरोपेता माघे चादित्यसंयुता ॥३९॥ ]

[1]आदित्यं पुनर्वसु ।

फाल्गुने पुष्यसहिता द्वादशी [2]पावनी परा ।

नक्षत्रयुक्तास्वेतासु तथा दानमुपोषितम् ।

सर्वं महाफलं ज्ञेयमनन्तं द्विजसत्तमाः ॥४०॥

तथा दानमुपोषितमिति [3]यथावोक्तद्रव्याणां दानं महाफलं [4]तथोपवासोऽपि महाफलः । तान्येव तत्तदानोक्तानि [5]फलान्यत्यर्थं ददातीत्यर्थः । एवञ्च [6]सङ्कल्पमपि कुर्यात । द्रव्य-दाने तु विष्णुधर्मोत्तरोक्त-पूर्वफल्गुनीयुक्त-द्वादशीविहित-[7]चित्रवस्त्रदानफलप्राप्तिकामोऽहमेतच्चित्र-वस्त्रं ददानि । तथा विष्णुधर्मोत्तरोक्त-हस्तानक्षत्रयुक्त-द्वादशीविहित-रुक्मदानफलप्राप्तिकामोऽ-हमेतद्रुक्ममिति विशेषः । एवं ज्यैष्ठादिष्वपि मासेषु [8]तत्तन्नक्षत्र-[युक्तत्वेन वाक्यरचनोहनीया][9] ।

महाभारते(अनु-६८।१६क-२०क) :—

वैशाख्यां पौर्णमास्याञ्च तिलान् [10][दद्याद् द्विजातिषु] ।

तिला भक्षयितव्याश्च सदा [11]त्वालभनञ्च तैः ।

सदेति प्रत्यब्दमित्यर्थः ।

कार्य्यं सततमिच्छद्भिः [12]श्रेयः सर्वात्मना गृहे ॥४१॥

यथेष्टसंख्यब्राह्मणेभ्योऽर्चितेभ्यो[13]ऽर्चितांस्तिलान्[14] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात । महाभारतोक्त-वैशाखपौर्णमासीविहित-[15]तिलदानफलप्राप्तिकामोऽहमेतांस्तिलान् ददानि । प्रतिग्रहीतारः स्वस्तिसावित्रीपाठान्ते तिला एते प्रजापतिदैवता इति वदेयुः । कामस्तुत्यादि पूर्ववत् । मुष्टिग्रहणञ्च स्वीकारः । यजमानेन [16]तद्दिने तिलैरुद्वर्तनं[17] तिलभक्षणञ्च कार्य्यम् ।

1 A आदित्य
2 I. O. याचनो
3 A यथाप्रोक्त' द्रव्याणां
4 A उपवासोपि
5 A फलानि
6 I. O. सङ्कल्पोपवासमपि
7 A omits चित्रवस्त्र
8 I. O. तन्नक्षत्र०
9 A युक्ता for the bracketed portion, I. O. ०वास्य वचनो०
10 A दद्यात् द्विजातिष्, I. O. दत्वा द्विजातिभि:
11 A त्वालोभनञ्च
12 A सदा
13 A omits अर्चितेभ्यो
14 A अर्चिताय तिलान्
15 A omits तिल
16 A तद्दिने, I. O. omits it
17 I. O. तिलैर्वोद्वर्त्तनं

जावालः :—

[1]शृतान्नमुदकुम्भञ्च वैशाख्यान्तु विशेषतः ।
निर्दिश्य धर्मराजाय [2]गोदानफलमाप्नुयात् ॥४२॥

[3]शृतान्नं पक्वान्नम् । वैशाख्यां पौर्णमास्यां [4]धर्मराजायार्चिताय [5]शृतान्नमुदकुम्भं चार्चितं [6]दद्यात् । ॐ अद्य गोदानफलप्राप्तिकामोऽहं [धर्मराजाय शृतान्नोदकुम्भं][7] ददानि । तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं [8]भगवते धर्मराजाय दक्षिणामेतत् काञ्चनं ददानि ।

तथा :—

सुवर्णतिलयुक्तैस्तु ब्राह्मणान् सप्त पञ्च वा[9] ।
तर्पयेदुदपात्रैस्तु[10] ब्रह्महत्यां व्यपोहति ॥४३॥

अत्र प्रकरणाद्वैशाख्यामेव यथोक्तसंख्यब्राह्मणेभ्योऽर्चितेभ्यस्तावत्संख्यार्चितयथोक्तोदपात्रदानम्[11] । ॐ अद्यादि तुभ्यमहमनुक्त्वा दद्यात् । जावालोक्त-सुवर्णतिलसहितोदपात्रदानफलप्राप्तिकामोऽहमेतानि सुवर्णतिलसहितानि उदपात्राणि ददानि । प्रतिग्रहीतारः स्वस्तिसावित्रीपाठान्ते उदपात्राण्येतानि[12] वरुणदेवतानीति वदेयुः । [13]स्पर्शनं स्वीकारः ।

यमः :—

वैशाख्यामेव विधिवद् भोजयेद् ब्राह्मणान् दश ।
त्रिरात्रमुषितः स्नात्वा कृष्णं प्रयतः शुचिः ॥४४॥
गौरान् वा यदि वा कृष्णान् तिलान् क्षौद्रेण संयुतान् ।
दत्त्वा दशसु विप्रेषु तानेव स्वस्ति वाचयेत् ॥४५॥

---

1 A घृतान्नमुदकुम्भन्तु
2 A गोदानं for गोदान
3 A घृतान्नं
4 A धर्मराजार्चिताय
5 A घृतान्न०
6 A omits it
7 A धर्मराजफलप्रीत्यर्थं उदकुम्भं for the bracketed portion
8 A भगवते वा
9 I. O. and A पञ्चधा
10 A ०पात्रैश्च
11 I. O. ०यथोक्तोदपात्रं दानं, A ०यथोक्त उदकपात्रदानं
12 A उदपात्राण्येति
13 A स्पर्शनञ्च

[1][स्वस्ति वाचयेत्] प्रतिग्रहविधिं कारयेदित्यर्थः ।

प्रीयतां धर्मराजेति [2]पितॄन् देवांश्च तर्पयेत् ।
यावज्जीवकृतं पापं [3]तत्क्षणादेव नश्यति ॥४६॥

[4]पितॄन् देवांश्च तर्पयेदित्यनेन पार्वणश्राद्धं कुर्य्यादित्युक्तम् ।

[5]अयुतायुतश्च तिष्ठेत स्वर्गलोके न संशयः ।
मामेव तु न पश्येत्तु न च पापेन लिप्यते ॥४७॥

पौर्णमास्याः पूर्वं [6]पञ्चमदिने [7]कृतैकभक्तादिः पूर्ववत् सूर्य्यादिदेवताभ्यस्त्रिरात्रोपवास-[8][पूर्वक-यमोक्त]-वैशाखपौर्णमासी-विहित-मधुतिलदान-ब्राह्मण-[9]कृषरभोजन-[10][कर्म मया कर्तव्यमिति निवेद्य सङ्कल्पयेत् । ॐ श्व आरभ्य] त्रिरात्रमुपोष्यापरेऽहनि[11] पौर्णमास्यां दशभ्यो [12]ब्राह्मणेभ्यो मधुयुक्तांस्तिलान[13]-र्चितान् ॐअद्यादि [14]युष्मभ्यमन्तमुक्त्वा दद्यात् । यमोक्तदश-ब्राह्मण सम्प्रदानक-मधु-[15]युक्ततिलदानफलप्राप्तिकामोऽहमेतान् [16]सक्षौद्रान् तिलान् ददानि । प्रीयतां धर्मराजः । प्रतिग्रहीतारः स्वस्तिसावित्रीपाठान्ते तिला एते प्रजापतिदैवता इति वदेयुः । कामस्तुत्यादि पूर्ववत् । [मुष्टिग्रहणश्च स्वीकारः ।][17] ततो [18]यत्नतस्तानेव ब्राह्मणान् कृषरं भोजयेत् । [19]ततः पार्वणविधिना [20]श्राद्धं समधुतिलैरेव कुर्य्यात् । [21]एतत्तु दानं ब्राह्मणक्षत्रिययोरेव [22]वैश्यशूद्रयोस्त्रिरात्रनिषेधात् ।

तथा च महाभारते :—

चतुर्थभक्तक्षपणं वैश्ये शूद्रे विधीयते[23] ।
त्रिरात्रन्तु न [24]धर्मज्ञैरीरितं ब्रह्मवादिभिः ॥४८॥

---

1 A omits the bracketed portion
2 A पितृ'
3 I. O. तं'क्षणादेव
4 I. O. पितॄन् देवांस्तर्प०, A पितृ' देवांश्च तर्प०
5 A अयुतायुत'
6 I. O. पञ्चदिने
7 A कृतैकभक्तादि
8 A पूर्वोक्त for the bracketed portion
9 A omits कृषर
10 I. O. त्रिरात्र इति सङ्कल्पा for the bracketed portion
11 I. O. omits अपरेऽहनि
12 A omits it
13 A omits तिलान्
14 I. O. तुभ्यं for युष्मभ्यम्
15 A हत for युक्त
16 A हतक्षौद्र
17 A omits the bracketed portion
18 A यत्र स्थाने
19 A तत्र
20 A स्नात्र'
21 A तत्त
22 A वैश्यवैश्यशूद्रयो त्रिरात्र' निषेधात्
23 A विधीयधीयते
24 I. O. धर्मज्ञविहित'

तथा :—

वैशाख्यां पौर्णमास्याञ्च[1] ब्राह्मणान् सप्त [2]पञ्च वा ।
क्षौद्रयुक्तैस्तिलैः कृष्णैर्वाचयेद्[3] यदि वेतरैः[4] ॥४६॥

[5]इतरैः श्वेतैस्तिलैः । [6]कृष्णैर्वाचयेदिति तिलांस्तेभ्यो दत्त्वा [प्रीयतां धर्मराजेति तानर्चयेदित्यर्थः ।][7]

[8]प्रीयतां धर्मराजेति यद्वा मनसि वर्त्तते ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥५०॥

यद्वा मनसीति इष्टदेवताप्रीतये[9] वा । तदा चामुकदेवता प्रीयतामिति [10]प्रतिवचनम् । वैशाख्यां पौर्णमास्यां सप्तभ्यः पञ्चभ्यो [ब्राह्मणेभ्योऽर्चितेभ्यो][11]ऽर्चितान् समधुतिलान् ॐ अद्यादि[12]युष्मभ्यमन्तमुक्त्वा दद्यात् । यावज्जीवकृतपापक्षयप्राप्ति[13]-कामोऽहमेतान् [14]सक्षौद्रान् तिलान् ददानि । प्रीयतां धर्मराजेति [अमुकदेवता इति][15]वा ब्रूम [16][इति ब्राह्मणान् वदेत् । प्रतिग्रहीतारः स्वस्तिसावित्रीपाठान्ते तिला एते प्रजापतिदैवता इत्युक्त्वा यथाशाखं कामस्तुतिं पठित्वा प्रीयतां धर्मराज इति अमुकदेवता इति वा ब्रूयुः ।] दक्षिणा पूर्ववत् । [17]मुष्टिग्रहणञ्च स्वीकारः ।

[18]विष्णुः :—

अथ वैशाख्यां पौर्णमास्यां कृष्णाजिनं सखुरं मुक्तालाङ्गूलभूषितं कृत्वा आविके वस्त्रे प्रसारिते [प्रसारयेत्ततस्तिलैः][19]प्रच्छादयेत् । [20]सुवर्णनाभत्वं कुर्य्यात । [21][अहतेन

1 A पौर्णमास्यान्तु
2 A पञ्चधा
3 I. O. and A वाचयेद्
4 I. O. वेतने:
5 A omits it
6 I. O. कृ वाचयेद्दिति
7 I. O. omits it, A प्रियता धर्मराजेति तान्वाचयेदित्यर्थः for the b. p.
8 A प्रियतां
9 A ·प्रीतिर्वा
10 I. O. वाचनम्
11 A omits the bracketed portion
12 A युष्मम् and I. O. तुभ्यम् for युष्मभ्यम्
13 A omits प्राप्ति
14 A सक्षौद्रतिलान्
15 A omits the bracketed portion
16 A omits the bracketed portion
17 I. O. स्वस्तिपठनञ्च
18 A omits it
19 A तिलै: for the bracketed portion
20 I. O. सुवर्णनाभित्वं
21 A आहतेन वाससुगेन for the bracketed portion
22 A चेति for चतस्रश्च

वासोयुगेन] प्रच्छादयेत् । सर्वरत्नगन्धैश्चालङ्कुर्याच्चतसृषु[2] दिक्षु चत्वारि तैजसानि पात्राणि क्षीरदधिमधुसर्पिःपूर्णानि [1]निधायाहिताग्नये ब्राह्मणाय [2]वासोयुगप्रच्छादिताय दद्यात् ॥५१॥ अत्र च [3]गाथा भवन्ति :—

यस्तु कृष्णाजिनं दद्यात् सखुरं शृङ्गसंयुतम् ।
तिलैः प्रच्छाद्य वासोभिः सर्वरत्नैरलङ्कृतम् ॥५२॥
ससमुद्रगुहा तेन सशैलवनकानना ।
चतुरन्ता भवेद्दत्ता पृथिवी नात्र संशयः ॥५३॥

वैशाख्यामाहिताग्नये ब्राह्मणायार्चिताय वस्त्रयुगेनाच्छादिताय शृङ्गखुरयुक्तं मुक्ताभूषितलाङ्गूलं[1] कम्बलोपरि प्रसार्य्य यथोक्तोपकरणयुक्तं कृष्णाजिनमभ्यर्च्य ॐ अद्यादि तुभ्यमहमुक्त्वा दद्यात् । विष्णूक्त-वैशाखपौर्णमासीविहित-कृष्णाजिनदानफलप्राप्तिकामोऽहमेतन्मुक्ताभूषितलाङ्गूलमाविकवस्त्रस्थं[5] तिलप्रच्छादितं [6]सुवर्णनाभमहत[7]-वासोयुगप्रच्छादितं सर्वरत्नसर्वगन्धक्षीरदधिमधु[8]-सर्पिःपूर्णतैजस[9]-पात्रचतुष्टययुतं कृष्णाजिनं ददानि । प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते कृष्णाजिनमिदं प्रजापतिदैवत-[मिति वदेत् । ][10] कामस्तुत्यादि पूर्ववत् । पुच्छग्रहणं स्वीकारः ।

वैशाखाधिकारे वशिष्ठः :—

कृष्णाजिने तिलान् दत्त्वा[11] हिरण्यं मधुसर्पिषम्[12] ।
ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥५४॥

वैशाखपौर्णमास्यां जन्मसंस्कारविद्यायुक्ताय ब्राह्मणायार्चिता-[13]योक्तोपकरणयुतं कृष्णाजिनमर्चितम् ॐ अद्यादि तुभ्यमहमुक्त्वा दद्यात् । समस्तदुष्कृतनिस्तार[14]-प्राप्तिकामोऽहमेतत्तिलाच्छादितं[15] हिरण्यमधुसर्पिर्युतं[16] कृष्णाजिनं ददानि । स्वस्त्यादिस्वीकारान्तमनन्तरोक्तदानवत् ।

---

1 A विधायाहिताग्नये
2 A वास: प्रच्छादिताय
3 A शाखा
4 A मुक्ताचाङ्कुर्यं
5 A ०वस्त्रस्थ
6 I. O. सुवर्णनाभि०
7 A चाहत for महत
8 A omits मधु
9 I. O तिल for तैजस
10 I. O. मित्युक्त्वा for the bracketed portion
11 A कृत्वा
12 A मधुसर्पिषौ
13 I. O. ०योक्त उपकरणयुतं, A ०योक्तपकरणयुतं
14 A ०तारण
15 I. O. ०च्छादित
16 A ०सर्पियुक्तं

तथा वैशाखाधिकारे :—

सुवर्णनाभं कृत्वा तु सखुरं कृष्णमार्गकम् ।

तिलैः प्रच्छाद्य यो दद्यात्तस्य पुण्यफलं[1] शृणु ॥५५॥

ससमुद्रगुहा तेन सशैलवनकानना ।

चतुरन्ता[2] भवेद्दत्ता पृथिवी नात्र संशयः ॥५६॥

वैशाख्यां पौर्णमास्यां ब्राह्मणायार्चिताय कृष्णाजिनमुक्तरूपमुक्तोपकरणमर्चितम्[3] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । वशिष्ठोक्त-सुवर्णनाभकृष्णमृगाजिनदानफलप्राप्तिकामोऽहमेतत् सुवर्णनाभं तिलप्रच्छादितं कृष्णमार्गकं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

कूर्मपुराणे (२।२६।२३) :—

[4]शृतान्नमुदकुम्भञ्च [5]वैशाख्याञ्च विशेषतः ।

निर्दिश्य धर्मराजाय विप्रेभ्यो मुच्यते भयात् ॥५७॥

यथेच्छसंख्यब्राह्मणेभ्योऽर्चितेभ्यो[6]ऽर्चितानुदकुम्भान् [7]शृतान्नानि [8]चार्चितानि ॐ अद्यादि [9]युष्मभ्यमन्तमुक्त्वा दद्यात । [10]भयमुक्तिकामोऽहमेतानि [11]शृतान्नानि एतानुदकुम्भान् ददानि । [12]धर्मराजः प्रीयताम् । ततः स्वस्तिसावित्रीपाठानन्तरं [13]शृतान्नमिदं प्रजापतिदैवतमुदकुम्भोऽयं[14] वरुणदैवत इति प्रत्येकं प्रतिग्रहीतृवाक्यम् । कामस्तुत्यादि पूर्ववत् । [15]स्पर्शः स्वीकारः ।

तथा (२।२६।१६-२१) :—

वैशाख्यां पौर्णमास्याञ्च[16] ब्राह्मणान् सप्त पञ्च वा ।

उपोष्य विधिना शान्तान्[17] [शुचिः प्रयतमानसः][18] ॥५८॥

पूजयित्वा तिलैः कृष्णैर्मधुना च विशेषतः ।

[19][गन्धादिभिः समभ्यर्च्य वाचयेद्वा स्वयं वदेत् ॥५६॥ ]

---

1 A फलं for पुण्यफलं
2 A चतुरन्ता
3 I. O. दत्तं for मर्चितम
4 A शृतञ्च and K. P. कृतान्न for शृतान्न
5 A वैशाख्यञ्च
6 A अर्चिते for अर्चितेभ्यो
7 A शृतान्नानि
8 A omits चार्चितानि
9 A युष्मभ्यमुक्त्वा
10 I. O. तभयमुक्त for भयमुक्ति
11 A शृतान्नानि
12 A धर्मराज
13 A शृतान्नमिदं
14 A उदकुम्भो for उदकुम्भोऽयं
15 A स्पर्शञ्च
16 K. P. ॰ञ्च
17 Supplied from K. P. I. O. ग्रशान्, A शैव
18 K. P. शुचीन् प्रयतमानसा: for the b. p.
19 Supplied from K. P. I. O. and A omit it

प्रीयतां धर्मराजेति यद्वा[1] मनसि वर्तते ।
[2]यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥६०॥

यद्वा मनसि [वर्तत इत्यभीष्ट][3]-देवताप्रीतये वा । वैशाखपौर्णमास्याः पूर्वतरदिने [4]कृतैकभक्तादिः पूर्ववत् सूर्यादिदेवताभ्य उपवासपूर्वक-[5]कूर्मपुराणोक्त-समधुतिलदानकर्म मया कर्तव्यमिति निवेद्य सङ्कल्पं कुर्यात् । ॐ श्व उपोष्य पञ्चदश्यां [6]पूजापूर्वकसमधुतिलदानकर्माहं करिष्ये । ततो नियमेन सुप्त्वाऽपरदिने उपोष्यापरदिने स्नातः शुचिः शान्तमनाः स्वेच्छया सप्त पञ्च वा शान्तान् [7]ब्राह्मणानभ्यर्च्य तेभ्यो ब्राह्मणेभ्यो[8] मधुसहितान् कृष्णतिलान् ॐ अद्यादि [9]युष्मभ्यमन्तमुक्त्वा दद्यात् । यावज्जीवकृत-पापक्षयकामोऽहमेतान् [10]समधून् तिलान् ददानि । [11][धर्मराजः प्रीयताम् अमुकदेवो वा प्रीयताम् ।] प्रतिग्रहीतारः स्वस्तिसावित्रीपाठान्ते तिला एते प्रजापतिदैवता इति वदेयुः । कामस्तुत्यादि पूर्ववत् । [12]मुष्टिग्रहणं स्वीकारः ।

आदित्यपुराणे :—

ज्यैष्ठे मासि तिलान् दत्त्वा पौर्णमास्यां विशेषतः ।
अश्वमेधस्य यत् पुण्यं तत् प्राप्नोति न संशयः ॥६१॥

ज्यैष्ठपौर्णमास्यां ब्राह्मणायार्चितायार्चितान् तिलान्[13] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । अश्वमेधफलप्राप्तिकामोऽहमेतांस्तिलान् ददानि । प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते एते तिलाः प्रजापतिदैवता इति वदेत् । कामस्तुत्यादि पूर्ववत् । मुष्टिग्रहणञ्च स्वीकारः ।

आग्नेयपुराणे :—

एतच्छ्रुत्वाम्बरीषोऽपि वशिष्ठं प्रत्यभाषत ।
कथं [वृषे च धेनूनां][14] दशानां फलमिष्यते ॥१॥

---

1 A दत्त्वा
2 Corrected from K. P. I. O. and A यावज्जीवस्तु तत्
3 I. O. वर्त्तन्त इतीष्ट for the bracketed portion
4 A कृतै ततृकभक्तादि
5 A ब्रह्मपुराणोक्त
6 I. O. पूजापूर्वकमधुतिल०, A समधुकतिल०
7 A omits ब्राह्मणान्
8 I. O. omits ब्राह्मणेभ्यो
9 A मध्वभ्यमनुमुक्ता
10 A समधु
11 A धर्मराजः प्रीयतामिति । अमुकप्रदेवो वा प्रीयतामिति for the bracketed portion
12 A स्वस्तिग्रहणच
13 A omits तिलान्
14 A वसिष्ठ इवेका for the b. p.

सर्वमेतन्ममाचक्ष्व प्रवक्तुं[1] [2]कुशलोऽस्यसि ।
[3][तमाह स] वशिष्ठोऽपि शृणुष्व गदतो मम ॥२॥
[4]त्वमेकाग्रमना भूत्वा महर्षे[5] दानमुत्तमम् ।
[6][यतो नाभ्यधिकं] किञ्चित्त्रिषु लोकेषु विद्यते ॥३॥
यद्दत्त्वा दिति-[7][जोऽप्येष बली] राजा समाहितः ।
रसातलगतो भुङ्क्ते दिव्यान् भोगाननुत्तमान् ॥४॥

तथा :—

[8]सुरवसुचक्र × × नाथोऽयं दिवि मोदते ।
[9]यद्दानेन नरश्रेष्ठ त्रैलोक्यैश्वर्य्यबृंहितः[10] ॥५॥
तथान्येऽपि हि राजानो धर्मकृत्येषु ये मताः ।
तत्र [11]तद्दानमाहात्म्याद्गता पुण्यकृतां गतिम् ॥६॥
[12]आषाढपौर्णमास्यान्तु मिथुनस्थे दिवाकरे ।
श्रद्दधानैर्जितक्रोधैर्देयमेतद् यथाविधि ॥७॥
जाम्बूनदस्य शुद्धस्य पलैस्त्रिंशति-[13]भिस्तथा ।
[14][तदर्धमर्धमर्धेन यथाशक्ति पलैस्त्रिभिः ॥८॥]

[15]तदर्धं तदर्धमयं पञ्चदशपलमयमित्यर्थः । [16]तदर्ध-[सार्धं पलसप्तकमयमित्यर्थः [17]अर्धपादेन][18] पलचतुष्टयेन वा कुर्य्यादित्यर्थः ।

द्वाभ्यामेकेन वा कुर्य्या-[19]द्रूपं सर्वाङ्गशोभनम् ।
पलादूनो न[20] कर्तव्यो दुःखशोकभयावहः[21] ॥९॥

1 I. O. प्रवक्तु
2 A केशवोऽस्यसि
3 A ततमोह for the bracketed portion
4 A एकाग्रमनसो
5 A राजर्षे
6 A येन नाभ्यधिकं for the b. p.
7 A ज्योप्येष फली for the bracketed portion
8 I. O. omits this
9 I. O. यद्दानेन
10 I. O. त्रैलोक्ये पूर्णं हितः
11 I. O. ०माहात्म्या कृता
12 A आषाढे
13 A ०शोभनं
14 A तदर्धमर्धेन यथा यथाशक्ति परैस्त्रिभिः for the bracketed portion
15 I. O. omits this
16 I. O. तदर्धसार्ध ०
17 I. O. अर्धपादेन
18 A omits the bracketed portion
19 A ०रूप पलाङ्गशोभनं
20 A पलादूनोन, I. O. फलादूनोन
21 I. O. ०भयापहः

मण्डपं कारयेद्दिव्यं पराध्यपटनिर्मितम् ।
तन्मध्ये तण्डुलैः शुक्लैर्मण्डलं कारयेच्छुभम् ॥१०॥

पराध्यमुतकृष्टम् ।

ततः प्रभाते विमले समुत्थाय जितेन्द्रियः ।
शुक्लाम्बरधरः स्नातः शुक्लमाल्यानुलेपनः ॥११॥
कृतनित्यक्रियः शुक्लरत्नमाल्यविभूषितः ।
नरो वा यदि वा नारी दिव्यभोगाभिलाषिणी ॥१२॥

शुक्लरत्नं मुक्ता ।

सितवस्त्रयुगच्छन्नं स्थापयित्वा ततो वृषम् ।
सुवर्णमण्डपे तस्मिन् सुरत्नैर्बहुभिश्चितम् ॥१३॥
चन्दनागुरुकर्पूरैः[1] सुमनोभिस्तथा सितैः[2] ।
सम्पूजयेत्ततः सम्यङ्मन्त्रैः पुराणसम्मितैः ॥१४॥
नमस्ते जगदाधार प्रियः पुण्यकृतामसि ।
त्वद्विहीने जगत्यस्मिन्न कश्चिच्छुभमश्नुते ॥१५॥
नमस्ते धर्मराजाय वृषरूपधराय वै ।
त्वं मामुद्धर देवेश दुःखसंसारसागरात् ॥१६॥
यशः कीर्त्तिर्धनं धान्यं यदन्यदपि संस्तुतम् ।
तत् प्रयच्छेह देवेश परत्र च शुभां गतिम् ॥१७॥
इति सम्पूज्य विधिवत्तं [3]देवं वृषरूपिणम् ।
नैवेद्यं सम्भवेत्तत्र हविषा निर्मितं शुभम् ॥१८॥
कालोद्भवं[4] मूलफलं [5]सर्वं देयं समन्ततः ।
हविष्यान्नेन [6]भुञ्जीत भोजयित्वा द्विजोत्तमान् ॥१९॥
सायाह्ने च ततः कुर्य्यात् पुष्पं गृहमनुत्तमम् ।
[7][ सितपुष्पैः शुभैर्गन्धलुब्धमाधुकरालयैः ।२०॥ ]

---

1 I. O. चन्दनागुरुकर्पूरै, A चन्दनागुरुकर्पूरैः
2 I. O. सुमनोभिस्तथासितैः
3 I. O. देवं
4 I. O. कालोद्भव
5 I. O. सर्व्व, A omits it
6 I. O. भुञ्जात
7 A सितवस्त्रैः शुभैः गन्धैर्बद्धं मधुकरालयः for the bracketed portion

फलमूलानि धान्यानि दीपाः शुक्लदशान्विताः ।
[1][घृतपूर्णास्तु कर्तव्याः] [2][सम्प्रद्योतितमण्डपाः ॥२१॥

दशा वर्तिः ।

रात्रौ जागरणं कार्य्यं देवदेवस्य सन्निधौ ।
वारमुख्यासमानार्य्यगन्धर्वानतिसौख्यदान् ॥२२॥

गन्धर्वानतिगायनान् ।

गीतवादित्रशब्देन ब्रह्मघोषरवेण च ।
नर्मालापैश्च नृत्यैश्च गमयेत्तां निशां ततः ॥२३॥
अरुणोदयवेलायां ] समुत्थाय जितेन्द्रियः ।
पूजयित्वा [3]द्विजानत्र गोहिरण्यैर्नरोत्तम[4] ॥२४॥
वृषरूपं ततो धर्मं प्रीयतां वृषभध्वजः ।
इत्युच्चार्य्य [5]परं मन्त्रमाचार्य्याय निवेदयेत् ॥२५॥
दत्त्वा दानमिदं [6]सर्वं विधिनानेन [7]पार्थिवः ।
[8][ कुर्य्याद्दिग्विजयं विप्रो वेदकर्म समारभेत् ।
वैश्यः[9] समुद्रगमनं [10]शूद्रः कर्म यथेप्सितम् ॥२६॥
फाल्गुन्यामथवा दद्याद् दानमेतन्नृपोत्तमः ।
रौद्रं पर्वणि [11]निर्दिष्टं ब्रह्मणः शङ्करस्य हि ॥२७॥ ]

[12]सौराषाढपौर्णमास्याः पूर्वतरदिने प्रातः स्नात्वा [13]कृतनित्यो गृहीतोदपूर्णताम्रपात्र उदङ्मुखः सङ्कल्पं कुर्य्यात् । तद्यथा— ॐ आग्नेयपुराणोक्त-पूर्वदिन[14]-हविष्यभोजनपूर्वक-वृषदान-कर्माहं करिष्ये । ततो यथेष्ट-[15]मुतकृष्टवस्त्रमयमण्डपं कारयित्वा तन्मध्ये सिततण्डुलै-

---

1 A घृतपूर्णास्तु कर्त्तव्यः for the bracketed portion
2 A omits the bracketed portion
3 A द्विजान तत्र
4 A नरोत्तमाः for नरोत्तम
5 I. O. नरं
6 I. O. सर्व्वां
7 I. O. पार्थिव
8 I. O. omits the bracketed portion
9 A वैश्य
10 A पूर्व्व
11 A निदिष्टं
12 I. O. सौराषाढस्य
13 I. O. कृतनित्य
14 I. O. पूर्व्वदिने
15 A ०मुत्तमवस्त्रमयं मण्डपं

मण्डलं[1] कुर्य्यात्। ततो [2]परदिने प्रातः[3]कृतनित्यः शुक्लमाल्याम्बरधरो[4] [5]धृतमुक्ताहारः पूर्वोक्तमण्डले शक्त्यनुरूप-[6]मुक्तपरिमाणानामन्यतमपरिमाणेन[7] सुवर्णेन घटितं [8]यथेच्छ-रत्नखचितं वृषं स्थापयित्वा सितवस्त्रयुगेनाच्छाद्य यथाशक्त्युक्तोपचारैरुक्तमन्त्रैश्च सम्पूज्याभीष्ट-संख्यब्राह्मणेभ्यो भोज्यानि दत्त्वा स्वयं हविष्यं भुक्त्वा सायं पुष्प-[9]गृहविरचनादिपूर्वकमुक्तक्रमेण रात्रौ जागरणं कुर्य्यात्। अपरदिने कृतनित्यः सूर्य्योदयसमये यथेच्छसंख्यान् [10]ब्राह्मणान् गोभिर्हिरण्यैश्चाभ्यर्च्य[11] साङ्गवेदविदं ब्राह्मणमभ्यर्च्यार्चितं वृषं[12] तस्मै [13]ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। आग्नेयपुराणोक्त-पूर्वदिनहविष्यभोजनपूर्वक-वृषदानफलप्राप्तिकामोऽहमेतं तण्डुलारोपितं विविधरत्नखचितं[14] वस्त्रयुगाच्छादितं वृषभं[15] ददानि। प्रीयतां वृषभध्वजः। ततः प्रतिग्रहीता स्वस्तिसावित्रीपाठानन्तरं वृषोऽयं [विष्णुदैवत इति वदेत्][16]। कामस्तुत्यादि पूर्ववत्। [17][पुच्छग्रहणञ्च स्वीकारः। फाल्गुनपौर्णमास्यां वा अनेन विधिना वृषमेतं दद्यात्।

विष्णुधर्मोत्तरे (३।३१६।२२-२४क) :—

माघ्यां कृत्वा तिलैः श्राद्धं सर्वपापैः प्रमुच्यते ॥१॥

अत्र पार्वणविधिना तिलैः श्राद्धकरणं सुगमम्।

तथा :—

[18]स्वास्तीर्णशयनं दत्त्वा फाल्गुन्यां ब्राह्मणाय तु।
रूपद्रविणसम्पन्नां भार्य्यां [19]पत्नवतीं तथा ॥२॥

[20]स्वास्तीर्णं दारुमयखट्टोपरि-सुप्रसारित- तूलिकादिरूपं पत्नवतीं कुटुम्बिनीम्।

नरः प्राप्नोति धर्मज्ञाः पुष्टिमाप्नोत्यनुत्तमाम्।
तथा नार्य्यपि भर्त्तारं नात्र कार्य्या विचारणा ॥३॥

---

1 A श्रितत‌ण्डुलं मण्डलं
2 I. O. परद्दिने
3 A कृतनित्यं
4 A शुक्लमाल्याम्बर
5 I. O. and A हृतमुक्ताहार:
6 I. O. युक्त for मुक्त
7 A ०परिमाण
8 A यथेष्ट बहुवर्णं चित्रितं
9 A omits गृह
10 A omits it
11 A गोभिर्हिरण्यवस्त्राभ्यर्च्य I. O. गोभिर्हिरण्यैः
12 I. O. omits it
13 A omits it
14 A विविधवर्णखचितं
15 A वृषं
16 A विष्णुदैवतं for the bracketed portion
17 A omits the bracketed portion
18 I. O. भास्तीर्णं
19 I. O. यत्नवतीं
20 I. O. स्वास्तीर्णां

धर्मज्ञा इति सम्बोधनम्। नार्य्यपि [1]यज्ञवस्त्वादिगुणयुक्तं भर्त्तारं प्राप्नोतीत्यर्थः। यथाशक्ति शय्यामुपकल्प्यार्चितामर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोत्तरोक्तपौर्णमासीविहित-शयनदानफलप्राप्तिकामोऽहमेतत् स्वास्तीर्णं शयनं ददानि। प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते शयनमिदं प्रजापतिदैवतमिति वदेत्। कामस्तुत्यादि पूर्ववत्।] स्पर्शनं स्वीकारः।

[2]तथा (३।३१८।२-३क) :—

संप्राप्य चैत्रमासस्य [3]शुक्लां पञ्चदशीं नरः।
चित्रवस्त्रयुगं [4]दत्त्वा सोपवासो द्विजातये।
ब्राह्मणां-[5]स्तर्पयन् विप्राः सौभाग्यं महदाप्नुयात् ॥४॥

दानपूर्वेतरदिने पूर्ववद्धविष्याहारादि [6]कृत्वा सूर्य्यादिदेवताभ्य उपवासपूर्वक-विष्णुधर्मोत्तरोक्त-चित्रवस्त्र-[7]युगदान-ब्राह्मण-[8]तर्पणकर्म मया कर्त्तव्यमिति निवेद्य सङ्कल्पयेत्। [9]ॐ श्व उपोष्यापरदिने विष्णुधर्मोत्तरोक्त-चित्रवस्त्रयुगदान-ब्राह्मणतर्पणकर्माहं करिष्ये। ततो नियमेन सुप्त्वा परदिने [उपोष्यापरदिनेऽर्चिताय][10] ब्राह्मणाय चित्रवस्त्रयुगमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महासौभाग्यप्राप्तिकामोऽहमेतच्चित्रवस्त्रयुगं ददानि। प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते वस्त्रयुगमिदं बृहस्पतिदैवतमिति वदेत्। कामस्तुत्यादि पूर्ववत्। दशाग्रहणपूर्वकं परिधानं[11] स्वीकारः। ततो यथेच्छं[12] सुवर्णवस्त्रभोज्यादिना[13] ब्राह्मणां-स्तर्पयेत्।

तथा :—

वैशाखपौर्णमास्यनुवृत्तौ[14] (३।३१८।४ख-६) :—

[15]तस्मिन्नेव तथाकाले [16]सखुरं कृष्णमार्गणम्[17]।

---

1 I. O. यज्ञ०
2 A omits it
3 A शुक्ला
4 I. O. दत्त्वा
5 A ०स्तर्पयन्
6 I. O. भूत्वा, A हुत्वा
7 A ०युगस्य०
8 A ०सन्तर्पण०
9 A omits it
10 A अर्चिताय for the bracketed portion
11 I. O. परिधाय
12 A यथेष्ट०
13 A ०भोज्यानि दिना
14 I. O. ०स्यानुवृत्तौ
15 A यस्मिन्नेव
16 I. O. सुखरं
17 I. O. कृष्णमार्गकं

तिलैः प्रच्छाद्य वासोभिः सर्वरत्नैरलङ्कृतम् ।
[1]तपस्विने तु दातव्या मही सवनकानना ॥५॥

[2]सर्वरत्नानि परिभाषोक्तानि । एवम्भूतकृष्णाजिनमेव [3]सवनकानना मही । [4][कृष्णाजिनदाने तथाभूतमही]-दानफलमेव भवतीत्यर्थः । तपःशालिनं ब्राह्मणमभ्यर्च्य तस्मै यथोक्तमुक्तोपकरणसहितं[5] कृष्णमृगाजिनमर्चितम् ॐ अद्यादि तुभ्यमन्नमुक्ता दद्यात् । विष्णुधर्मोत्तरोक्त[6]--पौर्णमासीविहित--[7][कृष्णाजिनदान]--फलप्राप्तिकामोऽहमेतत्तिलप्रच्छादितं [8]वस्त्राच्छादितं [9]सर्वरत्नालङ्कृतं कृष्णमार्गणं ददानि । प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते कृष्णमार्गणमिदं प्रजापतिदैवतमिति वदेत् । कामस्तुत्यादि पूर्ववत् । पुच्छग्रहणं[10] स्वीकारः ।

तथा (३।३१६।८):—

सोपवासस्तथा ज्यैष्ठे पूर्णे[च शश]11-लक्षणे ।
उपानहौ तथा छत्रं [दत्त्वात्यन्तं सुखी][12] भवेत् ॥६॥

तथेति [13]देयसमुच्चयार्थम् । ज्यैष्ठपौर्णमासीपूर्वतरदिने पूर्ववद्घटिकाधिकप्रहरत्रये[14] हविष्याहारादिकं कृत्वा सूर्यादिदेवताभ्य उपवासपूर्वक-विष्णुधर्मोत्तरोक्त-पौर्णमासीविहित-च्छत्रोपानद्युगदान-[15][कर्म [16]मया कर्तव्यमिति निवेद्य[17] सङ्कल्पयेत् । ॐ श्व उपोष्यापरदिने विष्णुधर्मोत्तरोक्त-पौर्णमासीविहित-च्छत्रोपानद्युगदान]-कर्माहं करिष्ये । [18]ततो नियमेन सुप्त्वा परदिने उपोष्यापरदिने अर्चिताय ब्राह्मणाय उपानद्युग[19] छत्रं चार्चितम्[20] ॐ अद्यादि तुभ्यमन्तमुक्ता दद्यात । अत्यन्तसुखप्राप्तिकामोऽहमेतदुपानद्युग[21]-मेतच्छत्रं ददानि ।

---

1 A तपसन्ते
2 A सर्व्ववनि
3 A ग्ररण्यकानना
4 I. O. omits the bracketed portion
5 I. O. ॰सहित
6 A विष्णुधर्मोत्त॰
7 A कृष्णाजिन for the bracketed portion
8 A omits this
9 A सर्व्वरत्नोलङ्कृतं
10 A पुच्छग्रहणच
11 A दयस for the bracketed portion
12 A दत्वात्यन्तं सुसुखी for the b. p.
13 I. O. देवसमुच्चयार्थं, A देहसंरक्षपात्रम्
14 A ॰घटिकाधिकाधिकप्रहरये
15 I. O. omits the b. p.
16 A omits कर्म
17 A निवेद्य
18 I. O. reads ततो नियमेन सुप्त्वा परदिने उपोष्यापरदिने विष्णुधर्मोत्तरोक्त-पौर्णमासीविहित-च्छत्रोपानद्युगदानकर्माहं करिष्ये between करिष्ये and ततो
19 A उपानद्युगलं
20 A चर्चितं, I. O. वार्चितं
21 A उपानद्युगल॰

प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते एतदुपानद्युगमुत्तानाङ्गिरोदैवत-[मेतच्छत्रं प्रजापतिदैवत][1]-मिति वदेत्। कामस्तुत्यादि पूर्ववत्। उपानद्युगारोहणं[2] छत्रदण्डग्रहणञ्च स्वीकारः।

तथा (३।३१९।९क) :—

आषाढ्यामन्नदानेन प्राप्नोत्यन्नं नरो बहु।

ब्राह्मणायार्चितायान्नमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। प्रचुरान्नप्राप्तिकामोऽहमेतदन्नं ददानि। प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते अन्नमिदं प्रजापतिदैवतमिति वदेत्। कामस्तुत्यादि पूर्ववत्। [3]स्पर्शनं स्वीकारः[4]।

[5][[6]तथा(३।३१९।९ख) :—

जलधेनुप्रदानेन श्रावण्यां शुभमाप्नुयात्॥७॥

विष्णुधर्मोत्तरोक्तविधिना जलधेनुमुपकल्प्यार्चितामर्चिताय ब्राह्मणाय[7] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [8]शुभप्राप्तिकामोऽहमेतां जलधेनुं ददानि। प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते जलधेनुरियं विष्णुदैवतेति वदेत्। कामस्तुत्यादि पूर्ववत्।]

तथा (३।३१९।१०क) :—

गोदानं [9]प्रोष्ठपादे तु पौर्णमास्यां महाफलम्॥८॥

प्रोष्ठपादे[10] भाद्रपदे ब्राह्मणायार्चिताय [11]गामर्चिताम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाफलप्राप्तिकामोऽहमेतां गां ददानि। प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते गौरियं रुद्रदैवतेति वदेत्। [12][कामस्तुत्यादि पूर्ववत्।] पुच्छग्रहणं स्वीकारः।

तथा (३।३१९।१०ख-११क) :—

[13]अश्वयुजु कांस्यपात्रं [घृतपूर्णं द्विजातये][14]।

[15]ससुवर्णं तथा दत्त्वा [16]दीप्ताग्निरभिजायते॥९॥

1 A omits the bracketed portion
2 A ०रोहण
3 A स्पर्शनञ्च
4 I. O. स्वीकार
5 A omits the bracketed portion
6 I. O. omits तथा
7 I. O. adds अर्चिताय after this
8 I. O. स्वर्ग for शुभ
9 A प्रोष्ठपदे
10 A प्रोष्ठपदं
11 A omits it
12 I. O. omits the bracketed portion
13 A अश्वयुक्ति, I. O. अश्वयुक्
14 I. O. घृतपूर्णद्विजातये for the b. p.
15 I. O. ससुवर्ण
16 A दीप्ताग्निस्त्वभिजायते

अर्चिताय ब्राह्मणाय कांस्यपात्रं घृतेन पूरयित्वा सुवर्णं [1]तन्मध्ये दत्त्वार्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। दीप्ताङ्गप्राप्तिकामोऽह-[2]मेतद्घृतपूर्णं [3]ससुवर्णं कांस्यपात्रं ददानि। प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते [4]कांस्यपात्रमिदं विष्णुदैवतमिति वदेत्। [5][कामस्तुत्यादि पूर्ववत्। स्पर्शनञ्च स्वीकारः।

तथा :—

अश्वयुक्कृष्णपक्षे तु या तु पञ्चदशी भवेत्।
विष्णुद्वारेषु दातव्यास्तदा दीपा यदूत्तम।]
अन्यत्रापि तदा दीपैर्महत् पुण्यफलं लभेत ॥१०॥

अन्यत्रापीत्यादि-[6]त्यपुराणोक्तदानेषु।

तथा चादित्यपुराणे[7] :—

प्रदोषसमये लक्ष्मीं[8] पुजयित्वा यथाक्रमम्।
दीपवृक्षास्ततः कार्य्याः[9] शक्त्या देवगृहेषु च ॥११॥
चतुष्पथश्मशानेषु नदीपर्वतवेश्मसु।
वृक्षमूलेषु गोष्ठेषु चत्वरेषु गृहेषु च ॥१२॥

[ पर्वतवेश्मसु गुहासु। ][10] आश्विनपौर्णमास्यनन्तरिता[11]-याममावास्यायां विष्णुद्वारेषु[12] आदित्यपुराणोक्तस्थानेषु च दीपं गृहीतोदपूर्णताम्र-[पात्र उद][13]ङ्मुखः सङ्कल्प्य[14] दद्यात्। ॐ अद्य विष्णुधर्मोत्तरोक्ताश्वयुक्[15]-कृष्ण[16]-पञ्चदशीविहित-दीपदानफलप्राप्तिकामोऽहं विष्णु[17]-द्वारादिनानास्थानेषु दीपान् दास्ये इति सङ्कल्प्य तत्तत्स्थानेषु शरावस्थान् दीपान् दद्यात्।

1 A तन्मध्ये
2 A omits मेतद्
3 A समुवर्णं
4 A कांस्यपात्रं मिदं
5 A omits the bracketed portion
6 I. O. omits त्य and reads स्थानेषु for दानेषु, A reads the whole line as अन्यत्रापि चादित्यपुराणोक्तदानेषु
7 I. O. चादित्पुराणे, A चादित्पुराणं
8 A लक्ष्मीं
9 I. O. कुर्याः
10 A पर्व्वतवेश्मसु गुहासु for the b. p.
11 I. O. ०मास्यान्तरिता०
12 A विष्णुद्वारेषु
13 A मुद for the bracketed portion
14 A सङ्कल्प्य
15 A युक for अश्वयुक्
16 A कृष्णपक्ष for कृष्ण
17 A विष्णु०

तथा ( वि. ध. ३।३१६।११ख-१४क) :—

कार्त्तिक्यां चन्द्रवर्णाभमन्यवर्णमथापि वा ।

[1]रत्नैर्गन्धैस्तथा धान्यैर्बीजै[2]-र्वस्त्रैस्तथैव च ॥१३॥

अत्र चन्द्रवर्णाभवर्णस्य पृथग् ग्रहणात् [सातिशयत्वमतस्तदभावे अन्यवर्णदानम् ][3] ।

[कृत्वा युक्त][4]-मथोक्षाणं दत्त्वा दीपान् समन्ततः ।

चन्द्रोदये नरो दत्त्वा सर्वपापैः प्रमुच्यते ॥१४॥

कान्तारे यममार्गे तु तेनासौ व्रजते सुखम् ।

सर्वाणि चास्य[5] भोगानि तत्र चासौ प्रयच्छति ॥१५॥

अर्चिताय ब्राह्मणाय चतुर्दिग् दत्तदीपचतुष्टयमध्यस्थापितं यथोक्तवर्णं नव-[रत्न-सप्त][6]-धान्य-कुष्माण्डादिबीजकर्पूरागुरुचन्दनकस्तूरी[7]-युक्तं वस्त्रैराच्छादितं[8] वृषभमर्चितं[9] चन्द्रोदये ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्त पौर्णमासीविहित-चन्द्राभोक्ष[10] दानफलप्राप्ति-कामोऽहमेतं [11]रत्नगन्धधान्यबीजवस्त्रदीपचतुष्टययुक्त[12] मुक्षाणं ददानि । प्रतिग्रहीता स्वस्ति-मावित्री-[पाठान्त उक्षायं विष्णुदैवत इति][13] वदेत् । कामस्तुत्यादि पूर्ववत् । पुच्छग्रहणं स्वीकारः । अन्यवर्णदाने तु तत्तद्वर्णोल्लेखः[14] कार्य्यः ।

तथा :—

दीपा नदीषु दातव्याः कार्त्तिक्यान्तु विशेषतः ।

कार्त्तिक्यां कार्त्तिकपौर्णमास्यां[15] । अत्र विशेषत[16] इति पददर्शनात् विष्णुधर्मोत्तरोक्त[17]-मेव फलम् ।

× × × × × ×

तेजस्वी च यशस्वी च रूपवानभिजायते ॥१६॥

अतिसम्बन्धात् कार्त्तिकपौर्णमास्यां पूर्ववत् नद्यां दीपदानं सङ्कल्पयेत् । ॐ अद्य विष्णु-

1 A नवं for रत्नै
2 I. O. धान्यैबजै for धान्यैर्बीजै
3 A अतिशयत्वात्तदभावेऽन्यसुवर्णदानं for the b. p.
4 A मुक्ता for the b. p.
5 A चापि
6 A रत्न for the b. p.
7 A कर्पूर for कस्तूरी
8 A वस्त्रैश्चादितं, I. O. वस्त्रैश्चान्वि-तम
9 A omits it
10 I. O. adds वृषभ after this
11 A omits रत्न
12 A ॰युत॰
13 A पाठान्त उक्षाय विष्णुदैवतमिति for the bracketed portion
14 A ॰ल्लेख
15 A कार्त्तिककृष्णचतुर्दश्यां पौर्णमास्यां
16 A विशेष
17 I. O. विष्णुधर्मोक्त॰

धर्मोत्तरोक्त-पौर्णमासीविहित-दीपदानफलप्राप्तिकामोऽहं नद्यामेतान्[1] दीपान् दास्ये। ततो नद्यां जले [2]यष्टीरारोप्य कदलीस्तम्भनिर्मित-[3]पल्लवोपरि वा दीपान् दद्यात्।

तथा ( वि. ध. ३।३१६।१४ख-१७क ) :—

मार्गशीर्षे[4] तथा मासे[5] पूर्णे शिशिरदीधितौ।
महारजनरक्तेन वाससा द्विजपुङ्गवम् ॥१७॥

महारजनरक्तेन कुसुम्भरञ्जितेन।

आच्छाद्य कांस्यपात्रस्थं[6] प्रस्थं कृत्वा समाहितः।
लवणस्य तु मुख्यस्य चूर्णितस्य[7] द्विजोत्तमाः ॥१८॥

प्रस्थो[8] द्वात्रिंशत् पलानि[9]। मुख्यस्य हविष्यस्य।

दत्त्वा [सुवर्णनाभन्तु तस्मिन्नेव][10] द्विजातये।
सौभाग्यरूप[11]-लावण्ययुक्तो भवति मानवः ॥१९॥

सुवर्णनाभं मध्यन्यस्तसुवर्णम्। सिन्दूरी[12]-वस्त्रेण ब्राह्मणमाच्छाद्य कांस्यपात्रे चूर्णित-सैन्धवप्रस्थं निधाय[13] तन्मध्ये[14] सुवर्णं[15] दत्त्वाभ्यर्च्यार्चिताय तस्मै ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोत्तरोक्त-पौर्णमासीविहितलवणप्रस्थदानफलप्राप्तिकामोऽहमेतं[16] कांस्य-पात्रस्थं[17] सुवर्णनाभं लवणप्रस्थं ददानि। प्रतिग्रहीता स्वस्तिमाविर्लोपाठान्ते लवणमिदं सोमदैवतमिति वदेत्। कामस्तुत्यादि पूर्ववत्। स्पर्शः[18] स्वीकारः।

तथा ( वि. ध. ३।३१६।१७ख-२१ख, २४ख-२५ख ) :—

गौरसर्षपकल्केन [19]पौष्यामुत्सादितो नरः।
गव्यस्याज्यस्य[20] कुम्भेन सोऽभिषिक्तस्त्वनन्तरम् ॥२०॥

1 A एतां नद्यां
2 A यष्टिमारोप्य
3 A reads पल्लवोप and omits वा
4 A मार्गशी
5 A मासे
6 A कांस्यपात्रपात्रस्थं
7 A वर्णितस्य
8 A प्रस्थं
9 I. O. फलानि
10 A सुवर्णनाभं तन्मुखे अर्चिताय for the b. p.
11 A रूप वा for रूप
12 A सिन्धरि०
13 A विधाय
14 I. O. मध्ये
15 A सुर्ण
16 A मेतत्
17 A कांस्यं पात्रस्थ
18 I. O. स्पश, A स्पर्शनश्च
19 A गाव for पौष्या
20 I. O. गव्यस्याज्यस्य

उत्सादित उद्वर्तितगात्रः ।

विरुक्षितस्तथा स्नातः[1] सर्वबीजौषधि[2]-जलैः ।
[3]रत्नगन्धफलोपेतैर्घृतेन[4] तदनन्तरम् ॥२०॥

सर्वबीजौषधि[5]-जलैः परिभाषोक्त-सप्तधान्य-सर्वौषधि[6]-मिश्रितजलैरित्यर्थः ।

सप्तवर्णामुखं दृष्ट्वा तद् प्रदद्याद्[7]-द्विजातये ।
घृतेन [स्नपितं विष्णुं][8] शक्त्या सम्पूजयेत्ततः ॥२२॥
घृतञ्च जुहुयाद्वह्नौ[9] घृतं दद्याद्द्विजातये ।
[10]कर्त्रे वस्त्रयुगं दद्यात् सोपवासः समाहितः ॥२३॥
कर्मणानेन[11] धर्मज्ञाः[12] पुष्टिमाप्नोत्यनुत्तमाम्[13] ।
पौर्णमासीषु चैतासु[14] मासर्क्षसहिताम् च ॥२४॥
एतेषामेव दानानां फलं दशगुणं भवेत् ।
[महत्पूर्वासु चैतासु फलमक्षयमश्नुते ॥२५॥

एतास्वेव पौर्णमासीषु यदा माससंज्ञनक्षत्रयोगो भवति, तदोक्तदानफलेभ्यो दशगुणं फलम् ।][15] यदा तु पौर्णमास्यामेव माससंज्ञ[16]-नक्षत्रे चन्द्रबृहस्पती भवतः, तदा महामाघ्यादि-शब्दवाच्या[17] भवति । तत्राक्षय्यं फलम् ।

तथा च विष्णुः :—

[18]दृश्येते सहितौ यस्यां दिवि चन्द्रबृहस्पती ।
पौर्णमासी तु महती [प्राप्ता सम्वत्सरे तु या][19] ।
तस्यां दानोपवासाद्यमक्षय्यं[20] परिकीर्तितम् ॥२६॥

1 A स्नातं
2 I. O. बीजौषधौ and A बीजौषधौ for बीजौषधि
3 A वस्तु for रत्न
4 I. O. घृते च
5 I. O. and A सर्वबीजौषधौ०
6 I.O. सर्वौषधौ and A सर्वौषधीनां for सर्वौषधि
7 A प्रदद्यात्
8 I. O. स्नपितुं विष्णुं and A सुपितो वित्त for the bracketed portion
9 A जुहुयाद्वह्नौ
10 A कर्त्र
11 A कर्मणा नेन
12 A धर्मज्ञः
13 A पुष्टिमाप्नोत्यनुत्तमं
14 A चैतासु
15 A omits the bracketed portion
16 A माससंज्ञा०
17 A मध्यो for वाच्या
18 I. O. and A दृश्येते
19 A प्राप्ता संवत्सरे तु या and I. O. प्रोक्ता सम्वत्सरे च तु for the bracketed portion
20 A दानोपवासादि अक्षयं

दानदिनपूर्वतरदिने सायं पूर्ववत् घटिकाधिकप्रहरत्रये[1] हविष्यभोजनादि कृत्वा सूर्य्यादि-देवताभ्य उपवासपूर्वक-विष्णुधर्मोत्तरोक्त-[2]पौषपौर्णमासीविहित-सर्षपोद्वर्त्तनादिपूर्वक-घृतदानकर्म मया कर्तव्यमिति निवेद्य सङ्कल्पयेत्। ॐ [3]श्व उपोष्यापरदिने विष्णुधर्मोत्तरोक्तपौष[4]-पौर्णमासी-विहित-सर्षपोद्वर्तनादि-[5][पूर्वक[6]-घृतदानमहं करिष्ये। ततो नियमेन सुप्त्वा अपरदिन उपोष्यापरदिने प्रातः[7] श्वेतसर्षपकल्केनोद्वर्त्य गव्यघृतकुम्भेन स्नातः[8] तण्डुलचूर्णादिभि-र्विरुक्षण[9] कृत्वा परिभाषोक्त-[10]सप्तधान्य-सर्वौषधिमिश्रेण[11][रत्नगन्धफलयुतेन जलेन] स्नातो मुखं सुवर्णसहिते घृते वीक्ष्य तद्घृतं यस्मिन् [12]कस्मिंश्चिद् ब्राह्मणे प्रतिपाद्य घृतस्नपितं भगवन्तं[13] विष्णुं यथाशक्ति सम्पूज्य××ब्राह्मणद्वारा ॐ[14] विष्णवे स्वाहेति घृतेन होमं कारयेत। ततो होमस्य कर्त्रे वासोयुगं दक्षिणाम् ॐ[15] अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। कृतैतद्धोमकर्मप्रतिष्ठार्थं दक्षिणामिदं वासोयुगं ददानि। होमस्य कर्ता[16] स्वस्तीति वदेत्। ततः प्रतिग्रहीतृब्राह्मणमानाय्या-[17]भ्यर्च्यार्चितं घृतं तस्मै ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। ॐ[18] विष्णुधर्मोत्तरोक्त-[19]पौषपौर्णमासी-विहित-[सर्षपोद्वर्तनादिसहित][20]-घृतदानफलप्राप्ति-कामोऽ[21][हमेतद् घृतं ददानि।] [कृतैतद् घृतदानविहितकर्मप्रतिष्ठार्थं दक्षिणामिदं काञ्चनं ददानि।][22] प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते[23] घृतमिदं विष्णुदैवतमिति वदेत्। काम-

1 I. O. घटिकाधेकाधिकप्रहरत्रयो
2 A omits पौष
3 I. O. श्वोपोष्यापरदिने
4 I. O. and A omit पौष
5 A reads the bracketed portion from here to p. 633, seven folios below within मासाद्दैवतकृतदानावर्तः
6 A पूर्वकं
7 A adds स्नात्वा here
8 A स्नानः
9 I. O. विरूक्षणं
10 A सर्व्वधान्यसर्वौषधीमिश्रेण
11 A बहुगन्धफलयुतेन जलेन, I. O. omits जलेन
12 I. O. कश्चिद्
13 I. O. भवन्तं
14 I. O. omits ॐ
15 A omits it
16 A कर्त्त
17 I. O. reads भ्यार्चितं and omits घृतं, A प्रतिग्रहीतृब्राह्मणायार्चितं घृतं
18 I. O. omits ॐ
19 I. O. and A omit पौष
20 I. O. omits the bracketed portion
21 A reads the bracketed portion as विष्णुदैवतं सर्षपोद्वर्तनादि-सहितं घृतमहं ददानि
22 I. O. omits the bracketed portion
23 A स्वस्तीत्युक्त्वा

स्तुल्यादि पूर्ववत्। स्पर्शः[1] स्वीकारः। नक्षत्रयोगे [तु विष्णुधर्मोत्तरोक्त-पुष्यानक्षत्रसंयुक्त-पौर्णमासी][2]-विहित-घृतदानफलप्राप्तिकामोऽहमिति दानवाक्ये निवेशनीयम्। एवं माघे मघायोगे फाल्गुने फल्गुनीद्वयस्यान्यतरयोगे चैत्रे चित्रायोगे वैशाखे विशाखायोगे ज्यैष्ठे ज्येष्ठायोगे आषाढे आषाढा[3]-द्वयस्यान्यतरयोगे [4]श्रावणे श्रवणायोगे [5]भाद्रपदे [6]भाद्रपदद्वय-स्यान्यतरयोगे आश्विने अश्विनीयोगे कार्तिके [7]कृत्तिकायोगे मार्गशीर्षे मृगशिरोयोगे [8]दान-वाक्यमुन्नेयम्। एवं महापौषी-महामाघी-महाफाल्गुन्यादिषु द्वादशसु विष्णुधर्मोत्तरोक्त-महापौषीविहित-घृतदानफलप्राप्तिकामोऽहमित्या-[9]यूहनीयम्।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे मासनियततिथिदानावर्तः।

1 A प्रतिग्रहश्च
2 A reads the bracketed portion as विष्णुधर्मोक्तपुष्यानक्षत्रपौष-मास
3 I. O. and A आषाढ॰
4 A श्रवणे
5 A भाद्रे
6 I. O. भाद्रपदा॰, A भाद्रपदद्वय-स्यान्यतन्यतयोयोगे
7 A कृत्तिकोयोगे
8 I. O. दानवाक्येसुन्नेयं, A दान-वाक्यमुन्नेयं
9 I. O. ॰यूहनीयं

# अथ नानादैवत-नक्षत्रनियततिथिदानावर्तः । (६५)

विष्णुः :—

[1][मार्गशीर्षशुक्लपञ्चदश्यां मृगशिरोयुक्तायां] चूर्णितलवणप्रस्थमेकं[2] सुवर्णनाभं चन्द्रोदये ब्राह्मणाय प्रतिपादयेत् । [3]अनेन कर्मणा रूपसौभाग्य-[4]भागभिजायते ॥१॥

अत्र यजमानो यथोक्तपौर्णमास्यां चन्द्रोदये ब्राह्मणं वस्त्रादिनाभ्यर्च्य चूर्णितसैन्धवस्य [दशरत्तिकमानेन षोडशपलमेकं प्रस्थमभ्यर्चितं मध्यविन्यस्तसुवर्णं दद्यात् । ॐ अद्या-मुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं विष्णूक्तलवणप्रस्थ][5]-दानफल-प्राप्तिकामोऽहमेतं सुवर्णनाभं लवणप्रस्थं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा लवण-[6]प्रस्थोऽयं सोमदैवत इत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । ततः अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं [7]दक्षिणामेतत् काञ्चनं ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा लवणं स्पृशेत ।

तथा :—

पौषी चेत्[पुष्यायुक्ता तस्यां][8] गौरसर्षपकल्कैरुत्सादितशरीरो गव्यघृतकुम्भे-[9]नाभिषिक्तः सर्वौषधीभिः सर्वगन्धैः [10]सर्वबीजैश्च स्नातो घृतेन च[11] भगवन्तं वासुदेवं स्नपयित्वा [12]गन्ध-पुष्पधूपदीपनैवेद्यादिभिश्चाभ्यर्च्य वैष्णवैः शाक्रै-[13]र्बार्हस्पत्यैश्च मन्त्रैः [14]पावकं हुत्वा समुवर्णेन च घृतेन ब्राह्मणान् स्वस्ति वाचयेत् । [ समुवर्णघृतमर्चितेभ्यो ब्राह्मणेभ्यो दद्यात् । ][15] [16][वासोयुगं कर्त्रे प्रदद्यात् । अनेन कर्मणा पुष्यते ॥२॥

1 A मार्गशीर्षे मार्गशीर्षपञ्चदश्यां मार्गशिर-युक्तायां for the bracketed portion

2 I. O. ॰प्रस्थमेक

3 A चनेक

4 I. O. and A ॰भाग्यभिजायते

5 A reads the bracketed portion as द्वात्रिंशत्पलमनेन प्रस्थमेकं लवणं सुवर्णनाभं कृत्वा सुवर्णनाभप्रस्थलवण

6 I. O. ॰स्थोऽयं

7 A omits दक्षिणाम्

8 I. O. पुष्ययुक्तास्यां and A पुष्या-युक्तायां for the bracketed portion

9 A ॰नाभिषक्तः

10 A सर्व्वबीजैः

11 A omits it

12 A गन्धपुष्पनैवेद्यैश्चाभ्यर्च्य

13 A ॰र्गार्हस्पत्यैर्मन्त्रै

14 A omits it

15 I. O. omits the bracketed portion and A reads it, preceded by इति and followed by इत्यर्थः

16 A omits the bracketed portion

उत्सादितशरीर उद्वर्तितगात्रः। सर्वौषध्यः सर्ववीजानि सर्वगन्धाश्च परिभाषोक्ताः। स्नातो[1] तन्मिश्रितजलैरित्यर्थः।] [2]दानवाक्यं यथा—[3]ॐ अ द्यामुकसगोत्रेभ्योऽमुक-वेदामुकशाखाध्यायिभ्योऽमुकशर्मभ्यो युष्मभ्यं [4]पुष्टिप्राप्तिकामोऽहमिदं [5]ससुवर्णं घृतं ददानि। स्वस्तिसावित्री-[6]पाठानन्तरं घृतमिदं विष्णुदैवतमिति [7]प्रतिग्रहीतृभिर्वाच्यम्। [8]कामस्तुतिः पूर्ववत्। दक्षिणादाने सम्प्रदानबहुत्वं पूर्ववाक्याद्विशेषः। [9]स्पर्शः स्वीकारः। वासोयुगं [10]कर्त्रे प्रदद्यादिति [11]होमकर्त्रे दक्षिणाम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। कृतैतद्धोमकर्म[12]-प्रतिष्ठार्थं दक्षिणामेतद्वासोयुगं ददानि। [13]स्वस्तीति ब्राह्मणो वदेत्।

तथाः—

माघी मघायुक्ता चेत्तस्यां तिलैः श्राद्धं कृत्वा पूतो भवति [14]पार्वणविधिनोक्तम्॥३॥

तथा[15]:—

[16]फाल्गुनी [17]फल्गुनीयुक्ता चेत्तस्यां ब्राह्मणाय सुसंस्कृतं स्वास्तीर्णं शयनीयं निवेद्य भार्यां मनोज्ञां [18]पक्षवतीं द्रविणवतीं चाप्नोति नार्यपि भर्तारम्॥४॥

[19]पक्षवतीं कुटुम्बिनीं[20] स्वास्तीर्णं खट्वोपरिविस्तीर्णोत्कृष्ट तूलिकादि-[21]रूपं सुसंस्कृतं[22] शोभननिर्माणम्[23] अर्चिताय ब्राह्मणाय यथोक्तमर्चितं[24] शयनीयम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [25]विष्णूक्त-फाल्गुनीमार्गविहित-शयनीयदानफलप्राप्तिकामोऽहमेतच्छयनीयं ददानि।

1 I. O. omits it
2 I. O. and A नद्
3 A omits it
4 A पुष्टिकामोऽहं
5 A ससुवर्णघृतं
6 A ०पाठान्ते
7 A प्रतिग्रहीतृवाक्यं
8 A कामस्तुत्यादि
9 A स्पर्शश्च
10 I. O. कर्त्रे प्रदद्यादिति, A कर्त्रे दद्यात्
11 I. O. होमकृत्
12 I. O. omits कर्म
13 I. O. स्वस्ति
14 A पार्वणविधिनेति युक्तं
15 I. O. and A omit it
16 A omits it
17 I. O. फल्गुनीति युक्ता, A फाल्गुनीति युक्ता
18 I. O. पक्षवतीं, A प्रेक्षावतीं
19 I. O. पक्षवतीं, A प्रेक्षावतं
20 A कुटुम्बिनं
21 I. O. रूपां
22 I. O. सुसंस्कृतेन
23 A शोभनं निर्माय
24 A शयनीमर्चितं
25 A विष्णुधर्मोत्तरोक्त०

स्वस्तिसावित्रीपाठान्ते [1]शयनीयमिदं प्रजापतिदैवतमिति प्रतिग्रहीतृवाक्यम्[2]। कामस्तुत्यादि पूर्ववत्।

तथाः —

[3]चैत्री चित्रायुक्ता चेत्तस्यां चित्रवस्त्रप्रदानेन सौभाग्यमाप्नोति ॥५॥

अर्चिताय ब्राह्मणायार्चितं [4]चित्रवस्त्रम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सौभाग्य-प्राप्तिकामोऽहमेतच्चित्रवस्त्रं ददानि। स्वस्तिसावित्रीपाठान्ते वस्त्रमिदं बृहस्पतिदैवतमिति प्रतिग्रहीतृवाक्यम्[5]। कामस्तुत्यादि पूर्ववत्। दशाग्रहणपूर्वकं[6] परिधानं स्वीकारः।

तथाः—

वैशाख्यां पौर्णमास्यां ब्राह्मणसप्तकं क्षौद्रयुक्तैस्तिलैः[7] सन्तर्प्य धर्मराजानं प्रीणयित्वा पापेभ्यः पूतो भवति ॥६॥

तत्तन्नक्षत्रयुक्तासु-पौर्णमासीषु[8] दान-[श्रवणात्तन्मध्य-[9]पातित्वादत्रापि विशाखानक्षत्रयुक्त-पौर्णमास्यां दानम्। अर्चितेभ्यः सप्तभ्यो ब्राह्मणेभ्योऽर्चितान् मधुयुतांस्तिलान् ॐ अद्यादि [10]युष्मभ्यमन्तमुक्त्वा दद्यात्। [11]विष्णूक्त-पौर्णमासीविहित मधुयुक्त-तिलदान][12]-फलप्राप्तिकामोऽहमेतान् क्षौद्रयुक्तांस्तिलान् ददानि। प्रीयतां धर्मराजः। स्वस्तिसावित्री-पाठान्ते तिला एते प्रजापतिदैवता इति [13]प्रतिग्रहीतृभिर्वाच्यम्। कामस्तुत्यादि पूर्ववत्। [[14]मुष्टिग्रहणं स्वीकारः।][15]

तथा :—

ज्यैष्ठी [16][ज्येष्ठायुक्ता [17]चेत्तस्यां] [18]छत्रोपानत् प्रदानेन [19]नगराधिपत्यमाप्नोति ॥७॥

---

1 A omits इदं
2 I. O. वाच्यं for वाक्यम्
3 A चित्रं
4 I. O. वस्त्रं
5 I. O. वाच्यं for वाक्यम्
6 A ०पूर्वक
7 I. O. ०स्मक्षौद्र
8 A पौर्णमासीष्व
9 A ०ज्ञाति०
10 A युष्म०
11 A विष्णुधर्मोत्तरोक्त०
12 A reads the bracketed portion twice
13 A प्रतिग्रहीतृवाक्यं
14 I. O. स्वस्तिग्रहणं
15 A omits the bracketed portion
16 A ज्येष्ठायुक्ता चेत् तस्यां for the b. p.
17 I. O. चेत्या
18 A छत्रोपानह०
19 I. O. नगाधिपत्य०

अर्चिताय ब्राह्मणायार्चित [1][छत्रोपानहौ ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। नक्षत्राधिपत्य-प्राप्तिकामोऽहमेते छत्रोपानहौ ददानि।] स्वस्तिसावित्रीपाठान्ते एतच्छत्रोपानहौ प्रजापत्युत्ता-नाङ्गिरोदैवत इति प्रतिग्रहीतृवाक्यम्[2]। कामस्तुत्यादि पूर्ववत्। छत्रस्य दण्डग्रहणमुपा-नहोरारोहण[3] स्वीकारः।

तथा :—

आषाढ्या-[4]माषाढायुतायामन्नपानदानेन [5]तदेवाक्षय्यमाप्नोति ॥८॥

अन्नपानमित्यन्नं [6]पानञ्च। अर्चिताय ब्राह्मणायार्चितमन्नपानम् ॐ अद्यादि तुभ्यमन्त-मुक्त्वा दद्यात्। विष्णूक्त-पौर्णमासीविहितान्नपानदानफलप्राप्तिकामोऽहमेतदन्नपानं ददानि। स्वस्तिसावित्रीपाठान्ते अन्नपानमिदं प्रजापतिदैवतमिति प्रतिग्रहीतृवाक्यम्[7]। कामस्तुत्यादि पूर्ववत्।

तथा :—

श्रावण्यां [8]श्रवणायुक्तायां जलधेनुं [9]सान्नां वासोयुगाच्छादितां दत्त्वा [10]स्वर्गलोकम-वाप्नोति ॥९॥

मत्स्यपुराणोक्तं [11]जलधेनुमन्नसहितां कृत्वा वासोयुगेनाच्छाद्यार्चितामर्चिताय ब्राह्मणाय धेनुदानावर्त्तोक्त-मत्स्यपुराणीयजलधेनुदानविधिना[12] दद्यात्। [13][तत्र स्वरूपे सान्नां] वासो-युगाच्छादितामिति कामनायाञ्च स्वर्गलोकप्राप्तिकामोऽहमिति च[14] विशेषः।

तथा :—

प्रोष्ठपद्यां तद्युक्तायां [15]गोप्रदानेन सर्वपापविनिर्मुक्तो भवति ॥१०॥

तद्युक्तायां पूर्वभाद्रपदोत्तरभाद्रपदयोरन्यतरनक्षत्रेण युक्तायामित्यर्थः। [16][ब्राह्मणाया-

1 A adds मेतच्छत्रोपानहौ ददानि स्वस्तिसावित्रीपाठान्ते एते before the bracketed portion
2 I. O. वाच्यं for वाक्यम्
3 I. O. ०मुपानहौ वारोहणं, A ०मुपानहारोहणं
4 I. O. ०माषायुतायां०, A ०माषाढ-युतायां०
5 I. O. तदेवाक्षय०, A तदक्षय्य०
6 A पानकञ्च
7 I. O. वाच्यं for वाक्यम्
8 A श्रवणयुक्तायां
9 A सान्ये
10 A स्वर्गलोकप्राप्तिरेव
11 A जलधेनुं मन्त्रसहितां
12 I. O. ०विधया
13 A तत्स्वरूपमान्न for the bracketed portion
14 A omits it
15 A च गुदानेन
16 A reads the bracketed portion as ब्राह्मणाय अर्चितां

चिंतायार्चितां गाम्] ॐ अद्यादि तुभ्यमन्तमुक्का दद्यात् । सर्वपाप-[1]विनिर्मोकप्राप्तिकामोऽह-मेतां गां ददानि । स्वस्तिसावित्रीपाठान्ते गौरियं रुद्रदैवतेति प्रतिग्रहीतृवाक्यम्[2] । पुच्छ-ग्रहणं स्वीकारः ।

तथा :—

[3]आश्वयुज्यामश्विनीगते चन्द्रमसि घृतपूर्णं[भाजनं सुवर्णयुतं][4] विप्राय दत्त्वा [दीप्ता-ग्निर्भवति ॥११॥

अर्चिताय ब्राह्मणाय यथोक्तं भाजनमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्का दद्यात् ।][5] दीप्ताग्नित्वप्राप्तिकामोऽहमेतत् घृतपूर्णं सुवर्णयुतं[6] भाजनं ददानि । स्वस्तिसावित्रीपाठान्ते भाजनमिदं विष्णुदैवतमिति प्रतिग्रहीतृवाक्यम् । कामस्तुल्यादि पूर्ववत् ।

तथा :—

कार्तिकी चेत् कृत्तिकायुता [7]स्यात्तस्यां सितमुक्षाणमन्यवर्णं वा शशाङ्कोदये सर्वशस्य-[8]रत्नगन्धोपेतं दीपमध्ये ब्राह्मणाय दद्यात् । [9]कान्तारभयं न पश्यति ॥१२॥

अत्र सितोपादानात् सितोक्षदाने फलाधिक्यं दीपमध्य इति दीपचतुष्टयमध्ये । [10]सर्व-रत्नानि सर्वशस्यानि सर्वगन्धाश्च परिभाषोक्ता ग्राह्याः । ब्राह्मणायार्चिताय चन्द्रोदयसमये यथोक्तं वृषमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्का दद्यात् । विष्णूक्त-पौर्णमासीविहित-सितो-क्षदानफलप्राप्तिकामोऽहमेतं सर्वशस्य-[11][सर्वरत्न सर्वगन्धोपेतमुक्षाणं] ददानि । स्वस्ति-सावित्रीपाठान्ते उक्षायं विष्णुदैवत इति प्रतिग्रहीतृवाक्यम् । कामस्तुल्यादि पूर्ववत् । पुच्छग्रहणं स्वीकारः । अन्यवर्णदाने तु तद्वर्णनिवेशो[12] विशेषः ।

विष्णुधर्मोत्तरे (३।३१७।३३) :—

माघे [13]श्रवणसंयुक्ता कृष्णा [14]स्याद्द्वादशी यदा ।
[15]तिलदानं [16]महत् पुण्यम् [विनापि श्रवणेन तु][17] ॥१३॥

1 A विनिर्मुक्ति for विनिर्मोक
2 I. O. वाक्यं for वाक्यम्
3 A अश्वयुज्यामश्विनीगते
4 A स्वर्णयुतं for the bracketed portion
5 A omits the bracketed portion
6 I. O. omits it
7 A तस्यां
8 A वस्त्र for रत्न
9 I. O. कान्तारतमं
10 A सर्ववस्त्र
11 A सर्वगन्धौयुक्तप्रक्षाणं for the bracketed portion
12 I. O. तद्वर्णविशेषो
13 A श्रवणयुक्ता
14 A च द्वादशी
15 I. O. दिनदानं
16 A महापुण्यं
17 I. O. omits the bracketed portion

[1][लभेतेति फलं सम्बध्यते।][2]श्रवणायुक्त-माघकृष्णद्वादशीदिने ब्राह्मणायार्चिताय तिलानर्चितान् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। बृहत्पुण्यप्राप्तिकामोऽहमेतांस्तिलान् ददानि। स्वस्तिसावित्रीपाठान्ते तिला एते प्रजापतिदैवता इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। [3]मुष्टिग्रहणं स्वीकारः। [4][अत्र विनापि] श्रवणेनेति पददर्शनाच्छ्रवणारहित[5]-माघकृष्णद्वादश्यामपि तिलदानं कर्तव्यम्।

तथा :—

श्रवणद्वादशीयोगे[6] कृष्णपक्षे तथैव च।

घृतेन दीपा दातव्यास्तैलैर्वा यदुनन्दन ॥१४॥

तथैव चेत्युक्ते [7]वाक्यान्तरोक्तं [8][महत् पुण्यं लभेतेति फलं] सम्बध्यते। [9]श्रवणायुक्तद्वादश्यां पूर्ववद्दीपान् सङ्कल्प्याभिमतदेशे दद्यात्। ॐ अद्य बृहत्पुण्यप्राप्तिकामोऽहं घृतेन दीपान्[10] दास्ये इति सङ्कल्प्य दद्यात्। तैलेन दीपदाने[11] तु घृतपदस्थाने तैलपदनिवेशो विशेषः।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते श्रीदानसागरे नक्षत्रनियततिथिदानावर्तः।

1 A omits the bracketed portion
2 A श्रवणयुक्तमाघद्वादशीदिने
3 I. O. स्विग्रहणं
4 A अत्रापि for the bracketed portion
5 A •विरहित•
6 I. O. •युक्त
7 I. O. वाक्यान्तरोक्तं
8 A reads the bracketed portion as महत्पुण्यफलं लभेतेति
9 A श्रवण•
10 I. O. दीपा
11 I. O. दीपादाने

## [1][अथ नानादैवतनक्षत्रदानावर्तः । (६६) ]

महाभारते (अनु—६४।५) :—

कृत्तिकासु महाभागे पायसेन ससर्पिषा ।

सन्तर्प्य ब्राह्मणान् [2]साधून् लोकानाप्नोत्यनुत्तमान् ॥१॥

अत्र यजमानो ब्राह्मणेभ्यः [3][सदाचारसम्पन्नशीलेभ्यो]ऽर्चितेभ्योऽर्चितं [4]सघृतपायसं दद्यात्। ॐ अद्यामुकसगोत्रेभ्योऽमुकवेदामुकशाखाध्यायिभ्योऽमुकदेवशर्मभ्यो युष्मभ्यमनुत्तमलोकप्राप्तिकामोऽहमेतं [5]ससर्पिष्कं पायसं ददानि । प्रतिग्रहीतारः [6]स्वस्तीत्युक्त्वा सावित्रीं पठित्वा पायसोऽयं प्रजापतिदैवत इत्युक्त्वा यथाशाखं कामस्तुतिं [7]पठेयुः । ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं [8]युष्मभ्यमहं [9]दक्षिणामेतत् काञ्चनं ददानि । प्रतिग्रहीतारः स्वस्तीत्युक्त्वा पायसं स्पृशेयुः ।

तथा (अनु—६४।६) :—

रोहिण्यां प्रथितैर्मांसै-[10][र्मार्गैर्यत्नेन] [11]सर्पिषा ।

पयोऽन्नपानं[12] दातव्यमानृण्यार्थं[13] [14]द्विजातये ॥२॥

प्रथितैर्विहितै-[15][र्मार्गैर्मृग]-सम्बन्धिभिः [पानं पानकम् । अर्चिताय ब्राह्मणायार्चितं][16] घृतमांससहितं दुग्धमन्नं पानकञ्च दद्यात् । ॐ अद्यामुकसगोत्रायामुक-[17]वेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यमानृण्यप्राप्तिकामोऽहमेतत् [18]घृतमांसयुक्तं पयोऽन्नपानं[19] ददानि ।

---

1 A omits the bracketed portion
2 A साधुनो
3 A सदा दामशीलेभ्यः सम्पन्नेभ्यो for the bracketed portion
4 I. O. omits स
5 A ससर्पिषं
6 A स्वस्ती
7 I. O. पठेत्
8 I. O. युष्ममहं
9 A एतत्
10 I. O. मार्ग्यैर्यत्नं and A मार्गैर्यत्नं for the bracketed portion
11 A ससर्पिषा
12 I. O. पयोऽन्नदानं, A पयोऽन्नपानम
13 A ऽमनृण्यार्थं
14 A द्विजायते
15 A र्मांसैः पशु for the bracketed portion
16 A पानं पानकाऽर्चितं for the bracketed portion
17 A omits वेदामुक
18 I. O. omits घृत
19 I. O. पयोऽन्नदानं

स्वस्तिसावित्रीपाठान्ते पयोन्नपानमिदं[1] विष्णुदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्।

तथा (अनु—६४।७) :—

दोग्ध्रीं दत्त्वा सवत्सान्तु नक्षत्रे सोमदैवते।

गच्छते मानुषाल्लोकात्[2] स्वर्गवासमनुत्तमम्॥३॥

सोमदैवतं मृगशिरः। अर्चिताय ब्राह्मणायार्चितां धेनुम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। अनुत्तमस्वर्गवासप्राप्तिकामोऽहमेतां सवत्सां दोग्ध्रीं ददानि। स्वस्तिसावित्रीपाठानन्तरं दोग्ध्रीयं रुद्रदैवतेति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। पुच्छग्रहणं स्वीकारः।

तथा(अनु—६४।८) :—

आर्द्रायां कृशरं दत्त्वा तैलमिश्रमुपोषितः।

नरस्तरति दुर्गाणि क्षुरधारांश्च पर्वतान्॥४॥

आर्द्रानक्षत्रयुक्तदिनपूर्वतरदिने प्रातः कृत्यनित्यो घटिकाधिकप्रहरत्रये हविष्यं [3]भुक्त्वाऽऽचम्य शुचौ देश उपविश्य पादौ प्रक्षाल्याऽऽचम्य प्राङ्मुख उदङ्मुखो वा कृताञ्जलिः [4]ॐ [5][सूर्य्यः सोमो यमः कालः पञ्च महाभूतानीति पठित्वा] महाभारतोक्तकृशरदानकर्म मया कर्तव्यमित्युक्त्वा उदङ्मुखो गृहीतजलपूर्णताम्रपात्रः सङ्कल्पं कुर्यात्। ॐ अद्य उपोष्यापरदिने महाभारतोक्त-कृशरदानकर्माहं करिष्ये। ततो नियमेन सुप्त्वा परदिने [6]कृतनित्य उपोष्यापरदिने [7]तिलतण्डुलमिश्रदुग्धं तैलयुत-[8]मर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्त-कृशरदानफलप्राप्तिकामोऽहमेतं[9] तैलमिश्रं कृशरं ददानि। [10]स्वस्तिसावित्रीपाठान्ते कृशरोऽयं प्रजापतिदैवत इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्।

1 I. O. ०द्दानमिदं
2 I. O. मानुषान् लोकात्, A मानुषाल्लोका.
3 A भुक्त्वा
4 A omits it
5 I. O. reads the bracketed portion as सूर्य्यसोमयमकालपञ्च-महाभूतानि
6 I. O. कृतनित्योपोष्यापरदिने
7 I. O. तिलतण्डुलमिश्रं
8 A omits अर्चितम्
9 A omits एतं
10 A reads ॐ before this

तथा(अनु—६४।६) :—

[1]पूपान् पुनर्वसौ दत्त्वा तथैवान्नानि शोभने ।

यशस्वी रूपसम्पन्नो बह्वन्ने[2] जायते कुले ॥५॥

अर्चिताय ब्राह्मणायार्चितान् पूपान् [अन्नानि चार्चितानि][3] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । महाभारतोक्त-पुनर्वसुविहित पूपान्नदान-फलप्राप्तिकामोऽहमेतात् [4]पूपान् [5]एतान्यन्नानि ददानि । स्वस्तिसावित्रीपाठान्ते पूपा एते प्रजापतिदैवता अन्नान्येतानि प्रजापतिदैवतानीति प्रतिग्रहीतृवाक्यम् । कामस्तुल्यादि पूर्ववत् ।

तथा(अनु—६४।१०) :—

पुष्ये तु कनकं दत्त्वा [6][कृतं वाकृतमेव]च ।

अनालोक्येषु लोकेषु सोमवत् स [7]विराजते ॥६॥

[8]कृतमलङ्कारी [9]अकृतमघटितम् । [10][अर्चिताय ब्राह्मणायार्चितं] यथोक्तं कनकम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । महाभारतोक्त-पुष्यर्क्षविहित-कनकदानफलप्राप्तिकामोऽहमेतत् [11]कृताकृतं कनकं ददानि । स्वस्तिसावित्रीपाठान्ते कनकमिदमग्निदैवतमिति प्रतिग्रहीतृवाकम्[12] । कामस्तुल्यादि पूर्ववत् ।

तथा(अनु—६४।११) :—

[13]अश्लेषासूत्तमो रूप्यं [14][वृषभं वा] प्रयच्छति ।

स सर्वभयनिर्मुक्त-[15]वैभवानधितिष्ठति ॥७॥

अर्चिताय ब्राह्मणायार्चितं रजतं [16]वृषभं वा ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । महाभारतोक्ताश्लेषाविहितरूप्यदानफलप्राप्तिकामोऽहमेतद्रूप्यं ददानि । स्वस्तिसावित्रीपाठान्ते [17]रूप्यमिदमग्निदैवतमिति प्रतिग्रहीदवाक्यम् । कामस्तुल्यादि पूर्ववत् । [18][वृषभदाने

---

1 A पूपान्न
2 I. O. बहन्ने, A बन्नान्न
3 A omits the bracketed portion
4 I. O. अपूपान, A पूवपान
5 A omits it
6 A दद्यात स्वीकृतमेव for the bracketed portion
7 A विजायते
8 A स्वीकृतमलङ्कार
9 I. O. omits अ, A कृतेमयुतमघटितं
10 A अर्चितं for the bracketed portion
11 A कृतं
12 I. O. वाच्यं for वाक्यम्
13 A अश्लेषासुभयो
14 I. O. वृषं वाथ for the bracketed portion
15 A सर्वभावमधि॰, I. O. भावनामधि॰
16 A वृषभ्या
17 A रूप्यमिदं चन्द्रदैवतमिति
18 A omits the bracketed portion

तु वाक्ये रूप्यपदस्थाने वृषभपदनिवेशो विशेषः [ स्वस्तिसावित्रीपाठान्ते वृषभोऽयं विष्णु-दैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्।] पुच्छग्रहणं स्वीकारः[1]।

तथा (अनु—६४।१२) :—

मघासु तिलपूर्णानि वर्द्धमानानि मानवः।

प्रदाय पुत्र-[2]पशुमानिह [3]प्रेत्य च जायते ॥८॥

वर्द्धमानानि शरावान्। अर्चिताय ब्राह्मणायार्चित[4] तिलपूर्णशरावत्रयम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्ततिलपूर्णवर्द्धमानदानफलप्राप्तिकामोऽहं-[5]मेतानि तिल-पूर्णानि वर्द्धमानानि ददानि। स्वस्तिसावित्रीपाठान्ते [6]वर्द्धमानानि एतानि विष्णुदैवतानीति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्।

तथा (अनु—६४।१३) :—

फाल्गुनी-[7]पूर्वसमये ब्राह्मणानामुपोषितः।

[8][भक्ष्यान् फाणित]-संयुक्तान्[9] दत्त्वा सौभाग्यमृच्छति[10] ॥९॥

[11][फाणितं खण्डशालूक इति प्रसिद्धम्।] पूर्वफल्गुनीयुक्तदिन-पूर्व-[12]तरदिने पूर्व-वद्धविष्याहारादि कृत्वा सूर्यादिदेवताभ्य उपवासपूर्वक-[महाभारतोक्त-पूर्व][13]-फल्गुनीविहित-फाणितयुक्त-भक्ष्य[14]-दान-[15]कर्म मया कर्त्तव्यमिति निवेद्य सङ्कल्पं कुर्यात्। ॐ अ उपोष्या-परदिने महाभारतोक्त-पूर्वफल्गुनीविहित फाणितयुक्त-भक्ष्यदानकर्माहं करिष्ये।][16] ततो नियमेन सुप्त्वा परदिने [उपोष्यापरदिने ब्राह्मणेभ्योऽर्चितान् फाणितयुक्तान् यथालाभं फल-मूलापूपलड्डुकान्][17] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सौभाग्यप्राप्तिकामोऽहमेतानि

---

1 I. O. स्वीकार
2 I. O. ॰पशुमानिह
3 A प्रत्य
4 A ॰र्चिताय
5 I. O. ॰मेतान् तिलपूर्णान् वर्द्ध-मानान्
6 I. O. वर्द्धमाना एते विष्णुदैवता
7 I. O. ॰सर्वसमये
8 A भक्ष्यानफाणितं for the bracketed portion
9 I. O. ॰संयुक्तां
10 I. O. ॰मर्हति
11 A फाणित खण्डशालुक इति प्रसिद्ध: for the bracketed portion
12 A omits तर
13 I. O. omits the bracketed portion
14 I. O. and A ॰भक्ष॰
15 I. O. कर्माहं करिष्ये इति
16 I. O. omits the bracketed portion
17 A reads the bracketed portion as महाभारतोक्त-पूर्वफल्गुनी-विहित-फाणितयुक्तभक्ष्याणि

फाणितयुक्तभक्ष्याणि ददानि। स्वस्तिसौविष्टोपाठान्ते भक्ष्याणीमानि विष्णुदेवतानीति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्।

तथा (अनु—६४।१४-१५) :—

घृतक्षीरसमायुक्तं विधिवत् [1]षष्टिकौदनम्।
उत्तराविषये दत्त्वा स्वर्गलोके महीयते ॥१०॥
यद्यत् प्रदीयते दानमुत्तराविषये नरैः।
[महाफलमनन्तं[2] तद्भवतीति][3] विनिश्चयः[4] ॥११॥

अर्चिताय ब्राह्मणायार्चितं घृतक्षीरयुतं [5]षष्टिकौदनम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। सोत्कर्षस्वर्गलोकप्राप्तिकामोऽहमेतद्घृतक्षीरयुक्त-[6]षष्टिकौदनं ददानि। स्वस्त्यादि-स्वीकारान्तं पूर्ववत्। स्वेच्छया गोदान-[7][स्वर्णदानादिकं यदत्र] विधीयते तदनन्तर-फलहेतुः[8]। यस्मात् पुण्यतमेय[9]-मुत्तरफल्गुनी, तत्र च देयद्रव्यदेवतास्वीकारौ च प्रतिग्रह-विधावनुसन्धेयौ।

तथा ( अनु—६४।१६) :—

हस्ते हस्तिरथं दद्याच्चतुर्युक्त-[10]मुपोषितः।
प्राप्नोति परमाल्लोँकान्[11] पुण्यकामसमन्वितान् ॥१२॥

[12][चतुर्युक्तं चतुर्भिर्गजैर्युक्तमित्यर्थः।] [13]हस्तानक्षत्रयुक्तदिन-पूर्वतर[14]-दिने पूर्ववद्ध-विष्याहारादिकं कृत्वा सूर्यादिदेवताभ्य उपवासपूर्वक-महाभारतोक्त-हस्तिरथदानं मया कर्तव्यमिति निवेद्य सङ्कल्पं कुर्यात्। ॐ श्व उपोष्यापरदिने महाभारतोक्त-हस्तिचतुष्टययुक्त-रथदानकर्माहं करिष्ये। ततो नियमेन सुप्त्वा अपरदिने [15]उपोष्यापरदिनेऽर्चिताय ब्राह्मणा-यार्चितं यथोक्तरथम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्त-[16]चतुर्हस्तियुक्त-

---

1 A षष्टिकोदनं
2 I. O. महाफलमन्तं
3 A reads the bracketed portion as महाफलं समं तत्र भवतीति
4 I. O. निश्चयः
5 A षष्टीकोदनं
6 A ०षष्टिकोदनं
7 A reads the bracketed portion as स्वर्गदानानि यद्
8 A ०प्राप्तिः
9 I. O. ०तामय०
10 I. O. ०मतन्त्रित:
11 I. O. परमान् लोकान्
12 A चतुर्युक्तगजैरित्यर्थः for the b. p.
13 I. O. हस्त०
14 A omits तर
15 A omits उपोष्या...दिने
16 A omits चतुर्हस्तियुक्त

रथदानफलप्राप्तिकामोऽहमेतं [1]हस्तिचतुष्टययुक्तं [2]रथं ददानि। स्वस्तिसावित्रीपाठान्ते रथोऽयं प्रजापतिदैवत इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। [3]कशाग्रहणं स्वीकारः।

तथा (अनु—६४।१७) :—

चित्रायां[4] वृषभं दत्त्वा [5][पुण्यान् गन्धांश्च] भारत।
चरत्यप्सरसां लोके रमते नन्दने तथा ॥१३॥

पुण्यान् मनोज्ञानुत्कृष्टानित्यर्थः[6]। अर्चिताय ब्राह्मणायार्चितं वृषभं सुगन्धिद्रव्याणि चार्चितानि चन्दनागुरु-[7]कर्पूरकालीयकानि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्त-चित्राविहितर्षभ-पुण्यगन्धदानफलप्राप्तिकामोऽहमेतमृषभ[8]-मेतांश्च गन्धान् ददानि। [9]स्वस्तिसावित्रीपाठान्ते [10]ऋषभोऽयं विष्णुदेवतो गन्धा एते गन्धर्वदैवता][11] [12][इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। वृषपुच्छग्रहणं गन्धस्य स्पर्शश्च स्वीकारः।

तथा (अनु—६४।१८) :—

स्वात्यामथ धनं दत्त्वा यदिष्टतममात्मनः।
प्राप्नोति लोकान् स शुभानिह चैव महद्यशः ॥१४॥

अर्चिताय ब्राह्मणाय सुवर्णरजतताम्रकांस्यरत्नवस्त्रादीनामिच्छयान्यतममर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्त-स्वातीविहितेष्टतमधनदानफलप्राप्तिकामोऽहमेतद्धनं ददानि। स्वस्तिसावित्रीपाठान्ते धनमिदं विष्णुदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्।

तथा (अनु—६४।१९-२१) :—

विशाखायामनड्वाहं धेनुं दत्त्वा च दुग्धदाम्।
[13][सप्रासङ्गं च शकटं सधान्यं वस्त्रसंयुतम् ॥१५॥]

1 A महाभारतोक्त just before it
2 A omits युक्तं
3 I. O. कषा०
4 I. O. and A चित्राया
5 A पुण्यामन्यांश्च for the b. p.
6 I. O. ०कृष्टानीत्यर्थः
7 A ०कुङ्कुमकालीयकानि
8 A ०मेतं वृषभ०
9 A प्रतिग्रहीता just before it
10 A वृषभोऽयं
11 A reads the portion bracketed from p. 620 above up to here within the chap. नाना-दैवत नक्षत्रदानावर्तः
12 A omits the portion bracketed from here up to p. 641 below
13 Supplied from M. bh. I. O. omits it.

सप्रासङ्गमित्याकर्षयुगद्वयसहितमित्यर्थः । एवं चत्वारो वृषा योज्याः ।

पितृदेवांश्च प्रीणाति प्रेत्य चानन्त्यमश्नुते ।
न स दुर्गाण्यवाप्नोति स्वर्गलोकञ्च गच्छति ॥१६॥
दत्त्वा यथोक्तं विप्रेभ्यो वृत्तिमिष्टां स विन्दति ।
नरकादींश्च संक्लेशान्नाप्नोतीति विनिश्चयः ॥१७॥

अर्चितेभ्यो ब्राह्मणेभ्यो वृषं धेनुं शकटमाकर्षक-वृषचतुष्टययुक्तं धान्यवस्त्रसहितमर्चितम् ॐ अद्यादि युष्मभ्यमन्तमुक्त्वा दद्यात् । महाभारतोक्तविशाखाविहितानडुद्धेनुशकटदान-फलप्राप्तिकामोऽहं यथासंख्यमेतमनड्वाहम् एतां धेनुम् एतं सप्रासङ्गं सधान्यं वस्त्रसंयुतं शकटं ददानि । स्वस्तिसावित्रीपाठान्तेऽनड्वानयं विष्णुदैवतो धेनुरियं रुद्रदैवता शकटोऽयमुत्तानाङ्गिरोदैवत इति प्रतिग्रहीतारो वदेयुः । कामस्तुत्यादि पूर्ववत् । वृषधेन्वोः पुच्छ-ग्रहणं शकटस्यारोहणञ्च स्वीकारः ।

तथा (अनु—६४।२२) :—

अनुराधासु प्रावारं वस्त्रान्तरमुपोषितः ।
दत्त्वा युगशतञ्चापि नरः स्वर्गे महीयते ॥१८॥

प्रावार-[1]मुत्तरीयं वस्त्रान्तरं परिधानीयवस्त्रम् एवं वस्त्रयुगम् । अनुराधायुक्तदिनपूर्वतर-दिने पूर्ववद्धविष्याहारादि कृत्वा सूर्यादिदेवताभ्यः सोपवासमहाभारतोक्तानुराधाविहित-वस्त्रयुगदानकर्म मया कर्तव्यमिति निवेद्य यथाविधि सङ्कल्पयेत् । ॐ श्व उपोष्यापरदिने महाभारतोक्तानुराधाविहितवस्त्रयुगदानकर्माहं करिष्ये । ततो नियमेन सुप्ता परदिने उपोष्या-परदिने ब्राह्मणायार्चितायार्चितमुत्कृष्ट[2]-वस्त्रयुगम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । महाभारतोक्तानुराधाविहितवस्त्रयुगदानफलप्राप्तिकामोऽहमेतं प्रावारमेतद्वस्त्रान्तरञ्च ददानि । स्वस्तिसावित्रीपाठान्ते वस्त्रमिदं बृहस्पतिदैवतमिति प्रतिग्रहीतृवाक्यम् । कामस्तुत्यादि पूर्ववत् । दशाग्रहणपूर्वकं परिधानं स्वीकारः ।

तथा (अनु—६४।२३) :—

कालशाकञ्च विप्रेभ्यो दत्त्वा मर्त्यः समूलकम् ।
ज्येष्ठायामृद्धिमिष्टां वै गतिमिष्टाञ्च गच्छति ॥१९॥

अर्चितेभ्यो ब्राह्मणेभ्योऽर्चितसमूलककालशाकम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । महाभारतोक्त-समूलकालशाकदानफलप्राप्तिकामोऽहमेतत् समूलकं कालशाकं ददानि स्वस्ति-

---

1 I. O. ०मुत्तारकं 2 I. O. ०मुतृष्ट

साविलीपाठान्ते कालशाकमिदं वनस्पतिदैवतमिति प्रतिग्रहीतारो वदेयुः। कामस्तुत्यादि पूर्ववत्।

तथा (अनु—६४।२४) :—

मूले मूलफलं दत्त्वा ब्राह्मणेभ्यः समाहितः।

पितॄन् स संप्रीणयति गतिमिष्टाञ्च गच्छति ॥२०॥

अत्र प्रसिद्धफलमूलानामलाभेनापि फलानि मूलानि चार्चितानि अर्चितेभ्यो ब्राह्मणेभ्यः ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्त-मूलर्क्षविहित-फलमूलदानफलप्राप्तिकामोऽहमेते फलमूले ददानि। स्वस्तिसाविलीपाठानन्तरं फलमूले एते वनस्पतिदैवते इति प्रतिग्रहीतारो ब्रूयुः। कामस्तुत्यादि पूर्ववत्।

तथा (अनु—६४।२५क-२६क) :—

[1]अथ [2]पूर्वास्वाषाढासु दधिपात्राण्युपोषितः।

कुलवृत्तोपसम्पन्ने ब्राह्मणे वेदपारगे।

पुरुषो जायते प्रेत्य कुले स बहुगोकुले ॥२१॥

× × परदिने महाभारतोक्त-दधिपात्रदानकर्माहं करिष्ये। ततो नियमेन सुप्त्वा अपरदिने उपोष्यापरदिने कुलवृत्तशालिने वेदविदेऽर्चिताय ब्राह्मणायार्चितानि दधिसहितानि पात्राणि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्त-दधिपात्रदानफलप्राप्तिकामोऽहमेतानि दधिपात्राणि ददानि। स्वस्तिसाविलीपाठान्ते दधिपात्राण्येतानि विष्णुदैवतानीति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्।

तथा (अनु—६४।२६ख-२७क) :—

उदसक्तुं सर्पिष्कं प्रभूतमधुफाणितम्।

[3]दत्त्वोत्तरास्वाषाढासु सर्वकामानवाप्नुयात् ॥

उदसक्तो घृतशर्करायुक्ता जलक्लिन्नाः सक्तवः। अर्चिताय ब्राह्मणायार्चितमुदसक्तुं[4] घृतयुतं [5]बहुतरमधुखण्डशालूकीयुक्तञ्च ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। अमुकप्राप्तिकामोऽहमेतत् घृतमधुफाणितयुक्तमुदसक्तुं ददानि। स्वस्तिसाविलीपाठान्ते [6]उदसक्तोऽयं प्रजापतिदैवत इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्।

---

1 Supplied from M. bh. I. O. omits it.

2 I. O. पूर्वासुषाढासु

3 I. O. दत्तोत्तरासुषाढासु

4 I. O. °मुदसक्तु

5 I. O. मधुतरमधुखण्ड°

6 I. O. उदसक्तोऽयं

तथा (अनु—६४।२७ख-ग) :—

दुग्धं त्वभिजितो योगे दत्वा मधुघृतप्लुतम्[1] ।
धर्मनित्यो मनीषिभ्यः स्वर्गलोके महीयते ॥२३॥

उत्तराषाढान्त्यचतुर्भागे श्रवणाद्यनाडिकाचतुष्टयावधिके अभिजितो नक्षत्रस्य योगः। अर्चितेभ्यो विद्वद्ब्राह्मणेभ्योऽर्चितं मधुघृतमिश्रं दुग्धम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्त-समधुघृतदुग्धदानफलप्राप्तिकामोऽहमेतं मधुघृतयुतं दुग्धं ददानि। स्वस्ति-सावित्रीपाठानन्तरं दुग्धमिदं विष्णुदैवतमिति प्रतिग्रहीतारो ब्रूयुः। कामस्तुत्यादि पूर्ववत्।

तथा (अनु—६४।२८) :—

श्रवणे कम्बलं दत्वा वस्त्रान्तरितमेव च ।
श्वेतेन याति यानेन सर्वलोकान् समावृतान् ॥२४॥

वस्त्रान्तरितं वस्त्राच्छादितम्। अर्चिताय ब्राह्मणायार्चितं [वस्त्राच्छादितञ्च कम्बलं][2] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्तवस्त्रान्तरित-कम्बलदानफलप्राप्तिकामोऽहमेतं वस्त्रान्तरितं कम्बलं ददानि। स्वस्तिसावित्रीपाठान्ते कम्बलोऽयं बृहस्पतिदैवत इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। दशाग्रहणपूर्वकमाच्छादनं स्वीकारः।

तथा (अनु—६४।२९) :—

गोप्रयुक्तं धनिष्ठासु यानं दत्वा समाहितः ।
वस्त्ररश्मिधरं[3] सद्यः[4] प्रेत्य राज्यं समश्नुते ॥२५॥

गोप्रयुक्तमाकर्षकवृषभद्वयसहितं वस्त्ररश्मिधरं वस्त्रमयरज्जुसहितम् अर्चिताय ब्राह्मणायार्चितं यथोक्तं रथम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्त-धनिष्ठाविहित-गोप्रयुक्तरथदानफलप्राप्तिकामोऽहमेतं गोप्रयुक्तं वस्त्ररश्मिधरं रथं ददानि। स्वस्तिसावित्री-पाठानन्तरं रथोऽयं प्रजापतिदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। कशा-ग्रहणं स्वीकारः।

तथा (अनु—६४।३०) :—

गन्धान् शतभिषायोगे दत्वा सागुरुचन्दनान् ।
प्राप्नोत्यप्सरसां लोकान् प्रेत्य गन्धांश्च शाश्वतान् ॥२६॥

---

1 I. O. मधुघृतं प्लुतं
2 I. O. reads the b. p. as कम्बलञ्च वस्त्राच्छादितं
3 I. O. वस्त्ररश्मिधुरं
4 I. O. सद्य:

गन्धान् कस्तूरिकाम्। अर्चिताय ब्राह्मणायार्चितां[1] यथोक्तद्रव्यसहितां[2] कस्तूरिकाम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्त-शतभिषाविहित-गन्धदानफलप्राप्ति-कामोऽहमेतान् सागुरुचन्दनान् गन्धान् ददानि। स्वस्तिसावित्रीपाठान्ते गन्धा एते गन्धर्वदैवता इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्।

तथा (अनु—६४।३१) :—

पूर्वभाद्रपदायोगे राजमाषान् प्रदाय तु।

[3]सर्वभक्ष्यफलोपेतः स वै प्रेत्य सुखी भवेत् ॥२७॥

अर्चिताय ब्राह्मणायार्चितान् राजमाषान् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्त-राजमाषदानफलप्राप्तिकामोऽहमेतान् राजमाषान् ददानि। स्वस्तिसावित्रीपाठान्ते राजमाषा एते प्रजापतिदैवता इति प्रतिग्रहीतृवाक्यम्।

तथा (अनु—६४।३२) :—

औरभ्रमुत्तरायोगे यस्तु मांसं[4] प्रयच्छति।

स पितॄन् प्रीणयति वै प्रेत्य चानन्त्यमश्नुते ॥२८॥

औरभ्रं मेषभवम्। अर्चिताय ब्राह्मणायार्चितं मेषमांसम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्तौरभ्र-मांसदानफलप्राप्तिकामोऽहमेतदौरभ्रं मांसं ददानि। स्वस्ति-सावित्रीपाठान्ते मांसमिदं प्रजापतिदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्।

तथा (अनु—६४।३३) :—

कांस्योपदोहनां धेनुं रेवत्यां यः प्रयच्छति।

स प्रेत्य कामानादाय [5]दाता समुपतिष्ठति ॥२९॥

अर्चिताय ब्राह्मणायार्चितां धेनुम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्त-रेवतीविहित-धेनुदानफलप्राप्तिकामोऽहमेतां कांस्योपदोहनां धेनुं ददानि। स्वस्तिसावित्री-पाठानन्तरं धेनुरियं रुद्रदैवतेति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। पुच्छग्रहणं स्वीकारः।

तथा (अनु—६४।३४) :—

रथमश्वसमायुक्तं दत्त्वाश्विन्यां नरोत्तमः।

हस्त्यश्वरथसम्पन्ने वर्चस्वी जायते कुले ॥३०॥

1 I. O. ०र्चितायां
2 I. O. ०सहितायां
3 I. O. सर्वभक्ष०
4 I. O. माषं
5 I. O. दातारमुपतिष्ठति

अर्चिताय ब्राह्मणायार्चितं रथम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्ताश्वरथदानफलप्राप्तिकामोऽहमेतमश्वयुक्तरथं ददानि। स्वस्तिसावित्रीपाठान्ते रथोऽयं प्रजापतिदैवत इति प्रतिग्रहीतृवाक्यम्। कामस्तुल्यादि पूर्ववत्। कशाग्रहणं स्वीकारः।

तथा (अनु—६४।३५) :—

भरणीषु द्विजातिभ्यस्तिलधेनुं प्रदाय वै।

[1]गाश्च प्रभूताः प्राप्नोति नरः प्रेत्य यशस्तथा ॥३१॥

द्विजातिभ्य इति जात्याख्यायामेकस्मिन् बहुवचनम्। मत्स्यपुराणोक्तां तिलधेनुमुत्पाद्यार्चितामर्चिताय ब्राह्मणाय धेनुदानावर्तस्थ[2]-मत्स्यपुराणीयतिलधेनुदानविधिना दद्यात्। तत्र कामनायां महाभारतोक्त-भरणीविहित-तिलधेनुदानफलप्राप्तिकामोऽहमिति वाक्ये विशेषः।

विष्णुधर्मोत्तरे (३।३१७।२०-२७क) :—

कृत्तिकासु सुवर्णस्य दानं बहुफलं स्मृतम्।

रक्तवस्त्रस्य रोहिण्यां सौम्यभे लवणस्य च ॥३२॥

सौम्यभे मृगशिरसि।

कृसरस्य तथार्द्रायामादित्ये[3] रजतस्य तु।

घृतस्य तु तथा पुष्ये[4] चन्दनानाञ्च सर्पभे ॥३३॥

आदित्ये पुनर्वस्वोः सर्पभे अश्लेषायाम्। चन्दनानामितिश्वेतचन्दनरक्तचन्दनकुचन्दनानाम्।

तिलानाञ्च मघायोगे प्रियङ्गोर्भगदैवते।

आर्यम्णे चाप्यपूपानां सावित्रे पायसस्य तु ॥३४॥

भगदैवते पूर्वफल्गुन्याम् आर्यम्णे उत्तरफल्गुन्याम् सावित्रे हस्तायाम्।

चित्रायां चित्रवस्त्राणां सक्तूनां वायुदैवते।

ऐन्द्राग्ने[5] चैव लोहानां मैत्रे माल्यफलस्य च ॥३५॥

वायुदैवते स्वात्याम् ऐन्द्राग्ने विशाखायां मैत्रेऽनुराधायाम्।

छत्रस्य[6] च तथा शाकं मूले मूलफलस्य च।

हिमस्य मधुयुक्तस्य दानमाप्ये महाफलम् ॥३६॥

---

1 I. O. गोश्च
2 E. O. धेनुदानावर्त०
3 I. O. तथार्द्रायादित्ये च
4 I. O. पुष्य
5 I. O. तन्त्राग्ने
6 I. O. चंद्रस्य

शाक्रे ज्येष्ठायाम् आप्ये पूर्वाषाढायाम् ।

विश्वेश्वरेऽन्नदानस्य श्रवणे वसनस्य च ।
धान्यस्य वासवे[1] विप्रा वारुणे चौषधस्य च ॥३७॥

विश्वेश्वरे उत्तराषाढायां वासवे धनिष्ठायां विप्रा इति सम्बोधनम् । वारुणे शतभिषायाम् ।

आजे पुराणबीजानां शस्यानां तदनन्तरे ।
गोरसानां तथा पौष्णे स्नानानामथ चाश्विने ।

आजे पूर्वभाद्रपदायां पौष्णे रेवत्याम् ।

तिलानाञ्च तथा दानं भरणीषु महाफलम् ॥३८॥

कृत्तिकानक्षत्रे अर्चिताय ब्राह्मणाय सुवर्णमर्चितम ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्तकृत्तिकाविहितसुवर्णदानफलप्राप्तिकामोऽहमेतत् सुवर्णं ददानि । स्वस्तिसावित्रीपाठान्ते सुवर्णमिदमग्निदैवतमिति प्रतिग्रहीतृवाक्यम् । कामस्तुत्यादि पूर्ववत् । रोहिण्यां लोहितवस्त्रदाने तु विष्णुधर्मोत्तरोक्त-रोहिणीविहितरक्तवस्त्रदानफलप्राप्तिकामोऽहमेतद्रक्तवस्त्रमिति वाक्ये विशेषः । स्वस्तिसावित्रीपाठान्ते रक्तवस्त्रमिदं बृहस्पतिदैवतमिति प्रतिग्रहीतृवाक्यम् । कामस्तुत्यादि पूर्ववत् । दशाग्रहणपूर्वकं परिधानं स्वीकारः । मृगशिरसि लवणदाने तु वाक्ये विष्णुधर्मोत्तरोक्तसौम्यविहितलवणदानफलप्राप्तिकामोऽहमेतल्लवणमिति विशेषः । स्वस्तिसावित्रीपाठान्ते लवणमिदं सोमदैवतमिति प्रतिग्रहीतृवाक्यम् । कामस्तुत्यादि पूर्ववत् । आर्द्रायां तिलतण्डुलपक्वान्नदाने तु वाक्ये विष्णुधर्मोत्तरोक्तार्द्राविहितकृसरदानफलप्राप्तिकामोऽहमेत कृसरमिति विशेषः । स्वस्तिसावित्रीपाठान्ते कृसरोऽयं प्रजापतिदैवत इति प्रतिग्रहीतृवाक्यम् । कामस्तुत्यादि पूर्ववत । रजतदाने वाक्ये विष्णुधर्मोत्तरोक्तादित्यर्क्षविहित-रजतदानफलप्राप्तिकामोऽहमेतद्रजतमिति विशेषः । स्वस्तिसावित्रीपाठान्ते रजतमिदमग्निदैवतमिति प्रतिग्रहीतृवाक्यम् । कामस्तुत्यादि पूर्ववत् । पयोघृतदानवाक्ये विष्णुधर्मोत्तरोक्त-पुष्यर्क्षविहितघृतदानफलप्राप्तिकामोऽहमेतद् घृतमिति विशेषः । स्वस्तिसावित्रीपाठान्ते घृतमिदं विष्णुदैवतमिति प्रतिग्रहीतृवाक्यम् । कामस्तुत्यादि पूर्ववत् । अश्लेषायां चन्दनदाने वाक्ये विष्णुधर्मोत्तरोक्ताश्लेषाविहितचन्दनदानफलप्राप्तिकामोऽहमेतानि चन्दनानीति विशेषः । स्वस्तिसावित्रीपाठान्ते चन्दनान्येतानि गन्धर्वदेवतानीति प्रतिग्रहीतृवाक्यम् । कामस्तुत्यादि पूर्ववत् । मघायां तिलदाने वाक्ये विष्णु-

---

1 I. O. वासरे

धर्मोत्तरोक्त-मघाविहित-तिलदानफलप्राप्तिकामोऽहमेतानि तिलानीति विशेषः। स्वस्तिसावित्रीपाठान्ते तिला एते प्रजापतिदैवता इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। मुष्टिग्रहणं स्वीकारः। पूर्वफल्गुन्यां प्रियङ्गुदाने वाक्ये विष्णुधर्मोत्तरोक्त-भगदैवतर्क्षविहित-प्रियङ्गुदानफलप्राप्तिकामोऽहमेतां[1] प्रियङ्गुमिति विशेषः। स्वस्तिसावित्रीपाठान्ते प्रियङ्गुरियं[2] प्रजापतिदैवतेति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। मुष्टिग्रहणं स्वीकारः। उत्तरफल्गुन्या[3]-मपूपदाने वाक्ये विष्णुधर्मोत्तरोक्तार्य्यमर्क्षविहितापूपदानफलप्राप्तिकामोऽहमेतान[4]-पूपानिति विशेषः। स्वस्तिसावित्रीपाठान्ते अपूपा एते प्रजापतिदैवता इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। हस्तायां पायसदाने तु वाक्ये विष्णुधर्मोत्तरोक्त-हस्तानक्षत्रविहित-पायसदानफलप्राप्तिकामोऽहमेतं पायसमिति विशेषः। स्वस्त्यादिस्वीकारान्तं प्रथमदानवत्। चित्रायां नानावर्णवस्त्रदानवाक्ये विष्णुधर्मोत्तरोक्तचित्राविहित-वस्त्रदानफलप्राप्तिकामोऽहमेतानि चित्रवस्त्राणीति विशेषः। स्वस्तिसावित्रीपाठान्ते वस्त्राणीमानी बृहस्पतिदैवतानीति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। दशाग्रहणपूर्वकं परिधानं स्वीकारः। स्वात्यां सक्तुदाने वाक्ये विष्णुधर्मोत्तरोक्त-स्वातीनक्षत्रविहित-सक्तुदानफलप्राप्तिकामोऽहमेतान् सक्तूनिति विशेषः। स्वस्तिसावित्रीपाठान्ते सक्तव एते प्रजापतिदैवता इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। विशाखायां सुवर्ण-रजत-ताम्र-कांस्य-सीसक-पित्तल-रङ्गकृष्णायसानां दाने तु वाक्ये विष्णुधर्मोत्तरोक्त-विशाखाविहित[5]-लोहदान-फलप्राप्तिकामोऽहमेतानि लोहानीति विशेषः। स्वस्तिसावित्रीपाठान्ते लोहान्येतान्यग्निदैवतानीति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। अनुराधायां फलमाल्यदाने तु वाक्ये [6]विष्णुधर्मोत्तरोक्तानुराधाविहित-फलमाल्यदानफलप्राप्तिकामोऽमेतानि फलमाल्यानीति विशेषः। स्वस्तिसावित्रीपाठान्ते फलमाल्यान्येतानि विष्णुवनस्पतिदैवतानीति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। ज्येष्ठायां छत्रदानवाक्ये विष्णुधर्मोत्तरोक्त-ज्येष्ठा[7]-विहित-छत्रदानफलप्राप्तिकामोऽहमेतच्छत्रमिति विशेषः। स्वस्तिसावित्रीपाठान्ते छत्रमिदं प्रजापतिदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। दण्डग्रहणं स्वीकारः। मूले मूलस्य फलस्य च दाने वाक्ये विष्णुधर्मोत्तरोक्त-मूलर्क्षविहित-फलमूलदानफलप्राप्तिकामोऽहमेतत्फलमूलमिति विशेषः। स्वस्तिसावित्रीपाठान्ते फलमूलमिदं वनस्पतिदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्।

1 I. O. ०मेतं
2 I. O. प्रियङ्गुरिदं
3 I. O. उत्तरफल्गुन्यां पूपदाने
4 I. O. ०मेतान् पूपान् इति
5 I. O. ०विशाविहित
6 I. O. विष्णुधर्मोक्ता०
7 I. O ०मूलर्क्ष

पूर्वाषाढायां मधुयुक्त-शिशिरजलदाने वाक्ये विष्णुधर्मोत्तरोक्त-पूर्वाषाढाविहित-हिमदानफलप्राप्ति-कामोऽहमेतन्मधुयुक्तजलमिति विशेषः। स्वस्तिसावित्रीपाठान्ते हिममिदं विष्णुदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुल्यादि पूर्ववत्। [1]उत्तराषाढायामन्नदाने वाक्ये [2]विष्णुधर्मोत्तरोक्तोत्तराषाढा-विहितान्नदानफलप्राप्तिकामोऽहमेतदन्नमिति विशेषः। स्वस्तिसावित्रीपाठान्तेऽन्नमिदं प्रजापतिदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुल्यादि पूर्ववत्। श्रवणे वस्त्रदान-वाक्ये विष्णुधर्मोत्तरोक्त-श्रवणाविहितवस्त्रदानफलप्राप्तिकामोऽहमेतद्वसनमिति विशेषः। स्वस्ति-सावित्रीपाठान्ते वस्त्रमिदं बृहस्पतिदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुल्यादि पूर्ववत्। दशाग्रहणपूर्वकं परिधानं स्वीकारः। धनिष्ठायां [3]धान्यदाने वाक्ये विष्णुधर्मोत्तरोक्त-धनिष्ठा-विहित-धान्यदानफलप्राप्तिकामोऽहमेतद्धान्यमिति विशेषः। स्वस्तिसावित्रीपाठान्ते धान्य-मिदं प्रजापतिदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुल्यादि पूर्ववत्। मुष्टिग्रहणं स्वीकारः। शतभिषायां वनपाचितगुग्गुलु-पाचिततैलानामौषधानामन्यतमस्य दाने वाक्ये विष्णुधर्मोत्तरोक्त-शतभिषाविहितौषध-दानफलप्राप्तिकामोऽहमेतदौषधमिति विशेषः। स्वस्तिसावित्रीपाठान्ते औषधमिदं विष्णुदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुल्यादि पूर्ववत्। पूर्वभाद्रपदायान्धा-न्यादीनामन्यतमस्य चिरन्तनशस्यस्य दाने वाक्ये विष्णुधर्मोत्तरोक्त-पुराणबीजदानफलप्राप्ति-कामोऽहमेतानि पुराणबीजानीति विशेषः। स्वस्तिसावित्रीपाठानन्तरं बीजान्येतानि प्रजापति-दैवतानीति प्रतिग्रहीतृवाक्यम्। कामस्तुल्यादि पूर्ववत्। मुष्टिग्रहणं स्वीकारः। उत्तर-भाद्रपदायां यथालाभं शस्यत्रयदानवाक्ये विष्णुधर्मोत्तरोक्तोत्तरभाद्रपदाविहित-शस्यदानफल-प्राप्तिकामोऽहमेतानि शस्यानीति विशेषः। स्वस्तिसावित्रीपाठान्ते शस्यान्येतानि प्रजापति-दैवतानीति प्रतिग्रहीतृवाक्यम्। कामस्तुल्यादि पूर्ववत्। मुष्टिग्रहणं स्वीकारः। रेवत्यां दुग्धदधितक्रघृतादीनां दानवाक्ये विष्णुधर्मोत्तरोक्तरेवतीविहित-गोरसदानफलप्राप्तिकामोऽहमेतं[4] गोरसमिति विशेषः। स्वस्तिसावित्रीपाठान्ते गोरसा एते विष्णुदैवता इति प्रतिग्रहीतृ-वाक्यम्। कामस्तुल्यादि पूर्ववत्। अश्विन्यां स्नानीयसुगन्धामलकादिदानवाक्ये विष्णु-धर्मोत्तरोक्ताश्विनीविहित ][5]-स्नानदानफलप्राप्तिकामोऽहमेतत् स्नानमिति विशेषः। स्वस्ति-सावित्रीपाठान्ते स्नानमिदं विष्णुदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुल्यादि पूर्ववत्। भरण्यां तिलदानवाक्ये विष्णुधर्मोत्तरोक्त-भरणीविहित-तिलदानफलप्राप्तिकामोऽहमेतांस्तिला-

---

1 I. O. उत्तराषाढायामन्नदाने
2 I. O. विष्णुधर्मोत्तरोक्त उत्तराषाढा
3 I. O. धान्यदाने
4 I. O. ०मेतां
5 A omits the portion bracketed from p. 633 above up to here

निति विशेषः[1]। स्वस्तिसावित्रीपाठान्ते तिला एते प्रजापतिदैवता इति [2]प्रतिग्रहीतृवाक्यम्।
[3][कामस्तुल्यादि पूर्ववत्।] [4]मुष्टिग्रहणं स्वीकारः।

तथा :—

[5]श्रवणे दीपकं दत्त्वा नदीद्वितयसङ्गमे।
[6][तेजस्वी च यशस्वी च रूपवानभिजायते ॥३९॥

श्रवणानक्षत्रयुक्तदिने नदीद्वितयसङ्गमे] दीपदानं[7] गृहीतजलपूर्णताम्रपात्र उदङ्मुखः सङ्कल्पयेत्। ॐ विष्णुधर्मोत्तरोक्त-[8]श्रवणर्क्षविहित-दीपदानफलप्राप्तिकामोऽहं नदीद्वयसङ्गमे दीपं दास्ये इति [9]सङ्कल्प्य दद्यात्।

तथा (३।३०६।६८) :—

मासे मासे तु रेवत्यां ब्राह्मणान् घृतपायसम्।
सदक्षिणं भोजयित्वा रूपमाप्नोत्यनुत्तमम् ॥४०॥

यथेच्छं प्रतिमासं रेवत्यां ब्राह्मणेभ्योऽर्चितेभ्यो [10]घृतसहितं पायसमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। अनुत्तमरूपप्राप्तिकामोऽहमेतं घृतपायसं ददानि। [11]स्वस्तिसावित्रीपाठानन्तरं घृतपायसोऽयं [12]प्रजापतिदैवत इति प्रतिग्रहीतृवाक्यम्। कामस्तुल्यादि पूर्ववत्।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेव-विरचिते
श्रीदानसागरे नक्षत्रदानावर्तः।

---

1 I. O. शेष:
2 I. O. प्रतिग्रहीतृवाच्यं
3 A reads the b. p twice
4 A मुष्टिग्रहणेन
5 A श्रावणे
6 A omits the b. p.
7 A गृहीतजलदापूर्णपात्र
8 A श्रवणाख्य०
9 A सङ्कल्पं
10 A घृतसहित०
11 A ०पाठान्ते
12 A प्रजापति०

# [ अथ नानादैवत-मासव्यापिदानावर्तः ।][1] (६७)

विष्णु :—

आश्विनं सकलं मासं ब्राह्मणेभ्यः प्रत्यहं घृतं[2] प्रदायाश्विनौ प्रीणयित्वा रूपभाग् भवति । १॥

[3]अथ [4]सौराश्विनशुक्लप्रतिपदि प्रातर्यजमानोऽर्चितेभ्यो यथेष्टसंख्यब्राह्मणेभ्यो घृतमर्चितं[5] दद्यात्[6] । ॐ[7] अद्यामुकामुकसगोत्रेभ्योऽमुकामुकवेदामुकामुक[8]-शाखाध्यायिभ्योऽमुकामुकदेव[9]-शर्मभ्यो युष्मभ्यं विष्णूक्त-मासावच्छिन्न-घृतदानफलप्राप्तिकामोऽहमेतद्[10] घृतं ददानि । [11]अश्विनौ प्रीयेताम् । [12]प्रतिग्रहीतारः स्वस्तीत्युक्त्वा सावित्रीं पठित्वा घृतमिदं विष्णुदैवत-मित्युक्त्वा यथाशाखं कामस्तुतिं[13] पठेयुः । ततः [ॐ अद्य][14] कृतैतद्दानप्रतिष्ठार्थं [15][युष्मभ्यं दक्षिणामेतत्] काञ्चनं ददानि । प्रतिग्रहीतारः स्वस्तीत्युक्त्वा घृतं स्पृशेयुः[16] । [17]एव-मागाम्यमावास्यां यावत् प्रत्यहं दद्यात् ।

तथा :—

तस्मिन्नेव मासि प्रत्यहं गोरसैर्ब्राह्मणान् भोजयित्वा आरोग्यभाग् भवति ॥२॥

तस्मिन्नेवाश्विन[18] इत्यर्थः । सौराश्विनकृष्ण[19]-प्रतिपदर्चितेभ्यो यथेष्टसंख्य[20]-ब्राह्मणेभ्यो दुग्धदधितक्रघृतानामन्यतममर्चितम् ॐ अद्यादि युष्मभ्यमन्तमुक्त्वा दद्यात् । आरोग्य-प्राप्तिकामोऽहमेतान् [21]गोरसान् ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । [22]एवमागाम्य-मावास्यां यावत् प्रत्यहं दद्यात् ।

---

1 A omits the bracketed portion
2 I. O. घृत
3 I. O. and A अत
4 I. O. मघाश्विन० and A सौर आश्विन०
5 A omits अर्चितम्
6 A omits this
7 A omits this
8 A omits वेदामुकामुक
9 A omits देव
10 I. O. ०मेतं
11 A अश्विनौ
12 A प्रीति०
13 A कामस्तुति
14 A omits the bracketed portion
15 I. O. दक्षिणामिदं युष्मभ्यमहमेतत् for the b. p.
16 A स्पृशेत
17 A एवं मासस्य मावस्यां
18 A तस्मिन्नाश्विन
19 A omits कृष्ण
20 I. O. सुख्या for संख्य
21 A adds त्रिवार before this
22 A एवमाषढामावास्यां

तथा :—

माघे [1]मास्यग्नि' प्रत्यह' तिलैर्हुत्वा [2]सघृतं कुन्माष' [3]ब्राह्मणान् भोजयित्वा दीप्ताग्निर्भवति ॥३॥

कुन्माषो [4]राजमाष इति प्रसिद्धः। सौर-[माघशुक्लप्रतिपद्यग्नौ][5] ॐ प्रजापतये स्वाहेति मन्त्रेण तिलान् [6]यथाशक्ति हुत्वा शूद्रो ब्राह्मणद्वारा होमं कारयित्वा यथेष्टसंख्यब्राह्मणेभ्योऽर्चितं सघृतं[7] कुन्माषम् ॐ अद्यादि [8]युष्मभ्यमन्तमुक्त्वा दद्यात्। [9]दीप्ताग्नित्वप्राप्तिकामोऽहमेतं[10] सघृतं कुन्माष' ददानि। [11]स्वस्तिसावित्रीपाठान्ते कुन्माषोऽयं प्रजापतिदैवत[12] इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। मुष्टिग्रहण'[13] स्वीकारः। [14][एवमागाम्यमावास्यावधि] प्रत्यह' होमं कृत्वा सघृतं कुन्माष' दद्यात्।

भविष्यपुराणे :—

दिने दिने [15]जपन्नाम भास्करस्य महात्मनः।
ददाति कार्त्तिके यस्तु [16]तस्यायतनदीपकम् ॥४॥
जातिस्मरत्वं[17] प्रजाश्च प्राकाश्यं सर्वजन्तुषु।
अव्याहतेन्द्रियत्वञ्च स प्राप्नोति न संशयः ॥५॥

सौरकार्त्तिक-शुक्लप्रतिपदि गृहीतजलपूर्णताम्रपात्र उदङ्मुखः सूर्यायतनदीप' [18][सङ्कल्प्य आगाम्यमावास्यां] [19]यावद्दद्यात्। ॐ भविष्यपुराणोक्त-कार्त्तिकव्यापि-दीपदानफलप्राप्तिकामोऽह' [सूर्यायतने दीप' दास्ये][20]। ततो यथाशक्ति भास्कराय नम इति जपित्वा[21] प्रज्वाल्य दद्यात्। [22]एवमपरदिनेष्वपि [23]सङ्कल्पव्यतिरेकेण दीपदानम्।

1 A माघि
2 A घृत', I. O. omits it
3 A ब्राह्मण'
4 I. O. राजमास and A स्वल्पमाष
5 A माघप्रतिपदि for the b. p.
6 I. O. यथाशक्ति हुत्वा
7 I. O. घृत'
8 I. O. तुभ्यमन्तमुक्त्वा
9 A दीप्ताग्नि' for दीप्ताग्नित्व
10 A °मेतत्
11 I. O. adds स्वस्त्यादि पूर्ववत् before this
12 A प्रजापतिदैव
13 A मुष्टिग्रहणच
14 A एवमागम्यामावास्यां यावत् इधिदान for the bracketed portion
15 A जपन्मन्त्र', I. O. जयन्नाम
16 A तथायातनदीपकं, I. O. भगायतनदीपक'
17 A द्युतिमन्तञ्च
18 A संकल्पामावास्यां for the bracketed portion
19 A यावत् कुर्यात्
20 A सूर्यायतनदीप' दानस्य for the bracketed portion
21 I. O. पूजयित्वा
22 A एवमपरदिनेषु
23 A सङ्कल्पाव्यतिरेकेन

विष्णुधर्मोत्तरे :—

अश्वयुज्यामतीतायां यावद्राजेन्द्र [1][कार्त्तिकी ।
तावद्दीपप्रदस्योक्तं फलं राजेन्द्र[2]] शाश्वतम् ॥६॥
तावतकालं प्रयच्छन्ति ये तु दीपं [3]सदा निशि ।
तुङ्गे देशे बहिस्तेषां[4] [महत्पुण्यफलं भवेत् ][5] ॥७॥
अप्यन्धकारे गहने [प्राकाश्यं तेन][6] जायते ।
[7]प्राकाश्याद् यदुशार्दूल तेन यान्ति हि[8] तत् सुखम् ॥८॥

कृष्णप्रतिपदादिपौर्णमास्यन्त-[9]कार्त्तिके दीपदानम् । बहिरुच्च[10]-दीपस्थानं निर्माय [ तत्र निशि][11] दीपं दातुं कृष्णप्रतिपदि[12] पूर्ववत् सङ्कल्पयेत् । [13]ॐ अद्यारभ्य कार्त्तिकपौर्णमासीपर्यन्तं[14] प्रत्यहं विष्णुधर्मोत्तरोक्तकार्त्तिकमासविहित-[15]बहिस्तुङ्गस्थदीपदानफलप्राप्तिकामोऽहं बहिस्तुङ्गस्थाने दीपं दास्ये इति सङ्कल्प्य प्रत्यहं दद्यात् ।

तथाः—

द्विजवेश्मनि यो दद्यात् कार्त्तिके मासि दीपकम्[16] ।
अग्निष्टोमफलं तस्य वदन्ति च मनीषिणः ॥९॥

पौर्णमास्यन्तकार्त्तिकोपक्रमदिने पूर्ववद्दीपं सङ्कल्प्य द्विजगृहे मासमेकं दद्यात् । ॐ अग्निष्टोमफलप्राप्तिकामोऽहं मासमेकं द्विजगृहे दीपं दास्ये । अस्य [17]फलभूयस्त्वात् मासव्यापिदानत्वं प्रयुक्तम्[18] ।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेव-विरचिते
श्रीदानसागरे [19]मासव्यापिदानावर्तः ।

---

1 A omits the bracketed portion
2 I. O. राजे
3 A सदानिशि
4 I. O. बहिस्तेयां
5 A reads the bracketed portion as महापुण्यं फलं लभेत्
6 A reads the bracketed portion as प्रकाश्यन्ते न
7 I. O. प्राकाश्याद्यदुशार्दूल, A प्राकाश्याद्यक्षशार्दूल
8 A omits it
9 A कार्त्तिकदीपदान
10 A बहिस्तुङ्ग०
11 I. O. तन्निशि for the bracketed portion
12 A कृष्णप्रतिपदादि
13 A omits it
14 A कार्त्तिपौर्णमासीपर्यन्त
15 A omits बहि
16 A कामदं
17 A भूयिष्ठात्
18 A युक्तं
19 I. O. omits मास

# [अथ नानादैवतसंक्रान्तिदानावर्तः][1] । (६८)

विष्णुधर्मोत्तरे (३।३१६।३८-४५) :—

मेषसंक्रमणे [2]भानोर्मेषदानं महाफलम् ।
[3]वृषसंक्रमणे दानं गवां प्रोक्तं तथैव च ॥१॥

गवां वृषाणाम्[4] ।

[5]शयनासनदानञ्च [6]मिथुनोपक्रमे तथा ।

[7]शयनासनदानमिदमेकैकस्योभयोर्वा स्वेच्छया द्वन्द्व[8]-निर्देशस्तूभयोर्महाफलत्वार्थः ।

[9]कर्कप्रवेशे [10]शक्तूंश्च सितया च तथैव च ।
गुडफाणितखण्डानां सितायाश्च तथैव च ॥२॥

[11]सितया [12]शर्करया [13]सहितमित्यर्थः । [फाणितं खण्डशालूकम्][14] ।

लवणाज्यफलानाञ्च तथा [15]हरितकस्य च ।
तथा चैवोदकुम्भानां [दानं ज्ञेयं महाफलम्][16] ॥३॥

[17][हरितकं पत्रशाकम्] । [18]कर्कप्रवेशमुपन्यस्य शर्करासहित शक्त्वाद्युद-[19]कुम्भान्तदानश्रुते सिंहप्रवेशमुपन्यस्य [20][च देयान्तरश्रुतेः] सशर्कर-[21][शक्त्वाद्युदकुम्भान्तानां] दानं [22]कर्कसंक्रमण एव । एषाञ्च दशानां द्रव्याणां प्रत्येकमेव दानं महाफलम् । [एकस्य दानात्][23] द्वित्र्यादि-दाने[24] समस्तदाने च फलातिशयः । अत्राप्यनेकद्रव्योपादान एवं बोद्धव्यम् ।

---

1 A omits the bracketed portion
2 A भानौ मेषदान
3 A वृषभं संक्रमणे
4 A वृषानाम
5 A शयनमासनदानञ्च
6 A मिथुनोपगमे
7 A सयनाशनदानानि दानेकस्योभयोर्वा
8 I. O. omits द्वन्द्व
9 A कर्किप्रवेशे
10 A शक्तुंश्च, I. O. omits it
11 I. O सितायाः
12 A सर्ककराय
13 I. O. सहितानामित्यर्थः
14 A फणितं खण्डवस्तूनां for the b. p.
15 A हरितयास्य
16 A ज्ञेयं फलहरीतकं for the b. p
17 A यथाशकं for the b. p.
18 A and I. O. कर्कि°
19 I. O. कुम्भ for कुम्भान्त
20 A देयान्तरश्रुते; for the bracketed portion
21 I. O. सशक्त्वादुदकुम्भादीनां for the b. p
22 A कर्किसंक्रम
23 A reads एकस्य दानानात् for and I. O. omits the bracketed portion
24 I. O. द्विवादिदाने, A omits it

सिंहप्रवेशे पात्राणां तैजसानां तथैव च ।

कन्याप्रवेशे वस्त्राणां सुरभीणां तथैव च ॥४॥

सुरभीणां धूपितानाम् ।

तुलाप्रवेशे धान्यानां बीजानामपि [1]चोत्तमम् ।

[2]उत्तमदानमिति सम्बन्धः । बीजानां धान्येतरशस्यानाम् । बीजग्रहणेनैव धान्यग्रहणसिद्धेः पृथग्धान्यग्रहणं फलातिरेकार्थम् ।

कीटप्रवेशे [3]शस्त्राणां [4]वेश्मनां दानमेव च ।५॥

[5]धनुःप्रवेशे वस्त्राणां यानानाञ्च महाफलम् ।

मृगप्रवेशे दारूणां दानमग्नेस्तथैव च ॥६॥

[6]अग्नेर्दानं दारुण्युपादाय स्वयं [7]ज्वालयित्वा शीतापनोदार्थं, [दारूणा अग्निसमिन्धनाय च ][8] दारूणाम् ।

कुम्भप्रवेशे दानन्तु गवामर्थे तृणस्य तु ।

मीनप्रवेशे [स्नानानां माल्यानामपि चोत्तमम् ][9] ॥७॥

स्नानानां [10]स्नानीयसुगन्धामलकादीनाम् ।

[11]दानान्यथैतानि मया द्विजेन्द्राः प्रोक्तानि काले [12][तु नरश्च] दत्त्वा ।

प्राप्नोति कामान् [13]मनसस्त्वभीष्टांस्तस्मात् प्रशंसन्ति हि कालदानम् ॥८॥

[ अत्र मेषे ][14] रवेः संक्रमणे यजमानोऽर्चिताय ब्राह्मणायार्चितं मेषं दद्यात । ॐ अद्यामुकसगोत्रायामुक-[15]वेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं विष्णुधर्मोत्तरोक्त-मेषसंक्रमणविहित-मेषदानफलप्राप्तिकामोऽहमेतं[16] मेषं ददानि । [17]प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा मेषोऽयं वरुणदैवत इत्युक्त्वा यथाशाखं कामस्तुतिं पठेत् । तत ॐ अद्य

---

1 A चोत्तमां
2 A दानमिति
3 I. O. and V. D. वस्त्राणां
4 I. O. वेश्मानां, A वेश्मानां
5 I. O. and V. D. धनिप्रवेशे, A धनुप्रवेशे
6 A अर्घं दानं
7 A ज्वालयि
8 I. O. दारूणामग्निसमिन्धनाय and A दारूणामग्निसमिन्धनाय for the bracketed portion
9 I. O. omits the bracketed portion
10 I. O. स्नानाय गन्धामलकादीनां
11 I. O. दानान्यथैतानि
12 A नरश्च for the b. p.
13 A मनसामभिष्टान
14 I. O. अतुमेषे for the bracketed portion
15 A omits वेदामुक
16 A omits एतं
17 I. O. प्रतिग्रहीता

कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामिदं काञ्चनं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा [1][मेषं पुच्छे गृह्णीयात् ]।

*तथा वृषसंक्रमणे[2] वृषदानवाक्ये विष्णुधर्मोत्तरोक्त-वृषसंक्रमणविहितगोदानफलप्राप्ति कामोऽहमेतान् वृषानिति विशेषः। स्वस्तिसावित्रीपाठान्ते[3] वृषा एते विष्णुदैवता इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्।*

*तथा मिथुनसंक्रमणे शयनदानवाक्ये विष्णुधर्मोत्तरोक्त-मिथुनसंक्रमणविहित-शयनदानफल-*प्राप्तिकामोऽहमेतच्छयनमिति विशेषः। स्वस्तिसावित्रीपाठान्ते[4] शयनमिदं [5]प्रजापति-दैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। [ स्पर्शः स्वीकारः ][6]। एवमासन-दानवाक्ये [7]शयनपदस्थाने आसनपदनिवेशो विशेषः।

तथा कर्कटसंक्रमणे शर्करासहितशक्तुदानवाक्ये विष्णुधर्मोत्तरोक्तसितासहितशक्तुदानफल प्राप्तिकामोऽहमेतान् सितासहितान् [8][शक्तूनिति विशेषः ]। स्वस्तिसावित्रीपाठानन्तरं शक्तव एते [9]प्रजापतिदैवता इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। [10]स्पर्शः स्वीकारः। एवं गुड-खण्डशालूक-खण्ड[11]-शर्करालवणघृतफलहरितकोदकुम्भानां प्रत्येकं दान-वाक्ये[12] सितासहितान् शक्तूनिति[13]पदस्थाने एषामन्यतमस्य[14] [15]कर्कसंक्रमणविलिखितपदस्य च निवेशो विशेषः। एष सोमदैवतो गुडः [16]एतत् सोमदैवतं फाणितम् एष सोमदैवतः खण्डः [एषा सोमदैवता सिता][17] एतत् सोमदैवतं लवणम् एतद्विष्णुदैवतमाज्यम् एतद्वनस्पतिदैवतं फलम् एतद्वनस्पतिदैवतं हारितकम् एष वरुणदैवत उदकुम्भ इति स्वस्तिसावित्रीपाठानन्तरं[18] प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। [ सर्वेषां स्पर्शः स्वीकारः ।][19]

---

1 I. O. मेषं for the b. p.
2 A वृषसंक्रमे
3 A स्वस्तिसावित्रीपाठानन्तरं
4 A स्वस्तिसावित्रीपाठानन्तरं
5 A विष्णुदैवतामिति
6 A सुप्तस्वीकाम: for the bracketed portion
7 A शयनस्थाने
8 A शक्तुं दास्ये for the bracketed portion
9 A प्रजापतिदैवत
10 A स्पर्श
11 I. O. omits शाल कखण्ड
12 I. O. दाने वाक्यं, A दानवाक्येष
13 A omits इति
14 A एषामन्यतमपदस्य
15 I. O. and A कर्कि०
16 A एते
17 A omits the bracketed portion
18 A स्वस्तिसावित्रीपाठान्ते
19 A omits the bracketed portion

[1]सिंहसंक्रमणे यथाशक्ति सौवर्णादिपात्राणामन्यतमस्य[2] दानवाक्ये विष्णुधर्मोत्तरोक्त-सिंहसंक्रमण[3]-विहित-तैजसपात्रदानफलप्राप्तिकामोऽहमेतत्तैजसपात्रमिति विशेषः। स्वस्ति-सावित्रीपाठानन्तरं पात्रमिदं विष्णुदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुल्यादि पूर्ववत्। स्पर्शः स्वीकारः।

कन्यासंक्रमणे धूपितवस्त्र[4]-दानवाक्ये विष्णुधर्मोत्तरोक्त-कन्यासंक्रमणविहित वस्त्रदानफल-प्राप्तिकामोऽहमेतानि वस्त्राणीति[5] विशेषः। स्वस्तिसावित्रीपाठानन्तरं वस्त्राणीमानि बृहस्पतिदैवतानीति प्रतिग्रहीतृवाक्यम्। कामस्तुल्यादि पूर्ववत्। [दशाग्रहणपूर्वकं परि-धानं][6] स्वीकारः।

तुलासंक्रमणे [7][धान्यदानवाक्ये विष्णुधर्मोत्तरोक्त-तुलासंक्रमणविहित-धान्यदानफलप्राप्ति-कामोऽहमेतानि धान्यानीति विशेषः। स्वस्तिसावित्रीपाठानन्तरं धान्यानीमानि प्रजापति-दैवतानीति प्रतिग्रहीतृवाक्यम्। कामस्तुल्यादि पूर्ववत्। मुष्टिग्रहणं स्वीकारः। एवं बीजदानवाक्ये ]धान्यपदस्थाने बीजपद-[8][निवेशो विशेषः]।

वृश्चिकसंक्रमणे [9]खड्गादीनामन्यतमशस्त्रत्रयस्य दानवाक्ये विष्णुधर्मोत्तरोक्त-वृश्चिक-संक्रमणविहित-शस्त्रदानफलप्राप्तिकामोऽहमेतानि शस्त्राणीति विशेषः। स्वस्तिसावित्री-पाठानन्तरं शस्त्राणीमानि शक्रदैवतानीति [विष्णुदैवतानीति वा][10] प्रतिग्रहीतृवाक्यम्। कामस्तुल्यादि पूर्ववत्। [ग्रहणं स्वीकारः। एवं गृहत्रयदानवाक्ये शस्त्रपदस्थाने गृहपद-निवेशो विशेषः। स्वस्तिसावित्रीपाठानन्तरं गृहाणीमानि विष्णुदैवतानीति प्रतिग्रहीतृवाक्यम्। कामस्तुल्यादि पूर्ववत्।][11]प्रवेशः स्वीकारः।

धनुःसंक्रमणे [12]वस्त्रत्रयदानवाक्ये विष्णुधर्मोत्तरोक्त धनुःसंक्रमणविहित वस्त्रदानफलप्राप्ति-कामोऽहमेतानि[13] वस्त्राणीति विशेषः। [14]स्वस्तिसावित्रीपाठानन्तरं [15]वस्त्राण्येतानि बृहस्पति-

---

1 A सिंह०
2 I. O. सो...स्या
3 I. O. and A सिंहसंक्रमण
4 I. O. omits वस्त्र
5 A इति
6 A दशाग्रहणपूर्वकं for the bracketed portion
7 A omits the bracketed portion
8 A निवेश: for the bracketed portion
9 A खड्गादीनां०
10 I. O. omits the bracketed portion
11 A omits the bracketed portion
12 A वस्त्र for वस्त्रत्रय
13 A omits मेतानि
14 A omits this
15 A वस्त्राणीमानि

दैवतानीति प्रतिग्रहीतृवाक्यम् । कामस्तुत्यादि पूर्ववत् । [1][दशाग्रहणपूर्वकं परिधानं] स्वीकारः । दोलाचतुर्दोलनौकादीनामन्यतम[2]-यानत्रयस्य दानवाक्ये वस्त्रपदस्थाने यानपद-निवेशो विशेषः । स्वस्तिसावित्रीपाठानन्तरं यानान्येतानि[3] विष्णुदैवतानीति प्रतिग्रहीतृ-वाक्यम् । कामस्तुत्यादि पूर्ववत् । [4][आरोहणादि स्वीकारः ।

मकरसंक्रमणे इन्धनदानवाक्ये मकरसंक्रमणविहितेन्धनदानफलप्राप्तिकामोऽहमेतानीन्धना-नीति विशेषः । स्वस्तिसावित्रीपाठानन्तरमिन्धनान्येतानि विष्णुदैवतानीति प्रतिग्रहीतृवाक्यम् । कामस्तुत्यादि पूर्ववत् ।] स्पर्शः स्वीकारः । [5][अग्निदानन्तु शीतार्त्तत्राणायानुष्ठानमात्रम् ।]

कुम्भसंक्रमणे गोग्रासदानम् । [6]ॐ विष्णुधर्मोत्तरोक्त-कुम्भसंक्रमणविहित-गोग्रासदान-फलप्राप्तिकामोऽहं गोभ्य-[स्तृणं दास्य][7] इति सङ्कल्प्य तद्दिने यथालाभं गोभ्यो ग्रासं[8] दद्यात् ।

[9][मीनसंक्रमणे स्नानीयदानवाक्ये विष्णुधर्मोत्तरोक्त]-मीनसंक्रमणविहित स्नानदानफलप्राप्ति-कामोऽहमेतानि स्नानानीति विशेषः । स्वस्तिसावित्रीपाठानन्तरं स्नानान्येतानि विष्णुदैवतानीति प्रतिग्रहीतृवाक्यम् । कामस्तुत्यादि पूर्ववत् । स्पर्शः स्वीकारः ।

[10]तथा :—

उत्तरे[तु गते][11] प्रोक्तं वस्त्रदानं महाफलम् । (३।३१७.४क)
तिलदानं तथा विप्रा दक्षिणोपगते[12] रवौ ॥६॥

विप्रा इति सम्बोधनम् । उत्तरायणेऽर्चिताय ब्राह्मणाय वस्त्रमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्तोत्तरायणविहित-वस्त्रदानफलप्राप्तिकामोऽहमेतद्वस्त्रं ददानि । प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते वस्त्रमिदं बृहस्पतिदैवतमिति वदेत्[13] । पूर्ववत् कामस्तुत्यादि[14] दक्षिणा[15] च । [16]दशाग्रहणपूर्वकं परिधानं स्वीकारः । दक्षिणायने [तिलदान-वाक्ये विष्णुधर्मोत्तरोक्त-दक्षिणायनविहिततिलदान][17]-फलप्राप्तिकामोऽहमेतांस्तिलानिति विशेषः ।

---

1 A दशाग्रहणपूर्वकं for the bracketed portion
2 I. O. ०तमम
3 A एतानि
4 A omits the bracketed portion
5 A omits the bracketed portion
6 A omits it
7 A त्रयं दास for the bracketed portion
8 A ग्रासं
9 A omits the bracketed portion
10 I. O. omits तथा
11 I. O. त्वपरे for the bracketed portion
12 I. O. दक्षिणायनगे
13 I. O. पठेत्
14 I. O. कामस्तुति
15 I. O. दक्षिणे, A reads दक्षिणा
16 A दश०
17 A तिलदानविहित for the bracketed portion

स्वस्तिसावित्रीपाठानन्तरं तिला एते प्रजापतिदैवता इति प्रतिग्रहीतृवाक्यम्। काम-स्तुल्यादि पूर्ववत्। [1]मुष्टिग्रहणं स्वीकारः।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे संक्रान्ति-दानावर्तः।

1 A स्वस्तिपाठञ्च

## [अथ नानादेवत-ऋतुदानावर्तः।(६९)][1]

[2]सम्वर्तः :—

इन्धनानि [3]तु यो दद्याद्विप्रेभ्यः शिशिरागमे ।

स सुखी दीप्तकायाग्निः सुभगश्चैव जायते ॥१॥

अत्र [4]शिशिरर्तूपक्रमदिने [5]यजमानो यथेष्टसंख्यब्राह्मणेभ्योऽर्चितेभ्योऽर्चितानीन्धनानि दद्यात् । [6][ॐ अद्यामुक]-सगोत्रेभ्योऽ[7][मुकवेदामुक]-शाखाध्यायिभ्योऽ[8]मुकदेवशर्मभ्यो युष्मभ्यं सम्वर्तोक्तेन्धनदानफलप्राप्तिकामोऽहमेतानीन्धनानि ददानि । प्रतिग्रहीतारः स्वस्ति-सावित्रीं[9] पठित्वा इन्धनानीमानि विष्णुदैवतानीत्युक्त्वा [10][यथाशाखं कामस्तुतिं पठेयुः]। [11]तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं युष्मभ्यमहं दक्षिणामेतत् काञ्चनं ददानि । प्रतिग्रहीतारः स्वस्तीत्युक्त्वा इन्धनानि स्पृशेयुः ।

[12]स्कन्दपुराणे :—

काष्ठानि यः प्रयच्छेत हेमन्ते नरसत्तमः ।

ब्राह्मणेभ्यः सदा देवि सोऽग्निलोकं समश्नुते ॥२॥

[13]हेमन्तोपक्रमदिने [14]प्रातर्गृहीतोदपूर्णताम्रपात्र उदङ्मुखः काष्ठदानं सङ्कल्पयेत् । [15]ॐ अद्यारभ्य हेमन्तसमाप्तिपर्यन्तं [16]यथासम्भवगोत्रनामभ्यो ब्राह्मणेभ्योऽग्निलोकप्राप्ति-कामोऽहं प्रत्यहं काष्ठानि दास्ये । ततः प्रभृति हेमन्तसमाप्त्यवधि[17] [प्रतिदिनं ब्राह्मण-गृहेषु][18] यथालाभं काष्ठानि दद्यात् । सदेति पदश्रवणात् ऋतुव्यापित्वमस्य ।

---

1 I. O. omits the bracketed portion
2 A omits this
3 A च
4 A शिशिरसूपक्रमदिने
5 A यजमाने
6 A यथामुकामुक for the bracketed portion
7 A मुकाकामक for the b. p.
8 A मुकामुक for मुक
9 A पवित्रीं after सावित्रीं
10 A यथाशाकं कामस्तुति for the bracketed portion
11 A omits this
12 A स्कन्धपुराणे
13 A हेमन्तोक्रमदिने
14 A गृहीतोपूर्णताम्रपात्र, I. O. omits ताम्र
15 A omits it
16 I. O. यथासम्भव॰
17 I. O. हेमन्तसमाप्ता, A हेमन्त-समाप्य
18 I. O. देवब्राह्मणगृहेषु for the bracketed portion

आग्नेयपुराणे :—

हेमन्ते शिशिरे चैव पुण्याग्निं यः प्रयच्छति ।
सर्वलोकप्रतापार्थं स पुण्यां गतिमाप्नुयात् ॥३॥

[1]पुण्याग्निं चाण्डालादिगृहाग्निव्यतिरिक्तम् । हेमन्तोपक्रमदिने [2]नानासत्त्वशीतापनोदाय सेन्धनमग्निं[3] प्रातः सायञ्च यथेच्छं पूर्ववत् [4]सङ्कल्प्य [5]शिशिरर्तुसमाप्तिं यावत् प्रत्यहं दद्यात् । ॐ अद्यादि [6]शिशिरर्तुसमाप्तिपर्यन्तं सर्वलोकप्रतापार्थं पुण्यगतिप्राप्तिकामोऽहं पुण्याग्निं दास्ये ।

भविष्यपुराणे (१।६३।७३) :—

[7][शीते काष्ठेन्धनं] दद्यान्नराणां शीतनाशनम् ।
भानोरायतने देव अश्वमेधफलं लभेत् ॥४॥

शीतकालोपक्रमदिने पूर्ववत् नराणां प्रतापनार्थं [8]दारून् सङ्कल्प्य सूर्यायतने दद्यात् । ॐ अश्वमेधफलप्राप्तिकामोऽहम् अद्यादि यावच्छीतकालं[9] सूर्यायतने [10]नरप्रतापनार्थं [11][दारून् दास्ये] ।

नरसिंहपुराणे :—

शीतकाले महावह्निं प्रज्वालयति यो नरः ।
सर्वसत्त्वहितार्थाय स्वर्गेऽप्सरसं लभेत् ॥५॥

एतदप्यनुष्ठानमात्रम् । अतएव धार्मिकाः [12]स्नानघाटे शीतसमये [13]काष्ठकूटेषु अग्निमनुदिनं प्रज्वालयति ।

महाभारते (अनु—१२५।८०ख and ८१ख) :—

वर्षासु दीपदानेन [14]विष्णुलोकमवाप्नुयात् ।
[15][तमोरूपं न तस्यास्ति दीपकं यः प्रयच्छति] ॥६॥

---

1 I. O. and A पुण्याग्नि

2 A नराणां शीतनाशाय शीतकाले देयं

3 I. O. सुप्रदीप्तमग्निं

4 A omits it

5 A शिशिरसमाप्तिं

6 A शिशिरसमाप्तिपर्यन्तं

7 A शीतकालेन्धनं and Bh. p. शीतकाले धनं for the bracketed portion

8 A दारूणि

9 A ०काल

10 A नराणां for नर

11 A दारूणि दद्यात् for the bracketed portion

12 I. O. स्नानप्रान्ते

13 A काष्ठकूटे

14 A शिववल्लोभते नरः

15 I. O. तथारूपं न तस्यास्तिरूपः प्रयच्छति for the bracketed portion

वर्षासु श्रावणभाद्रपदयोरित्यर्थः। सौरश्रावणप्रतिपदमारभ्य भाद्रपदसमाप्तिपर्यन्तं मासद्वयं शुचिस्थाने दीपं पूर्ववत् सङ्कल्प्य दद्यात्। [1][ॐ अद्यादि] [2]भाद्रपदसमाप्तिपर्यन्तम् अमुकसगोत्रायामुकदेवशर्मणे[3] दीपदानफलप्राप्तिकामोऽहं दीपं दास्ये। [4][फलभूयस्त्वेन ऋतुव्यापित्वमस्य।]

[5][विष्णुधर्मोत्तरे :—

इन्धनानां] प्रदानेन [6]शिशिरे स्यान्महाफलम्।
स्नानानुलेपनादीनां वसन्ते द्विजसत्तमाः ॥७॥ (३।३१७।४ख)

द्विजसत्तमा इति सम्बोधनम्। आदिशब्देन माल्यग्रहणम्।

[7][पानकानां तथा] ग्रीष्मे कट्नां [8]तदनन्तरे।
शरयन्नस्य [9]धर्मज्ञा वस्त्राणामपि [10]हैमने ॥८॥ (३।३१७।५)

तदनन्तरे प्रावृषि। [11]धर्मज्ञा इति सम्बोधनम्। माघफाल्गुनयोरन्यतरस्य [12]यथेष्टदिनेऽर्चिताय [13]ब्राह्मणायार्चितानीन्धनानि दद्यात्। ॐ [14]अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिनेऽमुकदेवशर्मणे तुभ्यं विष्णुधर्मोत्तरोक्त-[15]शिशिरर्तुविहितेन्धनदानफलप्राप्तिकामोऽहमेतानीन्धनानि ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। तथा चैत्रवैशाखयोरन्यतरस्य यथेष्टदिने सुगन्धितैलामलकानुलेपनमाल्यानां दानवाक्ये विष्णुधर्मोत्तरोक्त-[16][वसन्तर्तुविहित-स्नानानुलेपनमाल्यानीति विशेषः]। [17]स्वस्तिसावित्रीपाठानन्तरं स्नानानुलेपनादीन्येतानि विष्णुदैवतानीति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। [18]तथा ज्यैष्ठाषाढ-

---

1 I. O. omits the bracketed portion
2 A omits it.
3 I. O. omits it
4 A omits the bracketed portion
5 A reads the bracketed portion as विष्णुधर्मोत्तरोक्त इन्धनानि
6 A and I. O. शिशिर
7 A पानकानांतथा for the bracketed portion
8 A तदनन्तरं
9 A धर्मेषु
10 A हैमने
11 A धर्मज्ञ
12 A यथेष्टदिने
13 A ब्राह्मणायार्चितायार्चितमीन्धानं
14 A अद्यादितुभ्यं अमुकगोत्रायामुकशाखाध्यायिने अमुकदेवशर्मणे
15 A शिशिरविहित इन्धन०
16 A वसन्तविहितस्नानानुलेपनादिदानफलप्राप्तिकामोऽमेतानि स्नानानुलेपनादीनि दास्ये for the b. p.
17 A omits it
18 A omits it

योरन्यतरस्य यथेष्टदिने पानकानां दानवाक्ये विष्णुधर्मोत्तरोक्त-ग्रीष्मर्तुविहित-पानकदानफल प्राप्तिकामोऽहमेतानि पानकानीति विशेषः। स्वस्तिसाविल्लीपाठान्ते पानकान्येतानि विष्णु- दैवतानीति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। तथा श्रावणभाद्रयोरन्यतरस्य यथेष्टदिने कटुद्रव्यदानवाक्ये विष्णुधर्मोत्तरोक्त-कटुदानफलप्राप्तिकामोऽहमेतानि [1]कटूनीति विशेषः। स्वस्तिसाविल्लीपाठान्ते कटून्येतानि सोमदैवतानीति प्रतिग्रहीतृवाक्यम्। काम- स्तुत्यादि पूर्ववत। तथाश्विनकार्त्तिकयोरन्यतरस्य यथेष्टदिने अन्नदानवाक्ये [2]विष्णुधर्मो- त्तरोक्तशरदृतुविहितान्नदानफलप्राप्तिकामोऽहमेवदन्नमिति विशेषः। स्वस्तिसाविल्लीपाठान्ते अन्नमिदं प्रजापतिदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। तथा मार्ग- पौषयोरन्यतरस्याभिमतदिने[3] वस्त्रद्वयदानवाक्ये[4] विष्णुधर्मोत्तरोक्त-हेमन्तर्तुविहितवस्त्रदानफल- प्राप्तिकामोऽहमेतानि वस्त्राणीति विशेषः। स्वस्तिसाविल्लीपाठान्ते वस्त्राणीमानि बृहस्पति- दैवतानीति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। दशाग्रहणपूर्वकं[5] परिधानं स्वीकारः।

तथा—(३।३१७।६-७) :—

वहिः स्नानं नरः कृत्वा सूर्यस्योदयनं प्रति।
शिशिरे सततं[6] वह्निं तर्पयित्वा तथा तिलैः ॥६॥
कुल्माषं सघृतं दत्वा यथाशक्त्या द्विजातिषु[7]।
[कायाग्निदीप्तिं प्राकाश्यं][8] शत्रुनाशञ्च विन्दति ॥१०॥

[9]शिशिरर्तूपक्रमदिने उदितमात्रे सूर्ये ग्रामाद्बहिर्जलाशये स्नात्वाग्नौ ॐ प्रजापतये स्वाहेति तिलान् हुत्वा शूद्रो ब्राह्मणद्वारा होमं कारयित्वा घृतसहितान् राजमाषानर्चितान् ब्राह्मणेभ्योऽर्चितेभ्यः [ॐ अद्यादि युष्मभ्यमन्तमुक्त्वा दद्यात्][10]। विष्णुधर्मोत्तरोक्तसघृत- कुल्माषदानफलप्राप्तिकामोऽहमेतान् [सघृतान् कुल्माषान् ददानि][11]। प्रतिग्रहीतारः स्वस्तिसाविल्लीपाठान्ते कुल्माषोऽयं प्रजापतिदैवत इति वदेयुः। पूर्ववत् कामस्तुतिदक्षिणे। मुष्टिग्रहणं स्वीकारः। एवं प्रत्यहं मासद्वयं दद्यात्।

●

1 A कटुकानीति
2 A विष्णुधर्मो शरदृतुं०
3 A ०हिमतदिने
4 A वस्त्रयदानवाक्ये
5 A ०पूर्वक
6 A सतं
7 A द्विजादितिषु
8 A कायाग्निदीप्तप्राकाश्यं for the bracketed portion
9 A शिशिरर्तौ पक्रमदिने
10 A omits the bracketed portion
11 A कुल्माषान् दास्ये for the bracketed portion

तथा :—

शक्तून् सिताखण्डयुतान् त्रपुषोर्वारुकान्वितान् । (३।३१७।८क)

लवणाज्ययुतान् दत्त्वा तथा हरितकान्वितान् ॥११॥

त्रपुषं तिमिष इति प्रसिद्धम् । उर्वारुः कर्कटी हरितकम् पत्रशाकम् ।

जलकुम्भोपरिकृतानक्षयं फलमश्नुते ।

मध्याह्ने प्रावृषि स्नातः सततं द्विजसत्तमाः ॥१२॥ (३।३१७।८ख-९क)

द्विजसत्तमा इति सम्बोधनम् । वर्षासमयोपक्रमदिने मध्याह्ने स्नात्वार्चिताय ब्राह्मणाय त्रपुष-कर्कटी-लवणघृतपत्रशाकसहितान् जलकुम्भोपरिस्थितान् शर्कराखण्डयुतान् शक्तूनर्चितान् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्त-वर्षर्तु विहितशक्तुदानफलप्राप्तिकामो-ऽहमेतान् सिताखण्ड-त्रपुषोर्वारु[1]-लवणाज्यहरितकयुतान् जलकुम्भोपरिकृतान् शक्तून् ददानि । प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते शक्तव एते प्रजापतिदैवता इति वदेत् । पूर्ववत् कामस्तुतिर्दक्षिणा च । एवं मासद्वयं दद्यात् ।

तथा :—

शिशिरं सकलं कालं ग्रासं[2] परगवे तथा ।

दत्त्वा स्वर्गमवाप्नोति संवत्सरशतानि षट् ॥१३॥

शिशिरर्तूपक्रमदिने[3] पूर्ववत् परगवे[4] ग्रासं सङ्कल्पयेत् । ॐ अद्यारभ्य यावच्छिशिरं प्रत्यहं विष्णुधर्मोत्तरोक्तशिशिरर्तु विहितगोग्रासदानफलप्राप्तिकामोऽहं परगवे[5] ग्रासं दास्ये । ततो यावच्छिशिरं प्रत्यहं परकीयगवे[6] घासं दद्यात् ।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे ऋतुदानावर्तः ।

---

1 A त्रपुषकर्कटी
2 I. O. ग्रासं
3 A omits दिने
4 & 5 I. O. परगवये
6 I. O. परकीयगवे

# अथ नानादैवत-वत्सरदानावर्तः[1] । (७०)

विष्णुधर्मोत्तरे (३।३१७।२-३) :—

संवत्सरे तु दारूणां तिलस्य च महाफलम् ।
परिपूर्वे तथा दानं [2]यवानां द्विजसत्तमाः ॥१॥
[3]इदापूर्वेऽन्नवस्त्राणां धान्यानामनुपूर्वके ।
उत्पूर्वे[4] रजतस्यापि दानं प्रोक्तं महाफलम् ॥२॥

अत्र संवत्सरादि-समयविशेषपरिचयाय[5] दानसागरनिर्माण-[6]वर्षस्यैव संवत्सरत्वप्रतिपादनाय लिख्यते । [7]निखिलभूपचक्रतिलक-श्रीमद्बल्लालसेन-देवेन[8] पूर्णे[9] शशिनवदशमित ( १०९१[10] ) शकवर्षे दानसागरो रचितः ।

रविभगणाः [11]परजशिष्टा ये भूता दानसागरस्यास्य ।
क्रमशोऽस्य सम्परीदानूदाद्या[12] वत्सराः पञ्च ॥३॥

[13]तदेवमेकनव-[14]त्यधिकवर्ष-[सहस्रावच्छिन्ने शाके संवत्सरः पतति, स च विषुवादारभ्य ।][15] एवञ्च परिवत्सर-[16]इदावत्सर-[17]अनुवत्सर-उद्वत्सराः क्रमाद्भवन्ति । वर्षपञ्चकातिक्रमे च पुनरावर्तते ।

तदनु यजमानः साम्वत्सरिकेष्टमासपुण्यदिने अर्चिताय ब्राह्मणायार्चितानि दारूणि दद्यात् । ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिने अमुकदेवशर्मणे तुभ्यं विष्णु-धर्मोत्तरोक्त-सम्वत्सरविहित-दारुदानफलप्राप्तिकामोऽहमेतानि दारूणि ददानि । प्रतिग्रहीता स्वस्तीत्युक्त्वा सावित्रीं पठित्वा दारूण्येतानि विष्णुदैवतानीत्युक्त्वा यथाशक्तं कामस्तुतिं पठेत् ।

---

1 A नानादैवतविष्णुधर्मोत्तरोक्तवत्सर-दानावर्त्तः
2 A यवानां
3 I. O. उद्दावर्त्त॰
4 A उत्पूर्व्वे, I. O. उत्पूर्व्वे
5 A ॰परिपादान
6 A ॰कालस्यैव
7 A निखिलमूर्तितिलक॰
8 A मेना for देवेन
9 I. O. पूर्ण
10 A ९६
11 A परजशिष्टा
12 I. O. ॰दाद्या
13 A तदेव॰
14 I. O. ॰त्याधिक
15 A सहस्रावच्छिन्ने शाके सम्वत्सरः पतन्ति । विषुवदारभ्य for the b. p.
16 I. O. उद्दावत्सर
17 A अनुवतस

ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं तुभ्यमहं दक्षिणामेतत्[1] काञ्चनं ददानि। प्रतिग्रहीता स्वस्तीत्युक्त्वा दक्षिणां स्पृशेत्। तिलदानवाक्ये तिलदानफलप्राप्तिकामोऽहमेतांस्तिलानिति विशेषः[2]। [3]स्वस्तिसावित्रीपाठानन्तरं तिला एते प्रजापतिदैवता इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। मुष्टिग्रहणं स्वीकारः। परिवत्सराख्यवर्षाभिमत-मासिकपुण्यदिनेऽर्चिताय ब्राह्मणायार्चितान् यवान् दद्यात्। तत्र दानवाक्ये परिवत्सरविहित-यवदानफलप्राप्तिकामोऽहमेतान् यवानिति विशेषः। स्वस्तिसावित्रीपाठानन्तरं यवा एते प्रजापतिदैवता इति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत। मुष्टिग्रहणं स्वीकारः। [4]इदावत्सराख्यवर्षाभिमतमासिकपुण्यदिनेऽर्चिताय ब्राह्मणायार्चितमन्नं दद्यात्। [5][तत्र दानवाक्ये] [6]इदावत्सरविहितान्नदानफलप्राप्तिकामोऽहमेतदन्नमिति विशेषः। स्वस्तिसावित्रीपाठानन्तरमन्नमिदं प्रजापतिदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्। [7][वस्त्रदाने वाक्ये] वस्त्रदानफलप्राप्तिकामोऽहमेतानि वस्त्राणीति विशेषः। [8]स्वस्तिसावित्रीपाठानन्तरं वस्त्रमिदं बृहस्पतिदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि [9][पूर्ववत्। दशाग्रहण]-पूर्वकं परिधानं स्वीकारः। [10]अनुवत्सराख्यवर्षाभिमतमासिकपुण्यदिने अर्चिताय ब्राह्मणायार्चितानि [11]यथेष्टधान्यानि दद्यात्। तत्र दानवाक्ये अनुवत्सरविहित-धान्यदानफलप्राप्तिकामोऽहमेतानि धान्यानीति विशेषः। स्वस्तिसावित्रीपाठानन्तरं धान्यान्येतानि प्रजापतिदैवतानीति प्रतिग्रहीतृवाक्यम। कामस्तुत्यादि पूर्ववत। [12][मुष्टिग्रहणं स्वीकारः।] [13]उद्वत्सराख्यवर्षाभिमतमासिकपुण्यदिने अर्चिताय ब्राह्मणायार्चितं [14]रजतं दद्यात्। तत्र दानवाक्ये [15]उद्वत्सरविहितरजतदानफलप्राप्तिकामोऽहमेतद्रजतमिति विशेषः। स्वस्तिसावित्रीपाठानन्तरं रजतमिदं [16]चन्द्रदैवतमिति प्रतिग्रहीतृवाक्यम्। कामस्तुत्यादि पूर्ववत्।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते श्रीदानसागरे वत्सरदानावर्तः।

---

1 A दक्षिणामिदं
2 I. O. शेषः
3 A स्वस्ति सावित्रीपाठान्ते
4 I. O. उदा०
5 A omits the bracketed portion
6 I. O. उदा०
7 A वस्त्रदानवाक्ये
8 A स्वस्तिसावित्रीपाठान्ते
9 A omits the bracketed portion
10 I. O. अनुवत्सराख्याभिमत०
11 A यथेच्छधान्यानि
12 A omits the bracketed portion
13 A उद्राख्य०, I. O. उत्सराख्य०
14 A omits this
15 A उद्वसरविहित०
16 I. O. अग्निदैवतमिति

# अथ नानादैवत-[1]विप्रकीर्णदानावर्त्तः। (७१)

सम्वर्त्तः :—

ताम्बूलञ्चैव यो दद्याद् ब्राह्मणेभ्यो विचक्षणः।
मेधावी सुभगः प्राज्ञो दर्शनीयश्च जायते ॥१॥

अत्र यजमानो [2]यथेष्टसंख्यब्राह्मणेभ्योऽर्चितेभ्योऽ[3]र्चितानि ताम्बूलानि दद्यात्। ॐ अद्यामुकसगोत्रेभ्योऽमुकामुक-[4]वेदामुकामुकशाखाध्यायिभ्योऽमुकामुक-[5]देवशर्मभ्यो युष्मभ्यं [6]सम्वर्त्तोक्तताम्बूलदानफलप्राप्तिकामोऽहमेतानि ताम्बूलानि [7]ददानि। प्रतिग्रहीतारः स्वस्तीत्युक्त्वा [8][सावित्रीं पठित्वा] ताम्बूलान्येतानि विष्णुदैवतानीत्युक्त्वा यथाशाखं कामस्तुतिं पठेयुः। [9][तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं] युष्मभ्यमहं दक्षिणामिदं काञ्चनं ददानि। प्रतिग्रहीतारः[10] स्वस्तीत्युक्त्वा ताम्बूलं[11] स्पृशेयुः।

तथा :—

फलमूलानि [12]पानानि शाकानि विविधानि च।
[13]यानानि दत्त्वा विप्रेभ्यो मुदा युक्तः सुखी भवेत् ॥२॥

मूलानि [14]कशेरुशालुकादीनि। देयबहुत्वापेक्षं सम्प्रदानबहुत्वम्। ब्राह्मणायार्चिताय विविधमूलान्यर्चितानि दद्यात्। [15][ॐ अद्यामुकसगोत्रायामुकवेदामुकशाखाध्यायिने ऽमुकदेवशर्मणे तुभ्यं] सम्वर्त्तोक्तमूलदानफलप्राप्तिकामोऽहमेतानि मूलानि ददानि। प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते मूलान्येतानि विष्णुदैवतानीति वदेत्। कामस्तुत्यादि

---

1 A ॰प्रकीर्ण॰
2 A यथेष्ट॰
3 A omits अर्चितेभ्यो
4 A ॰वेदामुक॰
5 A omits देव
6 A सम्वर्त्तोक्त॰
7 A दद्यात्
8 A सावित्रीपाठे
9 A reads the bracketed portion as ॐ अद्यास्मिद्दानप्रतिष्ठार्थं
10 I. O. प्रतिग्रहीतृवाच्यं
11 I. O. सम्बलं
12 A यानानि
13 I. O. पानानि
14 A को for कशेरु
15 A reads the bracketed portion as अमुकसगोत्रेभ्योऽमुकवेदामुकशाखाध्यायिभ्योऽमुकशर्मभ्यो युष्मभ्यं

[1]स्वस्त्यादिस्वीकारान्तं पूर्ववत् । [2][ दक्षिणावाक्ये त्वेकवचनान्तसम्प्रदान ]-प्रयोगो विशेषः । शाकदाने तु सम्वर्तोक्तशाकदानफलप्राप्तिकामोऽहमेतानि [3]शाकानीति [प्रतिग्रहीतृवाक्ये शाकान्येतानि][4] वनस्पतिदैवतानीति च[5] विशेषः । [6][विविधानीति शाकानां नानाजातीयत्वप्रदर्शनार्थः ] ।

तथा :—

गुडमिक्षुरसञ्चैव[7] लवणं व्यञ्जनानि च ।

सुरभीणि च पानानि [8]दत्त्वात्यन्तं सुखी भवेत् ॥३॥

ब्राह्मणाया-[9]र्चितायार्चितानि व्यञ्जनानि ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात । अत्यन्तसुखप्राप्तिकामोऽहमेतानि व्यञ्जनानि ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

तथा :—

तैलमामलकं [10]यच्छत् पादाभ्यङ्गं तथैव च ।

नरः सुहृष्णस्तेजस्वी [11]सुखवांश्चैव जायते ॥४॥

ब्राह्मणायार्चितायार्चितं तैलम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । सम्वर्तोक्ततैलदानफलप्राप्तिकामोऽहमेतत्तैलं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । फलभूयस्त्वादुत्कृष्टतैलदानमावृत्त्या[12] वापि । [13]आमलकदानवाक्ये तैलपदस्थाने आमलक-[14]पदनिवेशो विशेषः ।

[15]विष्णुः :—

मधुघृततैलदानेनारोग्यम् ॥५॥

ब्राह्मणायार्चितायार्चितं तैलम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात । [16]आरोग्यप्राप्तिकामोऽहमेतत्तैलं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

---

1 I. O. स्वीकारान्त', A omits it
2 A reads the bracketed portion as दक्षिणावाक्येऽकवचनान्त-संप्रदाना
3 A reads the following for शाकानीति प्रतिग्रहीतृवाक्ये :—शाकानि प्रतिग्रहीतृवाक्यं कामम्यादि पूर्ववत्
4 I. O. reads the bracketed portion twice
5 A omits च
6 A reads the bracketed portion as विधिनानेति शाकानां नानाजातिलप्रदर्शनाय
7 A °श्चैव
8 A दत्त्वात्यर्थं
9 I. O. °र्चितायर्चितानि, A omits अर्चिताय
10 A यच्च
11 I. O. सुखरांश्चैव
12 I. O. and A °वृत्त्या
13 I. O. and A द्यामलक°
14 A omits पद
15 A विष्णुधर्मोत्तरोक्त
16 A आरोग्यल°

तथा :—

तालवृन्तचामर-[1]दानेनादुःखित्वम् ॥६॥

ब्राह्मणायार्चिताय तालवृन्तमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [2]अदुःखित्वप्राप्तिकामोऽहमेतत्तालवृन्तं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। चामरदानवाक्ये तालवृन्तपद[3]-स्थाने चामरमिति विशेषः।

यमः :—

राजोपकरणं दत्त्वा [4][रत्नानि विविधानि च।

नगरञ्च तथा[5] दत्त्वा] राजा भवति भूतले ॥७॥

ब्राह्मणायार्चिताय सिंहासनकनक[6]-दण्डच्छत्र-सौवर्णदण्डसितचामर-भृङ्गाराणामिच्छयान्यतमं राजोपकरणमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। भूतलराज्यप्राप्तिकामोऽहमेतद्राजोपकरणं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। कनकदण्डस्य ग्रहणं भृङ्गारचामरसिंहासनानां स्पर्शः स्वीकारः।

आदित्यपुराणे :—

नवं श्लक्ष्णं सुविपुलं ये प्रयच्छन्ति पक्षकम्।

आवीज्यमानो धर्मोऽपि पवनो वाति शीतलः ॥८॥

श्लक्ष्णं कुटिलपक्षयुतं, सुविपुलं महत्, पक्षकं मयूरपक्षव्यजनम्। नवमुक्तलक्षणं मयूरपक्षव्यजनमर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। आदित्यपुराणोक्त-पक्षकदानफलप्राप्तिकामोऽहमेतं पक्षकं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा :—

तीर्थतडागकूपादिनौकासेतुप्रदाश्च[7] ये।

स्कन्धेन तारयेद्[8] यस्तु तृषार्तानां जलप्रदः ॥६॥

तीर्थं जलाशयावतरणवर्त्म, स्कन्धेन जलेषु दुर्बलजन्तुतारणम्।

---

1 A ०दाने दुःखत्वं

2 I. O. अदुःखित्व०, A अदुःख०

3 I. O. omits पद

4 A omits the bracketed portion

5 I. O. दद्या

6 I. O. omits कनक

7 A ०प्रदाश्च

8 A तारयेत्

करम्भा[1] दधिशक्तवः[2]। [3]ब्राह्मणेभ्योऽर्चितेभ्यो दधिमिश्रान्[4] [5]शक्तूनर्चितान् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। महाभारतोक्त-करम्भदानफलप्राप्तिकामोऽहमेतान् करम्भान् ददानि। स्वस्त्यादिस्वीकारान्तं[6] पूर्ववत्।

तथा (अनु—२३।१००) :—

निवेशनानां क्षेत्राणां वसतीनाञ्च भारत[7]।

दातारः प्रार्थितानाञ्च पुरुषाः स्वर्गगामिनः ॥१८॥

येन येन द्रव्येण धान्यहिरण्यादिना [8][यो हव्यो भवति] [9]तत्तद्द्रव्यमर्चितम[10]-र्चिताय तस्मै ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। स्वर्गप्राप्तिकामोऽहमेतदमुकद्रव्यं ददानि। प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते [11]अमुकद्रव्यमिदममुकदैवतमिति वदेत्। कामस्तुत्यादि पूर्ववत्। [12][द्रव्यदेवतास्वीकारौ प्रतिग्रहविधावनुसन्धेयौ]।

विष्णुधर्मोत्तरे (३।३०६।६३ख-६४क) :—

[13]मस्तुपिण्डकिलाटादिकूर्चिकादानतस्तथा।

गोरसानां प्रदानेन तृप्तिमाप्नोत्यनुत्तमाम्[14] ॥१६॥

पिण्डं पिण्डितदुग्धम्, किलाटः [15]सुमृष्टदुग्धपिण्डः। [16]आदिशब्दात् दुग्धविकारान्तरग्रहणम्। कूर्चिका [17]दधिसरः, गोरसानां दधितक्रशिखरिण्यादीनाम्[18]। ब्राह्मणायार्चिताय मस्त्वर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। अनुत्तमतृप्तिकामोऽहमेतत्[19] मस्तु ददानि। स्वस्त्यादि पूर्ववत्। एवं पिण्डदुग्धादिदाने [20]मस्तुपदस्थाने एतत्पिण्डदुग्धम् [21]एतं किलाटम् एतां[22] कूर्चिकामेतं[23] गोरसमिति[24] पदनिवेशो वाक्ये विशेषः।

1 I. O. करम्भो
2 A adds इति after this
3 A ब्राह्मणो for ब्राह्मणेभ्यो
4 A दधिमिश्रितान्
5 I. O. सक्तू०
6 I. O. omits स्वीकारान्तं
7 A भारते
8 I. O. omits the bracketed portion
9 I. O. तत्तु द्रव्य०
10 A omits अर्चितम्
11 I. O. अमुकद्रव्यमिति
12 A reads the bracketed portion as द्रव्यदेवतास्वीकारो प्रतिद्रव्यमनुसन्धेयो
13 A यस्तु०
14 A ०त्तमं
15 A स्वयमृष्ट for सुमृष्ट
16 A आदिशब्देन
17 I. O. दधिमर:, A दधिपर:
18 A ०शिखरिण्यादानं
19 A ०मेतं
20 A मस्तुपिण्डपदस्थाने
21 A एता
22 I. O. एतं
23 A एतत्
24 I. O. गोरस

तथा (३।३१५।८क) :—

लेह्यदोऽप्सरसां लोकम् ।

[1][प्राप्नोतीति शेषः । यथेष्टं] लेहनीयं पिण्डीकृतं दुग्धमर्चितम् अर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [2]अप्सरोलोकप्राप्तिकामोऽहमेतल्लेह्यं[3] ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

[4]तथा (३।३१५।८क) :—

वसूनामपि चोष्यदः[5] ॥२०॥

[6]लोकमाप्नोतीति शेषः । [7]यथेच्छं [8]चोषणीय-[9]दुग्धाम्रादिकमर्चितमर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । वसुलोकप्राप्तिकामोऽहमेतच्चोष्यं ददानि । स्वस्त्यादि-स्वीकारान्तं पूर्ववत् ।

तथा (३।३१४।११क) :—

इक्षु-[10]मृद्वीकयोर्दानात् परं सौभाग्यमाप्नुयात् ॥२१॥

अर्चिताय ब्राह्मणायार्चितमिक्षुम्[11] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । [12]परम-सौभाग्यप्राप्तिकामोऽहमेतमिक्षुं[13] ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् ।

[14][तथा—(३।३११।११क) :—

दन्तकाष्ठप्रदानेन सौभाग्यं महदाप्नुयात् ॥२२॥

ब्राह्मणायार्चिताय दन्तकाष्ठमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । अतिशयित-सौभाग्यप्राप्तिकामोऽहमेतद्दन्तकाष्ठं ददानि । स्वस्त्यादिस्वीकारान्तं पूर्ववत् । ]

तथा (३।३४१।८०क) :—

[15][जिह्वानिर्लेखनं दत्वा] विरोगस्त्वभिजायते ॥२३॥

---

1 A reads the bracketed portion as प्राप्नोति यथेच्छं
2 A अपसरसां for अप्सरो
3 A ०मेतं तल्लेह्यं
4 I. O. omits it
5 A चोष्यतः
6 A लोकं प्राप्नोतीति
7 A omits it
8 I. O. चोषणाय
9 A ०दुग्धादिक०
10 A ०चर्विकयोर्दानात्
11 I. O. इक्षु for इक्षुम
12 I. O. भम for परम
13 I. O. इक्षु for इक्षुं
14 A reads the bracketed portion a little below, just before तथा :- मृत्तिकायाः etc.
15 A जिह्वानिर्लेखनं कृत्वा and I.O. जिह्वानिर्लेपनं कृत्वा for the bracketed portion •

अर्चिताय ब्राह्मणायार्चितं जिह्वानिर्लेखनम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [1]विरोगत्वप्राप्तिकामोऽहमेतज्जिह्वानिर्लेखनं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।

तथा (३।३११।११ख) :—

मृत्तिकायाः प्रदानेन शुचिः सर्वत्र जायते ॥२४॥

मृत्तिका तीर्थमृत्तिका स्नानार्था शौचार्था च। अर्चिताय ब्राह्मणायार्चितां[2] मृत्तिकाम्[3] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णुधर्मोत्तरोक्त[4]-मृत्तिकादानफलप्राप्तिकामोऽहमेतां[5] मृत्तिकां ददानि। स्वस्त्यादिस्वीकारान्तं[6] पूर्ववत्। अत्र दन्तकाष्ठ-जिह्वानिर्लेखन-मृत्तिका-दानेषु [7]अनुत्सृज्यानुष्ठानमात्रेणापि [8]फलमुक्तम्। उत्सृज्य दाने तु[9] दक्षिणाधिक्यात्[10] फलाधिक्यम्।

तथा (३।३११।१४क) :—

वितानकप्रदानेन सर्वपापैः प्रमुच्यते ।२५॥

वितानं चन्द्रातपः। अर्चिताय ब्राह्मणायार्चितं वितानकम्[11] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [12]सर्वपापक्षयकामोऽहमेतद्वितानकं ददानि। स्वस्त्यादिस्वीकारान्तं[13] पूर्ववत्।

[14][तथा (३।३११।२३) :—

दत्त्वा पूगफलं विप्रा सफलां विन्दते क्रियाम्।

ताम्बुलस्य प्रदानेन सौभाग्यमपि विन्दति ॥२६॥

अर्चिताय ब्राह्मणायार्चितं ताम्बुलदानफलप्राप्तिकामोऽहमेतत्ताम्बूलं ददानि।] [स्वस्त्यादि-स्वीकारान्तं पूर्ववत्। ][15]

तथा (३।३११।१०) :—

यज्ञोपवीतदानेन वस्त्रदानफलं लभेत्।

उष्णीषदानस्य तथा फलमेतदुदाहृतम् ॥२७॥

---

1 A विरोग for विरोगत्व
2 I. O. °र्चितं
3 A मृत्तिकामर्चितां
4 A विष्णुधर्मोत्तरो
5 A एता for एतां
6 A omits स्वीकारान्तं
7 A उत्सृज्यानुष्ठानमात्रे पि
8 I. O. फलं युक्तं
9 A दत्
10 A दक्षिणाभां
11 A वितानकमर्चितं
12 A विष्णुधर्मोत्तरोक्त-वितानकदानफल-प्राप्ति for सर्वपापक्षय
13 I. O. omits स्वीकारान्तं
14 A omits the bracketed portion
15 A reads the bracketed portion after the first line of the next verse

अर्चिताय ब्राह्मणायोष्णीषमर्चितम्[1] ॐ[2] अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। [3]वस्त्र-दानफलप्राप्तिकामोऽहमेतदुष्णीषं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्। [4][परिधानं स्वीकारः।

तथा (३।३११।२५क) :—

कङ्कतस्य प्रदानेन परां बाधां प्रमुञ्चति ॥२८॥

कङ्कतं केशप्रसाधनोचितं काङ्करीति प्रसिद्धं बोद्धव्यम्। अर्चिताय ब्राह्मणायार्चितं कङ्कतम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। प्रबाधाप्रमोककामोऽहमेतत् कङ्कतं ददानि। स्वस्त्यादिस्वीकारान्तं पूर्ववत्।]

तथा (३।३१६।२२) :—

[5]बाले क्रीडनकं दत्त्वा मिष्टमन्नं[6] तथैव च।

फलं मनोहरञ्चापि[7] अग्निष्टोमफलं लभेत् ॥२९॥

क्रीडनकं क्रीडोचितद्रव्यं [8][कन्दुकादि। अर्चिताय वटवे क्रीडोचितकन्दुकमर्चितम्] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। अग्निष्टोमफलप्राप्तिकामोऽहमेतत् क्रीडनकं ददानि। स्वस्त्यादि-[9]स्वीकारान्तं पूर्ववत्। [10][अनुपनीताय तु दाने] अनुष्ठानमात्रम्।

[11]तथा (३।३११।२४) :—

समुद्रजानां भाण्डानां शंखादीनां प्रदायकः।

पात्रीभवति कामानां यशसश्च न संशयः ॥३०॥

भाण्डानां पात्राणाम्। शंखादीनामित्यादिशब्देन शुक्तिग्रहणम्। शुक्तिशंखयोरन्य-तरस्य पात्रत्रयमर्चितं ब्राह्मणायार्चिताय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्। विष्णु-धर्मोत्तरोक्त-[12]समुद्रजभाण्डदानफलप्राप्तिकामोऽहमेतानि भाण्डानि ददानि। प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते भाण्डानीमानि वरुणदैवतानीति वदेत्। कामस्तुत्यादि पूर्ववत्।

---

1 A ब्राह्मणायामर्चितमुष्णीषं
2 A omits it
3 A उष्णीष for वस्त्र
4 A omits the bracketed portion
5 A बाल
6 A तोमन्नं
7 A and V. D. मनोहरं वापि
8 I. O. reads the bracketed portion as कन्दुकाद्यर्चितं
9 I. O. and A omit स्वीकारान्तं
10 A अन्नदानं तोयदानं for the bracketed portion
11 I. O. omits it
12 A सामुद्र for समुद्रज

तथा (३।३११।२२) :—

स्नानानां सुखवासानां धूपानाञ्च प्रदायकाः[1] ।

लोके प्रयान्ति प्रियतां भवन्ति च सुगन्धिनः ॥३१॥

ब्राह्मणायार्चिताय स्नानोपयुक्तं सुगन्धितिलामलकाद्यर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । लोकप्रियत्वसहितसुगन्धित्वप्राप्तिकामोऽहमेतानि स्नानानि ददानि । स्वस्त्यादि स्वीकारान्तं[2] पूर्ववत् । [3]सुखवास-[4]दानवाक्ये तु स्नानपदस्थाने सुखवासपदनिवेशो विशेषः ।

तथा (३।३१४।१४क) :—

शक्तुदस्तृप्तिमाप्नोति ॥३२॥

ब्राह्मणायार्चिताय शक्तुमर्चितम्[5] ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । तृप्तिकामोऽहमेतान् शक्तून् ददानि । स्वस्तिसावित्रीपाठान्ते शक्तव एते प्रजापतिदैवता इति प्रतिग्रहीतृवाक्यम् । कामस्तुल्यादि पूर्ववत् ।

तथा (३।३०६।६२ख-६३क) :—

आरण्यपशुदानेन वायुलोके महीयते ।

एतदेव फलं प्रोक्तं प्रदानेन तु पक्षिणाम् ॥३३॥

अत्रारण्यपशुसमभिव्याहारेणा[6]-रण्यानामेव पक्षिणां मयूरादीनां ग्रहणम्[7] । एतदेव फलं वायुलोकप्राप्तिरित्यर्थः । अर्चिताय ब्राह्मणाय मयूरादिपक्षिद्वयमर्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । वायुलोकप्राप्तिकामोऽहमेतान् पक्षिणो ददानि । प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते पक्षिण एते वायुदैवता इति वदेत् । कामस्तुल्यादि पूर्ववत् ।

तथा (३।३१०।१८):—

भोगमाप्नोति ताम्रदः[8] ।

लोहारकूटयो-[9][र्दानात् कुप्य]-माप्नोत्यसंशयम्[10] ॥३४॥

---

1 A प्रदायक:
2 I. O. omits स्वीकारान्तं
3 I. O. अथवा ॥ स०
4 A ०स्नाने तु वाक्य
5 A शक्तूनर्चितान्
6 A ०व्याहारादा०
7 I. O. omits ग्रहणम्
8 I. O. ताम्रद:
9 A र्भेतानां दौनाकृष for the bracketed portion
10 A ०संभव:

आरकूटं पित्तलम् इतरलोहानां स्वपदोपात्तत्वात्। [अत्र लोह][1]-पदं कांस्यपरम्, कुप्यं हेमरूप्येतरधनम्।

[2]अयसश्च प्रदानेन स्थैर्यं [3]सुमहदश्नुते।
त्रपुसीसकयोर्दानाद् [4]बुद्धिवृद्धिमवाप्नुयात् ॥३५॥ (३।३१०।१६क)

त्रपु रङ्गम्। [5]यथेष्टपरिमाणं ताम्रमर्चितम् अर्चिताय ब्राह्मणाय ॐ अद्यादि तुभ्यमन्त-मुक्त्वा दद्यात्। भोगप्राप्तिकामोऽहमेतत्ताम्रं ददानि। प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते ताम्रमिदमग्निदैवतमिति वदेत्। [6]कामस्तुल्यादि पूर्ववत्। कांस्यदाने कुप्यप्राप्तिकामो-ऽहमेतल्लोह[7]-मिति [8]वाक्ये विशेषः। [9][पित्तलदाने कुप्यप्राप्तिकामोऽहमेतदारकूटमिति विशेषः। लोहदाने सुमहास्थैर्यप्राप्तिकामोऽहमेतदय इति विशेषः। रङ्गदाने [10]बुद्धिवृद्धि-प्राप्तिकामोऽहमेत[11] त्रपु इति विशेषः। सीसकदाने [12]बुद्धिवृद्धिप्राप्तिकामोऽहमेतत् सीसक-मिति विशेषः।]

तथा (३।३१०।२०ख-२१क) :—

शिल्पभाण्डानि यो दद्याल्लोहानि विधिवद्द्विजाः।
विद्यादानफलं तस्य कथितं नात्र संशयः ॥३६॥

शिल्पभाण्डानि [13]शिल्पनिर्माणोचितद्रव्यादीनि। गृहीतोदपूर्णताम्रपात्र [उदङ्मुख उप-विष्टो][14] यथेष्टं शिल्पभाण्डानि कारुभ्यः शिल्पभाण्डार्थिभ्यः सङ्कल्पयेत्। ॐ विष्णु-धर्मोत्तरोक्त शिल्पभाण्डदानफलप्राप्तिकामोऽहं कारुभ्यः शिल्पभाण्डानि दास्ये इति सङ्कल्प्य [यो येनार्थी][15] तस्मै शिल्पिने तद्दद्यात्। अत्र कारुभ्यो दानं [विष्णुधर्मोत्तर एव स्थानान्तरे श्रवणात्][16]।

---

1 A अत्र for the bracketed portion
2 A आयसस्य
3 A सुमहदश्नुते
4 A वृद्धि०
5 I. O. यथेष्ट twice and ०परिमाण
6 A ताम्रस्पर्शादि
7 A कांस्य for लोह
8 A omits it
9 A omits the bracketed portion
10 I. O. वृद्धि०
11 I. O. एतं for एतत्
12 I. O. वृद्धि०
13 A निर्माणोचितद्रव्याणि वास्यादीनि
14 I. O. उदङ्मुखोपविष्टो and A उदङ्मुख उपविश्य for the bracketed portion
15 A omits the bracketed portion
16 A reads the bracketed portion as विष्णुधर्मोत्तरोक्तस्थानान्तर-श्रवणात्

तथा च[1] :—

येन जीवति भाण्डेन तस्य भाण्डस्य दापकः[2] ।
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥३७॥
यज्ञोपकरणद्रव्यं [3][ब्राह्मणस्य महाफलम् ।
[4]युद्धोपकरणद्रव्यं] क्षत्रिये[5] द्विजपुङ्गवाः ॥३८॥ (३।३१६।१२)
[6]पण्योपयोगि [7]तद्वैश्ये शूद्रे [8]शिल्पोपजीवनम् ।
यस्योपयोगि यद्द्रव्यं देयं तस्यैव तद्भवेत् ॥३९॥ (३।३१६।१३)
येन येन च भाण्डेन यस्य [9]वृत्तिरुदाहृता ।
तत्तत्तस्यैव दातव्यं पुण्यकामेन धीमता ॥४०॥ (३।३१६।१४)

[10]तथा (३।३१०।२१ख) :—

वर्मदाता नरो नित्यं रक्षां समधिगच्छति ।

[11][वर्म सन्नाहः ।] ब्राह्मणायार्चिताय वर्मार्चितम् ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । विष्णुधर्मोत्तरोक्तवर्मदानफलप्राप्तिकामोऽहमेतद्वर्म ददानि । प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते वर्मेदं शक्रदैवतमिति वदेत् । कामस्तुत्यादि पूर्ववत् । परिधानं स्वीकारः । एतच्च [12]दानं ब्राह्मणाय [13]तत्प्रकरणे पाठात् ।

तथा (३।३१०।२२क) :—

आयुधानां प्रदानेन रिपुनाशमवाप्नुयात् ॥४१॥

[14][यथेच्छमायुधान्यर्चितानि अर्चिताय] ब्राह्मणाय ॐ अद्यादि तुभ्यमन्तमुक्त्वा दद्यात् । रिपुनाशकामोऽहमेतान्यायुधानि ददानि । प्रतिग्रहीता स्वस्तिसावित्रीपाठान्ते आयुधानीमानि शक्रदैवतानीति वदेत् । कामस्तुत्यादि पूर्ववत् । [ग्रहणं स्वीकारः । ][15] [16][ब्राह्मण-

---

1 A omits च
2 A दायकः
3 V. D. omits the b. p.
4 A धर्म्मोपकरणं द्रव्यं
5 I. O. क्षत्रियो
6 A प्रयो॰, I. O. पाण्यो॰
7 A तवैश्ये, I. O. तद्वैश्य
8 I. O. शिल्पोपजीविनं
9 A वृत्ति॰
10 A omits it
11 A omits the bracketed portion
12 A omits it
13 A तत्प्रकरणेपि
14 A यथेच्छमायुधान्यर्चिताय for the bracketed portion
15 A omits the bracketed portion
16 A reads the bracketed portion as ब्रह्मप्रकरणपाठान्ते एतदपि

प्रकरणे पाठादेतदपि] ब्राह्मणाय दानम्। एतानि च[1] दानानि [2]विशेषतः कथितानि अन्यान्यपि [3][स्वेष्टद्रव्यदानानि यथेष्टं] कर्तव्यानि।

तथा च मनुः[4] :—

यद् यदिष्टतमं किञ्चिद् [5][यच्चास्ति दयितं गृहे]।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छति[6] ॥४२॥

तत्र च दानवाक्ये [7]मनूक्तामुकद्रव्यदानफलप्राप्तिकामोऽहममुकद्रव्यमिति [8]विशेषः। [9]तेषु सर्वेषु [10]विष्णुर्देवतेति [11]एतेषाञ्च [12]तत्तदावर्तस्थितानां सर्वेषां दानानां विष्णुशङ्करोद्देशेनानुष्ठाने [13]श्रुतफलानामानन्त्यं भवति।

तथा च कूर्मपुराणे (२।२६।३४) :—

यत् [14]किञ्चिद्देवमीशानमुद्दिश्य ब्राह्मणे शुचौ।
दीयते [15]विष्णवे वापि तदनन्त-[16]फलं स्मृतम् ॥४३॥

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे [17]विप्रकीर्णदानावर्तः।

---

1 A omits च
2 A विशेष:
3 A reads the bracketed portion as स्वेष्टद्रव्याणि दानानि
4 Cf. K. P. 2/26/52 which reads य......मं लोके यच्चापि.........मिच्छता
5 I. O. यच्चान्यद्दयितं च वै
6 I. O. ०मिच्छतीति
7 I. O. मनूक्तामुक०
8 I. O. शेष:
9 A adds च after this
10 I. O. देवतेति
11 A एषाञ्च
12 I. O. तदावर्त स्थितानां
13 A द्रुतफलानामनन्त्यम्
14 I. O. किञ्चिद्दैव०
15 Supplied from K. P. A. विष्णुर्देवानं and I. O. विष्णुमेवाग्नु
16 K. P. ०फलप्रदम्
17 A प्रकीर्णदानावर्त:

## अथ सामान्यदेवतासम्प्रदानकदानावर्तः । (७२)

नन्दिपुराणे :—

अलङ्कारन्तु यो दद्याद्विप्रायाथ [1] [सुराय वा] ।
स गच्छेद्वारुणं लोकं नानाभरणभूषितः ।
जातः पृथिव्यां कालेन भवेद्द्वीपपतिर्नरः ॥१॥

अत्र प्रसिद्धालङ्काराणामन्यतम-[मर्चितमर्चिताय ][2] यस्मै कस्मैचिद्देवाय दद्यात् । ॐ [3][ अद्य नन्दिपुराणोक्त-सुरसम्प्रदानकालङ्कारदानफलप्राप्तिकामोऽहममुकदेवायैतमलङ्कारं ददानि । ततः ॐ अद्य कृतैतद्दानप्रतिष्ठार्थममुकदेवायाहं दक्षिणामेतत् काञ्चनं ददानीति । तस्मा एव देवाय दक्षिणां दद्यात् । अत्र फलोत्कर्षादुत्कृष्टालङ्कारदानं ] बोद्धव्यम् ।

तथा :—

[4]यश्चोभयमुखीं दद्याद्विप्रा-[य वेदवादिने][5] ।
देवाय [6]वाप्यभीष्टाय स कुलान्येकविंशतिम् ॥२॥
समुद्धृत्य [7]नरस्तिष्ठेन्नरकाद्ब्रह्मणो[8]ऽन्तिके ।
युगानि रोमतुल्यानि [9]भक्तिश्रद्धापरो नरः ॥३॥

[10]प्रसूयमानां [11][दृश्यमान-वत्स]-शिरश्चरणां गामर्चिता[12]-मर्चितायेष्टदेवाय[13] दद्यात् । ॐ [14]अद्य नन्दिपुराणोक्तोभयमुखीदानफलप्राप्तिकामोऽहममुकदेवाय एतामुभयतोमुखीं गां ददानि । दक्षिणा पूर्ववत् ।

---

1 A स्वराय च
2 I. O. अर्चितं and A अर्चिताय for the bracketed portion
3 A reads the bracketed portion as 'नन्दिपुराणोक्तफलोत्कर्षादुत्कृष्टामालङ्कारदामि'
4 I. O. यश्चोभय॰
5 I. O. वे वेदवादिनि for the b. p.
6 I. O. दाप्यभीष्टाय
7 A समुत्तिष्ठ॰
8 A ब्राह्मणो for ब्रह्मणो
9 I. O. यद्दि॰
10 A असूयमानां
11 A व्यक्तवत्स for the bracketed portion
12 I. O. omits अर्चिताम्
13 I. O. ॰देवताय
14 A omits अद्य

तथा :—

दीपं ददाति यो मर्त्यः सुरब्राह्मणवेश्मनाम्[1] ।
स दिव्येन तु यानेन[2] महाभागप्रकाशिना[3] ।
[4]गच्छति स्वर्गमण्डलं वसेत्तत्र समाः शतम् ॥४॥

गृहीतोदपूर्णताम्रपात्र उदङ्मुखो दीपदानं सङ्कल्प्य सुरवेश्मसु यथेच्छकालावधि दद्यात्। [5]ॐ नन्दिपुराणोक्त-[6]सुरवेश्म-दीपदानफलप्राप्तिकामोऽहं सुरवेश्मसु दीपं दास्ये। अत्र फलभूयस्त्वाद् यथेष्टचिरकालदीपदानम्।

शाम्बपुराणे :—

दीपं ददाति यो नित्यं देवतायतनेषु च ।
[7]चतुष्पथेषु रथ्यासु रूपवान् सुभगो भवेत् ॥५॥

अत्राप्यनन्तरदीप-[8]सङ्कल्पवत् सङ्कल्पयेत्। ॐ शाम्बपुराणोक्त-दीपदानफलप्राप्तिकामोऽहं [देवायतनेषु दीपं][9] दास्ये। ततो यथेष्टचिरकालावधि दद्यात्।

आदित्यपुराणे :—

[10]ये च शय्यां प्रयच्छन्ति देवेषु च[11] गुरुष्विह ।
[12]ज्ञानवृद्धेषु विप्रेषु दत्त्वा नश्यति कण्टकम्[13] ॥६॥

देवेष्विति बहुवचनं दातृबहुत्वापेक्षम्। अर्चितायाभिमतदेवायार्चितां[14] शय्यां दद्यात्। ॐ अद्य [15]कण्टकनाशप्राप्तिकामोऽहं[16]-ममुक-[17]देवायैतां शय्यां ददानि। दक्षिणा पूर्ववत्।

तथा सुवर्णदानानुवृत्तौ :—

यं देवमर्चयेत्तेन यस्य चैव प्रयच्छति ।
तस्य लोके [18]निवसति [19]नित्यमेव ददाति यः ॥७॥

---

1 A वेश्मन
2 I. O. यामेन
3 A महाभागप्रभाषिना, I. O. महाभातप्रकाशिना
4 I. O. गच्छते
5 A omits it
6 A omits सुरवेश्म
7 I. O. चतुःपथेषु
8 A omits सङ्कल्प
9 A reads the bracketed portion as देवतनै प्रदीपं
10 A येन
11 A व
12 A ग्रामविप्रेषु
13 A दुःकृतं
14 I. O. and A °र्चितं
15 A दु for कण्टक
16 A adds भगवते after अहं
17 I. O. °देवतायैतां A °देवाये
18 A निवसति
19 A नित्यं चैव

अभिमतदेवायार्चितायार्चितं[1] सुवर्णं दद्यात्। ॐ अद्यामुक-[2]देवलोकप्राप्तिकामोऽहममुक-[3]देवायैतत् काञ्चनं ददानि। दक्षिणा पूर्ववत्।

[4]तथा :—

छत्रं ये तु प्रयच्छन्ति गुरुविप्रसुरेषु च।
न तेषां [5]पतते घोरमग्निवर्षं[6] सुदारुणम् ॥८॥

अर्चितायाभिमतदेवायार्चितं छत्रं दद्यात्। ॐ [7]आदित्यपुराणोक्तसुर-[8]सम्प्रदानकछत्रदानफलप्राप्तिकामोऽहं भगवते अमुक-[9]देवायैतच्छत्रं ददानि। दक्षिणा पूर्ववत्।

शिवपुराणे :—

दीपप्रदानं यो दद्याद् [10]देवेषु ब्राह्मणेषु च।
तेन दीपप्रदानेन अक्षय्यां गतिमाप्नुयात् ॥९॥

[11]अर्चितायाभिमतदेवायार्चितं दीपं दद्यात्। ॐ अद्याक्षय्य[12]-गतिप्राप्तिकामोऽहं भगवते अमुकदेवायैतं दीपं ददानि। दक्षिणा पूर्ववत्।

विष्णुधर्मोत्तरे (३।२८८।४०ख-४१) :—

यानं शय्यासनं छत्रं पादुके [13]वाप्युपानहौ।
वाहनं गाश्च [14]धर्मज्ञास्त्रिदशेभ्यो ददाति यः।
एकैकस्मादवाप्नोति वह्निष्टोमफलं नरः ॥१०॥

यानं रथं पादुके काष्ठोपानहौ वाहनं हस्त्यादि। अर्चितायाभिमतदेवायार्चितं यानं दद्यात्। [15]ॐ अद्याग्निष्टोमफलप्राप्तिकामोऽहममुकदेवायैतद्यानं ददानि। दक्षिणा पूर्ववत्।

---

1 A omits अर्चिताय, I. O. omits अर्चितं
2 A ०सुदेव०
3 A ०देवतायैतत्
4 I. O. omits it
5 I. O. यतते
6 A ०वर्षं
7 A अद्यादित्य०
8 A ०छत्रदानकाव०
9 A ०देवताये एतच्छत्रं
10 I. O. दैवते
11 A अर्चिताभिमत०
12 A अद्यानन्त०
13 I. O. वाप्युपानहे
14 I. O. धर्मच विप्रेभ्योऽपि
15 A omits ॐ, I. O. reads ॐ अद्यादित्यमग्निष्टोम०

तथा (३।२८८।४२ख):—

निवेद्य [1]शस्यानि तथा [2]गतिमाप्नोत्यनुत्तमाम्[3] ।

[4]शस्यानि [5]धान्ययवादीनि अर्चितानि । [6][अभिमतदेवाय [7]शस्यान्यर्चितानि] [8]दद्यात् । [9]ॐ अद्यानुत्तमगति-[10]प्राप्तिकामोऽहममुक-[11]देवायैतानि [12]शस्यानि [13]ददानि । दक्षिणा पूर्ववत् ।

[14]तथा :—

[15]उपधानप्रदानेन श्रियमाप्नोत्यनुत्तमाम्[16] ॥११॥

[17]उपधानं [18]स्नानपूजाद्युपयोगिकलसादिकम् [19]अर्चितायाभिमतदेवायार्चितं कलसादीनामन्यतमं दद्यात् । [20]ॐ अद्यानुत्तमश्रीप्राप्तिकामोऽहममुकदेवायैतदुपधानं[21] ददानि । दक्षिणा पूर्ववत् ।

तथा (३।२८८।२५ख, cf ३।३१०।२२ख) :—

राजलिङ्गप्रदानेन [22]राजैव भवति क्षितौ ।

[23][राजलिङ्गं कनकदण्डादि] । [24]अर्चितायाभिमतदेवायार्चितं[25] राजलिङ्गं दद्यात् । ॐ अद्य क्षितिराज्यप्राप्तिकामोऽहममुकदेवायैतद्राजलिङ्गं ददानि । दक्षिणा पूर्ववत् ।

[26]तथा (३।३८८।२५क) :—

विभूषणप्रदानेन राजा भवति भूतले ॥१२॥

---

1 A शयानि
2 I. O. भ्रु व०, A वि०
3 A ०त्तमं
4 A शयानि
5 I. O. धान्ययवान्ययवादीनि
6 I. O. अभिमतदेवं य शस्यान्यर्चितानि
7 A शयान्यर्चितानि
8 A ददानि
9 A omits it
10 A ०प्राप्तो०
11 A ०देवतायैतानि
12 A शयानि
13 I. O. and A दद्यात्
14 A omits it
15 I. O. उपस्नान०
16 A ०त्तमं
17 I. O. उपस्नानं
18 I. O. स्नानं
19 I. O. अनुत्तम श्रीअर्चितान्यभिमत०
20 A omits it
21 I. O. ०मुपस्करं
22 A राजेव
23 I. O. reads the bracketed portion as राजलिङ्गौ कनकदण्डादि
24 I. O अर्चिताभिमत०
25 I. O. ०र्चित
26 A omits it

विभूषणं मुक्ताहारकेयूरकङ्कणादि। अर्चिताय देवायार्चितं मुक्ताहारादीनामन्यतमं विभूषणं दद्यात्। ॐ अद्य क्षितिराज्य[1]-प्राप्तिकामोऽहं भगवते अमुकदेवाय विभूषणं ददानि। दक्षिणा पूर्ववत्।

तथा (३।२८८।१४) :—

प्रतिपाद्य तथा भक्त्या ध्वजं त्रिदशवेश्मनि।
निर्दहत्याशु पापानि महापातकजान्यपि ॥१३॥

अर्चितायाभिमतदेवाय ध्वजमर्चितं दद्यात्। ॐ अद्य [2]पापापनोदकामोऽहम् अमुकदेवायैतं ध्वजं ददानि। दक्षिणा पूर्ववत्।

भूमिं कृत्वा तु यः कुर्याद्देवब्राह्मणसान्नरः।
स्वर्गलोकमवाप्नोति पुरुषोऽतिसुदारुणः ॥१४।

अतिसुदारुण इत्यत्रापिशब्दोऽध्याहार्यः[3]। [4]तेनातिदारुणोऽपि स्वर्गं प्राप्नोतीत्यर्थः। अर्चितायाभिमतदेवायार्चितां[5] [6]भूमिं दद्यात्। [7]ॐ अद्य स्वर्गलोकप्राप्तिकामोऽहममुक[8]देवायैतां प्रियदत्तां भूमिं ददानि। [9]दक्षिणा पूर्ववत्।

तथा (३।२८८।२६क) :—

[10]वस्त्रदानेन लोकेऽस्मिन् [11]सुवेशस्त्वभिजायते।

अर्चितायाभिमतदेवायार्चितं वस्त्रं दद्यात्। अद्यैतल्लौकिकसुवेशत्वप्राप्तिकामोऽहममुक[12]देवायैतद्वस्त्रं ददानि। दक्षिणा पूर्ववत्।

तथा :—

फलानि दत्त्वा देवेभ्यः सफलां[13] विन्दति क्रियाम् ॥१५॥

[फलानि बीजपुरादीनि][14] अर्चितायाभिमतदेवाय फलं बीजपूरादिफलानामन्यतमं दद्यात्। ॐ अद्य[15] विष्णुधर्मोत्तरोक्तदेवसम्प्रदानकफलप्राप्तिकामोऽहं [16]भगवतेऽमुक[17]देवायैतानि फलानि ददानि। दक्षिणा पूर्ववत्।

---

1 A omits राज्य
2 A पापापनोदककामोऽहम्
3 A ०ऽध्याहार्यौ:
4 I. O. तेनानि दारायमपि, A तेनाति दारुण
5 A ०र्चितं, I. O. ०र्चिताय
6 I. O. adds सतद्रूपकोतां before भूमिं
7 A omits it
8 A ०देवतायैतां
9 A दक्षिणा
10 I. O. वस्त्रप्रदानेन
11 A परिसद्गतिजायते
12 A ०देवतायैतद्वस्त्रं
13 I. O. सफलं
14 I. O. omits the bracketed portion
15 I. O. and A अद्यादि
16 I. O. भगवतो०
17 A ०देवतायैतानि

तथा :—

गीतवाद्यप्रदानेन सौख्यं प्राप्नोत्यनुत्तमम्[1] ॥१६॥

गीतवाद्ययोरन्यतरदुभयं [2]वाऽभिमतदेवाग्रे [3]सङ्कल्प्य कारयेत्। [4]ॐ अनुत्तम-सौख्यप्राप्तिकामोऽहं भगवते अमुकदेवाय[5] गीतं दास्ये। वाद्यदान [6]उभयदाने वा वाद्यं दास्ये इति वाक्ये विशेषः।

तथा :—

प्रेक्षणीयप्रदानेन रूपवान् भुवि जायते।
औज्ज्वल्यमाप्नोति तथा यत्र यत्राभिजायते ॥१७॥

प्रेक्षणीयं दृश्यं सङ्कल्प्याभिमतदेवताभ्यो [7]दातव्यम्।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे सामान्यदेवता-[8]सम्प्रदानकदानावर्तः।

---

1 I. O. ०त्तमां
2 I. O. वाभिमतदेवाग्रे, A वाऽभि-मतदेवाग्र
3 A संकल्प्य
4 A omits it
5 I. O. omits it
6 I. O. उभयदानेषु
7 I. O. दातव्यानि
8 I. O संप्रदानदानावर्त्तः, A संप्र-दानावर्त्त:

# अथ सूर्यसम्प्रदानकदानावर्तः । (७३)

[1]भविष्यपुराणे (१।६३।५७, ५८ख) :—

[2][गावो वाथ महिष्यो वा] [3]गजानश्वांश्च शोभनान् ।
यः प्रयच्छति सूर्याय तस्य पुण्यफलं [4]लभेत् ।
सहस्रगुणितं [5]तत्र [6]दानमस्योपतिष्ठति ॥१॥

[7]दानमस्योपतिष्ठतीति दीयत इति दानं [8][गोमहिष्यादि एतदपि] [9]सहस्रगुणमुपतिष्ठति इत्यर्थः। अत्र यजमानो [10]गाः शोभना [11][उपादाय अर्चिताय] भगवते सूर्याय दद्यात्। ॐ अद्य भविष्यपुराणोक्तसूर्यसम्प्रदानकानियत[12]-संख्य-[13][गवीदानफलप्राप्तिकामो[14][ऽहं सूर्याय] गवीर्ददानि[15]। दक्षिणा पूर्ववत्। महिषीदाने] [16]गवीपदस्थाने महिषीपदनिवेशो विशेषः। शोभनगजदाने गजपदप्रक्षेपः[17]। [18]शोभनाश्वदाने अश्वपदप्रक्षेपः।

तथा (१।६३।४८-४६) :—

गोयुक्त-[19]मश्वयुक्तं[20][वा यो [21]दद्याद् रवये रथम् ।
काञ्चनं]वापि रौप्यं वा [22]मणिरत्नान्वितं शुभम् ॥२॥

---

1 A भविष्ये
2 Bh. P. reads the b. p. as गा वाथ महिषीर्वापि
3 I. O. गजानाश्वांश्च
4 Bh. P. भृशम्
5 Bh. P. तच
6 I. O. दानमभ्योपतिष्ठति
7 I. O. दानमभ्योपतिष्ठतीति
8 I. O. reads the bracketed portion as गोमहिष्यादिमते तदपि
9 I. O. सहस्रं for सहस्र
10 A गां
11 I. O. उपादायान्यभ्यर्चिताय and A उपादयो अर्चिताय for the bracketed portion
12 I. O. नि for नियत
13 I. O. omits the bracketed portion
14 A omits the bracketed portion
15 A गवीर्ददाति
16 I. O. गवीदादस्थाने
17 A ०प्रक्षपं
18 I. O. शोभनमश्वं दाने, A अश्वदाने
19 A and I. O. मश्वयुक्तं for मश्वयुक्तं
20 A omits the bracketed portion
21 Corrected from Bh. P. I. O. ददाति रवे
22 Corrected from Bh. P. I O. मणिरत्नचित and A मणिभौरचितं

स यानेनार्कवर्णेन किङ्किणीजालमालिना ।
स्वर्गलोकमितो गत्वा क्रीडते [स भवाङ्गने][1] ॥३॥

यथेच्छं सौवर्णमारोहणादियोग्यं रथं निर्माय मुक्तामाणिक्यालङ्कृतं कृत्वा कर्षकवृष-युगसहितमश्वयुग-[2][सहितं वार्चितमर्चिताय]सूर्याय दद्यात् । ॐ[3] अद्य भविष्यपुराणोक्त-सूर्यसम्प्रदानककाञ्चनरथदानफलप्राप्तिकामोऽहं भगवते सूर्याय [4]एतं गोयुक्तं काञ्चनं मणि-[5]रत्नखचितं रथं ददानि । दक्षिणा पूर्ववत् । अश्वयुक्तदाने तु गोपदस्थाने अश्वपदनिवेशो विशेषः । रौप्यरथदाने तु[6] काञ्चनपदस्थाने रौप्यपदनिवेशो विशेषः ।

तथा (१।६३।५०) :—

यस्तु दारुमयं कुर्याद्रवे[7] रथमनुत्तमम् ।
स यात्यर्कवर्णेन विमानेनार्कमण्डलम् ॥४॥

दारुमयं रथमर्चितम् अर्चिताय रवये दद्यात् । [8]ॐ अद्य भविष्यपुराणोक्तसूर्यसम्प्र-दानकदारुमयरथदानफलप्राप्तिकामोऽहं [9][भगवते रवये] [10]एतं रथं ददानि । दक्षिणा पूर्ववत् ।

तथा (१।६३।६८-७०) :—

पुस्तकं भानवे दद्याद् भारतञ्च[11] गणाधिप[12] ।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥५॥
रामायणञ्च[13] दत्त्वा तु पुस्तकं त्रिपुरान्तक ।
वाजपेयफलं प्राप्य गोपतेः [14]पुरमाव्रजेत् ॥६॥

---

1 I. O. ऋटभवाङ्गनैः and Bh. P. ऽमरसा मह for the bracketed portion
2 I. O. सहितार्चितमर्चिताय and A सहितम्वार्चिताय for the bracketed portion
3 A omits it
4 A omits एतं
5 I. O. ०रत्नचितं, A ०रचितं
6 A adds गाव्यं after this
7 A कुर्याद्वि
8 A omits it
9 I. O. रवये भगवते for the bracketed portion
10 A तुभ्यं
11 I. O. and Bh. P. भारतस्य
12 I. O. and A गणाधिपः
13 I. O. and Bh. P. रामायणस्य
14 A परमाव्रजेत्

गोपतेः सूर्यस्य ।

भविष्यं शाम्बसंज्ञञ्च दत्त्वा सूर्याय पुस्तके ।
[1]राजसूयाश्वमेधाभ्यां फलमाप्नोति मानवः ॥७॥

भारतपुस्तकमर्चिताय भानवे दद्यात् । ॐ अद्य सर्वपापापगमपूर्वकसोत्कर्षविष्णुलोकप्राप्तिकामोऽहं[2] भगवते सूर्याय एतद्भारतपुस्तकं ददानि । [3][दक्षिणा पूर्ववत् ।] एवं [4][रामायणपुस्तकदाने वाक्ये विशेषः] [5]वाजपेयफलप्राप्तिकामोऽहमेतद्रामायणपुस्तकमिति । भविष्यपुराण-[6]दानवाक्ये राजसूयफलप्राप्तिकामोऽहमेतद्भविष्यपुराण-[7]पुस्तकमिति । शाम्बपुराण-[8]दानवाक्ये अश्वमेधफलप्राप्तिकामोऽहमेतच्छाम्बपुराणपुस्तकमिति विशेषः ।

तथा (१।६३।४४) :—

दत्त्वा वासांसि सूर्याय अलङ्कारांस्तथैव च ।
[9]क्रीडतेऽण्डजलोकस्थो यावदाभूतसंप्लवम् ॥८॥

[10]अलङ्कारान् [11]हारमुकुटकटकाङ्गुरीयकादीन् [12]अण्डजलोकस्थ इति सूर्यलोकस्थः । [13]यथेच्छं वस्त्राण्यर्चिताय सूर्याय दद्यात् । ॐ अद्याभूतसंप्लवावधि[14] सोत्कर्षसूर्यलोकावस्थानप्राप्तिकामोऽहं भगवते सूर्याय एतानि वासांसि ददानि । दक्षिणा पूर्ववत् । अलङ्कारदाने उक्तवाक्ये [15]वासःपदस्थाने अलङ्कारपदनिवेशो विशेषः ।

तथा (१।६३।४१-४३) :—

छत्रं ध्वजं वितानं वा पताका-[16]श्चामराणि च ।
हेमदण्डानि [17][यो दद्याद्वेश्म भक्तिमान्नरः] ॥६॥

[18]ध्वजश्चामरपताकान्वितचिह्नदण्डः । वितानं [19]चन्द्रातपः ।

---

1 A वाजपेयाश्वमेधाभ्यां
2 A •कामोऽह
3 I. O. reads the bracketed portion as पूर्ववद्दक्षिणा
4 A reads the bracketed portion as रामायणदानवाक्ये
5 I. O. राजसूय for वाजपेय
6 I. O. दानि for दान
7 A •पुस्तकमिदं
8 I. O. दानि for दान
9 A क्रीडते जललोकस्थो and Bh. P. क्रीडते जल•
10 I. O. अलङ्कार
11 I. O. हारमुकुटकाङ्गुलीकादीन्, A मुकुटकटकाङ्गुलियकादीनि
12 A जाललोकस्थ
13 A यथेच्छ
14 I. O. •संप्लवावधि
15 I. O. वास and A वस्त्र for वासः
16 A •चामरं तथा
17 A ये दत्वा तैन वे भक्तिमान नराः, I. O. यो दद्याद्वेश्व भक्तिमान्नरः, Bh. P. वै दद्याद्वेवो भक्तिमान्नरः
18 A ध्वजध्वजचामरचामरपताकान्वितरथये चिह्नदण्डकं
19 A चन्द्रातपं

विमानेन स दिव्येन किङ्किणीजालमालिना ।
सूर्यलोकमितो गत्वा भवत्यप्सरसां पतिः ॥१०॥
[1]ततोऽप्य सुचिरं कालं स्वर्गात् [2]प्रत्यागतः पुनः ।
[3]मानुष्यो जायते राजा [4]सर्वराजनमस्कृतः ॥११॥

[5]रवयेऽर्चितायार्चितं छत्रं दद्यात् । [6]ॐ अद्य भविष्यपुराणोक्तसूर्यसम्प्रदानक-छत्रदान-[7]फलप्राप्तिकामोऽहं भगवते [8]रवये एतच्छत्रं ददानि । दक्षिणा पूर्ववत् । ध्वजादि-दानवाक्ये तु छत्रपदस्थाने [9]तत्तत्पदनिवेशो विशेषः ।

तथा (१।६३।६७) :—

[10]वाद्यकदम्बकं यस्तु दद्यात् सूर्याय भक्तितः ।
स गच्छेत् परमं स्थानं यत्र तिष्ठति भानुमान् ॥१२॥

[11]वाद्यसमूहम-[12]र्चितमर्चिताय सूर्याय भक्तिपूर्वकं दद्यात् । ॐ अद्य भास्कर-परम[13]-लोकप्राप्तिकामोऽहं भगवते सूर्यायेत-[14]द्वाद्यकदम्बं ददानि । दक्षिणा पूर्ववत् ।

तथा :—

[15]भेर्यादीनि च वाद्यानि शंखवेणवादिकानि च ।
ये प्रयच्छन्ति सूर्याय यान्ति ते हंसमन्दिरम् ॥१३॥

वाद्यानि वाद्यभाण्डानि । अर्चिताय सूर्याय भेरीमर्चितां[16] दद्यात् । ॐ अद्य भविष्यपुराणोक्तसूर्यसम्प्रदानक-भेरीदान-फलप्राप्तिकामोऽहं भगवते [17]सूर्यायैतां भेरीं ददानि । दक्षिणा पूर्ववत् । [18]शंखदानवाक्ये भेरीपदस्थाने शंखपदनिवेशो विशेषः ।

---

1 A ततापि
2 A प्रत्यागतं
3 A मनीषा, Bh. P. मानुष्ये
4 A सर्व्वराजानमष्टते
5 I. O. नरायार्चितायार्चितं
6 A omits it
7 A omits फल
8 I. O. omits रवये
9 I. O. तत्पद॰, A तत्तपपद॰
10 I. O. and Bh. P. वैण्ण for वाद्य
11 I. O. वैण्ण for वाद्य
12 I. O. ॰र्चितामर्चिताय, A ॰र्चितायार्चिताय
13 A पर for परम
14 I. O. हंसाकदम्बं, A ॰द्वाद्यसमूहं
15 I. O. भेर्यादि
16 I. O. and A ॰मर्चितं
17 A सूर्यायता
18 I. O. मङ्गलानि तु वाक्ये

तथा (१।६३।५६-६०क) :—

महीं ददाति योऽर्काय [1]कृष्यां फलवतीं[2] शुभाम् ।
स तारयति वै वंशान् दशपूर्वान् [3]दशावरान् ।
[4]विमानेनार्कवर्णेन [5][गोपुरं [6]गोपतेर्व्रजेत् ॥१४॥

कृष्यां कृषिसमेतां गोपतेः सूर्यस्य । अर्चितार्काय यथोक्तभूमिमर्चितां दद्यात् । ॐ अद्य भविष्यपुराणोक्तार्कसम्प्रदानक-[7]बहुदानफलप्राप्तिकामोऽहं भगवतेऽर्काय एतां फलवतीं प्रियदत्तां महीं ददानि । दक्षिणा पूर्ववत् ।

तथा (१।६३।६१) :—

ग्रामं तु दद्यात् सूर्याय यो भक्त्या मतिमान् [8]शुभम् ।
विमानेनार्कवर्णेन] स याति परमां गतिम् ॥१५॥

शुभं शोभनं वृक्षाद्यलङ्कृतमिति । [9]अर्चिताय सूर्याय यथोक्तमर्चितं ग्रामं दद्यात् । ॐ अद्य भविष्यपुराणोक्तसूर्यसम्प्रदानकग्रामदानफलप्राप्तिकामोऽहं भगवते सूर्याय [10]एतं [11]शुभं ग्रामं ददानि । दक्षिणा पूर्ववत् ।

तथा (१।६३।६२) :—

[12]आरामान् ये प्रयच्छन्ति फलपुष्पफलोपगान्[13] ।
भानवे भक्तियुक्ताश्च[14] ते यान्ति परमां गतिम् ॥१६॥

[15]आरामो ग्रामसमीपस्थ-सजातीयनानातरुवनानि । यथेष्टसंख्या-[16]रामान्निर्मायार्चिताय सूर्याय दद्यात् । ॐ अद्य परमगतिप्राप्तिकामोऽहं भगवते सूर्याय [17]एतानारामान् ददानि । दक्षिणा पूर्ववत् ।

तथा :—

धनं धान्यं हिरण्यं वा वासांसि विविधानि च ।
ये प्रयच्छन्ति सूर्याय ते यान्ति परमां गतिम् ॥१७॥

---

1 Bh. P. कृष्टां
2 I. O. फलवतां
3 I. O. and Bh. P. दशापराम्
4 Bh. P. विमानेन च दिव्येन
5 A omits the bracketed portion
6 I. O. गोपते व्रजेत्
7 I. O. reads बहुदानफल twice
8 Bh. P. नरः
9 I. O. अर्चिता, A अर्चितो
10 I. O. एवं
11 A शुभ
12 I. O. अरोगार्थं, A आरोग्यार्थं
13 A ०फलोपगम्
14 A भक्तियुक्ताय, Bh. P. भक्तियुक्तस्तु
15 I. O. and A आराम
16 I. O. ०नामान्नि०, A ०रामन्नि०
17 I. O. एतामारामां

धनं [1]सुवर्णं हिरण्यं [2]रजतं विविधानि च [3]वासांसि [4]कार्पासिककौशेयादीनि। भगवते सूर्यायार्चितं यथेच्छपरिमाणं [5]सुवर्णं दद्यात्। ॐ [6]अद्य परमगतिप्राप्तिकामोऽहं भगवते सूर्याय एतद्धनं ददानि। दक्षिणा पूर्ववत्। [7]धान्यदानवाक्ये इदं धान्यमिति [8]रजतदान इदं हिरण्यमिति विविधवासोदाने एतानि[9][विविधानि वासांसीति] विशेषः।

तथा (१।६३।३४-३५) :—

[10]सूर्याय तर्पणीं धेनुं गामेतां यः प्रयच्छति।
[11]कंजजामचलां प्राप्य पुनर्लेखपुरे[12] व्रजेत् ॥१८॥

[13]कंजजामचलां लक्ष्मीमत्यन्तस्थिरामित्यर्थः।

गोशरीरे तु रोमाणि यावन्ति [14]त्रिपुरान्तक।
[तावत्यो[15] वर्षकोट्यस्तु][16] लेखलोके महीयते ॥१६॥

तर्पणीं [17]तृप्तिकारिणीम् अर्चिताय [18]सूर्यायार्चितां यथोक्तरूपां गां दद्यात्। ॐ अद्य भविष्यपुराणोक्तसूर्यसम्प्रदानकतर्पणगवी[19]-दानफलप्राप्तिकामोऽहं भगवते सूर्यायैतां गां ददानि। दक्षिणा पूर्ववत्।

तथा (१।११८।५०ख-५२क) :—

षष्ठीं वा [20]सप्तमीं वापि प्रतिपत्तन्तु[21] यो नरः।
दीपं ददाति [22]दत्त्वा यत् फलं तस्य निबोध मे ॥२०॥

---

1 A रजतं
2 A मधतं
3 I. O. and A omit it
4 A कार्पासकौशेयादीनि
5 A रजतं
6 A अद्यादि
7 I. O. धान्यदाने वाक्ये
8 A सुवर्णदाने
9 A reads the bracketed portion as विधानि वासांसीति
10 A च
11 I. O. कंकजामचलं
12 Bh. P. ०पुरं
13 A कंजजामचलं, I. O. कंकजामचला
14 I. O. त्रिपुरान्तिकं
15 I. O. भावत्यो, A तावद्यो
16 Bh. P. स तावद्दकोटीस्तु for the b. p.
17 I. O. तृप्तिपोतृतां
18 A omits सूर्याय
19 I. O. ०गवां
20 A मासमों
21 Bh. P. ०च
22 Bh. P. यथात्

[कार्बुरं मणिमुक्ताढ्यं][1] मनोज्ञमतिशोभनम् ।
[2]दीपमालोज्ज्वलं दिव्यं विमानमधिरोहति ॥२१॥

शुक्लकृष्णात्मनश्चिन्यां[3] षष्ठ्यां सप्तम्यां वा गृहीतोदपूर्णताम्रपात्र उदङ्मुखः सूर्याय दीपं सङ्कल्प्य दद्यात् । ॐ [4][दीपमालोज्ज्वल-मणिमुक्ताढ्याति]-शोभनदिव्यहैमविमानाधिरोह-[5][प्राप्ति कामोऽहं]-[6]मियन्तं कालं यावद् भगवते सूर्याय शुक्लकृष्णषष्ठ्यां[7] प्रदीपं दास्ये इति सङ्कल्प्य दद्यात् । एवं सप्तम्यां [8]दाने वाक्ये षष्ठीपदस्थाने सप्तमीपदनिवेशः ।

. तथा (१।१०३।४०-४१) :—

यस्तु संवत्सरं पूर्णंतिलपात्र-[9]प्रदो नरः ।
ध्वजञ्च भास्करे दद्यात् समम्रं फलं [10]हरेत् ॥२२॥
विधुनोत्यतिवातेन [11]दातुरज्ञानतः कृतम् ।
• पापं [12]दातुर्गृहे भानुर्दिवारात्रं न संशयः ॥२३॥

अर्चिताय भास्करायार्चितं ध्वजं दद्यात् । ॐ अद्य भविष्यपुराणोक्त-[13]सूर्यायतन-ध्वजदान-[14]फलप्राप्तिकामोऽहं भगवते भास्कराय ध्वजं ददानि । दक्षिणा पूर्ववत् ।

गोशतं भानवे दत्त्वा राजसूयफलं लभेत् ।
अश्वमेधफलं तस्य यः सहस्रं प्रयच्छति ॥२४॥ (१।६३।३६)

अर्चिताय भानवे [15]गोशतमर्चितं दद्यात् । ॐ अद्य[16] राजसूयफलप्राप्तिकामोऽहं भगवते भानव एताः शतं गाः[17] ददानि । दक्षिणा पूर्ववत् । [18]गोसहस्रदानवाक्ये [19]त्वश्वमेधफलप्राप्तिकामोऽहमेताः[20] सहस्रं गा इति विशेषः ।

---

1 Bh. P. काञ्चनं मणिमुक्ताढ्य for the p. b.
2 I. O. दीपमालाद्भुत्य, Bh. P. दीपमालाकुलं
3 I. O. ०मश्विन्यां A ०मश्विन्यां
4 I. O. दीपमालाकुलमणिमुक्ताद्यति for the bracketed portion
5 A omits the bracketed portion
6 I. O. मियन्तं
7 I.O. शुक्लकृष्णषष्ठ्यौ, A शुक्लपक्षषष्ठ्यां
8 A इदान
9 A ंप्रदामत:
10 A and Bh. P. लभेत्
11 I. O. दातृवाक्ज्ञानतः
12 Supplied from Bh. P. A केतुर्गृहे, I. O. केतुगृहे
13 A सूर्यायायतनं
14 A omits फल
15 I. O. गोशतमन्य
16 A omits it
17 I. O. and A गा
18 I. O. गोसहस्रदाने वाक्ये, A गो-सहस्रदानवाक्ये
19 A अश्वमेध०
20 A ०मेता

विमानमतिविद्योति सर्वरत्नमयं दिवि ।
संप्राप्नोति नरो दत्त्वा दीपकं भास्करालये[1] ॥२५॥

[2][भास्करालये दीपदानं सङ्कल्प्य] दद्यात् । [3]ॐ अतिविद्योति-सर्वरत्नमयविमान-सहित[4]-स्वर्गप्राप्तिकामोऽहं भास्करालये [दीपं ददानि][5] ।

तथा :—

दीपं प्रयच्छति [6][यो हि] भानोरायतने महत् ।
तेजसा हरिसङ्काशः सर्वयज्ञफलं लभेत् ॥२६॥

महदिति क्रियाविशेषणम् । [7][तैलवर्तियुक्तं[8] वृत्तस्थितं महान्तं दीपं प्रयच्छतीत्यर्थः] ।

कार्तिके तु विशेषेण [9]कौमुदे मासि दीपकम् ।
दत्त्वा फलमवाप्नोति यदन्येन न लभ्यते ॥२७॥

कार्तिके मासि कौमुदे शुक्लपक्ष इत्यर्थः । भानोरायतने [10][प्रत्यहं दीपं] सङ्कल्प्य दद्यात् । ॐ अद्य भविष्यपुराणोक्त-[11]सूर्यायतनदीपदानफलप्राप्तिकामोऽहं भानोरायतने महान्तं[12] दीपं दास्ये । कार्तिकशुक्लपक्षाभिमतदीपदाने तु ॐ भविष्यपुराणोक्तकार्तिककौमुदपक्ष[13]-विहित-भास्करालयदीपदानफलप्राप्तिकामोऽहमिति विशेषः ।

ब्रह्मपुराणे :—

छत्रं ध्वजं वितानं वा पताकाश्चामराणि च ।
श्रद्धया भानवे दत्त्वा गतिमिष्टामवाप्नुयात् ॥२८॥

अर्चिताय सूर्यायार्चितं छत्रं श्रद्धापूर्वकं दद्यात् । ॐ अद्यामुकगतिप्राप्तिकामोऽहं भगवते सूर्याय एतच्छत्रं ददानि । दक्षिणा पूर्ववत् । ध्वजादिदाने तु वाक्ये[14] एतं

1 A भास्करालयेत
2 A दीपं सङ्कल्प for the bracketed portion
3 A omits it
4 I. O. ०सहितं
5 I. O. दीपदाने for the bracketed portion
6 A नरो for the bracketed portion
7 I. O. तैल वर्तिदीपवृत्ताय, तत्कर्षान्महान्तं दीपं प्रयच्छतीत्यर्थः for the bracketed portion
8 A ०दीपं
9 Bh. P. कौमारे
10 I. O. दीपं प्रयतः for the bracketed portion
11 I. O. ०सूर्यलोक०
12 A महतो, I. O. omits it
13 I. O. omits पक्ष
14 I. O. omits it

ध्वजम् [1]एतद्वितानम् एतां पताकाम् [2]एतच्चामरमिति विशेषः । अत्र [3]यदन्यदप्यपेक्षितं द्रव्यं तत् सूर्याय दातव्यम् ।

तथा भविष्यपुराणम् :—

[4][यद् यदिष्टतमं द्रव्यं दुर्लभं यच्च विद्यते] ।
तत्तु दत्वा जगद्धात्रे भास्कराय न सीदति ॥२६॥

तत्तद्दाने [5]चोक्तवद्दानवाक्यान्यूहनीयानि ।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेव-विरचिते
श्रीदानसागरे [6]सूर्यसम्प्रदानकदानावर्तः ।

1 A एतं वितानं
2 A एतच्चामरमिति, I. O. एतच्चामरमिति
3 I. O. धान्यद्रव्यापेक्षितं
4 I. O. यद्यदिष्टदुर्लभं for the bracketed portion
5 I. O. चोक्तधर्म्मो दानवाक्यादूहनीयानि, A चोक्तविधादानवाक्यान्यूहनीयानि
6 I. O. सूर्यसम्प्रदानदानावर्त्तः, A सूर्य संप्रदानकदानावर्त्तः

# [1]अथ महेश्वरसम्प्रदानकदानावर्त्तः। (७४)

स्कन्दपुराणे[2] महेश्वरवाक्ये :—

[3][यो मे] गान्तु हिरण्यं वा दद्यादविमनाः[4] प्रिये।
लोकान् ददाम्यहं तस्मै सर्वलोकसमर्चितान्[5] ॥१॥

[6]अत्र फलोत्कर्षश्च तेर्दक्षिणाबाहुल्यम्। तदेव यजमानः[7] समभ्यर्च्यार्चिताय [शिवाय गां हिरण्यं वा][8] दद्यात्। ॐ अद्य सर्वलोकसमर्चितलोकप्राप्तिकामोऽहं भगवते महेश्वराय एतां गां ददानि। तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं भगवते महेश्वरायाहं दक्षिणामेतत् काञ्चनं ददानि। [9][हिरण्यदानवाक्ये गामिति पदस्थाने हिरण्यमिति]पदनिवेशो विशेषः।

तथा :—

वृषभं वा प्रयच्छेत श्वेतं नीलमथापि वा।
स कुलानामुभयत-[10]स्तारयेदेकविंशतिम् ॥२॥

श्वेतं वृषमर्चितमर्चिताय महेश्वराय दद्यात्। ॐ अद्य स्कन्दपुराणोक्तश्वेतवृषभदान-फलप्राप्तिकामोऽहं भगवते महेश्वरायैतं वृषभं ददानि। दक्षिणा पूर्ववत्। नील-[11]वृषभ-[12]दानवाक्ये श्वेतपदस्थाने नीलपदनिवेशो विशेषः।

तथा :—

[13]शालिपिष्टमयीं कृत्वा [14]यो मे [15]प्रतिकृतिं [16]शुभाम्।
[17][सर्वगन्धरसैर्युक्तां निर्यासैश्च] [18]सुसंस्कृताम् ॥३॥

---

1 A omits it
2 I. O. omits it
3 A यस्तु for the bracketed portion
4 I. O. ॰धिमनाः, A ॰विमना
5 I. O. ॰समन्वितान्
6 I. O. अविरिञ्चितु before this
7 I. O. यजमानो
8 I. O. शिवेकवित्तो for the bracketed portion
9 I. O. वाक्ये हिरण्यपदमिति for the bracketed portion
10 I. O. ॰स्तारयेदेकविंशति, A ॰स्तारयेदेकविंशति
11 A ॰वृष॰
12 I. O. ॰दाने॰
13 A शाली॰
14 I. O. या
15 I. O. प्रतिकृति
16 I. O. सुका, A सुकाः
17 A सर्वगन्धैः धर्म्यरसैर्निर्यासैश्च for the bracketed portion
18 A समन्वितां, I. O. सुसंस्कृतं

सर्वगन्धाः सर्वरसाः परिभाषोक्ता [1]ग्राह्याः। निर्यासः सरलद्रवादिरूपः।

[2]भक्ष्यभोज्यैश्च विविधैः कृष्णपक्षचतुर्दशीम्।
पूर्वदक्षिणयोश्चात्र पश्चिमोत्तरयोस्तथा ॥४॥

कृष्णपक्षचतुर्दशीं प्राप्येति शेषः।

पार्श्वेषु हरितालञ्च कृष्णागुरुमनःशिलाम्।
[3]चन्दनञ्चैव दद्याद्वै यथासंख्येन [4]पूजिताम् ॥५॥

यथासंख्येन हरितालादि दत्त्वा तां दद्यादिति सम्बन्धः।

तस्य पुण्यफलं देवि [5][शृणुयान्मे तु कामिनि]।
सर्वव्याधिविनिर्मुक्तस्तथा [6][निष्कल्मषः परः] ॥६॥
वर्षकोटिशतान्यष्टौ दिवि भुक्त्वा महासुखम्।
इहलोके सुखी जातो मामेव [7]प्रतिपद्यते ॥७॥

[8]यथेच्छकृष्णचतुर्दशीदिने प्रतिमां शालिपिष्टेन निर्माय सर्वगन्ध-[9]षड्रस-[10]निर्यासान्विताञ्च कृत्वा [11]तस्या यथोक्तदिक्क्रमेण हरिताल-कृष्णागुरु मनःशिलाचन्दनानि स्थापयित्वा [12]मूलफलान्नानि पार्श्वेषु निधायार्चिताय महेश्वराय स्कन्दपुराणोक्त[13]-प्रतिकृतिदानफलप्राप्तिकामोऽहमेतां शालिपिष्टमयीं सर्वरसगन्धनिर्यासैः सुसंस्कृतां [14]भक्ष्यभोज्यसहितां हरिताल-कृष्णागुरु मनःशिला-चन्दनयुतां सुप्रतिकृतिं ददानि। दक्षिणा पूर्ववत्।

तथा :—

छत्रं दद्याच्च यः सोऽपि दीप्यते [15]तेजसा दिवि ॥८॥

अर्चिताय महेश्वराय छत्रमर्चितं दद्यात्। ॐ अद्य भगवते महेश्वराय स्कन्दपुराणोक्त-शिवसम्प्रदानक छत्रदानफलप्राप्तिकामोऽहमेतच्छत्रं ददानि।

---

1 I. O. ग्राह्या:
2 I. O. and A भक्ष्य०
3 A चन्दनञ्चैव
4 I. O. पूजितं
5 I. O. शृणुयान्मर्त्यकामिनि for the bracketed portion
6 A निष्कमषः परः, I. O. निष्कल्मषवह
7 A प्रतिपद्यते
8 A यथेष्ट०
9 A रसरस
10 I. O. निर्यासाद्यान्विताञ्च
11 I. O. तस्यां
12 A मूलफलानि
13 A omits क्त
14 I. O. भक्ष्य०, A भोज्य०
15 I. O. तेजसा

तथा :—

[1]रत्नावलीन्तु यो दद्याद् [2]ब्राह्मणः क्षत्रियोऽथ विट् ।

शूद्रः स्त्री वा [3]स मे लोके [4]मत्सौख्यं [5]प्राप्नुयात् परम् ॥९॥

अर्चिताय शिवाय यथाशक्ति [6]मुक्तादिमालाम् [7]अर्चितां दद्यात् । ॐ अद्य भगवते महेश्वराय [8][शिवलोके परशिव]-सौख्यप्राप्तिकामोऽहमेतां [9]रत्नावलीं ददानि । दक्षिणा पूर्ववत् ।

दीपमालान्तु [10][यः कुर्यात्] कार्त्तिके मासि वै मम ।

अवसाने च दीपानां ब्राह्मणांस्तर्पयेच्छुचिः ।

[11]गणाधिपत्यं लभते दीप्यते च रविर्यथा ॥१०॥

[12]कार्त्तिके यथेष्टपुण्यदिने[13] शिवाय दीपमालादानं[14] सङ्कल्पयेत् । ॐ [15]अद्य रवि-[16]समप्रभत्वविशिष्ट-[17]गणाधिपत्यप्राप्तिकामोऽहं भगवते महेश्वराय सायंसमये दीपमालां दास्ये [18][इति सङ्कल्प्य] यथेच्छदीपमालां तद्दिने दद्यात् । दीपमालादानसमाप्तौ यथेच्छ-संख्य-[19]ब्राह्मणान् [20]सुवर्णादिभिस्तर्पयेत् ।

[21]तथा :—

यस्तु क्षेत्रं प्रयच्छेत निष्पन्नं फलवन्नरः ।

स तु क्षेत्रं पुमान् भुक्त्वा प्राजापत्यं समश्नुते ॥११॥

क्षेत्रं भुक्त्वेत्यर्थः । निष्पन्नपक्वशस्यक्षेत्रमर्चिताय महेश्वराय दद्यात् । ॐ अद्य

---

1 I. O. रत्नावलिन्तु, A मुक्तावलिन्तु
2 I. O. ब्राह्मण
3 I. O. सम for स मे
4 I. O. मत्सौख्यं, A मत्सौख्यं
5 A प्राप्नुयात्, I. O. प्राप्नुते
6 A मुक्तावलिं
7 I. O. अर्चितं, A अर्चिताम
8 A शिवलोकपरस्पर for the bracketed portion
9 A मुक्तावलिं
10 A यो दद्यात् for the bracketed portion
11 I. O. गाणाधिपत्यं
12 I. O. कार्त्तिक
13 A निर्दिने for दिने
14 I. O. दीपमालां
15 A omits अद्य
16 A ०समप्रभत्व०, I. O. ०सुप्रभत्वे०
17 I. O. गाणाधिपत्य०
18 A omits the bracketed portion
19 I. O. and A ब्राह्मणान्
20 A सुवर्णादिस्तर्पयेत
21 A यथा

महेश्वरसम्प्रदानकपक्कशस्यक्षेत्रदानफलप्राप्तिकामोऽहं[1] भगवते महेश्वराय एतां निष्पन्नशालिनीं [प्रियदत्तां क्षेत्र][2]-भूमिं ददानि। दक्षिणा पूर्ववत्।

तथा :—

गोचर्मद्वयमानं[3] वा यो मे दद्याद्वसुन्धराम्।
[4][स मे]पुरं समासाद्य गणेशैः सह मोदते ॥१२॥

भूमिदानावर्तोक्त गोचर्मद्वयपरिमाणां भूमिमर्चितामर्चिताय[5] महेश्वराय दद्यात्। ॐ अद्य सगणेशक्रीडासहित-शिवपुरप्राप्तिकामोऽहं [6][भगवते महेश्वरायैतां] गोचर्मद्वयपरिमाणां प्रियदत्तां भूमिं ददानि। दक्षिणा पूर्ववत्।

शिवपुराणे :—

यस्तु छत्रं प्रयच्छेत मम [7]ताराधिपानने।
तेजोमण्डलसङ्काशं दिवि [8]व्रजति शुक्रवत् ॥१२॥

तेजोमण्डलसङ्काशं [9]शुभ्रं प्रशस्तं छत्रमित्यर्थः। अर्चिताय [10]शिवायार्चितं छत्रं दद्यात्। ॐ अद्य शिवपुराणोक्त-शिवसम्प्रदानक-च्छत्रदानफलप्राप्तिकामोऽहं भगवते [11][शिवायैतं छत्रं] ददानि। दक्षिणा पूर्ववत्।

यश्च गावो हिरण्यं वा [12][समुद्दिश्य तु मां] वदेत्।
तस्य कामदुघां पृथ्वीं ददामि निरुपद्रवाम् ॥१४॥

अर्चिताय शिवाय [यथेच्छसंख्या गा][13] [अद्यादि तुभ्यमन्तमुक्त्वा दद्यात्][14]। ॐ अद्य कामदुघ[15]-निरुपद्रवपृथ्वीप्राप्तिकामोऽहं भगवते महेश्वरायैतां गां ददानि। दक्षिणा पूर्ववत्। हिरण्यदानवाक्ये[16] गोपदस्थाने हिरण्यपदनिवेशो विशेषः।

---

1 I. O. ह for हं
2 A प्रियदत्ता क्षेत्रं for the bracketed portion
3 I. O. वासं for मानं
4 I. O. सोम for the bracketed portion
5 A omits अर्चिताय
6 A एतां for the bracketed portion
7 I. O. तावधिपानने, A भारविपानने
8 A व्रजति
9 A दिवि
10 A 'शैवमोरक्षित'
11 A शिवाय एतच्छत्रं for the bracketed portion
12 A समुद्दिश्य तु माम्, I. O. सम उद्दिश्यतां for the bracketed portion
13 A यथेच्छसंख्या गाम्, I. O. यथेच्छसंख्यागात् for the bracketed portion
14 I. O. omits the bracketed portion
15 I. O. कामदुहा
16 I. O. हिरण्यदाने तु वाक्य

वृषभं [सम्प्रयच्छेत अन्नं][1] कृसरमेव च।
रथेन वृषयुक्तेन न तस्य प्रलयो भवेत् ॥१५॥

रथेन [2]वृषयुक्तेन स्वर्गं [यातीति शेषः][3]। न तस्य प्रलयो भवेत् [4][स्वर्गान्न च्यवत] इत्यर्थः। अर्चिताय महेश्वरायार्चितं वृषं दद्यात्। ॐ [5][अद्य शिवपुराणोक्त]-[6]वृषदान-फलप्राप्तिकामोऽहं भगवते महेश्वरायैतं वृषभं ददानि। दक्षिणा पूर्ववत्।

विष्णुधर्मोत्तरे (३।३०६।३६) :—

स्नपनार्थं तथा दत्वा [7][श्वेतां धेनुं शिवालये]।
रुद्रलोकमवाप्नोति स्वर्गलोकञ्च गच्छति ॥१६॥

[8]श्वेतां धेनुं [9]बहुदुग्धाम-[10]र्चितामर्चिताय शिवाय दद्यात्। [11][ॐ अद्य विष्णुधर्मोत्तरोक्तरुद्रस्नपनार्थ-[12]श्वेतधेनुदानफलप्राप्तिकामोऽहं भगवते रुद्राय स्नपनार्थमेतां [13]श्वेतां धेनुं ददानि। दक्षिणा पूर्ववत्।

तथा (३।३०६।४१ख) :—

श्वेतन्तु वृषभं दत्वा फलस्यानन्त्यमश्नुते ॥१७॥

अर्चिताय शिवायार्चितं श्वेतवृषभं दद्यात्।] ॐ अद्य[14] विष्णुधर्मोत्तरोक्त-शिवसम्प्र-दानक-श्वेतवृषभ[15]-दानफलप्राप्तिकामोऽहं भगवते [16][शिवायैतं श्वेतवृषभं] [17][ददानि।

---

1 A संप्रयच्छे अनु for the b. p.
2 A omits it
3 A यातीत्यर्थः for the bracketed portion
4 A स्वर्गान्नु च्यवत, I.O. स्वर्गान्न च्यवत for the bracketed portion
5 A अद्यशिवपुरोक्त for the bracketed portion
6 A वृषभ॰
7 I. O. श्वेतं रुद्रसुरालये for the bracketed portion
8 I. O. and A omit it
9 I. O. बहुलं वा
10 I. O. अर्चितार्चिताय, A अर्चिताय
11 A omits the bracketed portion
12 I. O. omits it
13 I. O. omits it
14 I. O. अद्यादि
15 A ॰धेनु॰
16 I. O. शिवायैतं वृषभं, A शिवाये धेनुं
17 I. O. omits the bracketed portion

[1]यस्तु [2]खेलं वृषं दद्यात् ] महादेवालये[3] नरः ।
रुद्रलोकमवाप्नोति कुलमुद्धरते तथा ॥१८॥ (३।३०६।४०)

[4]खेलं क्रीडाशालिनम् । अर्चितं [5]खेलं वृषभं सङ्कल्प्य रुद्रालये दद्यात् । ॐ अद्य [6]कुलोद्धरणपूर्वक-रुद्रलोकप्राप्तिकामोऽहं [7][ महादेवालये एतं] वृषभं ददानि । ततो रुद्रालये स्थापयेत् ।

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे महेश्वरसम्प्रदानकदानावर्तः ।

1 V. D. दत्त्वा सचेतं वृषभं for the first half of this line
2 A श्वेतं
3 A महादेवालये नये
4 A खेलं
5 A खेलं
6 A कुलधरण॰
7 A महादेवायेतं for the bracketed portion

# अथ भगवद्वासुदेवदानावर्तः। (७५)

नरसिंहपुराणे :—

यो गां पयस्विनीं विष्णोः कपिलां संप्रयच्छति।
स सर्वपापरहितः सर्वभूषणभूषितः[1]।
गवां सहस्रदानेन फलं प्राप्य दिवं व्रजेत् ॥१॥

अत्र यजमानोऽर्च्चिताय विष्णवे कपिलां बहुक्षीरां गामर्च्चितां दद्यात्। ॐ अद्य नरसिंहपुराणोक्त-विष्णुसम्प्रदानक-[2] [कपिलगवो]-दानफलप्राप्तिकामोऽहं भगवते वासुदेवायैतां कपिलां[3] गां ददानि। तत ॐ अद्य कृतैतद्दानप्रतिष्ठार्थं भगवते वासुदेवायाहं दक्षिणामेतत् काञ्चनं ददानि।

तथा :—

ध्वजञ्च विष्णवे यस्तु गरुडेन समन्वितम्।
दद्यात् सोऽपि ध्वजाकीर्णं विमानेन विराजता[4]।
विष्णुलोकमवाप्नोति सेव्यमानोऽप्सरोगणैः ॥२॥

वक्ष्यमाण-गरुडध्वजस्यातिशयित[5]-फलश्रुते-[6]श्चामर-[7]पताकादिशाजिनो यथाशक्तिनिर्मितस्य [8]प्रासादोर्द्ध्वस्थाप्यस्य ध्वजस्य ग्रहणम्। उक्त-[9]रूपमूर्द्ध्वस्थितगरुडध्वजयष्टिमर्चिता[10]-मर्च्चिताय वासुदेवाय दद्यात्। ॐ अद्य नरसिंहपुराणोक्त-गरुडान्वितध्वज-दानफल-[11][प्राप्तिकामो]ऽहं भगवते विष्णवे एतं गरुडसमन्वितं[12] ध्वजं ददानि। दक्षिणा पूर्ववत्।

1 A सर्व्वभूषणभूषितं
2 A कपिलाद्दानवि for the bracketed portion
3 I. O. कपिला
4 A विराजते
5 A मतिशय for मतिशयित
6 I. O. ०चम्रवामन०
7 A ०पातकोद्दि०
8 I. O. प्रमादस्योर्द्ध्वस्थाप्यस्य
9 I. O. ०रूपं मूर्द्ध०
10 A omits मर्च्चिताम्
11 I. O. प्राप्तो for the bracketed portion
12 I. O. गरुडसमन्वित

वामनपुराणे ( ६५।४६ख ) :—

दत्त्वारामान् पुष्पफलाभ्युपेतान्[1] [2]भोगान् भुङ्क्ते कामतः श्लाघनीयान् ॥३॥

अर्चिताय [3][वासुदेवायानेकफलप्राप्तिकामः [4]फलपुष्पाढ्यानारामानर्चितान्] दद्यात्। ॐ अद्य [5]वामनपुराणोक्तारामदान-[6]फलप्राप्तिकामोऽहं भगवते वासुदेवाय एतानारामान् ददानि। दक्षिणा पूर्ववत्।

विष्णुधर्मोत्तरे :—

[7][दिने दिने] जपन्नाम केशवेति समाहितः।

ददाति कार्त्तिके यस्तु विष्ण्वायतने[8] दीपकम् ॥४॥

समाहितः अनन्यचित्तः विष्ण्वायतने[9] विष्णवे दीपकं ददातीति सम्बन्धः विष्णवे दानस्यानुवृत्तेः।

जातिस्मरत्वं प्रज्ञाञ्च [10]स प्राप्नोति न संशयः।

शेषकाले तु चक्षुष्मान् मेधावी दीपदो[11] नरः।

जायते [12]नरकञ्चापि तमःसंज्ञं[13] न पश्यति ॥५॥

सौरकार्त्तिक-[14]शुक्लप्रतिपदि गृहीतोदपूर्णताम्रपात्र उदङ्मुखो[15] विष्णोरायतने[16] [दीपं दातुं][17] सङ्कल्पयेत्। ॐ अद्यादि यावत्कार्त्तिकं विष्णुधर्मोत्तरोक्त-विष्ण्वायतनदीपदान-फलप्राप्तिकामोऽहं [18]दीपं विष्णवे दास्ये इति[19] सङ्कल्प्यानन्यचित्तो यथाशक्ति केशवाय नम इति जपित्वा दीपं प्रज्वाल्य दद्यात्। एवं सङ्कल्पव्यतिरेकेण प्रत्यहं दद्यात्।

विष्णुधर्मोत्तरे ( ३।३४१।४८) :—

विष्णोरायतने दत्त्वा तत्कथापुस्तकं नरः।

ब्रह्मलोकमवाप्नोति बहवो वत्सरान् द्विजाः ॥६॥

---

1 I. O. पुष्पफलाभिपन्नान्, Vāmana P. ०भिपन्नान्
2 Vāmana P. भोगान् स
3 I. O. वासुदेवायतनसन्निविष्टितान-नेकफलपुष्पाढ्यान् नानारामानर्चि-तान् for the bracketed portion
4 A omits फल
5 A रामायण for वामन
6 A omits फल
7 A दानदिने for the bracketed portion
8 I. O. विष्ण्वायतन
9 A विष्ण्वायतन, I.O. विष्ण्वायतनं
10 I. O. संप्राप्नोति
11 A दीपदा
12 A नरकं वापि
13 I. O. तमःसङ्गं
14 A ०सौर०
15 A उदङ्मुखोपविष्टो
16 A विष्णोरायते
17 I. O. दातुं दीपं for the bracketed portion
18 I. O. omits it
19 I. O. and A omit it

तत्कथापुस्तकं वासुदेवमाहात्म्यस्य प्रकाशकं विष्णुपुराणादि। अर्चितं तत्कथापुस्तकं सङ्कल्प्य[1] दद्यात्। [2]ॐ अद्य बहुवत्सरब्रह्मलोकप्राप्तिकामोऽहं विष्णोरायतने एतत्-[3]कथा-पुस्तकं ददानीति सङ्कल्प्य [4]देवालये स्थापयेत्।

तथा (३।३४१।४६):—

पुस्तकांश्च तथैवान्यान् यः प्रदद्यान्नरस्त्विह।
सारस्वतमवाप्नोति लोकं कालं तथा [5]बहुम् ॥७॥

[6]अन्यान् [7]वासुदेवमाहात्म्यप्रकाशकव्यतिरिक्तान् स्कन्द-[8]पुराणादीन् इह विष्णोरायतने स्थापयेत्।

तथा (३।३४१।५१ख-५२क):—

सम्भूतं वाचकं [9]कृत्वा देवागारे सदा बुधम्[10]।
[11]विद्यादानफलं प्राप्य ब्रह्मलोके महीयते ॥८॥

यथेच्छदिने भारतपुराण-[12]रामायणानामन्यतमस्य वाचनार्थं ब्राह्मणं [13]पुराणादि-पाठशक्तं [14][सुस्वरं बुधं] विद्वांसं सदा [15]वावदुकादिगुणयुक्तं [16]वसनोचितभूमिधनादिना सम्भूतं कृत्वा सङ्कल्प्य नियुञ्जीत। तद् यथा—ॐ विद्यादानफलप्राप्तिपूर्वकसोत्कर्षब्रह्म-लोकप्राप्तिकामोऽहं भगवद्वासुदेवागारे अमुकग्रन्थवाचनं[17] कर्त्तुं वाचकं ब्राह्मणं नियोक्ष्ये[18]। ततःप्रभृति वाचको[19] भारतादिवाचनं[20] देवागारे कुर्यात्।

तथा (३।३४१।५२ख-५३क):—

विष्णोः शङ्खप्रदानेन वारुणं लोकमश्नुते।
मानुष्यमासाद्य तथा ख्यातशब्दश्च[21] जायते ॥९॥

---

1 A सङ्कल्प
2 A omits it
3 A ०कथपुस्तकं त्रि
4 I. O. दानालये
5 I. O. बहु, A बहु:
6 I. O. आद्यान्
7 I. O. वासुदेवमाहात्मस्य प्रकाश-कान् व्यतिरिक्तान्, A वासुदेव-माहात्म्य प्रकाशव्यतिरिक्तान्
8 I. O. ०पुराद्दीन्
9 I. O. कृत्वा
10 I. O. omits it
11 A विद्याद्दीनफलं
12 A ०रामायणनामामन्यतमस्य
13 I. O. पुरणाद्दिपाठशक्तं
14 I. O. सुस्वर and A बुध' for the bracketed portion
15 I. O. वारवाद्दिगुणयुक्तं
16 I. O. वसंनोचित०, A वसंनानोचित०
17 Both I. O. and A ०वाचन
18 A नियोक्ष
19 A वाचका
20 I. O. भारताद्दिपठनं
21 A ख्यातशब्दश्च

अर्चिताय वासुदेवायार्चितं शङ्खं दद्यात्। ॐ अद्यादि विष्णुधर्मोत्तरोक्त-विष्णु-[1]सम्प्रदानक-शङ्खदानफलप्राप्तिकामोऽहं भगवते विष्णवे एतच्छङ्खं ददानि[2]। दक्षिणा पूर्ववत्।

घण्टाप्रदानेन तथा [3][महद्यश उपाश्नुते] ॥१०॥ (३।३४१।५३ख):—

अर्चिताय वासुदेवायार्चितां[4] घण्टां दद्यात्। ॐ अद्यातिशयित-[5]यशःप्राप्तिकामोऽहं भगवते विष्णवे एतां घण्टां ददानि। दक्षिणा पूर्ववत्।

[6]तथा (३।३४१।५४क):—

सौभाग्यं महदाप्नोति किङ्किणीं प्रददद्धरेः।

किङ्किणी [7]घुङ्गुरेति प्रसिद्धा। [8][अर्चिताय हरये] अर्चितां[9] किङ्किणीं दद्यात्। ॐ अद्यातिशयितसौभाग्यप्राप्तिकामोऽहं भगवते एतां किङ्किणीं ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।५४ख):—

कूटागारं तथा दत्त्वा नगराधिपतिर्भवेत् ॥११॥

कूटागारं मञ्चगृहम्। अर्चिताय वासुदेवायार्चितं [10]यथाशक्तिनिर्मितं कूटागारं दद्यात्। ॐ अद्य [कूटागारदानफल][11]-प्राप्तिकामोऽहं भगवते हरये एतत् कूटागारं ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।६१):—

दत्त्वा [12][तु देव]-कर्मार्थं [13]नवां वेदीं दृढां शुभाम्।
पार्थिवत्वमवाप्नोति वेदी हि पृथिवी यतः ॥१२॥

[14]वासुदेवाग्रतो [15]देवपूजोपकरणस्थापनार्थमुक्तरूपां वेदीमिष्टका-[16]दिभिर्निर्माया-[17][चिता-

---

1 I. O. ०संप्रदाम
2 A ददाति
3 I. O. महद्दयशमुपाश्नुते and A महद्दयश उपाश्नुते for the bracketed portion
4 A वासूदेवायार्चितं
5 I. O. ०यशस:०
6 A omits it
7 I. O. घर्घरीति, A घुगुवे
8 I. O. अर्चितामद्दवाय for the bracketed portion
9 I. O. अर्चिता, A र्चिता
10 A omits it
11 A कूटगारदानफल for the bracketed portion, I. O. omits it
12 A तद्देव for the bracketed portion
13 A नवा
14 A वासुदेवायतो
15 A देवपूजोपकरणं स्थापनार्थं मुक्तारूप, I. O. पूजोपकरणावस्थानार्थमुक्तरूपां
16 I. O. ०दिवाभिर्मांया०, A ०दिति० निर्माय
17 A omits the bracketed portion

मर्चिताय] वासुदेवाय दद्यात्। ॐ अद्य पार्थिवत्वप्राप्तिकामोऽहं भगवते वासुदेवायैतां वेदीं ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।८४ख-८५क):—

तोरणं [1]कारयेद् यस्तु [2]देवदेवालये नरः।
लोकेषु तस्य द्वाराणि भवन्ति [3]विवृतानि तु ॥१३॥

[4][लोकेषु विष्णुप्रभृतिलोकेषु।] अर्चिताय [5]वासुदेवायायतनप्राङ्गणे यथाशक्ति शिलादिनिर्मितं तोरणमर्चितं दद्यात्। ॐ अद्य विष्णुधर्मोत्तरोक्त-तोरणदानफलप्राप्तिकामोऽहं भगवते वासुदेवाय एतत्तोरणं ददानि। दक्षिणा पूर्ववत्।

तथा (Cf. ३।३४१।८६ख-८७क):—

[6]देवालयोपयोग्यानि शिल्पभाण्डानि यो नरः।
[7]दद्याद्वा वाद्यभाण्डानि गणेशत्वमवाप्नुयात् ॥१४॥

अर्चिताय वासुदेवाय देवालयोपयोगिशिल्पभाण्डानि [8]यथाशक्त्युपात्तानि दद्यात्। ॐ अद्य गणेशत्वप्राप्तिकामोऽहं भगवते वासुदेवाय एतानि शिल्पभाण्डानि ददानि। दक्षिणा पूर्ववत्। [9]वाद्यभाण्डदाने वाक्ये शिल्पपदस्थाने वाद्यपदनिवेशो विशेषः।

यः कुम्भं देवकर्मार्थं नरो दद्यान्नवं[10] शुभम्।
वारुणं लोकमाप्नोति सर्वपापैः प्रमुच्यते ॥१५॥ (Cf. ३।३४१।६२)

शुभमुत्कृष्टद्रव्यघटितं स्वरूपञ्च [11]देवार्चन-[12]जलाहरणाद्यर्थं यथाशक्ति सुवर्णादीनामन्यतमद्रव्येण घटितं नवं स्वरूपं कुम्भमर्चितमर्चिताय वासुदेवाय एतं कुम्भं ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।६३):—

चतुरः कलसान् दद्याद् यस्तु [13]देवगृहे नरः।
चतुःसमुद्रवलयां स भुङ्क्ते च वसुन्धराम् ॥१६॥

---

1 A कारय
2 A देवादेवालयो
3 A विवृतानिव, I. O. विवृतानिवा
4 A omits the bracketed portion
5 I. O. वासुदेवायतनप्राङ्गण
6 I. O. देवालोपयोग्यानि
7 A दद्याद्वा
8 A omits यथा
9 A वाद्य०
10 I. O. नव:
11 I. O. omits देवार्चन
12 A जलाहरणाद्यर्थं
13 A देवागृहे, I. O. देवगृहे

यथाशक्ति सुवर्णादीनामन्यतमेन घटितं कलसचतुष्टयमर्चिताय वासुदेवाय दद्यात्। ॐ अद्य चतुःसमुद्रवलयवसुन्धराराज्यप्राप्तिकामोऽहं भगवते वासुदेवाय [1]एतांश्चतुरः कलसान् ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।६५क, Cf. ३।३६८।६ख):—

[2][वारिधानीं तथा] दत्त्वा वारुणं लोकमाप्नुयात्।

वारिधानीति [3]वासनेति प्रसिद्धा। यथाशक्ति सुवर्णादीनामन्यतमेन निर्मितां वारिधानीमर्चितामर्चिताय वासुदेवाय दद्यात्। ॐ अद्य वारुणलोकप्राप्तिकामोऽहं भगवते [4]वासुदेवायैतां वारिधानीं ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।६५ख):—

कमण्डलुप्रदानेन गोदानफलमाप्नुयात् ॥१७॥

अर्चिताय वासुदेवाय यथाशक्ति [5]सुवर्णादीनामन्यतमेन निर्मितमर्चितं कमण्डलुं दद्यात्। ॐ अद्य गोदानफलप्राप्तिकामोऽहं भगवते वासुदेवायैतं कमण्डलुं ददानि। दक्षिणा पूर्ववत्।

मात्रान्तु परिचर्य्यार्थं[6] निवेद्य विधिवत्तथा।
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥१८॥ (३।३४१।७२)

[7]मात्रा [8]देवोपचारसामग्री। अर्चिताय वासुदेवाय पूजाभोजनाद्युपचारसामग्रीमर्चितां दद्यात्। ॐ अद्य सर्वकामसमृद्धयज्ञफलप्राप्तिकामोऽहं भगवते वासुदेवाय परिचर्य्यार्थमेतां मात्रां ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।१२६ख-१२७क):—

माल्याधारन्तथा दत्त्वा धूपाधारन्तथैव च।
गन्धाधारं तथा पात्रं कामानां पात्रतां व्रजेत् ॥१९॥

माल्याधार[9] उत्क्षेक[10] इति प्रसिद्धः। धूपाधारो धूपकद्रव्याधारः[11]। [12]गन्धाधारः

---

1 A एताम चतुर:
2 I. O. वारिधामात्स्तथा for the bracketed portion
3 A वासनेति
4 A वासुदेवा एतां
5 A॰सुवर्णादीना only
6 I. O. परिचर्य्यार्थं
7 A मातां
8 I. O. देवोपदानसामग्री, A देवोपदानसामग्री माधारं दत्वा
9 I. O. माल्याधारो
10 A उत्क्षेख
11 I. O. omits द्रव्याधार:
12 I. O. गन्धाधारो

[1]सिध्म इति प्रसिद्धः । अर्चिताय वासुदेवायार्चितमभिमतद्रव्यविरचितं माल्याधारं दद्यात् । विष्णुधर्मोत्तरोक्तवासुदेवसम्प्रदानक-माल्याधारदानफलप्राप्तिकामोऽहं भगवते वासुदेवाय एतं माल्याधारं ददानि । दक्षिणा पूर्ववत् । धूपाधारगन्धाधारयोर्वाक्ये माल्याधारपदस्थाने धूपाधारपदस्य गन्धाधारपदस्य च निवेशो विशेषः ।

तथा ( ३।३४१।१२७ख-१२८क ) :—

समुद्रजाणि [2]पात्राणि दत्त्वा वै [3][तैजसानि च] ।
पात्रं भवति कामानां विद्यानाञ्च धनस्य च ॥२०॥

समुद्रजानि शुक्तिशङ्खपात्राणि तैजसानि [4]सुवर्णरजतादिनिर्मितानि । अर्चितानि शुक्तिशङ्खादीनामन्यतमानि पात्राणि दद्यात् । विष्णुधर्मोत्तरोक्त-वासुदेवसम्प्रदानक-[5]समुद्रजपात्र-[6]दानफलप्राप्तिकामोऽहं भगवते वासुदेवाय एतानि पात्राणि ददानि । दक्षिणा पूर्ववत् । [7]तैजसपात्रदानवाक्ये समुद्रजपदस्थाने तैजसपदनिवेशो विशेषः ।

[8]पतद्ग्रहप्रदानेन [9]सर्वपापं व्यपोहति ।

[10][पतद्ग्रहः पातग्रह] इति प्रसिद्धः । अर्चिताय वासुदेवायार्चितं[11] [12]पतद्ग्रहं दद्यात् । ॐ अद्य [13]सर्वपापक्षयकामोऽहं भगवते वासुदेवाय एतं [14]पतद्ग्रहं ददानि । दक्षिणा पूर्ववत् ।

तथा ( ३।३४१।७१क ) :—

दर्पणस्य प्रदानेन [15]बहुदर्पणवान् भवेत् ॥२१॥

अर्चिताय वासुदेवायार्चितं दर्पणं दद्यात् । [16]ॐ अद्यादि-[17]बहुदर्पणत्वप्राप्तिकामोऽहं भगवते वासुदेवायैतं दर्पणं ददानि । दक्षिणा पूर्ववत् ।

---

1 A सिध्व
2 I. O. द्रव्याणि
3 A तेजसानि च and I. O. तैजसानि च for the bracketed portion
4 I. O. सुवर्णरजतनिर्मितानि
5 A समुद्र for समुद्रज
6 A दान and I. O. फल for दानफल
7 I. O. तैजसपात्रदाने वाक्ये, A तैजसपात्रदानवाक्ये
8 I. O. पतद्ग्रह॰
9 I. O. सर्व्वं पापं
10 I. O. पतद्ग्रहः प्रतिग्रह for the bracketed portion
11 I. O. and A ॰र्चित
12 I. O. पतद्ग्रहं
13 A omits सर्व्व
14 I. O. पतद्ग्रहं and A एतत् पतद्ग्रहं for पतद्ग्रहं
15 A बहुदर्पणवा, I. O. and V. D. दर्पणात्मरूपवान्
16 A omits it
17 I. O. दर्पणत्वरूपवत्त्व for बहुदर्पणत्वं, A omits बहु

तथा ( ३।३४१।६६क ) :—

उशीरकूर्चकं[1] दत्त्वा सर्वपापैः प्रमुच्यते ।

उशीरकूर्चकं[2] देवाङ्गमलादिशोधनार्थं वीरणमूल-[3]कूर्चिकाम् [4][अर्चिताय वासुदेवायार्चितां वारणमूलकूर्चिकां[5]] दद्यात् । ॐ अद्य [6]सर्वपापविमुक्तिकामोऽहं भगवते वासुदेवायैताम् उशीर-[7]कूर्चिकां ददानि । दक्षिणा पूर्ववत् ।

दत्त्वा [8]गोबालकं विप्राः [9][सर्वान् तापान्] व्यपोहति ॥२२॥ ( ३।३४१।६६ख )

गोबालक-[10]प्रकरणात् [11]गोबालककृतकूर्चम् । अर्चिताय वासुदेवायार्चितं [12]गोबालकं दद्यात् । ॐ अद्य सर्व-[13]तापोपशमप्राप्तिकामोऽहं भगवते वासुदेवायैतं गोबालकं ददानि । दक्षिणा पूर्ववत् ।

तथा ( ३।३४१।६७क ) :—

दत्त्वा चामरजं कूर्चं श्रियमाप्नोत्यनुत्तमाम्[14] ॥२३॥

चामरजं चमरीमृगरोमभवम्[15] । अर्चिताय वासुदेवाय अर्चितं चमरीमृगरोमजं कूर्चं दद्यात् । ॐ अद्यानुत्तमश्रीप्राप्तिकामोऽहं भगवते वासुदेवायैतच्चामरं कूर्चं ददानि । दक्षिणा पूर्ववत् ।

तथा ( ३।३४१।६७ख—६८क ) :—

आसनानां प्रदानेन [16][स्थानं सर्वत्र विन्दति ।
पादपीठप्रदानेन] तथैव च नरोत्तमाः ॥२४॥

नरोत्तमा इति सम्बोधनम् । अर्चिताय वासुदेवायार्चितं[17] यथाशक्त्युपात्तमासनत्रयं दद्यात् । ॐ अद्य विष्णुधर्मोत्तरोक्त-विष्णुसम्प्रदानकामनदानफलप्राप्तिकामोऽहं भगवते

---

1 A ०कुर्चकं, I. O. ०कूर्चकं
2 A ०कुर्चकं, I. O. कूर्चकं
3 I. O. ०कुञ्चिकां
4 A omits the bracketed portion
5 I. O. ०कुञ्चिकां
6 I. O. सर्व्वमुक्तिकामोऽहं
7 I. O. ०कूर्चकं
8 V. D. गोपालकान
9 A सर्व्वतापान, I. O. सर्व्वान् पापान् and V. D. सर्व्वपापान् for the bracketed portion
10 I. O. ०प्रकारणात्
11 I. O. गोबालकृतं कूर्चम
12 I. O. गोबालकूर्चकं
13 A ०तापोपमप्राप्तिकामोऽहं
14 A ०त्तमं
15 A ०रोमजं
16 A omits the bracketed portion
17 A वासुदेवाय only

वासुदेवायैतान्यासनानि ददानि । दक्षिणा पूर्ववत् । पादपीठप्रदाने तु वाक्ये आसनपदस्थाने पादपीठपदनिवेशो विशेषः ।

तथा ( ३।३४१।८५ख ) :—

शयनासनदानेन स्थितिं विन्दति शाश्वतीम् ।

अर्चिताय वासुदेवाय यथाशक्ति[1][खट्वादिरूपां शय्यामासनसहितामर्चितां] दद्यात् । ॐ अद्य[2] विष्णुधर्मोत्तरोक्त-वासुदेवसम्प्रदानक-शयनासनदानफलप्राप्तिकामोऽहं भगवते वासुदेवायैतच्छयनासनं ददानि । दक्षिणा पूर्ववत् ।

[3][तथा (३।३४१।८६क) :—

उत्तरच्छददानेन सर्वान् कामानवाप्नुयात् ॥२४॥

उत्तरच्छदः शय्याया आच्छादनवस्त्रम् । अर्चिताय वासुदेवायार्चितमुत्तरच्छदम् ॐ अद्यामुकप्राप्तिकामोऽहं भगवते वासुदेवाय एतमुत्तरच्छदं ददानि । दक्षिणा पूर्ववत् ।]

तथा (३।३४१।१८१) : —

नीलीरक्तं विना रक्तं शेषरक्तैर्द्विजोत्तमाः ।

दत्त्वा भवति धर्मात्मा सर्वव्याधि-[4]विवर्जितः ॥२६॥

अर्चिताय वासुदेवाय [5]नीलीरागव्यतिरिक्त-यथेच्छरागद्रव्यरञ्जितं वस्त्रमर्चितं दद्यात् । [6]ॐ अद्य सर्वव्याधिविवर्जितत्वप्राप्तिकामोऽहं भगवते वासुदेवाय [7]एतद्रक्तं[8][वस्त्रं ददानि दक्षिणा पूर्ववत् ।

तथा ( ३।३४१।१८२क) :—

दुकूलकप्रदानेन वह्निष्टोमफलं लभेत् ॥२७॥

अर्चिताय वासुदेवाय दुकूलवस्त्रं दद्यात् । ॐ अद्याग्निष्टोमफलप्राप्तिकामोऽहं भगवते। वासुदेवाय एतद्]-दुकूलवस्त्रं ददानि । दक्षिणा पूर्ववत् ।

---

1 A खट्वादिरूपं शय्यासनमर्चितं for the bracketed portion

2 I. O. omits it

3 A omits the bracketed portion

4 I. O. ०विवर्जितः

5 I. O. नीलीव्यतिरिक्तरागद्रव्यव्यतिरिक्त०

6 A omits it

7 I. O. एतद् only

8 A omits the bracketed portion

तथा ( ३।३४१।१८२ख-१८३क ) :—

कौशेयानि च वस्त्राणि सुमृदूनि[1] लघूनि च ।
यः प्रयच्छति देवाय सोऽश्वमेधफलं लभेत् ॥२८॥

कौशेयानि [2]कोशकारकृमितन्तुमयानि । अर्चिताय वासुदेवायार्चितानि कौशेयवस्त्राणि उत्कृष्टरूपाणि दद्यात् । ॐ अद्याश्वमेधफलप्राप्तिकामोऽहं भगवते वासुदेवायैतानि कौशेयवस्त्राणि ददानि । दक्षिणा पूर्ववत् ।

तथा ( ३।३४१।१८३ख-१८४क ) :—

सलोमानि च वस्त्राणि यः प्रयच्छति धर्मवित् ।
कृतानि [3]वरवर्णानि [4]सोऽश्वमेधफलं लभेत् ॥२९॥

सलोमानि [5]तूलपटीरूपाणि वरवर्णानि×× । अर्चिताय वासुदेवायार्चिताः शोभनवर्णास्तूलपटीर्दद्यात् । ॐ अद्याश्वमेधफलप्राप्तिकामोऽहं भगवते वासुदेवायैतानि वस्त्राणि ददानि । दक्षिणा पूर्ववत् ।

तथा ( Cf. ३।३४१।१८५ख-१८६क ) :—

[6][नानाभक्तिविचित्राणि सूच्यादिनिर्मितानि च ।
[7]वीरजानि [8]सुसूत्राणि राजसूयफलं लभेत् ॥३०॥ ]

[9][नानाभक्ति[10]-विचित्राणि सूच्यादिनिर्मितानि[11] सूच्यादिकर्मणा निर्मितानि वीरजानि वल्कलजानि [12]सुसूत्राणि] [दत्त्वेति शेषः][13] । ब्राह्मणवासोदानप्रकरणे त्रयाणामेषां पृथक्त्वेन दानश्रुतेर्नात्रापि[14] [स्वतः ब्राह्मणाय][15] दानम् । अर्चिताय वासुदेवायार्चितानि नवानि विचित्रवस्त्राणि दद्यात् । ॐ[16] अद्य राजसूयफलप्राप्तिकामोऽहं भगवते वासुदेवायैतानि वासांसि ददानि । दक्षिणा पूर्ववत् । एवं [17]वीरज-[18]सुसूत्रयोरपि दानवाक्यम् ।

---

1 A मृदूनि च
2 I. O. कोषकार०
3 A ववर्णानि
4 A सोधमेधफलं
5 A दुकूलपाटीरूपाणि
6 I. O. omits the bracketed portion
7 A वीजानि
8 A सुशुभाणि
9 A omits the bracketed portion
10 I. O. नानाभक्ति०
11 I. O. omits it
12 I. O. omits it
13 I. O. omits the b. p.
14 I. O. ०श्रुतेर्नात्रापि
15 I. O. reads the bracketed portion as सुतब्राह्मणमेव
16 A omits it
17 I. O. वाज
18 A ससूत्रयोरपि, I. O. सुभुत्रयोरपि

तथा ( ३।३४१।२००ख-२०१क ) :—

अनुक्तान्यापि विप्रेन्द्रा[1] वासांस्याभरणानि च ।

[2]दत्त्वैवं देवदेवाय वह्निष्टोमफलं लभेत् ॥३१॥

अनुक्तवस्त्राण्युक्त-[3][विपरीतानि नानाजातीयानि] धर्मनेत्रादीनि । अनुक्ताभरणानि हारादीनि । अर्चिताय [4]वासुदेवायार्चितं [5]धर्मादीनामन्यतमं वस्त्रं दद्यात् । [6]ॐ अद्याग्निष्टोमफलप्राप्तिकामोऽहं भगवते वासुदेवाय [7]एतदमुकवस्त्रं ददानि । दक्षिणा पूर्ववत् । आभरणदाने[8] एतदमुकाभरणमिति वाक्ये विशेषः ।

तथा ( ३।३४१।१८७ख, Cf. ३।३११।१०क ) :—

यज्ञोपवीतदानेन [9]ब्रह्मदानफलं लभेत् ।

अर्चिताय वासुदेवायार्चितं यज्ञोपवीतं दद्यात् । ॐ अद्य ब्रह्मदानफलप्राप्तिकामोऽहं भगवते वासुदेवाय एतद्यज्ञोपवीतं ददानि । दक्षिणा पूर्ववत् ।

तथा ( ३।३४१।१८८ख ) :—

दत्त्वा प्रतिसरान् मुख्यान् भूतैरभि-[10]भूयते ॥३२॥

प्रतिसरः [11]पट्टादि-विरचितं सूत्रम् । मुख्यत्वञ्च [12]तस्योत्कृष्टत्वम् । अर्चिताय वासुदेवायार्चितं नानावर्णकादि-[13]विचित्रितम् [14]प्रशस्तं प्रतिसरं दद्यात् । ॐ अद्य विष्णुधर्मोत्तरोक्त-प्रतिसरदानफलप्राप्तिकामोऽहं भगवते वासुदेवायैतं [15]प्रतिसरं ददानि । दक्षिणा पूर्ववत् ।

तथा ( ३।३४१।१४ख ) :—

रूप्यदो रूपमाप्नोति विशेषाद्भुवि दुर्लभम् ॥३३॥

अर्चिताय वासुदेवायार्चितं यथेच्छपरिमाणं रजतं दद्यात् । ॐ [16]अद्य दुर्लभरूप-

---

1 A विप्रेन्द्र

2 I. O. and A दत्त्वैवं

3 I. O. विपरीतजातीयानि for the bracketed portion

4 A omits वासु

5 I. O. धर्मादीनामन्यतमं

6 A omits it

7 A एतदमुकवस्त्रं

8 A adds वस्त्र after this

9 A ब्राह्मण for ब्रह्म

10 I. O. ॰दुयते

11 I. O. पट्टादि॰

12 I. O. भाग्योत्कृष्टत्वं

13 A ॰चित्रचित्रं

14 A omits it

15 I. O. प्रतिसरं

16 I. O. अद्योक्त

प्राप्तिकामोऽहं भगवते वासुदेवायैतद्रुप्यं ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।७५क):—

नरः सुवर्णदानेन सर्वान् कामानुपाश्नुते।

अर्चिताय वासुदेवायार्चितं [1]यथेच्छपरिमाणं सुवर्णं दद्यात्। [2]ॐ अद्यामुकप्राप्तिकामोऽहं भगवते वासुदेवायैतत् सुवर्णं ददानि। दक्षिणा पूर्ववत्।

[3]तथा (Cf. ३।३४१।७५ख):—

[4][रत्नं दत्त्वा च] लोकेषु प्रामाण्यमुपगच्छति ॥३४॥

प्रामाण्यं [5]सर्वार्चिततत्वम्। [6]अर्चिताय वासुदेवाय परिभाषोक्तरत्नानामन्यतममर्चितं रत्नं दद्यात्। [7]ॐ अद्य [8]लोकप्रामाण्यप्राप्तिकामोऽहं भगवते वासुदेवाय एतद्रत्नं ददानि। दक्षिणा पूर्ववत्।

[9][तथा (३।३४१।१९९ख-२००क):—

मुकुटस्य] प्रदानेन [10]मूर्द्धन्यो भूतले भवेत्।

चतुःसमुद्रवलयां [11]प्रशास्ति च वसुन्धराम् ॥३५॥

मूर्द्धन्यः सर्वमान्यः। अर्चिताय वासुदेवाय यथाशक्तिघटितमर्चितं मुकुटं दद्यात्। [12]ॐ अद्य मूर्द्धन्यतासहित-सकलवसुन्धराधिपत्यप्राप्तिकामोऽहं भगवते वासुदेवायैतन्मुकुटं ददानि। दक्षिणा पूर्ववत्।

[13][तथा (३।३४१।१९९क):—

मूर्द्धाभरणदानेन राजसूयफलं लभेत्।

मूर्द्धाभरणं किरीटादि। अर्चिताय वासुदेवायर्चितं मूर्द्धाभरणं दद्यात्। ॐ अद्य राजसूयफलप्राप्तिकामोऽहं भगवते वासुदेवाय एतं मूर्द्धाभरणं ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।१८८क):—

कर्णपूरप्रदानेन श्रुतिं विन्दति सर्वतः ॥३६॥

---

1 A यथे for यथेच्छ
2 A omits it
3 A omits it
4 A रत्नं दत्वा सु and I. O. रत्नदानेन for the bracketed portion
5 A सर्वाचितं, I. O. सर्वाचितवररत्नं
6 A अर्चितं
7 Both I. O. and A omit it
8 A लोके
9 A reads the bracketed portion as मुकुटस्य
10 I. O. मूर्द्धन्या
11 A प्रशस्ति, I. O. प्रशस्ति
12 A omits it
13 A omits the bracketed portion

[1]श्रुतिं सर्वशास्त्रश्रवणम्। अर्चिताय वासुदेवायार्चितं कर्णपूरं दद्यात्। ॐ अद्य [2][सर्वशास्त्रश्रवण]-फलप्राप्तिकामोऽहं भगवते वासुदेवा-[3]यैतं कर्णपूरं ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।१६८):—

कर्णाभरणदानेन भवेच्छ्रुतिधरो नरः[4]।

अश्वमेधमवाप्नोति सौभाग्यञ्चैव विन्दति ॥३७॥

अर्चिताय वासुदेयार्चितं कर्णाभरणं दद्यात्। [5]ॐ विष्णुधर्मोत्तरोक्त-वासुदेवसम्प्रदानक-कर्णाभरणदानफलप्राप्तिकामोऽहं भगवते वासुदेवाय एतत कर्णाभरणं ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।१६६ख-१६७):—

ग्रैवेयकाणि दत्त्वा च सर्वशास्त्रार्थविद् भवेत्।

नार्य्यश्च वशगास्तस्य भवन्ति द्विजपुङ्गवाः।

श्रियमाप्नोति [6]परमां [7]राजसूयञ्च विन्दति ॥३८॥

ग्रैवेयकं कण्ठाभरणम्। अर्चिताय वासुदेवाय [8][कण्ठाभरणान्यर्चितानि दद्यात्]। ॐ अद्य विष्णुधर्मोत्तरोक्त-वासुदेव सम्प्रदानक-[9][ग्रैवेयकदानफलप्राप्तिकामोऽहं भगवते वासुदेवायैतानि] ग्रैवेयकाणि ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।१६६क):—

[10]केयूरदानाद्भवति शत्रुपक्षजयङ्करः[11] ॥३९॥

अर्चिताय वासुदेवायार्चितं यथाशक्तिनिर्मितं केयूरं दद्यात्। ॐ अद्य भगवते वासुदेवाय शत्रुपक्ष-[12]जयङ्करत्वप्राप्तिकामोऽहम् एतत केयूरं ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।१६५क):—

हस्ताङ्गुलीय-[13]दानेन [14]परं सौभाग्यमाप्नुयात्।

1 I. O. श्रुति
2 I. O. श्रुतिसर्व्वशास्त्रश्रवण and A राजसूय for the bracketed portion
3 A ०यैतत्
4 A भवेत
5 A omits it
6 A विपुलं
7 A वाजपेयञ्च
8 A reads the bracketed portion as कण्ठाभरणं ददानि
9 I. O. omits the bracketed portion
10 A केयूरदानाद्भवति
11 A ०जयङ्करः
12 A ०जयकामत्व०
13 A दान for दानेन
14 I. O. मर्म्म

हस्ताङ्गुलीयं हस्ताङ्गुलि-[1]परिधानयोग्यमङ्गुरिका-[2]दि। अर्चितामङ्गुरीं [3]दद्यात्। ॐ अद्य परमसौभाग्यप्राप्तिकामोऽहं भगवते वासुदेवायैतद्धस्ताङ्गुरीयकं ददानि। दक्षिणा पूर्ववत्।

तथैवाङ्गददानेन राजा भवति भूतले ॥४०॥ (३।३४१।१६५ख)

अर्चिताय वासुदेवायार्चितमङ्गदं [4]दद्यात्। ॐ[5] अद्य भूतलराज्यप्राप्तिकामोऽहं भगवते वासुदेवायैतदङ्गदं ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।१६४):—

श्रोणीसूत्रप्रदानेन महीं सागरमेखलाम्।
प्रशास्ति निहतामित्रो नात्र कार्य्या विचारणा ॥४१॥

श्रोणीसूत्रं काञ्चीदाम। अर्चिताय वासुदेवायार्चितं श्रोणीसूत्रं दद्यात्। [6]ॐ [7]अद्यामित्रहनन-[8][पूर्वक-सागरपर्य्यन्तमहीशासन]-प्राप्तिकामोऽहं भगवते वासुदेवाय इदं श्रोणीसूत्रं ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।१६३ख):—

पादाभरणदानेन महीं सर्वत्र विन्दति।

पादाभरणं नूपुरम्। अर्चिताय वासुदेवाय यथाशक्ति नूपुरमर्चितं दद्यात्। ॐ अद्य विष्णुधर्मोत्तरोक्त-नूपुरदानफलप्राप्तिकामोऽहं भगवते वासुदेवाय एतदाभरणं ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।१६३क):—

पादाङ्गुरीयदानेन गुह्यका-[9]धिपतिर्भवेत् ॥४२॥

[10][पादाङ्गुरीयं विष्णुधर्मोत्तरोक्त]-चरणाङ्गुलिनिधानयोग्या-[11]ङ्गुरिकाम्। अर्चिताय वासुदेवायार्चितं पादाङ्गुरीयं दद्यात्। [12]ॐ अद्य [13]गुह्यकाधिपतित्वप्राप्तिकामोऽहं भगवते वासुदेवाय एतत् पादाङ्गुरीयं ददानि। दक्षिणा पूर्ववत्।

---

1 I. O. ०याविधान० for परिधान
2 A ०मुद्रिकादि
3 A ददामि
4 A ददामि
5 A omits it
6 A omits it
7 A अद्य अमित्रहनन, I. O. अद्यामित्रहनन
8 A reads the bracketed portion as सागरपर्यन्तं महीसागर
9 Both I. O. and A ०द्विपतिर्भवेत्
10 A omits the bracketed portion
11 A ०ङ्गुरिका
12 A omits it
13 A गुह्यकाद्विपतित्व०

तथा ( ३।३४१।१२४ ) :—

उपानत्संप्रदानेन विमानमधिरोहति ।

यथेष्टं तेन लोकेषु विचरत्यमरप्रभः[1] ॥४३॥

अर्चिताय वासुदेवायार्चित-[2]मुपानद्‌युगं चर्ममयं तूलमयं वा [3]दद्यात् । [4]ॐ विष्णु-धर्मोत्तरोक्त-वासुदेवसम्प्रदानकोपानद्दानफलप्राप्तिकामोऽहं भगवते वासुदेवायैतदुपानद्‌युगं ददानि । दक्षिणा पूर्ववत् ।

तथा ( ३।३४१।६८ख ) :—

गोदानफल-[5]माप्नोति तथा पाद्यप्रदो नरः ॥४४॥

पाद्यं पादप्रक्षालनार्थं जलम् । अर्चिताय वासुदेवायार्चितं पाद्यं दद्यात् । ॐ अद्य गोदानफलप्राप्तिकामोऽहं भगवते वासुदेवाय [6]एतत् पाद्यं ददानि । [7][दक्षिणा पूर्ववत् । ]

तथा ( ३।३४१।७०क ) :—

नरस्त्वाचमनीयस्य दाता भवति निर्मलः ।

अर्चिताय वासुदेवायार्चितमाचमनार्थं वारि दद्यात् । ॐ अद्य निर्मलत्वप्राप्ति-कामोऽहं भगवते वासुदेवाय एतदाचमनीयं ददानि । दक्षिणा पूर्ववत् ।

तथा ( Cf. ३।३४१।७०ख ) :—

सुखलेपप्रदानेन परं रूपमवाप्नुयात् ॥४५॥

सुखलेपः [8]सुखहेतुः [9]शीते कुङ्कुमलेपः ग्रीष्मे चन्दनलेपः । अर्चिताय वासुदेवायार्चितं सुगन्धिमनु-[10]लेपं दद्यात् । ॐ अद्योत्कृष्टरूपप्राप्तिकामोऽहं भगवते वासुदेवाय [11][एतं सुखलेपं] ददानि । दक्षिणा पूर्ववत् ।

[12]तथा ( ३।३४१।१३१ ) :—

गन्धतैलानि दिव्यानि सुगन्धानि शुचीनि च ।

केशवाय नरो दत्त्वा गन्धर्वैः सह मोदते ॥४६॥

---

1 A ०प्रभुः

2 उपानद्युगं

3 A दक्षिणा पूर्ववत् । तथा उपानद्‌-प्रदानेन । for दद्यात्

4 I. O. omits it

5 A प्राप्नोति for माप्नोति

6 A एतद्दानं

7 A omits the bracketed portion

8 A सुखार्थेतुः

9 A शीत

10 A ०लेपनं

11 A एतत् सुखलेपनं for the bracketed portion

12 A omits it

दिव्यान्युत्कृष्टानि शुचीनि अपनीतकेशादीनि। अर्चिताय [1]वासुदेवाय उत्कृष्टं सुगन्धि-[2]तिलस्थानकत्रयमर्चितं दद्यात्। ॐ अद्य भगवते वासुदेवाय विष्णुधर्मोत्तरोक्त-सुगन्धितैलदानफलप्राप्तिकामोऽहम् एतानि [3]गन्धतैलादीनि ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।१२१ख-१२२क) :—

राजा भवति लोकेऽस्मिन् छत्रं दत्त्वा द्विजोत्तमाः।
नाप्नोति [4]रिपुजं दुःखं संग्रामे [5]रिपुजिद्भवेत् ॥४७॥

द्विजोत्तमा इति सम्बोधनम्। अर्चिताय वासुदेवायार्चितं छत्रं दद्यात्। ॐ अद्य विष्णुधर्मोत्तरोक्त-[6]वासुदेवसम्प्रदानक-छत्रदानफलप्राप्तिकामोऽहं भगवते [7]वासुदेवायैतच्छत्रं ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।१२३) :—

तथा चामरदानेन श्रीमान् भवति भूतले।
मुच्यते च तथा पापैः स्वर्गलोकञ्च गच्छति ॥४८॥

अर्चिताय वासुदेवायार्चितं चामरं दद्यात्। ॐ अद्य विष्णुधर्मोत्तरोक्त-वासुदेवसम्प्रदानकचामरदानफलप्राप्तिकामोऽहं भगवते वासुदेवायैतच्चामरं ददानि। दक्षिणा पूर्ववत्।

लोकेषु ध्वजभूतः स्याद् विष्णोर्दत्त्वा तथा ध्वजम्।
शक्रलोकमवाप्नोति बहुवर्षगणान्नरः ॥४९॥ (३।३४१।६६)

ध्वजश्चामरदर्पणपताकाद्यन्वित उच्छ्रितो दण्डः चित्रदण्ड[8] इति प्रसिद्धः। अर्चिताय वासुदेवायार्चितं यथाशक्ति ध्वजमुपकल्पितं दद्यात्। अद्य प्रचुराब्दगणावच्छिन्नशक्र-लोकप्राप्तिकामोऽहं भगवते वासुदेवाय एतं[9] ध्वजं ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।५७-५६) :—

पताकाञ्च शुभां[10] दत्त्वा तथा केशववेश्मनि।
वायुलोकमवाप्नोति [11]बहून्यब्दशतानि च ॥५०॥

---

1 A omits it
2 A तिलकत्र for तिलस्थानक
3 A गन्धतैलानि
4 A विप्रजं
5 A विप्रजिद्
6 I. O. omits वासुदेव
7 I. O. वासुदेवाय एतच्चात्रन्तं
8 A omits it
9 A एत
10 A शुभं, I. O. शुभाम्
11 I. O. बहून्यब्दगणानि च, A बहून्य-ब्दशतानि तु

दोधूयते [1]यथा सा च वायुना केशवालये ।
[2]तथास्य [3][सकलं देहात्] पापं विधूयते [4]सदा ॥५१॥
[5]यथा यथा च सा शोभां करोति [6]त्रिदशालये ।
तथा तथा स [7][यशसा महता भुवि राजते] ।५२॥

अर्चिताय वासुदेवाय यथाशक्ति नेत्रादिविचित्रा-[8][मर्चितां पताकां] दद्यात् । ॐ अद्य विष्णुधर्मोत्तरोक्तपताकादानफलप्राप्तिकामोऽहं भगवते वासुदेवाय एतां पताकां ददानि । दक्षिणा पूर्ववत् । ततो देवालयोपरि पताकामारोपयेत् ।

तथा (३।३४१।५६) :—

पताकां ये प्रयच्छन्ति [9]कूटागारे मनोहराम् ।
सन्त्यज्य सकलं पापं वायुलोकं व्रजन्ति ते ॥५३॥

कूटागारं [10]मञ्चगृहम् । [11]अर्चितवासुदेवायतना-[12][ग्रे स्वगायतुन्नतां] मञ्चगृहे स्थापयितुं यथाशक्ति [13]स्वरूपामर्चितां पताकां दद्यात् । [14]ॐ अद्य भगवते [15]वासुदेवाय सकलपापत्याग[16]-पूर्वकवायुलोकप्राप्तिकामोऽहमेतां पताकां [17]ददामि । दक्षिणा [18]पूर्ववत् । ततस्तां कूटागारोपरि दद्यात् ।

[19]युक्तं पीतपताकाभिर्निवेद्य गरुडध्वजम् ।
केशवाय द्विजश्रेष्ठाः शक्रलोके महीयते ॥५४॥ (३।३४१।८०ख-८१क)

---

1 A तथा
2 I. O. तथान्य
3 A सकलाद्देहा for the b. p.
4 Both I. O. and A सदा
5 I. O. omits it
6 I. O. त्रिशालये
7 A देहस्य नि:पापो भुवि जायते for the bracketed portion
8 A मर्चितं पताकं for the bracketed portion
9 I. O. देवागारे
10 A मञ्चगेहं
11 Both I. O. and A अर्चिताय
12 I. O. reads the bracketed portion as यात्प्रेचयात् यतुन्नता
13 A स्वरूपमर्चितं
14 A omits it
15 I. O वासुदेवा
16 A ॰त्याग॰
17 A omits it
18 I. O. पूर्व
19 A युक्त

अर्चिताय वासुदेवाय यथाशक्तिविरचितगरुडयुक्त[1] विस्तीर्णपीतपताकात्रयान्वितमर्चितं ध्वजं[2] प्राङ्गणस्थं दद्यात्। ॐ अद्य सोत्कर्षशक्रलोकप्राप्तिकामोऽहं भगवते वासुदेवाय एतं पीतपताकायुक्तं गरुडध्वजं ददानि। दक्षिणा पूर्ववत्।

[3]तथा (३।३४१।८१ख-८२क):—

युक्तं नीलपताकाभिस्तालं[4] दत्त्वा द्विजोत्तमाः।
[5]याम्याल्लोकात् परिभ्रष्टो विरोग-[6]स्त्वभिजायते ॥५५॥

द्विजोत्तमा इति सम्बोधनम्। अर्चिताय वासुदेवाय [7]तदग्रप्राङ्गणे यथाशक्तिविरचितं तालवृक्षाकारं [8][विस्तीर्णं नीलपताका]-त्रयमर्चितं दद्यात्। ॐ अद्य विष्णुधर्मोत्तरोक्ततालध्वजदानफलप्राप्तिकामोऽहं भगवते वासुदेवायैतं नीलपताकायुक्तं तालं ददानि। दक्षिणा पूर्ववत्।

[9]तथा (३।३४१।८२ख-८३क):—

[10]युक्तं श्वेतपताकाभिर्मकरं यः प्रयच्छति।
राजा भवति लोकेऽस्मिन् भुक्त्वा लोकान् प्रचेतसः ॥५६॥

[11]ध्वजप्रकरणान्मकरयुक्तं ध्वजम्। अर्चिताय [12][वासुदेवाय तदग्रप्राङ्गणे] यथाशक्तिविरचितं [13]विस्तीर्णश्वेतपताकात्रयान्वितं मकरयुक्तं ध्वजमर्चितं दद्यात्। ॐ अद्य विष्णुधर्मोत्तरोक्तमकरदानफलप्राप्तिकामोऽहं भगवते वासुदेवायैतं[14] श्वेतपताकायुक्तं मकरं ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।८३ख-८४क):—

युक्तं [15]रक्तपताकाभिर्दत्त्वा [16]आढ्यमनुत्तमम्।
अलकां समवाप्नोति [17]तथा पापक्षयान्नरः ॥५७॥

---

1 A ०ध्वजं for ०युक्तं
2 A omits it
3 A यथा
4 A ०ध्यानं for ०तालं
5 A याम्य
6 A ०स्त्वतिजातियते
7 I. O. देवायप्राङ्गणे, A प्राङ्गने
8 I. O. reads the bracketed portion as विस्तीर्णनीलपताक
9 A यथा
10 I O. युक्त
11 A मकरं and I. O. मकरयां for ध्वज
12 I. O. वासुदेवाय तवाग्राङ्गणे and A वासुदेवायातनाय प्राङ्गने for the bracketed portion
13 A विस्तीर्णं श्वेतपताकात्रयान्वितं and I. O. विस्तीर्णाश्वेतपताकात्रयान्वितं
14 A वासुदेवायैतत्
15 A omits रक्त
16 I. O. श्रत्स० and A सत्स० for श्राढ्य०
17 A यथा

[1]श्रघ्यो हरिणः। अर्चिताय वासुदेवाय [2]तदग्राङ्गणे यथाशक्तिविरचितं[3] हरिणयुक्त-ध्वजं[4] रक्तपताकात्रयान्वितमर्चितं दद्यात्। ॐ अद्य विष्णुधर्मोत्तरोक्त-[5]अर्घ्यदानफलप्राप्ति-कामोऽहं भगवते [6]वासुदेवाय [7]अर्घ्ययुक्त-पताकायुक्त-[8]ध्वजं ददानि। दक्षिणा पूर्ववत्।

[9]तथा (३।३४१।११७क):—

शिविकां ये प्रयच्छन्ति ते प्रयान्त्यमरावतीम्।

शिविका चतुर्दोला। अर्चिताय वासुदेवायार्चितां[10] शिविकां दद्यात्। ॐ अद्या-मरावतीप्राप्तिकामोऽहं भगवते [11]वासुदेवायैतां शिविकां ददानि। दक्षिणा पूर्ववत्।

अश्वदाः सूर्य्यलोकस्था राजन्ते दिवि सूर्य्यवत् ॥५८॥ (३।३४१।११७ख)

अर्चिताय वासुदेवायार्चितमश्वं दद्यात्। विष्णुधर्मोत्तरोक्त-वासुदेवसम्प्रदानकाश्व-दान-[12]फलप्राप्तिकामोऽहं भगवते वासुदेवायैतमश्वं ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।११८):—

करीन्द्रदाना-[13]च्छकस्य तथा [14]लोकाच्च्युतो नरः।

राजा भवति धर्मात्मा पृथिव्यां पृथिवीपतिः ॥५६॥

अर्चिताय वासुदेवायार्चितं गजं दद्यात्। ॐ विष्णुधर्मोत्तरोक्त-वासुदेवसम्प्रदानक करीन्द्रदानफलप्राप्तिकामोऽहं भगवते वासुदेवाय एतं करीन्द्रं ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।७६क):—

गवां लोकमवाप्नोति धेनुं दत्त्वा [15]पयस्विनीम् ॥६०॥

अर्चिताय वासुदेवाया[16]-र्चितां बहुक्षीरां धेनुं दद्यात्। ॐ अद्य गोलोकप्राप्तिकामोऽहं भगवते वासुदेवाय एतां धेनुं ददानि। दक्षिणा पूर्ववत्।

तथा:—

दधिक्षीरघृतार्थाय वासुदेवाय पूर्ववत्।

दत्त्वा गां मधुपर्काय [17]महत्फलमवाप्नुयात् ॥६१॥

---

1 A सक्तो
2 A ध्वजप्राङ्गणे
3 I. O. विरचित
4 A ०ध्वज
5 A ०सरस्यदान०
6 A वासुकाय
7 A मत्स्ययुक्ताय
8 I. O. मध्यं for ध्वजं
9 A यथा
10 A वासुदेवायार्चितं
11 A एतां
12 A omits फल
13 A ०चक्रस्य
14 I. O. लोकाच्युतो
15 I. O. यशस्विनीं
16 A वासुदेवाय
17 A महाफल०

[1]मधुपर्कायेति मधुपर्कदानार्थमर्चिताय वासुदेवायार्चितां बहुदुग्धां गां दद्यात्। [2][(ॐ अद्य महाफलप्राप्तिकामोऽहं भगवते वासुदेवायार्चितां धेनुं ददानि)[3]। दक्षिणा पूर्ववत्।

तथा ( Cf. ३।३४१।७६ख ) :—

अनड्वाहं तथा दत्त्वा दशधेनुफलं लभेत्।

भगवते वासुदेवायार्चितमनड्वाहं दद्यात्। [4](ॐ अद्य दशधेनुदानफलप्राप्तिकामोऽहं भगवते वासुदेवायैतमनड्वाहं ददानि।) दक्षिणा पूर्ववत्।

तथा :—

वृषदो वासुदेवाय त्वपवर्गमवाप्नुयात् ॥६२॥

भगवते वासुदेवायार्चितं वृषं दद्यात्। [5](ॐ अद्यापवर्गप्राप्तिकामोऽहं भगवते वासुदेवायैतं वृषं ददानि।)] दक्षिणा पूर्ववत्।

तथा ( ३।३४१।७७ ) :—

अजाविमहिषोष्ट्राणां दानमश्वतरस्य च।
सहस्रगुणितं दानं पूर्वप्रोक्तं प्रकीर्त्तितम् ॥६३॥

अत्र पूर्वप्रोक्तं सहस्रगुणितमिति विष्णुधर्मोत्तरीयब्राह्मणसम्प्रदानकाजाविदानेषु यत् फलं तदेव विष्णुसम्प्रदानक-[6]तत्तदुक्तपशुदाने सहस्रगुणितं भवतीति बोद्धव्यम्।

तद्यथा ( Cf. ३।३०६।६१ख-६२क ) :—

वारुणं लोकमाप्नोति दत्त्वा [7]वस्तं नरोत्तमः।
[8]अविप्रदानेन तथा [एवं लोकं समश्नुते][9] ॥६४॥

[10]वस्तश्छागः।

---

1 A मधुपर्कायेति, I. O. adds देयार्थेति after this

2 I. O. reads the following only for the bracketed portion:—ॐ अद्यापवर्गप्राप्तिकामोऽहं भगवते वासुदेवायार्चितं वृषं दद्यात्। ॐ अद्य...ददानि (the bracketed portion with the numeral 4)

3 A omits the bracketed portion here but reads it without ॐ below in lieu of the bracketed portion with the numeral 4

4 A omits the bracketed portion here but reads it without फल below in lieu of the bracketed portion with the numeral 5

5 A omits the bracketed portion

6 A तदुक्त०

7 Both I. O and A वस्त्रं

8 A अविप्रदानेन

9 A reads the bracketed portion as तमेव लोकमाप्नुयात्

10 A omits it

तथा ( ३।३०६।६१क ) :—

महिषस्य प्रदानेन याम्यलोके महीयते ॥६५॥

तथा ( ३।३१२।५ख-६क ) :—

उष्ट्रं वा [1][गर्दभं वापि] खरं वा [2]यः प्रयच्छति ।

अलकायां समासाद्य यक्षेन्द्रैः सह मोदते ॥६६॥

खरोऽश्वतरः । अर्चिताय वासुदेवायार्चितं छागं दद्यात् । ॐ अद्य विष्णुधर्मोत्तरोक्त-वासुदेवसम्प्रदानकाजदानफलप्राप्तिकामोऽहं भगवते वासुदेवाय एतमजं ददानि । दक्षिणा पूर्ववत् । [3]अश्व्यादिदानवाक्ये अजपदस्थाने तत्तत्पदनिवेशो विशेषः ।

तथा ( ३।३४१।७८ ) :—

आरण्यमृगजातीनां तथा [4][दानाच्च पक्षिणाम्] ।

अग्निष्टोममवाप्नोति सुभगश्च तथा भवेत् ॥६७॥

अर्चिताय वासुदेवाय हरिणशूकर-[5][शशकादीन् यथेच्छं] दद्यात् । [6]ॐ [7]अद्य विष्णुधर्मोत्तरोक्त-वासुदेवसम्प्रदानकारण्यमृगदानफलप्राप्तिकामोऽहं भगवते वासुदेवाय एतानारण्यमृगान् ददानि[8] । दक्षिणा पूर्ववत् । [9]पक्षिदानवाक्ये आरण्य-[10]मृगपदस्थाने पक्षिपदनिवेशो विशेषः ।

तथा ( ३।३४१।११६ ) :—

दासं दत्त्वा [11]सुखी लोके नाकभ्रष्टो हि जायते ।

दासीं दत्त्वा तथा [12]विप्रा नात्र कार्य्या विचारणा ॥६८॥

अर्चितं [13]दासं दद्यात् । ॐ [14]अद्य विष्णुधर्मोत्तरोक्तवासुदेवसम्प्रदानकदासदान[15]-फलप्राप्तिकामोऽहं भगवते वासुदेवाय दासं [16]ददानि । दक्षिणा पूर्ववत् । दासीदाने तु वाक्ये दासपदस्थाने दासीपदनिवेशो विशेषः ।

---

1 A गर्द्दभमथापि for the bracketed portion
2 A य
3 I. O. अश्वादिदाने वाक्ये
4 A देवाश्च पक्षिणां and I. O. दानात्तु पक्षिणा
5 A reads the bracketed portion as शशकादीना यक्षेयेच्छं
6 A omits it
7 Both I.O. and A अद्यादि for अद्य
8 A ददाति
9 I. O. पक्षिदाने वाक्ये
10 I. O. omits मृग
11 I. O. सुखे
12 A विप्रानात्र
13 A दासं
14 A अद्यादि
15 I. O. omits दास
16 A दद्यात्

तथा ( ३।३४१।१२० ) :—

गणिकां ये प्रयच्छन्ति नृत्यगीतविशारदाम् ।
सर्वदुःखविनिर्मुक्तास्ते [1]प्रयान्त्यमरावतीम् ॥६९॥

अर्चिताय वासुदेवाय नृत्यगीतकुशलामर्चितां[2] वेश्यां दद्यात् । ॐ अद्य विष्णुधर्मोत्तरोक्त-[वासुदेव-[3]सम्प्रदानक-गणिकादानफलप्राप्तिकामोऽहं भगवते][4] वासुदेवाय एतां गणिकां ददानि । दक्षिणा पूर्ववत् ।

तथा ( ३।३४१।२१ख ) :—

[5]नृत्यं दत्त्वा तथाप्नोति [6]रुद्रलोकमसंशयम् ।

[7]नृत्यं सङ्कल्प्य [8]वासुदेवाग्रे कारयेत् । [9]ॐ रुद्रलोकप्राप्तिकामोऽहं भगवते वासुदेवाय [10]नृत्यं दास्ये ।

तथा ( ३।३४१।२२ख) :—

प्रेक्षणीयप्रदानेन शक्रलोके महीयते ॥७०॥

प्रेक्षणीयं [11]स्त्रीलास्यम् । वासुदेवाग्रे प्रेक्षणीयं सङ्कल्प्य कारयेत् । ॐ [सोत्कर्ष-शक्रलोक][12]-प्राप्तिकामोऽहं भगवते वासुदेवाय प्रेक्षणीयं दास्ये ।

तथा ( ३।३४१।१८ख ) :—

दत्त्वा च गीतं धर्मज्ञा गन्धर्वैः सह [13]मोदते ।

गीतं सङ्कल्प्य यथाशक्ति वासुदेवाग्रे कारयेत् । ॐ [14]अद्य विष्णुधर्मोत्तरोक्तवासुदेव-सम्प्रदानक-गीतदानफलप्राप्तिकामोऽहं भगवते वासुदेवाय गीतं दास्ये ।

तथा :—

प्रेक्षणीयोपयोग्यानि दत्त्वात्यन्तं सुखी भवेत् ॥७१॥

---

1 *Corrected from* V. D. I. O. यान्त्यामरावतीं, A प्रयच्छ न्तोमरावतीं
2 A ०र्चितं
3 I. O. संप्रदानफल for सम्प्रदानक
4 A omits the bracketed portion
5 Both I. O. and A भृत्यं
6 A रुद्रलोकं न संशयः
7 A भृत्यं, I. O. भृत्य
8 A वासुदेवाय
9 A *omits it*
10 Both I. O. and A भृत्यं
11 A स्त्रौदास्यं
12 I. O. सोत्कर्षस्वर्गलोक and A शक्रलोक for the bracketed portion
13 A मेदते
14 Both I. O. and A omit it

प्रेक्षणीयोपयोग्यानि मृदङ्ग-कांस्यताल-[1]घर्घरोकक्षकादीनि। [2]अर्चिताय वासुदेवायार्चितानि [3]प्रेक्षणीयोपयोग्यद्रव्याणि दद्यात्। [4][ॐ अद्यात्यन्त]-सुखप्राप्तिकामोऽहं भगवते वासुदेवाय एतानि [5]प्रेक्षणीयोपयोग्यानि ददानि। दक्षिणा पूर्ववत्।

[6]तथा (३।३४१।११६ख, १२०ख):—

वाद्यं दत्त्वा तथा विप्राः शक्रलोके महीयते।
वाद्यानामपि देवस्य तन्त्रीवाद्यं सदा प्रियम् ॥७२॥

वाद्यं सङ्कल्प्य वासुदेवाग्रे कारयेत्। ॐ सोत्कर्षशक्रलोकप्राप्तिकामोऽहं भगवते वासुदेवाय वाद्यं दास्ये। तन्त्रीवाद्यदाने तु[7] [8]फलाधिक्यम्।

[9]तथा (३।३४१।१२१क):—

दुन्दुभिं ये प्रयच्छन्ति कीर्त्तिमन्तो भवन्ति ते ॥७३॥

[10]दुन्दुभिः भेरीति प्रसिद्धं वाद्यभाण्डम्। अर्चिताय वासुदेवायार्चितं दुन्दुभिं ददानि। दक्षिणा पूर्ववत्।

तथा (३।३४१।८८ख-८९क):—

दत्त्वा धान्यानि बीजानि शस्यानि विविधानि च।
रूपकाणि च तान्येव प्राप्नोत्ययुतशः पुनः ॥७४॥

धान्यानि कलमादीनि बीजानि शाककलमादीनि[11] शस्यानि धान्येतराणि यवादीनि। [12]शस्यानां पृथग्ग्रहणं फलभूयस्त्वार्थम्। रूपकाणि चकम्वा इति प्रसिद्धानि पश्चिमदेशे। अर्चिताय वासुदेवायार्चितानि धान्यानि दद्यात्। ॐ अद्य विष्णुधर्मोत्तरोक्त-वासुदेव-सम्प्रदानक-धान्यदानफलप्राप्तिकामोऽहं भगवते वासुदेवाय शतानि धान्यानि ददानि। दक्षिणा पूर्ववत्। बीजादिदानवाक्ये तु धान्यपदस्थाने तत्तत्पदनिवेशो विशेषः।

---

1 A घनादीनि
2 A अर्चिता
3 A प्रेक्षणीयोपयोग्यद्रव्याणि
4 I. O. ॐ अद्यादात्म and A आद्यात्म for the b. p.
5 A प्रक्षणीयो०
6 I. O. omits it
7 Both I. O. and A वाक्यं after this
8 A फलवाक्यं
9 A omits it
10 A दुन्दुभिं
11 I. O. शाककन्यादीनि
12 I. O. omits it

तथा ( ३।३४१।८६ख-९०क ) :—

दत्त्वा शाकानि रम्याणि विशोकस्त्वभिजायते ।
दत्त्वा च व्यञ्जनार्थाय तथोपकरणानि च ॥७५॥

रम्याणि शाद्वलानि कीटादि-[1]विरहितानि स्वादूनि वा । व्यञ्जनोपकरणानि घृतशर्करा-सैन्धवादीनि । अर्चिताय वासुदेवायार्चितानि शाकानि दद्यात् । ॐ अद्य विशोकत्व-प्राप्तिकामोऽहं भगवते वासुदेवायैतानि रम्याणि शाकानि ददानि । दक्षिणा पूर्ववत् । व्यञ्जनोपकरणदाने तु एतानि व्यञ्जनोपकरणानीति विशेषः ।

तथा ( ३।३४१।९०ख ) :—

पुष्पवृक्षं तथा दत्त्वा ग्रामस्याधिपतिर्भवेत ॥७६॥

[2]अर्चिताय वासुदेवायार्चितं पुष्पवृक्षं दद्यात् । ॐ अद्य ग्रामाधिपत्यप्राप्तिकामोऽहं भगवते वासुदेवायैतं पुष्पवृक्षं ददानि । दक्षिणा पूर्ववत् ।

तथा ( ३।३४१।१८६ख, Cf. ३।३११।२५क ) :—

[3]कङ्कतस्य प्रदानेन विरोगस्त्वभिजायते ।

[4]कङ्कतः काङ्करीति प्रसिद्धः । अर्चिताय वासुदेवायार्चितं [5]कङ्कतं दद्यात् । ॐ अद्य विष्णुधर्मोत्तरोक्त-[6]कङ्कतदानफलप्राप्तिकामोऽहं भगवते वासुदेवाय [7]एतं कङ्कतं ददानि । दक्षिणा पूर्ववत् ।

तथा ( ३।३४१।१८६क ) :—

[ कूर्चप्रसाधनं दत्त्वा सुखमत्यन्तमश्नुते ॥७७॥ ][8]

कूर्चप्रसाधनं[9] [10]श्मश्रुप्रसाधनार्थं द्रव्यम् । अर्चिताय वासुदेवायार्चितं कूर्चप्रसाधनं दद्यात् । ॐ अद्यात्यन्तसुखप्राप्तिकामोऽहं भगवते वासुदेवाय एतत् कूर्चप्रसाधनं ददानि । दक्षिणा पूर्ववत् ।

---

1 I. O. चैव for वि
2 I. O. भद्रा पुष्पवृक्षं just before this
3 I. O. केङ्कतस्य
4 I. O. omits it
5 I. O. केङ्कतं
6 I. O. केङ्कत
7 I. O. एवं
8 Supplied from V. D. I. O. omits it.
9 I. O. कूर्च्चप्रसाधन
10 I. O. श्मश्रु•

तथा :—

विचित्रणीयं यत्किञ्चिद्दत्त्वात्यन्तं सुखी भवेत् ।

अर्चिताय वासुदेवायार्चितमाश्चर्य्यकरं किञ्चित् प्रतिमादिशिल्पं दद्यात् । ॐ अद्यात्यन्तसुखप्राप्तिकामोऽहं भगवते वासुदेवाय एतदाश्चर्य्यकरं ददानि । दक्षिणा पूर्ववत् ।

तथा :—

दीपवृक्षं ततो दत्त्वा शत्रुभिर्नाभि-[1]भूयते ।७८॥

अर्चिताय वासुदेवायाग्रतो यथेच्छमिष्टकादिभिर्दीपवृक्षं कृत्वा दद्यात् । ॐ अद्य विष्णुधर्मोत्तरोक्त-केशवायतन-दीपवृक्षदानफलप्राप्तिकामोऽहं केशवाय दीपवृक्षं ददानि । दक्षिणा पूर्ववत् ।

तथा :—

दीपमालां प्रयच्छन्ति ये नराः शार्ङ्गिणो गृहे ।

भवन्ति ते चन्द्रसमाः स्वर्गमासाद्य मानवाः ॥७६॥

शार्ङ्गिणो गृहे [2][वासुदेवायतने । अर्चिताय विष्णवेऽर्चितां दीपमालां यथाशक्त्या दद्यात् ।] ॐ अद्य विष्णुधर्मोत्तरोक्त शार्ङ्गिगृह-दीपमालादानफलप्राप्तिकामोऽहं भगवते वासुदेवाय दीपमालां ददानि । दक्षिणा पूर्ववत् ।

तथा :—

दीपागारं[3] नरः कृत्वा कूटागारनिभं[4] शुभम् ।

केशवालयमासाद्य [नाके भवति][5] शक्रवत् ॥८०॥

दीपागारं वंशादिघटितम् ।

देवकुलायायतनं[6] दीपयुक्तं यथोज्ज्वलम्[7] ।

[8]तथा नित्योज्ज्वले लोके नाकपृष्ठे हि जायते ॥८१॥

सदीपे तु यथादेशे चक्षूंषि फलवन्ति च ।

तथा दीपस्य दातारो भवन्ति सफलेक्षणाः ॥८२॥

---

1 I. O. ०दूयते

2 I. O. reads the bracketed portion in a topsy-turvy manner as follows :—विष्णवे दीपमालां यथाशक्त्या दीपान् । अर्चिताय विष्णवेऽर्चितां दीपमालां वासुदेवायतने दद्यात् ।

3 I. O. दीपागारे

4 I. O. कूटागारनिभं

5 I. O. नाके भति स for the bracketed portion

6 I. O. देवकुलाद्याकारं

7 I. O. यथोज्ज्वलः

8 I. O. यद्वा दीपदातापि पादत just before this

दीपागारं सङ्कल्प्य केशवायतने दद्यात्। ॐ [1]अद्य विष्णुधर्मोत्तरोक्त-[2]केशवालय-दीपागारदानफलप्राप्तिकामोऽहं केशवालये दीपागारं दास्ये। दक्षिणा पूर्ववत्।

एकादशीं द्वादशीञ्च प्रतिपक्षन्तु यो नरः।
दीपं ददाति कृष्णाय तस्य पुण्यफलं शृणु ॥८३॥
सुवर्णमणियुक्ताढ्यं मनोज्ञमतिशोभनम्।
[3]दीपमालोज्ज्वलं दिव्यं विमानमधिरोहति ॥८४॥

[प्रतिपक्षं पक्षं पक्षं[4] कृष्णपक्षे शुक्लपक्षे चेत्यर्थः। शुक्लैकादशीद्वादशीषु समस्तामेकादशीं[5] समस्ताञ्च द्वादशीं[6] व्याप्य कृष्णायार्चितं दीपं दद्यात्।][7] ॐ अद्य विष्णुधर्मोत्तरोक्त-प्रतिपक्षैकादशीविहित-दीपदानफलप्राप्तिकामोऽहं भगवते कृष्णाय दीपं ददानि। दक्षिणा पूर्ववत्। एवं द्वादश्यां दानवाक्ये एकादशीपदस्थाने द्वादशीपदनिवेशो विशेषः।

तथा :—

प्रज्वाल्य देवदेवस्य कर्पूरेण प्रदीपकम्।
अश्वमेधमवाप्नोति कुलञ्चैव समुद्धरेत् ॥८५॥

देवदेवस्य विष्णोः प्रकरणात्। अर्चिताय विष्णवे कर्पूरेण दीपमर्चितं दद्यात्। अद्य विष्णुधर्मोत्तरोक्त-कर्पूरदीपदानफलप्राप्तिकामोऽहं भगवते वासुदेवाय एतं कर्पूरकं दीपं ददानि। दक्षिणा पूर्ववत्।

तथा :—

पट्टसूत्रोद्भवां वर्तिं[8] गन्धतैलेन दीपकम्।
विरोगो[9] सुभगश्चैव दत्त्वा भवति मानवः ॥८६॥

देवदेवस्य सम्बध्यते। अर्चिताय वासुदेवाय पट्टसूत्रोद्भवां वर्तिमर्चितां दद्यात्। ॐ अद्य विष्णुधर्मोत्तरोक्त-पट्टसूत्रोद्भवां वर्तिं भगवते वासुदेवायैतां ददानि। दक्षिणा पूर्ववत्।

---

1 I. O. omits it
2 I. O. केशवालयदीपागारे०
3 I. O. दीपमालावलं
4 I. O. प्रति after this
5 I. O. ०दशी
6 I. O. द्वादशी
7 I. O. reads the first sentence of the bracketed portion viz. प्रतिपक्षं…चेत्यर्थः after पुण्यफलं शृणु (v. 83 above) and also reads almost the second sentence of the bracketed portion viz शुक्ल…दद्यात् just after it, besides reading the latter here.
8 I. O. वर्ति
9 I. O. विरोग

तथा :—

महावर्तिः सदा देया भूमिपाल महाफला[1] ।
कृष्णपक्षे विशेषेण तत्रापि च विशेषतः ।
अमावास्या च निर्दिष्टा द्वादशी च महाफला[2] ॥८७॥
आश्वयुज्यामतीतायां कृष्णपक्षस्तु यो भवेत् ।
अमावास्या तदा पुण्या द्वादशी वा विशेषतः ॥८८॥
देवस्य दक्षिणे देशे देया तैलतुला [3]सदा ॥८९॥
[4]पलाष्टकयुता राजन् [5]वर्तिं तत्र तु दापयेत् ।
[6]महारजनरक्तेन समग्रेण तु वाससा ॥९०॥

[7]पलाष्टकयुता तैलतुला [8]अष्टोत्तरशतं तैलपलानीत्यर्थः । [9]समग्रेणाखण्डितेन ।

वामपार्श्वे च देवस्य देया घृततुला नृप ।
पलाष्टकयुता शुक्लां [10][वर्तिं तत्र तु] दापयेत् ।
वाससा तु समग्रेण सोपवासो जितेन्द्रियः ॥९१॥
महावर्तिद्वयमिदं सकृद्दत्त्वा महामते ।
स्वर्गलोकं चिरं भुक्त्वा जायते भूतले यदा ।
तदा भवति लक्ष्मीवान् रूपद्रविणसंयुतः ॥९२॥
राष्ट्रे च जायते यस्मिन् देशे वा नगरे तथा ।
कुले च राजशार्दूल तत्र स्याद्दीपवत्[11] प्रभो ॥९३॥
अत्युज्ज्वलश्च भवति युद्धेषु कलहेषु च ।
ख्यातिर्याति यथालोके सज्जनानाञ्च सद्गुणैः ॥९४॥
एकामप्यथ यो दद्यादभीष्टामनयोर्द्वयोः ।
मानुष्ये सर्वमाप्नोति स्वर्गलोकञ्च गच्छति ।
स्वर्गे तथात्वमाप्नोति भोगकालञ्च यादव[12] ॥९५॥

---

1 I. O. महाफला:
2 I. O. महाफलं
3 I. O. तिलरसमतं
4 I. O फलाष्टकयुतां
5 I. O. वर्त्ति
6 I. O. महाराजनरक्तेन
7 I. O. फलाष्टकयुता
8 I. O. अष्टोत्तरं शतं
9 I. O. समग्रेणाखण्डितेन
10 I. O. reads the bracketed portion as वर्त्तिं तु तत्र
11 I. O. स्याद्दीववत्
12 I. O. यादवा

सामान्यस्य तु दीपस्य राजन् दानं महाफलम् ।
किं पुनर्महतो यस्य फलस्यान्तं न विद्यते ॥९६॥
दीपदानं परं [1]पुण्यमन्यदेवेष्वपि ध्रुवम् ।
किं पुनर्देवदेवस्य अनन्तस्य महात्मनः ॥९७॥

[2][अश्वयुक्-पौर्णमास्यां तु अतीतायां] कार्तिककृष्णद्वादश्यमावास्ययोरन्यतरदिनात् पूर्वेतरदिने प्रातः कृतनित्यो घटिकाधिकप्रहरत्रये हविष्यं भुक्त्वाऽऽचम्य शुचौ देश उपविश्य पादौ प्रक्षाल्याचम्य उदङ्मुखो प्राङ्मुखो वा कृताञ्जलिः ॐ सूर्यसोमयमकालपञ्चमहाभूतानि विष्णुधर्मोत्तरोक्तदानकर्म कर्तुं श्वो मयोपवासः कर्तव्य इति निवेद्य सङ्कल्पं कुर्यात् । विष्णुधर्मोत्तरोक्तमहावर्तिदानं[3] कर्तुं श्वोऽहमुपवासं करिष्ये । ततो नियमेन सुप्त्वा परदिन उपोष्यापरदिने कृतस्नानादिः विष्णुधर्मोत्तरोक्त-महावर्तिदानादिकर्माहं करिष्य इति सङ्कल्प्य वासुदेवप्रतिमाया दक्षिणया दिशा[4] अष्टोत्तरपलशततैलपूर्णपात्रमखण्डिताहतमहारजन[5]-रक्तवस्त्रवर्तियुत-[6][मुक्तप्रतिमाया वामया दिशा चा]-[7]ष्टोत्तरपलशतघृतपूर्णपात्रं शुक्लसमवासोवर्तियुतमेतन्महावर्तिद्वयं ददानि । दक्षिणा पूर्ववत् । अत्र [8]धान्याद्यपेक्षितं द्रव्यं विष्णवे देयम् ।

तथा च विष्णवे दानानुवृत्तौ विष्णुधर्मोत्तरे :—

यत् किञ्चिद्देवदेवाय दद्याद् भक्तिसमन्वितः ।
तदेवाक्षयमाप्नोति विष्णुलोकञ्च गच्छति ॥९८॥

इति महाराजाधिराज-निःशङ्क-शङ्कर-श्रीमद्बल्लालसेनदेवविरचिते
श्रीदानसागरे वासुदेवसम्प्रदानकदानावर्तः ।

धर्मस्याभ्युदयाय नास्तिकपदोच्छेदाय जातः कलौ ।
श्रीकान्तोऽपि सरस्वतीपरिवृढः प्रत्यक्षनारायणः ॥९९॥
पादाम्भोजनिषण्णविश्ववसुधासाम्राज्यलक्ष्मीयुतः ।
श्रीबल्लालनरेश्वरो विजयते सद्वृत्तचिन्तामणिः ॥१००॥

---

1 I. O. पुण्यं मन्यदेवेष्वपि
2 I. O. पौर्णमास्यै तु for the bracketed portion
3 I. O. °दान
4 I. O. omits it
5 I. O. रजनव° for महारजन°
6 I. O. omits the bracketed portion
7 I. O. तैलाष्टोत्तरपलशतं for अष्टोत्तरपलशत
8 I. O. धान्यादपेक्षितं

ब्रह्मपुराण—वराहपुराण—अग्निपुराण—भविष्यपुराण—मत्स्यपुराण—वामनपुराण—वायुपुराण—मार्कण्डेयपुराण—विष्णुपुराण—शिवपुराण—स्कन्दपुराण—पद्मपुराण—कूर्मपुराण—शाम्बपुराण—कालीपुराण—देवीपुराण—नन्दिपुराण—आदित्यपुराण—नरसिंहपुराण—लिङ्गपुराण—महाभारत—श्रीभागवत—श्रीरामायण—विष्णुधर्मोत्तर—छन्दोगपरिशिष्ट—लघुहारीत—बौधायन—शाठ्यायन—मनु—याज्ञवल्क्य—देवल—पैठीनसि—कात्यायन—शातातप—दानव्यास—दत्त—वशिष्ठ—बृहस्पति—यम—हारीत—पुलस्त्य—जाबाल—अङ्गिरस—आपस्तम्ब—महाव्यास—लघुव्यासाः। एतेषां ग्रन्थानां मतमालोच्य श्रीवल्लालसेनदेवेन दानसागरः कृतः।

इति दानसागरः समाप्तः।

---

अथ वङ्गदेशीयराज्ञामनुक्रमेण नामानि। अथ प्रथमं हेमन्तसेनः ततो विजयसेनः ततो वल्लालसेनः तेन दानसागरः कृत इति। अस्य गुरुः अनिरुद्धः। अत्र सम्वत्सरादिसमयविशेषपरिचयाय दानसागरनिर्माणवर्षस्यैव सम्वत्सरत्वप्रतिपादनाय लिख्यते। निखिलभूपचक्रतिलक-श्रीमद्वल्लालसेनदेवेन पूर्णे[1] शशिनवदशमित-(१०९१)-शकवर्षे दानसागरो रचितः। श्रीहरिः।

---

1 I. O. पूर्ण

Series), Baroda, 1948; Dānakāṇḍa, edited by the same, vol. XCII, G.O.S., 1941.

Kṛtyatattvārṇava of Srīnātha Ācāryacūḍāmaṇi, Asiatic Society's MS. I.F. 45.

Kṛtyaratnākara of Caṇḍeśvara, edited by MM. Kamalakṛṣṇa Smṛtitīrtha, B. I., 1925.

Likhita, edited by Bhavānīcharaṇa Banerji, Calcutta in 'Atryādi etc.

Mahābhārata, Bombay oblong edition.

Manusmṛti with the bhāṣya of Medhātithi, edited by MM. Dr. Ganganath Jha, B. I., No. 256 (vols. I-III), 1936-39.

Nirukta of Yāska, edited by Lakshman Sarup, Lahore, 1927.

Pāṇini, as recast in the Siddhānta-kaumudī of Bhaṭṭoji Dīkṣita, Śrī Bālamanoramā Press, Madras, 1927.

Rāmāyaṇa, North-western recension, edited by Viśvabandhu Shastri and published from Lahore, 1931-47.

Smṛtitattva of Raghunandana (incorporating Āhnikatattva, Divya°, Dīkṣa°, Malamāsa°, Saṁskāra°, Śuddhi° and Śrāddha° among 28 tattvas), vols. I and II, edited by Jīvānanda Vidyāsāgara, Calcutta, 1895.

Vaśiṣṭha-dharmasūtra, edited by A.A. Führer, Poona, 1930.

Vyāsa, edited by Bhavānīcharaṇa Banerji, Calcutta in 'Atryādi etc'.

Yājñavalkyasmṛti, published with the Aparāka, a commentary on the above, Ānandāśrama Press, Poona, 1903-4.

Yogi-yājñavalkya-smṛti, edited as Bṛhat-yogi-yājñavalkya-smṛti by Swāmī Kuvalayānanda and Pandit Raghunāthaśāstrī Kokaje, Lonavla (Poona), 1951.

*The Purāṇas* (published by the Veṅkaṭeśvara Press, Bombay)

Agnipurāṇa
Bhaviṣyapurāṇa
Kālikāpurāṇa
Kūrmapurāṇa
Liṅgapurāṇa
Matsyapurāṇa
Mārkaṇḍeyapurāṇa
Padmapurāṇa
Varāhapurāṇa
Vāmanapurāṇa
Vāyupurāṇa
Viṣṇudharmottara-(purāṇa)
Viṣṇupurāṇa

# CONTENTS

comprehensive chapter on *Dāna*, it aims at supplying its minor deficiencies owing to its non-utilisation of the *Dānasāgara*.

My sincerest thanks are due to Dr. B. C. Law, Mr. Justice R. P. Mookerji and Dr. Suniti Kumar Chatterji, former Presidents of the Asiatic Society to Dr. N. Dutt, Dr. Sukumar Sen and Dr. S. K. De, to MM. Dr. P. V. Kane, and Pandit Nārāyaṇachandra Smṛtitīrtha of Bhatpara, for advice and encouragement, offered to me in the various stages of this work from the preparation of its press copy to its final publication.

Bhatpara
(West Bengal)
15th June, 1956

Bhabatosh Bhattacharya

# PREFACE

It is almost a decade ago when in August, 1947, Dr. Suniti Kumar Chatterji, M.A., D. Litt., former President of the Asiatic Society, suggested to me the idea of preparing a critical edition of the *Dānasāgara* of Ballāla Sena. It was also at his instance that the Council of the Society entrusted me in the next month with the preparation of the edition and lent me the MS. of the work in their collections. I then began my work on the basis of that solitary Society MS. but I soon found out that it would be extremely risky to do so with the help of that single MS., which was not only highly corrupt but also full of omissions. So I requisitioned through the Council of the Society the India Office MS. of the same work and collated it for my edition. During the interval of almost a year between the completion of my press copy and the beginning of printing I identified the copious quotations in the *Dānasāgara* from numerous original sources, so far as the latter were accessible in printed form. The text, covering 722 pages, has since been published in three fascicles between 1953 and 1955 as work no. 274 of the *Bibliotheca Indica* and the concluding fascicle, embodying the contents, bibliography, abbreviations, introduction, errata and index, is now presented to the public. This work is almost the earliest and most comprehensive digest on *Dāna*, as the *Dānakāṇḍa* of the *Kṛtya-kalpataru*, its only predecessor by several decades, is decidedly shorter than and has not possibly been utilised by the present work. It is, moreover, one of the six digests, pronounced authoritative by MM. Dr. P.V. Kane in his *History of Dharmaśāstra* vol. II (chapter on *Dāna*) but never utilised by him in that chapter, as it then existed in MSS. only. So a complete and critical edition of this work was a desideratum, which has been fulfilled, I think, to a large extent by its preparation in collation of two MSS. of different descent, as their respective omissions and misreadings clearly indicate and also by the exhaustive identification of the quotations, helping the correction and completion of the text in many places. The short English introduction misses, I hope, nothing important; and also, instead of being a repetition of Dr. Kane's otherwise

**BIBLIOTHECA INDICA**

**A COLLECTION OF ORIENTAL WORKS**

श्रीमद्बल्लालसेनदेवविरचितः

# दानसागरः

# DĀNASĀGARA

OF

## BALLĀLA SENA

CRITICALLY EDITED WITH INTRODUCTION AND INDEX

BY

BHABATOSH BHATTACHARYA, M.A., B.L., Kāvyatīrtha

*Sir William Jones Research Fellow*




Work Number
**274**
Fasciculus 4

Issue Number
**1573**

**The Asiatic Society,**
**1 Park Street, Calcutta-16**

# ABBREVIATIONS

| | | |
|---|---|---|
| A.P. | = | Agnipurāṇa |
| A.V. | = | Atharvaveda |
| A.T. | = | Āhnikatattva |
| Āpś. | = | Āpastamba-Śrauta-Sūtra, edited by Dr. Richard Garbe B. I., 1882-1892 |
| b.p. | = | bracketed portion |
| Baudh. | = | Baudhāyana-dharmasūtra |
| Bh.P. | = | Bhaviṣyapurāṇa |
| Con. | = | conjectural |
| D.K. | = | Dānakāṇḍa of Kṛtyakalpataru |
| D.S. | = | Dānasāgara |
| Div.T. | = | Divyatattva |
| Dīk.T. | = | Dīkṣātattva |
| Gautama | = | Gautamadharmasūtra |
| K.P. | = | Kūrmapurāṇa |
| K.R. | = | Kṛtyaratnākara |
| Kāuś. | = | Kauśika-sūtra of the Atharvaveda, edited by Maurice Bloomfield in vol. XIV of the Journal of the American Oriental Society, New Haven, 1890. |
| L.P. | = | Liṅgapurāṇa |
| Manu | = | Manusmṛti |
| M.bh. | = | Mahābhārata |
| M.P. | = | Matsyapurāṇa |
| Mārkeṇḍeya P. | = | Mārkaṇḍeyapurāṇa |
| N.W. | = | North-western recension (of the Rāmāyaṇa) |
| Padma P. | = | Padmapurāna |
| Raghu | = | Raghunandana |
| R.V. | = | Ṛgveda |
| R.V.Kh. | = | Khilas of the Ṛgveda, taken from Aufrecht's edition of the Ṛgveda, vol. II, pp. 672 ff. |
| SMB | = | Sāma-Mantra-Brāhmaṇa, 1. Prapāṭhaka, Halle, 1901 |
| Sṁ.T. | = | Saṁskāratattva |
| Varāha P. | = | Varāhapurāṇa |
| Vāmana P. | = | Vāmanapurāṇa |

| | | |
|---|---|---|
| Vāyu P. | = | Vāyupurāṇa |
| Viṣṇu P. | = | Viṣṇupurāṇa |
| V.D. | = | Viṣṇudharmottara |
| Yāj. | = | Yājñavalkyasmṛti |
| अथर्व | = | अथर्ववेदः |
| अनु | = | अनुशासनपर्व ( महाभारतस्य ) |
| बन | = | बनपर्व ,, |
| वि. ध.. | = | विष्णुधर्मोत्तरम् |
| शान्ति | = | शान्तिपर्व ( महाभारतस्य ) |

## CONTENTS OF THE TEXT

# INTRODUCTION

## Ms. MATERIALS

Three MSS. of the Dānasāgara have been collated for the present edition, viz. (1) (A)siatic Society MS., No. I.A. 73 of the Society's Collection

(2) MS. of (B)enoy Krishna Deva Bahadur of Calcutta and

(3) (I)ndia (O)ffice (of London) MSS. Nos. 719-20/1704-5, (the two MSS., being the two parts, have been considered as one).

References to these three MSS. have been abbreviated into A, B and I.O. respectively.

### (1) *MS. A*

Of these A consists of 237 folios, those up to 160 being numbered in ink by the scribe himself and the rest with a few exceptions being numbered in pencil by some other person later on. As the folio 188 has been wrongly numbered as 189, so the numbers of all the subsequent folios up to the last but one have been incorrectly increased by one, while the last folio has been left without a number. The size of this MS. is 16½ in. by 5 in. and its condition is excellent, It contains 10 lines on a page and 45 to 60 letters in a line. Its script is Bengali of the early 19th. century and the numbers 21-3-05, added just at the end of the work, probably indicate that its copying was completed on March 21, 1805. It is, however, a very corrupt MS., being full of omissions, repetitions, wrong punctuations, spelling mistakes, misreadings and readings torn out of their proper contexts and placed elsewhere. It is an incomplete MS., ending abruptly with the word ***dundubhiḥ*** (which it reads as ***dundubhim***) in l. 11, p. 715 of the present edition. Though it contains no colophon owing to its incompleteness, yet it records the date of composition of the work on folio 221 (a and b) in almost similar words as those printed in thick letters on p. 657 of the present edition.

## (2) *MS. B*

(*As collated from the readings in a partly printed edition*)

About one-fifth portion of the present work, corresponding to pp. 1-151 of the present edition, was published in Devanāgarī characters with a Bengali introduction and translation (pp. 1-16, 1-316) by the late Pandit Śyāmācaraṇa Kaviratna from the Sāhitya Sabhā, Calcutta, between 1914-19. This edition was based upon the collation of three MSS., *viz.* our A and B MSS. and a third MS., belonging to Prācyavidyāmahārṇava Nagendranāth Vasu. The editor mentions in his Bengali introduction about the almost similarity of the readings of Vasu's MS. with those of MS. A and we have also not been able to secure MS. B but have satisfied ourselves with the readings of this MS., as recorded in Śyāmācaraṇa's edition, for purposes of collation up to 151 pages in our edition and have consequently marked these readings as from MS. B. It may be added here that its script is also Bengali.

[It may by mentioned in this connection that another shorter edition of the present work (pp. 1-2, 1-80 up to a certain portion of *dānāpavāda*, thus corresponding to pp. 1-44 of the present edition) was published in Bengali characters with a Bengali translation in the Sāhitya-saṁhitā, a Bengali journal of Calcutta. We learn from its preface that it utilised our B MS. and another MS., belonging to the collection of Prāṇakṛṣṇa Biswās of Khardah but we can get no information about its editor and the year of its publication, as the title page of this edition is missing in our copy. It may be added here that the above-mentioned Khardah MS., which is also in Bengali script and now deposited in the collection (no. 1374) of the Vaṅgīya Sāhitya Pariṣat of Calcutta, is not only extremely corrupt but its folios are in a very tottering condition.]

## (3.) *I. O. MS.*

It consists of two parts, the folios of the respective parts being 1-154 and 155-309 (wrongly described as 709 in the India Office Catalogue). Its size is 15¾ in. by 5 in. and its condition is also excellent. Its

script is modern Bengali handwriting and it contains 8 lines on a page and 55 letters on the average in a line. It is almost complete and its readings are on the whole correct, but there are in several places omissions and mistakes, though not of a serious character. The five concluding folios (305-9) contain a table of contents of the whole work.

## THE AUTHOR

Of the eight topics, described in the 72 introductory verses of the present work (pp. 1-8), the following six are more important, dealing as they do with the author's own account of himself, of his two immediate ancestors and of his teacher, Aniruddha and with the sources and contents of his work :—

(b) The author's own account of himself and of his father, grandfather and teacher

(d) List of works consulted

(e) List of dānas, specified in this work

(f) ,, ,, not specified in this work

(g) List of works not consulted

(h) List of fifteen preliminaries to making gifts, described in the just following introductory chapter (pp. 9-69).

The (a) and (c) topics deal respectively with 'obeisance to the Brāhmaṇas' and 'the author's request to the Brāhmaṇas of successive ages to follow his present work.' The *topic* (*b*) is now described below.

'The Sena dynasty sprung out of the Moon, the only friend of the whole world—the dynasty which is great owing to its strict observance of the Vedic rites, the boundary mountain, as it were, of the conduct of the Kṣatriyas and the veritable limit of the prevalence of the good customs, got afraid of the advent of the Kali age and which possesses the beauty of a pearl necklace, the good acts of its members standing for the transparent gems and its line of succession, ever filled with manly qualities, effulgent with those gem-like good acts, serving the purpose of the connecting thread of the necklace. In that very dynasty

was born HEMANTA SENA, who was, as it were, the hemanta ( i.e. late autumn) season incarnate, having beautified the good roads (or good ways of living, in case of the king), being attractive for big and steady shades ( or patronage, in case of the king ) and hence easily accessible by the good for pleasant and unrestricted enjoyment (or utilisation, in case of the king), serving as a moving wish-fulfilling tree (*kalpadrumo*[1] *jaṅgamaḥ*), being naturally produced by the

1 Mr. Rangaswami Aiyangar says on p. 59 of his introduction to the edition of the *Dānakāṇḍa* of the *Kṛtyakalpataru* (G.O.S., vol. XCII, 1941), 'The Dānasāgara of Ballāla Sena (composed in śaka 1091), i.e. A D. 1161-69 [sic. 1169-70]) refers to the Kalpataru.' Though the learned editor quotes in Appendix B of the above edition the 72 introductory verses in full and the five concluding verses of the Dānāsāgara and simply prints with a waving line the above Sanskrit word (i e. *Kalpadrumo*), occurring in intro. v. 3, yet he nowhere proves his above assertion. The Sanskrit phrase in question (i.e. *Kalpadrumo jaṅgamaḥ*) is an epithet only to *hemantaḥ*, just following it and placed as it is in a verse of *double entedre*, admits of a two-fold interpretation, vix. the hemanta (i e. late autumn) season and the king Hemanta Sena, grandfather of our author, Ballāla Sena. Our author, however, nowhere mentions any commentary or digest, not to speak of the Kṛtyakalpataru, in his long list of works consulted and also nowhere quotes a single word from the above-mentioned digest. Moreover, the word 'Kalpadruma' means 'a wish-fulfulling tree' only and though its synonym 'Kalpataru' may also be used as an abbreviation of the name of the digest in question, yet there is no warrant here for introducing this far-fetched interpretation of the innocent word 'Kalpadruma', simply because the composition of the Krtyakalpataru preceded that of the Dānasāgara by several decades (the two works being produced in the first and second halves respectively of the 12th century). The late M.M. Chakravarti also says on p. 361 of his 'History of Smṛti in Bengal and Mithilā' (J.A.S.B., vol. XI, 1915, pp. 311-406), 'Firstly in the Bengal School, Aniruddha was the earliest to quote the work (i.e. Krtyakalpataru) as authority and Ballāla Sena's Ācārasāgara, Pratiṣṭhāsāgara and Dānasāgara seem to have felt its influence.' Two works of Aniruddha have so far been published, viz. Hāralatā (B. I., 1909) and Pitṛdayitā (Sanskrit Sāhitya Pariṣat, 1924). So it is likely that Chakravarti might have at least, consulted the printed edition of the former work, viz. Hāralatā before making the above remark about Aniruddha's indebtedness to the Kṛtyakalpataru, as the former had been published six years before the publication of his above paper. But curiously enough, the index

destruction of the antagonistic lotus-breeding lakes (or being raised by his inherent good qualities as manifested in excavating lotus-breeding lakes even for his enemies, in case of the king) and thus being of serene greatness. He was succeeded by the king VIJAYA SENA, bowing down to whom and carrying whose behests like garlands in their crests the members of other great royal dynasties served like the banners of victory in all possible directions. From this king was born the king BALLALA, the premier source of the rise of merits and the best of all kings—BALLALA, who, having attained royal fortunes (or looking beautiful, in case of the cloud), drenched the entire world with his spotless fame (or paddy crops of the fields, looking white like spotless fame owing to the effects of heat, in case of the cloud) and also all the directions with the torrential flow of the waters, attending his gifts (or flowing as exuberance from the bodies of the maddened elephants, presiding over the cardinal directions, in case of the cloud) and thus served as an untimely cloud, allaying the heat (i.e. torments) of poverty of those, stricken with the same. Just as the slayer of the demon Vṛtra (i.e. Indra, the king of gods) has got the Lord of speech (i. e. Bṛhaspati) as his spiritual preceptor, so this Ballāla possesses ANIRUDDHA as his teacher—ANIRUDDHA, the most revered man in the Varendrī land (i.e. North Bengal) and the best one to expound the Vedas and interpret the Smṛtis, having ever active eyes, showing manifestations, produced

of the edition of the Hāralatā contains the names of Asahāya, Kāmadhenukāra (i.e. the author of the Kāmadhenu), Govindarāja, Bhojadeva, Viśvarūpa and Śaṅkhadhara only and not that of the Kṛtyakalpataru or of its author Lakṣmīdhara in the list of commentators and digestwriters and we have also failed to find out any quotation from the last named work and author in the Haralatā even by a thorough examination. The same remark also applies to the Pitṛdayitā. No Mss. of the Ācārasāgara and Pratiṣṭhāsāgara of Ballāla Sena have so far come to light and the just published Dānasāgara of the same author contains, however, no quotation from the Kṛtyakalpataru, as stated above. So the above remark of Chakravarti about Aniruddha's and Ballāla Sena's indebtedness to the last-named digest is totally unfounded.

by a brilliant intellect, bent upon the shastric lore (*Sārasvata-brahmaṇi*)[2], himself following the six prescribed avocations of a Brāhmaṇa and being the veritable store-house of the good and universally acknowledged as a truthful person. Having devoutly learnt the essence of all the Purāṇas and Smṛtis from this very teacher and being desirous of producing a digest on gifts to remove the accumulated sins of the Kali age but being at the same time doubtful of the success of his risky endeavour of ascertaining dharma, difficult to be ascertained, this king began honouring the lotus-like feet of the Brāhmaṇas. The Brāhmaṇs ( lit. 'lords of the earth'), propitiated as they were with this incessant service ( of this king Ballāla) assembled together and conferred upon the latter an efficacious boon, which clarified and resolved the doubts of the mind of the king who is hereby composing this work *Dānasāgara* as a result of the training, received by him from his teacher and as far as his own learning enables him to do so, for the welfare of those, who have got faith (in the subject of gifts).'

As the two verses, nos. 55 and 56, of the introductory portion containing the list of dānas, not specified in this work (*topic f*), incidentally refer to the names of the author's two other already composed works, viz. *Pratiṣṭhāsāgara* and *Ācārasāgara*, so the purport of those verses is now reproduced below: —

'The gifts relating to the dedication of reservoirs and temples have not been described in the present treatise as they have been fully

2 It is rather strange that Dr. R. C. Majumdar has read the above Sanskrit word as sārasvata-brāhmaṇaḥ and made a remark on p. 183 in his *Bāṅglādeśera itihāsa* (which is an abridged Bengali translation of his *History of Bengal* vol. I), the purport of which is given below: —

'It is inferred from Ballāla Sena's description of his teacher Aniruddha Bhaṭṭa that the latter was a Brāhmaṇa of the Sārasvata clan.'

Not only is the above reading, not found in any Ms. of the Dānasāgara, collated by us, including that of the India Office collection which reads *Sārasvatam brahmaṇi* but also the above statement is in direct conflict with the colophon of Aniruddha's Hāralatā, wherein he describes himself as a Campāhaṭṭiya, which is one of the subsects of the Vārendra Brāhmaṇas of Bengal.

treated in the *Pratiṣṭhāsāgara* and those, made in different parts of the year and described in the Ādipurāṇa, are also not exhaustively dealt with here, as they have been so treated in the *Ācārasāgara*. A hitherto-unknown work of our author, viz. *Vratasāgara*[3] has also been mentioned twice in the present work on pp. 52 and 59 of the present edition. The last work of our author, viz. *Adbhutasāgara*[4], left incomplete by him and finished by his son, the king Lakṣmaṇa Sena, brings up the number of his works to five, which are the following :—

Pratiṣṭhāsāgara, Ācāra°, Vrata°, Dāna° and Adbhuta°.

The topics (d) and (g) enumerate the lists of works consulted and not consulted respectively by our author. The purport of these two topics is set out below one after another.

*Topic (d)—List of works consulted*

The following 13 *Purāṇas* were consulted by our author for the composition of his Dānasāgara :—

The Brahma°, Varāha°, Āgneya° (i.e. Agni°) Bhaviṣya°, Matsya°, Vāmana°, Vāyu°, Mārkaṇḍeya°, Viṣṇu°. Śiva°, Skanda°, Padma°, and Kūrma°.

The following 8 *Upapurāṇas* 'containing as they do chapters on dāna, as stated in the Kūrma and Ādi Purāṇas', were consulted by him :—

The Ādi°, Śāmba°, Kālikā°, Nandi°, Āditya°, Narasiṁha°, Viṣṇudharmottara° (by Mārkaṇḍeya) and Viṣṇudharma°.

3 शूद्राशूद्रस्त्रीपुंसाधारणञ्च दक्षिणगोऽश्वप्रदानजन्मस्नानं हरिवंशोक्तं **व्रतसागरीय**-स्त्रीव्रतचर्य्यायामनुसन्धेयम् (p. 52); **व्रतसागरीय**-मुखवन्धस्थ-स्त्रीव्रतचर्य्यायामञ्जनदन्तधावनादिनिषेधात् (p. 59). Vide also the present writer's paper, vix. Caṇḍeśvara's indebtedness to Ballāla Sena (*Indian Culture*, vol. XI, pp. 141-144 at p. 144, 1945) for the discovery of the existence of this work by the present writer.

4 Edited by Muralidhar Jhā, Prabhākari and Co., Banaras, 1905. The opening verse tells us that it was begun in Śaka 1089 (1167-68 A.D.) but was left unfinished and completed after his death by his son Lakṣmaṇa Sena, whom he had raised to the throne and from whom he had extracted a promise to finish the wrok.

The following 28 *Smṛtis* were consulted: —

Manu, Vaśiṣṭha, Samvarta, Yājñavalkya, Gotama, Kātyāyana, Jābāla, Vyāsa, Dānabṛhaspati, Bṛhad-vaśiṣṭha, Hārīta, Pulastya, Viṣṇu, Śātātapa, Yama, Yogi-yājñavalkya, Devala, Baudhāyana, Aṅgirasa, Dānavyāsa, Bṛhaspati, Śaṅkha-likhita, Āpastamba, Śaṭhyāyana, Mahāvyāsa, Laghuvyāsa, Laghuhārīta and Chandogapariśiṣṭa of Kātyāyana.

The following three works were also consulted: —

The Rāmāyaṇa, Mahābhārata and Gopatha-brāhmaṇa.

We thus see from the above list that 52 works have been utilised by our outhor. If we compare this list with that given in the colophon (p. 721), we find that the latter list contains the names of 46 works only, the Ādi⁰ and Viṣṇudharma⁰ of the Upapurāṇa list and Samavarta, Gotama, Dānabṛhaspati, Bṛhad-vaśiṣṭha, Viṣṇu, Yogi-yājñavalkya, Saṅkha-likhita and Vyāsa of the Smṛti list and also Gopathabrāhmaṇa being omitted, Liṅga⁰, Paiṭhinasi and Dakṣa, which have been really utilised, being added and Devi⁰ and Śrībhāgavata, which have nowhere been utilised by our author, being wrongly added in the colophon list. The real number of works consulted thus comes up to 55 only. A comparison of the names of works in the exhaustive index with the above consolidated list of the same shows that Chāgaleya, Marīci and Vṛddha-śātātapa have been quoted once, twice and once respectively over and above these 55 works, besides the four Vedas, Nirukta, Pāṇini and many other miscellaneous works, while Mahāvyāsa has never been quoted.

Reasons for non-utilisation of the Devī⁰ and Bhāgavata⁰ have been offered by our author in topic (g), below.

Topic (g)—List of works not consulted

'The three Purāṇas, viz. Bhāgavata, Brahmāṇḍa and Nāradīya, containing as they do no chapters on gifts, have not been consulted. The big Liṅgapurāṇa, with its chapters on mahādānas, borrowed from the Matsya⁰, being thus similar with the latter, has not been drawn upon in this digest. The Bhaviṣya⁰ has been carefully utilised up

to the seventh *Kalpa*, leaving aside the eighth and ninth ones, tampered by the Buddhists. The two popular treatises, Viṣṇurahasya and Śivarahasya, being mere compilations, have also not been accepted as authorities here. Though the Bhaviṣyottara is followed in practice and is not repugnant to orthodox doctrines, yet it has been excluded from this work owing to the absence of its authoritativeness. All the following works have also been ignored:—

(1) The three additional parts of the prevalent Skanda°, dealing with the stories of Pauṇḍra, Revā and Avantī

(2) The Tārkṣya°, i.e. Garuḍa°

(3) Another Brahma[1]

(4) Another Āgneya°(i.e. Agni°)

(5) Viṣṇu, consisting of 23000 verses

(6) Another Liṅga°, consisting of 6000 verses. These Purāṇas are filled with such chapters as initiation, consecration, arguments of the Buddhists, testing of jewels, false genealogies, dictionary and grammar, are themselves inconsistent and self-contradictory and are literary forgeries of the Buddhists, heretics and similar other persons and so all these have been rejected.

(7) Besides the above list of Purāṇas and Upapurāṇas, the Devīpurāṇa, owing to its description of impure acts, seems to be in sympathy with the Buddhistic Scriptures and so it has also not been drawn upon in this work.'

In the above description of works, not consulted, we first find the name of the Liṅga° and then find that of another Liṅga°, consisting of 6000 verses. The latter mention of 'another Liṅga° etc.' seems to suggest that the former Liṅga° is not among the rejected works. As a matter of fact, the Liṅga° has not been excluded but twice quoted by our author on pp. 37 and 72 in the topics of *puṇyadeśāḥ* and *tulāpuruṣa-mahādānam*. What our author means to say by the first statement about the Liṅga° is that its mahādāna chapters, being borrowings from the Matsya°, have not been drawn upon and that the former Liṅga° is not one of his rejected works. So the statement of Dr. R.C. Hazra that 'the verses quoted from it (i.e. the Liṅga°) in the Dānasāgara

may have been interpolated'[5] seems to be wrong and the words 'a Liṅgapurāṇa' should be added after 'a Viṣṇupurāṇa' in the following statement of the same author: —

'It is to be noted that though Ballāla Sena expressly says that he rejected the 'Tārkṣya', 'Brahma', 'Āgneya', 'Vaiṣṇava' and 'Liṅga' as spurious and deceptive, he draws considerably upon a Brahma—, an Agni—and a Viṣṇupurāṇa in his Dānasāgara and includes them in the list of the Purāṇas used in writing the digest.'[6]

So the further statement of the same author that 'the corrupt verse 'bṛhad api...avadhārya...nibaddham' (intro. v.58) given on fol.3b (I.O.MS.) in connection with the names of the rejected Purāṇas or parts thereof also tends to show that Ballāla Sena did not use the Liṅga in his Dānasāgara. (The word '*api*' after '*bṛhat*' seems to suggest that '*avadhīrya*' should be read in place of '*avadhārya*')'[7] loses any force whatsoever. For a correct reading of the verse in question the printed edition (p.7) should be consulted.

Leaving aside the topics (e) and (h) containing the list of dānas, specified in this work and that of fifteen preliminaries to making gifts respectively, for treatment in the section on the 'synopsis of the work', just below, we shall now discuss the date of our author from internal and external evidence. We have learnt from the topic (b) above not only the names of our author's father, grandfather and teacher, viz. Hemanta Sena, Vijaya Sena and Aniruddha but also the significant fact that our author leatnt the essence of all the Purāṇas and Smṛtis from this venerable teacher. But curiously enough, Raghunandana, the 16th century digest-writer of Bengal, who has made only eleven quotations from the Dānasāgara in six of his works, has introduced his Ekādasītattva quotation (p.44, Jīvānanda's edition) with the words *viṣṇurahasyānārṣatvasya dānasāgare aniruddhabhaṭṭenābhihitatvācca*, the quotation itself being the introductory verse 60 of the Dānasāgara.

5 *Studies in the Purāṇic records on Hindu rites and customs* by Dr. R. C. Hazra, p. 94, footnote 40.

6 *Ibid.*, p. 138, footnote 131.

7 *Ibid.*, p 94, footnote 40.

